चिंतयित्वैवमुर्वीशः सूदानिति समादिशत् । संघभुक्तावशेषं भो भोक्ष्येऽहं खल्वतः परम् ॥ ३८ ॥
मत्कृते कृतमन्नादि दातव्यं व्रतिनामतः । श्रावका भोजयितव्याः पृथक्सिद्धौदनेन हि ॥ ३९ ॥
तथेति प्रतिपद्याज्ञां राज्ञस्ते सूदपुंगवाः । तथैव विदधुर्नित्यं स्वयं चैच्छिष्ट पार्थिवः ॥ ४० ॥
नासिकापेयसौरभ्याः कलमाः कमला इव । स्थूला माषकणेभ्योऽपि मुद्गा रससमुद्गकाः ॥ ४१ ॥
घृतोदस्य पयांसीव प्रचुराणि घनानि च । सुधाया इव मित्राणि चित्राणि व्यंजनानि च ॥ ४२ ॥
मंरूकाः खंरूसंमिश्रा मोदकाश्च प्रमोदकाः । खाद्यानि स्वादहृद्यानि मंक्रिकाः खंडमंडिताः ॥ ४३ ॥
सुकुमारा मर्मराला वेटकाश्चातिपेशलाः । तेमनं च मनोहारि पिच्छलानि दधीनि च ॥ ४४ ॥
दुग्धानि क्वाथसिद्धानि मार्जिता क्षुत्प्रमार्जनी । राजभोजनवत्तत्र जाताः श्रावकभोजने ॥ ४५ ॥

॥ त्रिभिर्विशेषकम् ॥

एषणीयकल्पनीयप्रासुकानि पुनः स्वयम् । महामुनीनां स ददौ महाराजो महामनाः ॥ ४६ ॥
दुर्भिक्षकालसकलमेवं स वसुधाधवः । ददौ सकलसंघाय भोजनादि यथाविधि ॥ ४७ ॥
वैयावृत्त्यं समाधिं च सर्वसंघस्य कुर्वता । अर्जितं तीर्थकृन्नाम कर्म तेन महीभुजा ॥ ४८ ॥
निषण्णश्चंद्रशालांतरपरेद्युः स उद्यतम् । नभस्यपश्यदंभोदमातपत्रमिवावनेः ॥ ४९ ॥

---

१ पाचकान् । २ पाचकश्रेष्ठाः । ३ समुद्गकः संपुटः डबोइति भाषायां प्रसिद्धः । ४ तन्नाम्नः समुद्रस्य । ५ शाकानि । ६ भक्ष्यविशेषा भाषायां "मांडा" । ७ भक्ष्यविशेषा भाषायां "खाजा" । ८ मरमर शब्दवंतः । ९ वडा इति भाषायां प्रसिद्धिः । १० क्वाथिका कढी इति भाषायां । ११ हृद्यम् । १२ चिक्कणानि । १३ रसाला श्रीखंड इति भाषायां प्रसिद्धिः । १४ निर्दोषं । १५ सेवां । १६ समाधानम् । १७ प्रासादतलं अगाशी इति ख्यातम् ।

# अथ श्रीत्रिषष्टिशलाकापुरुषचरित्रे ३-४-५-६ पर्वाणि

## श्रीसंभवनाथजिनादारभ्य मुनिसुव्रतस्वामिपर्यंतानां

## चरित्राणि ॥

आसाद्यते दुरंतेनार्बुदाख्येन व्रणेन[1] वा । मोह्यते वा प्रवाहेण ग्रहण्या गृह्यतेऽथवा ॥ ६५ ॥
रुध्यते वापि विरुध्या कोशेन क्लिश्यतेऽथवा । श्वासेन पूर्यते वापि शूलेनोन्मूल्यतेऽथवा ॥ ६६ ॥
सदा संनिहितैर्दोषैरित्यादिभिरनेकशः । दूतैरिव कृतान्तस्य जन्तुः पंचत्वमाप्यते[2] ॥ ६७ ॥

॥ त्रयोदशभिः कुलकम् ॥

तथापि शाश्वतंमन्यः पशुवन्मंदधीर्जनः । प्रवर्त्तते न ग्रहीतुं जीवितव्यतरोः फलम् ॥ ६८ ॥
हा दुःस्थिता भ्रातरो मे बाला मेऽद्यापि सूनवः । अनूढा[3] कन्यका चेयं पाठ्यश्चायं कुमारकः ॥ ६९ ॥
नवोढैव हि भार्येयं वृद्धौ च पितराविमौ । दुःस्थितौ श्वशुरावेतौ विधवा भगिनी त्वियम् ॥ ७० ॥
इत्यजस्रं जनं पाल्यं विचिंतयति मुग्धधीः । हृदि बद्धशिलाकल्पं न तु वेत्ति भवार्णवम् ॥ ७१ ॥
न तृप्तोऽद्यापि दयितावपुराश्लेषशर्मणा । न भ्रातः पयसश्चापि माल्येच्छा न ह्यपूर्यत ॥ ७२ ॥
न चापूरि मनोहारि पदार्थेक्षामनोरथः । वीणावेण्वादिगीतानां न प्रीतोऽस्मि मनागपि ॥ ७३ ॥
अद्यापि च कुटुंबाय भांडागारं न पूरितम् । नवीकृतं समुध्दृत्य जीर्णमेतन्न मंदिरम् ॥ ७४ ॥
गमितेषु परां शिक्षां नारूढोऽस्म्येषु वाजिषु । नोक्षाणो वाहिताश्चामी सुस्यंदाः[4] स्यंदनोत्तमे ॥ ७५ ॥
करोतीत्यंतकालेऽपि पश्चात्तापं जडो जनः । धर्मश्चक्रे मया नेति नानुशेते मनागपि ॥ ७६ ॥

॥ पंचभिः कुलकम् ॥

इतः सदोद्यतो मृत्युरितो नानापमृत्यवः । व्याधयोऽवस्थिताश्चेत इतो बहव आधयः ॥ ७७ ॥

---

१ रोगविशेषः । २ मृत्युः । ३ अविवाहिता । ४ सुष्ठु स्यदः वेगः एषां ते ।

देवी प्रबुद्धा तान् स्वप्नान्नृपायाख्यान्नृपोऽपि च । व्याख्यात्त्रैलोक्यवंद्यस्ते नूनं सूनुर्भविष्यति ॥ १२३ ॥
इंद्राश्चासनकंपेन विज्ञायोपेत्य तत्र च । सेनादेवीं नमस्कृत्य स्वप्नार्थं व्याचचक्षिरे ॥ १२४ ॥
एतस्यामवसर्पिण्यां तृतीयस्तीर्थनायकः । भविष्यति जगत्स्वामी तव स्वामिनि नंदनः ॥ १२५ ॥
तेन स्वप्नविचारेण स्तनितेनेव केकिनी । मुदिता तं निशाशेषं देव्यनैषीत्प्रजाग्रती ॥ १२६ ॥
वज्रं वज्राकरोर्वीव कृशानुमिव चारणिः । महासारं पवित्रं च गर्भे देवी बभार तम् ॥ १२७ ॥
देव्याः स उदरे गर्भो निगूढं ववृधे ततः । गंगाया इव पानीये तपनीयपयोरुहम् ॥ १२८ ॥
तदाभूतां दृशौ देव्याः सविकाशे विशेषतः । सरस्या हि सरोजानि विशिष्यंते शरत्क्षणे ॥ १२९ ॥
लावण्यमंगे कुचयोः पीनत्वं मंदता गतौ । देव्याः प्रतिदिनं गर्भानुभावादत्यरिच्यत ॥ १३० ॥
फाल्गुनस्य सिताष्टम्यां द्यौरिवांभोदलक्षणम् । गर्भं तं बिभ्रती साभूज्जगतोऽपि मुदे तदा ॥ १३१ ॥
ततो नवसु मासेषु दिनेष्वर्धाष्टमेषु च । मार्गशुक्लचतुर्दश्यां चंद्रे मृगशिरःस्थिते ॥ १३२ ॥
जरायुरक्तप्रभृतिवर्जितं वाजिलांछनम् । प्राचीवार्कं स्वर्णवर्णं सुखं सा सुषुवे सुतम् ॥ १३३ ॥
ध्वांतध्वंसकृदुद्योतस्त्रैलोक्येऽपि तदा क्षणम् । क्षणं च सौख्यं संजज्ञे नारकप्राणिनामपि ॥ १३४ ॥
ग्रहाः स्वोच्चं ययुः स्थानं प्रसेदुः सकला दिशः । ववौ वायुः सुखं लोकश्चिक्रीड निखिलस्तदा ॥१३५॥

---

१ तन्नाम्नि कालविशेषे । २ मयूरी । ३ वज्राणां हीरकाणां आकरः खनिः यस्यां सा । ४ अरणिः काष्ठविशेषः । ५ जरायुः गर्भाशयः रक्तंरुधिरं तदादिभिर्वर्जितम् । ६ सुखं यस्मिन्यथा स्यात् तथा । ७ ध्वांतस्य अंधकारस्य ध्वंसः नाशः तं करोतीति तादृक् यः उद्योतः प्रकाशः ।

# श्रीत्रिषष्टि शलाका पुरुष चरित्र.

## पर्व ३–४–५–६

श्रीसंभवनाथजीथी मुनिसुव्रतस्वामी सुधी १८ तीर्थंकरोना, २ जाथी ८ मासुधी ६ चक्रीना, पहेलाथी सातमा सुधी सात सात वासुदेव बलदेव प्रतिवासुदेवना मळी एकंदर ४९ चरित्रो.

**मुर्शिदाबादनिवासी बाबुसाहेब रायबुधसिंहजी बहादूर**

तथा

**मुंबइनिवासी शेठ वीरचंदभाइ दीपचंद सी. आइ. इ. नी**

मददथी


छपावी प्रसिद्ध करनार,

**श्रीजैनधर्मप्रसारकसभा,**

भावनगर.

वीर संवत २४३२ विक्रम संवत १९६२.

मुंबई–निर्णयसागर प्रेस.

सत्पुरुषाभिधानश्च महापुरुष एव च । अतिकायमहाकायावपि गीतरतिस्तथा ॥ १७८ ॥
तथा गीतयशोनामा संनिहितः समानकः । तथा धातृविधातारावृषिश्च ऋषिपालकः ॥ १७९ ॥
ईश्वरो महेश्वरश्च सुवत्सकविशालकौ । हासहासरती श्वेतो महाश्वेतस्तथैव च ॥ १८० ॥
पवकपवकपती सूर्याचंद्रमसावपि । इंद्रास्त्रिषष्टिरेतेऽपि सर्वर्द्ध्या सपरिच्छदाः ॥ १८१ ॥
जिनजन्माभिषेकाय मेरुपर्वतमूर्धनि । त्वरमाणाः समाजग्मुः प्रतिवेश्मस्थिता इव ॥ १८२ ॥
॥ एकादशभिः कुलकम् ॥

अच्युतेंद्राज्ञया कुंभांस्त्रिदशा आभियोगिकाः । हैमान्[1] रूप्यमयान्[2] रालान् हेमरूप्यमयानपि[3] ॥१८३॥
हेमरत्नमयांश्चैव रूप्यरत्नमयानपि । हैमरूप्यरत्नान् भौमान्[4] सहस्रं साष्टकं पृथक् ॥१८४ ॥
भृंगारान्[5] दर्पणांश्चापि सुप्रतिष्ठान् करंडकान् । स्थालानि पात्रीश्चंगेरीर्विचि[6]क्रुस्तावतीरपि ॥ १८५ ॥
क्षीरोदादिसमुद्रेभ्योऽन्यतीर्थेभ्योऽपि वारि ते । मृत्स्नां[8] पद्मानि चानिन्युः शतमन्यु[9]मनोमुदे ॥१८६॥
हिमाद्रेरोषधीर्भद्रशालादेस्तु वरा[10]नपि । गंधद्रव्यमन्यदपि तत्रानिन्युर्दिवौकसः ॥ १८७ ॥
गंधद्रव्याणि सर्वाणि क्षिप्रं प्रक्षिप्य तानि ते । ततः सुरभयामासुस्तीर्थवारीणि भक्तितः ॥ १८८ ॥
अच्युतः पारिजातादिकुसुमांजलिपूर्वकम् । स्वामिनं स्नपयामास तैः कुंभैरमरार्पितैः ॥ १८९ ॥
चारुवाद्यगीतनृत्यप्रवृत्तमुदितामरम् । अजनि स्वामिनः स्नात्रमच्युतेंद्रविनिर्मितम् ॥ १९० ॥

१ हेमविकारान् । २ रूप्यविकारान् । ३ उभयविकारान् । ४ मृद्विकारान् । ५ सुवर्णपात्रविशेषान् भाषायां "झारी" इति विख्यातान् । ६ लघुपात्राणि । ७ पुष्पपात्राणि । ८ मृत्तिकां । ९ शतमन्युः इंद्रः । १० केशरान्

तदद्य दिष्ट्या दृष्टोऽयं पुण्यैः पुण्यानुबंधिभिः । प्रीतिदायी गुरुरिव मातेव च पितेव च ॥ ७१ ॥
कुमारश्चिंतयित्वैवमुपसृत्य च सत्वरम् । ववंदे हृदयानंदं मुनिं विनयनंदनम् ॥ ७२ ॥
कल्याणकंदलोद्भेदमेघवृष्टिसमानया[1] । मुनिरानंदयामास धर्मलाभाशिषाथ तम् ॥ ७३ ॥
भूयः कुमारस्तं नत्वा मुनिमेवमभाषत । चित्रीयसे व्रतधरो नवयौवनवानपि ॥ ७४ ॥
विषयाणां विमुखोऽसि वयस्यत्रापि यत्ततः । विज्ञस्तेषां दुर्विपाकं[2] किंपाकानामिव ध्रुवम् ॥ ७५ ॥
सारमत्र हि संसारे किं च मन्ये न किंचन । इत्थं तत्परिहारायोत्तिष्ठंते यद्भवादृशाः ॥ ७६ ॥
संसारतरणोपायं तन्ममापि समादिश । मां नय त्वं स्वेन पथा सार्थवाह इवाध्वगम् ॥ ७७ ॥
क्रीडार्थमागतेनेह त्वं प्राप्तोऽसि महामुने । कर्करान्वेषकेणेव माणिक्यं पर्वतावनौ ॥ ७८ ॥
एवमुक्तः कुमारेण मारारिः[3] स महामुनिः । आबभाषे नवांभोदघोषगंभीरया गिरा ॥ ७९ ॥
यौवनैश्वर्यरूपादिमदस्थानानि शांतये । मांत्रिकस्येव भूतानि पदातित्वाय साधनात् ॥ ८० ॥
संसारसिंधुतरणे यानपोत्रम्[4]अनर्गलम्[5] । भगवद्भिः समाम्नातो[6] यतिधर्मोऽयमुच्चकैः ॥ ८१ ॥
संयमः सूनृतं शौचं ब्रह्माकिंचनता[7] तपः । क्षांतिर्मार्दवमृजुता मुक्तिश्च दशधेति सः ॥ ८२ ॥
प्राणातिपातव्यावृत्तिरूपः संयम ईरितः । मृषावादपरीहारस्वरूपं सूनृतं पुनः ॥ ८३ ॥
शौचं संयमसंशुद्धिरदत्तादानवर्जनात् । उपस्थसंयमो ब्रह्म नवगुप्तिसमन्वितम् ॥ ८४ ॥

---

१ कल्याणांकुरस्योत्पादने मेघवृष्टिसदृशया । २ अनिष्टपरिणामम् । ३ मारस्य कामदेवस्य अरिः । ४ नौः । ५ अप्रतिबंधकम् । ६ कथितः । ७ अपरिग्रहता ।

नित्योद्युक्तो निर्ममश्चाकिंचनो गुणतत्परः । धारयेत्समितीः पंच तिस्रो गुप्तीश्च सर्वदा ॥ १०० ॥
मासादिकाश्च प्रतिमा विधातव्या यथाविधि । अभिग्रहा द्रव्यक्षेत्रकालभावनुगा अपि ॥ १०१ ॥
यावज्जीवितमस्नानं भूशय्या केशलुंचनम् । शरीरस्याप्रतिकर्म[1] वासो गुरुकुले सदा ॥ १०२ ॥
परीषहोपसर्गाणां सहनं सानुमोदनम्[2] । अष्टादशानां शीलांगसहस्राणां च धारणम् ॥ १०३ ॥
प्रव्रज्यायामुपात्तायां सुकुमार कुमारक । तदेते लोहचणकाश्चर्वणीया निरंतरम् ॥ १०४ ॥
बाहुभ्यां तरणीयोऽयमपारो मकराकरः[3] । निशातखड्गधारासु कार्यं चंक्रमणं क्रमैः[4] ॥ १०५ ॥
पातव्या[5] ज्वलनज्वाला[6] मेरुस्तोल्यस्तुलाधृतः । उत्पूरा च प्रतिश्रोतस्तरणीया सरिद्वरा ॥ १०६ ॥
एकाकिना च जेतव्यं बलवद्विद्विषद्बलम् । विधातव्यो भ्रमच्चक्रे राधावेधश्च खल्वहो ॥ १०७ ॥

॥ दशभिः कुलकम् ॥

महत्सत्त्वं महद्धैर्यं महती धीर्महद्बलम् । प्रव्रज्याया उपात्ताया यदा जन्मापि पालनम् ॥ १०८ ॥
तदाकर्ण्य कुमारोऽपि ससौष्ठवमभाषत । पूज्यपादा एवमेतत् प्रव्रज्येयं यदीदृशी ॥ १०९ ॥
किं तु विज्ञपयाम्येकमंशः शततमोऽपि किम् । भववाससमुत्थानां कष्टानामिह दृश्यते ॥ ११० ॥
तथाहि दूरे तिष्ठंतु साक्षान्नरकवेदनाः । वचनैर्दुर्वचा एव दुःश्रवाः श्रवणैरपि ॥ १११ ॥
इहापि दृश्यते लोके तिरश्चामकृतागसाम्[7] । नितांतं बंधनच्छेदतर्जनाद्यतिदुःसहम् ॥ ११२ ॥

---

१ असत्कारः । २ दुःखानामुपद्रवाणां च सहनम् । ३ समुद्रः । ४ पादैः । ५ पेया । ६ अग्निज्वाला । ७ निरपराधानाम् ।

हा रत्नघटितास्तंभा हा श्रीमन्मणिकुट्टिमाः । हा वेदिका रत्नमय्यः कस्य यास्यथ संश्रयम् ॥ १६८ ॥
हा रत्नसोपानचिताः कमलोत्पलमालिनः । भविष्यंत्युपभोगाय कस्येमाः पूर्णवापयः ॥ १६९ ॥
हे पारिजात मंदार संतान हरिचंदन । कल्पद्रुम विमोक्तव्यः किं भवद्भिरयं जनः ॥ १७० ॥
हहा स्त्रीगर्भनरके वस्तव्यमवशस्य मे । हहाशुचिरसास्वादः कर्तव्यो मयका मुहुः ॥ १७१ ॥
ह हा हा जठरांगारशकटीपाकसंभवम् । मया दुःखं विषोढव्यं बद्धेन निजकर्मणा ॥ १७२ ॥
रतेरिव निधानानि क्व तास्ताः सुरयोषितः । क्वाशुचिस्पंदबीभत्सा भोक्तव्या नरयोषितः ॥ १७३ ॥
एवं स्वर्लोकवस्तूनि स्मारं स्मारं दिवौकसः । विलपंतः क्षणस्यांतर्विध्यायंति प्रदीपवत् ॥ १७४ ॥
॥ नवभिः कुलकम् ॥

असारमित्थं संसारं चिंतयित्वा विमुक्तये । प्रयतेत परिव्रज्योपायेन शुभधीर्जनः ॥ १७५ ॥
भर्तुस्तया देशनया प्रतिबुद्धाः सहस्रशः । केचिदाददिरे दीक्षां सम्यक्त्वमपरे पुनः ॥ १७६ ॥
सुव्रताद्या गणभृतोऽभूवन् सप्तोत्तरं शतम् । जग्रंथुर्द्वादशांगीं ते प्रपद्य पदवीं प्रभोः ॥ १७७ ॥
देशनाविरते नाथे सुव्रतो देशनां व्यधात् । शिष्या गुरूणां कूपानामाहावा इव तत्क्रियाः ॥ १७८ ॥
विरते देशनातोऽस्मिन्नपि सर्वे सुरादयः । प्रणिपत्य जगन्नाथं स्थानं निजनिजं ययुः ॥ १७९ ॥
तत्तीर्थजन्मा कुसुमो नीलांगो मृगवाहनः । सफलं चाभयदं च बिभ्राणो दक्षिणौ करौ ॥ १८० ॥

१ भूगयः । २ जठरमेव अंगारशकटी तस्याः पाकात्संभूतम् । ३ अशुचिप्रस्रवणत्वेन बीभत्साः । ४ कूपस्य समीपे तज्जलस्थापनाय रचितः गर्तः आहव उच्यते ।

# उपोद्घातः ।

प्रस्तुतग्रंथस्यास्मिन् विभागे तृतीय–चतुर्थ–पंचम–षष्ठपर्वाणि संगृहीतानि संति । तत्रैकस्मादारभ्य षष्टिसंख्यांकपर्यंतेषु पृष्ठांकेषु तृतीयं पर्व निबद्धम् । ततः पुनरेकस्मादारभ्य चतुर्विंशत्यधिकद्विशतसंख्यांकपर्यंतेषुपृष्ठांकेषु चतुर्थ–पंचम–षष्ठ पर्वाणि निवेशितानि ।

तृतीयपर्वणि अष्टौसर्गाः संति । तत्र तृतीयादिदशमांतजिनानामष्टानांचरितानि निबद्धानि संति ।

चतुर्थपर्वणि सप्त सर्गाः संति तत्राद्ये सर्गपञ्चके एकादशादिपंचदशांतजिनानां चरित्रैः सह प्रथमादिपंचमांतानां वासुदेव–बलदेव–प्रतिवासुदेवानां चरित्राणि निबद्धानि तथावशिष्ट ( ७–८ ) सर्गद्वये तृतीयचतुर्थयोश्चक्रवर्त्तिनोश्चरित्रे निवेशिते स्तः ।

पंचमपर्वणि पंचसर्गाः संति तत्र षोडशतीर्थेशितुः पंचमचक्रवर्तिनश्च शांतिनाथस्यचरित्रं केवलं वर्णितमस्ति । षष्ठे पर्वणि सप्तसर्गास्तत्राद्यसर्गद्वये सप्तदशाष्टदशजिनयोः कुंथुनाथारनाथयोस्तयोरेव षष्ठसप्तमचक्रवर्त्तिनोश्चरित्रे वर्णिते स्तः । तृतीयसर्गे षष्ठवासुदेवादीनां चरित्राणि चतुर्थसर्गेऽष्टमचक्रवर्त्तिनश्चरित्रं पंचमसर्गे सप्तमवासुदेवादीनां चरित्राणि षष्ठसप्तमसर्गयोः एकोनविंशजिनमल्लीनाथस्य विंशतितमजिनस्य मुनिसुव्रतस्य च चरित्राणि निबद्धानि संति.

एवं चतुर्षु पर्वसु सर्वसंख्यासंमीलनेन पंचचत्वारिंशच्छलाकापुरुषाणां चरितानि संगृहीतानि संति । अस्मिन् तीर्थे कृतां चरित्रेषु प्रसंगतो द्रव्याद्यनुयोगवर्णनेन सह विविधदेशनानां वर्णनानि शांतरसपरिप्लुतानि शब्दार्थालंकारगर्भितानि

जयन् परीषहचमूं तापं गिरिरिवाचलवत् । निराकांक्षः शरीरेऽपि समः स्वर्णतृणादिषु ॥ ६९ ॥
एकाकी मौननिरतो नित्यमेकांतनित्यदृक् । विविधाभिग्रहरतोऽनासीनो निर्भयः स्थिरः ॥ ७० ॥
विविधाः प्रतिमाः कुर्वंश्छद्मस्थो ध्यानमास्थितः । नव मासान् जगन्नाथो विजहार वसुंधराम् ॥ ७१ ॥
॥ त्रिभिर्विशेषकम् ॥

विहरंश्चाययौ भूयः सहस्राम्रवणं प्रभुः । शिरीषमूले षष्ठेन तत्रास्थात्प्रतिमाधरः ॥ ७२ ॥
द्वितीयशुक्लध्यानांते वर्तमानो जगद्गुरुः । संसारस्येव मर्माणि घातिकर्माण्यघातयत् ॥ ७३ ॥
फाल्गुनस्य कृष्णषष्ठ्यां विशाखास्थे निशाकरे । केवलज्ञानमुत्पेदे सुपार्श्वस्वामिनस्तदा ॥ ७४ ॥
सुरासुरेन्द्राः सद्योऽपि समागत्य नियुक्तवत् । चक्रुः समवसरणं स्वामिनो देशनाकृते ॥ ७५ ॥
पूर्वद्वारेण तत्राथ मोहद्वारं जगद्गुरुः । प्रविवेश यथार्हंस्तु द्वारैः सुरनरादयः ॥ ७६ ॥
चतुर्धन्वशताग्रैकक्रोशोच्चं चैत्यपादपम् । तत्र प्रदक्षिणीचक्रे प्रभुर्भूकल्पपादपः ॥ ७७ ॥
"तीर्थाय नम" इत्युक्त्वा तत्र सिंहासनोत्तमे । उपाविशज्जगन्नाथोऽतिशयैरुपशोभितः ॥ ७८ ॥
पृथ्वीदेव्या तदा स्वप्ने दृष्टं तादृग्महोरगम् । शक्रो विचक्रे भगवन्मूर्ध्नि छत्रमिवापरम् ॥ ७९ ॥
तदादि चाभूत्समवसरणेष्वपरेष्वपि । नाग एकफणः पंचफणो नवफणोऽथवा ॥ ८० ॥
स्वामिनः प्रतिरूपाणि देवा दिक्ष्वपरास्वपि । विकुर्वंति स्म तादृंशि तत्प्रभावेण भूयसा ॥ ८१ ॥
संघोऽपि भगवांस्तत्र यथास्थानमवास्थित । न स्थानव्यत्ययो जातु सामान्यस्यापि पर्षदि ॥ ८२ ॥

१ परीषहाणां चमूः सेना ताम् । २ भृत्यवत् । ३ प्रतिकृतीः ।

च संति । ग्रंथोऽयमपि प्रथमत आश्रयदात्रोः श्रावकरत्नयोरुदाराश्रयेण प्रकाशितः तस्मात्संस्कृताध्ययनरतमुनिवर्येभ्यो- जैनग्रंथभांडागारेषु चोपदीकरिष्यते। ग्रंथोऽयं लिखितपुस्तकत्रयेण संशोध्य संमुद्रितः तथापि प्रमादेन दृष्टिदोषेण वा स्खलितं चेत्तदा क्षमाशीलैर्विद्वद्भिः क्षंतव्यम् संशोधनीयं च । सर्वान् मुनिवरान् सम्यक्त्वालंकृतान् श्राद्धान् सविनयमभीक्ष्णं प्रार्थयामः—एनं ग्रंथं सकृदपि संगृह्यास्योपयुक्तता प्रत्यक्षतया पठनपाठनादिरूपेणानुभूयास्मत्प्रयत्नाः सफलीकर्त्तव्या इति शम्

संवत् १९६२ }
आश्विन }

**श्रीजैनधर्मप्रसारकसभा,**
**भावनगर.**

इहान्यत्वं भवेद्भेदस्तैलक्ष्यलक्षणः । आत्मदेहादिभावानां साक्षादेव प्रतीयते ॥ ९६ ॥
देहाद्या इंद्रियग्राह्या आत्मानुभवगोचरः । तदेतेषामनन्यत्वं[1] कथं नामोपपद्यते ॥ ९७ ॥
आत्मदेहादिभावानां[2] यद्यन्यत्वं स्फुटं ननु । ततो देहप्रहारादौ कथमात्मा प्रपीड्यते ॥ ९८ ॥
सत्यं येषां शरीरादौ भेदबुद्धिर्न विद्यते । तेषां देहप्रहारादावात्मपीडोपजायते ॥ ९९ ॥
ये तु देहात्मनोर्भेदं सम्यगेव प्रपेदिरे । तेषां देहप्रहारादावपि नात्मा प्रपीड्यते ॥ १०० ॥
भेदं विद्वान्न पीड्येत पितृदुःखेऽप्युपस्थिते । आत्मीयत्वाभिमानेन भृत्यदुःखेपि मुह्यति ॥ १०१ ॥
अस्वत्वेन गृहीतः सन् पुत्रोऽपि पर एव हि । स्वकीयत्वेन भृत्योऽपि स्वपुत्रादतिरिच्यते ॥ १०२ ॥
संबंधानान्मनो जंतुर्यावतः कुरुते प्रियान् । तावंतो हृदये तस्य जायंते शोकशंकवः ॥ १०३ ॥
सर्वमन्यदिदं तस्माज्जानीयात्पट्टधीर्जनः । कस्यापि हि विनाशात्तन्न मुह्येत्तत्त्ववर्त्मनि ॥ १०४ ॥
अस्यन्ममत्वमृल्लेपं[3] तुंबीफलमिवाचिरात् । भवं तरति शुद्धात्मा परिव्रज्याधरो नरः ॥ १०५ ॥
एवं च देशनां श्रुत्वाऽबुध्यंत बहवो जनाः । प्रव्रज्यां जगृहुः केऽपि श्रावकत्वमथापरे ॥ १०६ ॥
विदर्भाद्या गणभृतः पंचनवतिरभूवन् । ते चक्रुर्द्वादशांगीं च स्वामिवागनुसारतः ॥ १०७ ॥
स्वामिनो देशनांते च विदर्भो गणभृद्वरः । स्वाम्यंघ्रिपीठाध्यासीनो विदधे धर्मदेशनाम् ॥ १०८ ॥
विदर्भेऽपि गणधरे देशनाविरते सति । नमस्कृत्य प्रभुं जग्मुः स्वं स्वं स्थानं सुरादयः ॥ १०९ ॥

---

१ अभेदत्वम् । २ पूर्वपक्षोऽयम् । ३ ममत्वमेव मृद् मृत्तिका तस्या लेपस्तम् ।

॥ श्री ॥

# त्रिषष्टिशलाकापुरुषचरित्रे तृतीयं पर्व ।

## प्रथमः सर्गः

## श्रीसंभवजिनचारित्रम्.

॥ ॐ अर्हम् ॥

त्रैलोक्यप्रभवे पुण्यसंभवाय भवच्छिदे । श्रीसंभवजिनेंद्राय मनोभवभिदे नमः ॥ १ ॥
धात्रीपवित्रीकरणं पवित्रं कर्मवीरुधाम् । चरित्रमथ वक्ष्यामि श्रीसंभवजिनेशितुः ॥ २ ॥
धातकीखंडद्वीपस्य क्षेत्रऐरावताभिधे । पुरी क्षेमपुरीनामा क्षेमधामास्ति विश्रुता ॥ ३ ॥
तस्यामासीत्समायात इवोर्व्यां मेघवाहनः । महीपतिर्विपुलधीर्नाम्ना विपुलवाहनः ॥ ४ ॥
आरामिकइवाराममविराममसौ प्रजाः । विधिवत्पालयामास छिंदन् शल्यानि सर्वतः ॥ ५ ॥
प्रीणयन्ती जनपदान् परितः पथिकानिव । नीतिकल्लोलिनी तस्य प्रससार निरंतरम् ॥ ६ ॥
अपराधं परस्येव स्वस्यापि न्यायतत्परः । असह्यशासनधरः स न सेहे मनागपि ॥ ७ ॥
उपायं प्रायुंक्त तुर्यं दोषमानेन दोषिषु । सोऽगदं गदमानेनातुरेष्विव चिकित्सकः ॥ ८ ॥
गुणानुरूपमकरोदर्चनं गुणिनामसौ । विवेकिनां विवेकस्य फलं ह्यौचित्यवर्तनम् ॥ ९ ॥

---

१ छेदकं । २ कर्मलतानाम् । ३ इन्द्रः । ४ दुःखानि । ५ नदी । ६ वैद्यः ।

## सप्तमः सर्गः ।

### श्रीसुविधिनाथचरित्रम् ।

वंदे श्रीपुष्पदंतस्य पुष्पदामेव निर्मलम् । जगत्रयशिरोवाह्यं शासनं पापनाशनम् ॥ १ ॥
नवमस्यार्हतस्तस्यानवमं चरितं प्रभोः । तत्प्रभावात्प्रभविष्णुधिषणः कीर्तयाम्यदः ॥ २ ॥
पुष्करवरद्वीपार्धे प्राग्विदेहेषु पुष्कले । विजये पुष्कलावत्यामस्ति पूः पुंडरीकिणी ॥ ३ ॥
तस्यां पुर्यामभून्नाम्ना महापद्मो महीपतिः । महाहिमाद्रौ गंभीरो महापद्म इव ह्रदः ॥ ४ ॥
आजन्मस्वीकृतस्तस्य शैशवे यौवनेऽपि च । धर्मो वपुःश्रिया सार्धमवर्धत यथोत्तरम् ॥ ५ ॥
स विरत्या विहीनेन मुहूर्त्तेनाप्यदूयत । धनेन वृद्धिहीनेन वृद्ध्याजीवइवान्वहम् ॥ ६ ॥
धर्मकृत्यानि कुर्वाणो राज्यकृत्यानि सोऽकरोत् । वारिपाणमिवाध्वन्यस्तरन्नध्वतरंगिणीम् ॥ ७ ॥
सम्यक् श्रावकधर्मं स निजं कुलमिवामलम् । सुचिरं पालयामास प्रमादरहितः सुधीः ॥ ८ ॥
प्रायः संतोषनिष्ठोऽपि न धर्मे संतुतोष सः । स्तोकधर्मानपि परान् मेने चाभ्यधिकान्स्वतः ॥ ९ ॥
दिव्यास्त्रमिव युत्पारे भवपारयियासया । परिव्रज्यां स जग्राह जगन्नंदगुरोः पुरः ॥ १० ॥
निर्व्यूढः श्रावकधर्मे दृढं सोऽपालयद्व्रतम् । कृतसंलेखन इवानशनं मारणांतिकम् ॥ ११ ॥

---

१ निर्दोषम् । २ प्रभविष्णुः समर्था धिषणा बुद्धिर्यस्य । ३ जलपानम् । ४ पान्थः । ५ युद्धपारे । ६ दृढः ।

नदीवन्न नदीजर्तुरुत्सेकाय घनागमः ॥ १० ॥

मदस्थानानि तस्यासन्न मदायान्यलोकवत् । नदीवन्न नदीभर्तुरुत्सेकाय घनागमः ॥ ११ ॥

तस्य चित्ते चैत्य इव सर्वज्ञोदेवता सदा । वाचि जैनागम इव सर्वज्ञगुणशंसनम् ॥ १२ ॥

देवाय तीर्थनाथाय गुरवे च सुसाधवे । स शिरोऽनमयत्पृथ्व्यां सर्वोऽप्यन्यस्तमानमत् ॥ १३ ॥

अनार्त्तरौद्रध्यानेन स्वाध्यायेन जिनार्चया । उपाददे स परमं मनोवाग्वपुषां फलम् ॥ १४ ॥

तस्मिन् श्रावकधर्मोऽभूत् स द्वादशविधोऽपि हि । अनारतमपि स्थेयान् नीलीराग इवांशुके ॥ १५ ॥

राजचक्रे जागरूको यथा द्वादशधा स्थिते । तथा श्रावकधर्मेऽपि स बभूव महामनाः ॥ १६ ॥

धर्मप्ररोहबीजानि द्रविणानि यथोचितम् । सप्तक्षेत्र्यां पवित्रात्मा निरंतरमुवाप सः ॥ १७ ॥

दीनानाथैकशरणादेककारुणिकात्ततः । न रिक्तो निर्ययावर्थी समुद्रादिव वारिदः ॥ १८ ॥

याचकेषु ववर्षार्थं स पर्जन्य इवोदकम् । केवलं निरहंकारो न जगर्ज मनागपि ॥ १९ ॥

कंटकोच्छेदपरशौ त्यागकल्पमहीरुहे । नाभवदुःस्थितः कोऽपि तस्मिन् शासति मेदिनीम् ॥ २० ॥

तस्मिन्नपि महीनाथे कदाचिदथ भीषणम् । महादुर्भिक्षमभवदुर्लंघ्या भवितव्यता ॥ २१ ॥

अंधकारीकृतदिशामंभोदानामभावतः । वर्षाकालः समजनि रौद्रो[7] ग्रीष्म इवापरः ॥ २२ ॥

शोषयन्तोऽशेषतोयान्यंघ्रिपोन्मूलनोन्मदाः । कल्पांतानिलसोदर्यो नैर्ऋता वायवो वबुः ॥ २३ ॥

मेघा बभूवुर्नभसि कांकोदरसहोदराः । कांस्यतालसमानश्रीरदृश्यत दिवाकरः ॥ २३ ॥

---

१ गृद्धये । २ वस्त्रे । ३ जागरणशीलः । ४ द्रव्याणि । ५ शून्यः । ६ दुष्कालः । ७ भयंकरः । ८ वृक्षोन्मूलनोन्मत्ताः । ९ काकपक्ष्युदरसमानाः ।

रतिर्न रतिमन्वाप न प्रीतिः प्रीतिमाययौ । रूपेणाप्रतिरूपेण भृशं तस्याः पराजिता ॥ २६ ॥
सुग्रीवनृपतेस्तस्याश्चान्योऽन्यमनुरूपयोः । क्रीडतोरगमत्कालो रोहिणीशशिनोरिव ॥ २७ ॥
इतश्च वैजयन्तस्थो महापद्मस्य भूपतेः । जीवोऽपूरयदायुः स्वं त्रयस्त्रिंशतमर्णवान् ॥ २८ ॥
फाल्गुनासितनवम्यां मूलस्थे रजनीकरे । च्युत्वा ततस्तस्य जीवो रामाकुक्षाववातरत् ॥ २९ ॥
ददर्श च तदा देवी महास्वप्नांश्चतुर्दश । गजादींस्तीर्थकृज्जन्मपिशुनान् विशतो मुखे ॥ ३० ॥
जगदाधारहेतुं तं देवी गर्भे दधार सा । क्रीरुन्तमंतः कलभं निम्नगेव हिमाद्रिजा ॥ ३१ ॥
अथ मार्गशीर्षकृष्णपंचम्यां मूलगे विधौ । श्वेतवर्णं मकरांकं सुतरत्नमसूत सा ॥ ३२ ॥
षट्पंचाशद्दिक्कुमार्यस्ततो भोगंकरादयः । स्वामिनः स्वामिमातुश्च सूतिकर्माणि चक्रिरे ॥ ३३ ॥
सौधर्मकल्पाधिपतिराभियोग्यइवामरः । आदाय स्वामिनं भक्त्या मेरुशैलशिरो ययौ ॥ ३४ ॥
तच्चूलाया दक्षिणतोऽतिपांडुकंबलास्थिते । सिंहासन उपाविक्षच्छक्रोऽङ्कारोपितप्रभुः ॥ ३५ ॥
अच्युताभृतयस्तत्राच्युताद्यास्त्रिदशेश्वराः । त्रिषष्टिः स्नपयामासुः स्वामिनं तीर्थवारिभिः ॥ ३६ ॥
अथेशमैशानपतेः सौधर्मेशः समार्पयत् । रक्ष्यवस्तु स्वयामांते यामिकस्येव यामिकः ॥ ३७ ॥
अथ स्वामिनमीशानोत्संगासीनं दिवस्पतिः । स्नपयामास वृषभशृंगोत्थैर्गंधवारिभिः ॥ ३८ ॥
अंगरागैर्नवैश्चर्चां सर्वां चाभरणादिभिः । आरात्रिकं च कृत्वेति प्रभुं तुष्टाव वासवः ॥ ३९ ॥
धर्महर्म्यदृढस्तंभ सम्यग्ज्ञानसुधाह्रद । जगदानंदजीमूत जय त्रिभुवनेश्वर ॥ ४० ॥

१ रतिप्रीती कामपत्न्यौ । २ रोहिणी चंद्रपत्नी । ३ गंगा । ४ भृत्यसदृशकर्मकरो देवविशेषः । ५ जगदानंदे मेघसमान ।

धान्याभावादजायन्त पौरजानपदा जनाः । तापसा इव वृक्षत्वक्कंदमूलफलाशिनः ॥ २४ ॥
कथंचिदपि लब्धेन ग्रासेन महतापि हि । न तृप्यंति स्म संजातभस्मका इव मानवाः ॥ २५ ॥
भिक्षया लज्जमानः सन् भिक्षाग्रहणहेतवे । बभूव लोकः प्रायेण मायातापसवेषभृत् ॥ २६ ॥
पितरो मातरः पुत्रा मिथस्त्यक्त्वाशनाशया । अन्यतश्चान्यतश्चायुर्दिक्संमोहवशादिव ॥ २७ ॥
अपि संपश्यमानस्य क्रंदतोऽतिबुभुक्षया । लब्धं कथंचिदन्नादि पुत्रस्य न ददौ पिता ॥ २८ ॥
विक्रीणीते स्म चणकप्रसृत्या[1] निजबालकम् । माता भ्रमंती रथ्यासु शूर्पादि[2] श्वपची[3] यथा ॥ २९ ॥
प्रातरीश्वरहर्म्याणां पतितानंगणे कणान् । वराकाश्चिक्यिरे[4] रंका गृहपारावता इव ॥ ३० ॥
अपि कादंबिकादीनामापणेषु[5] मुहुर्मुहुः । लब्ध्वा छलं श्वान इव भोज्यमाचिच्छिदुर्जनाः ॥ ३१ ॥
अप्यहः सकलं भ्रांत्वा कथंचिदहरत्यये[6] । ग्रासमात्रमपि प्राप्य मुदितं मेनिरे नराः ॥ ३२ ॥
रंकैः करंकसंकाशैर्लुठितैरतिभीषणैः[7] । स्मशानादत्यरिच्यंत पुरराजपथा अपि ॥ ३३ ॥
रवरोलैरविरलैः[8] प्रसरद्भिः पदे पदे । अदूयंत सतां कर्णाः क्षिप्ताभिरिव सूचिभिः ॥ ३४ ॥
कल्पांतकल्पे[9] दुष्काले तस्मिन् संघं चतुर्विधम् । क्षीयमाणं नृपः प्रेक्ष्य दध्याविति महामनाः ॥ ३५ ॥
इयं खलु धरित्री मे त्रातव्या सकलापि हि । किं करोमि परं पापः कालोऽयं नास्त्रगोचरः[10] ॥ ३६ ॥
तथाप्यवश्यं त्रातव्यः संघोऽयमखिलोऽपि हि । पात्रोपकारे प्रथमं महतां यदुपक्रमः ॥ ३७ ॥

---

१ अर्द्धांजलिना । २ शूर्पं वंशपात्रम् । ३ चांडाली । ४ दीनाः । ५ हट्टेषु । ६ दिनांते । ७ अस्थिपंजरसदृशैः । ८ कोलाहलैः ।
९ ईषन्न्यूनकल्पांतसदृशे । १० अस्त्रविषयः ।

कुमारयोर्दुर्ललितमिदं च भवतानघ । नाश्वग्रीवाय विज्ञाप्यं निकषोऽयं[1] क्षमावताम् ॥ ३३६ ॥
इति सामसुधावृष्ट्या शांतकोपहुताशनः । चंडवेगोऽप्युवाचैवं गिरा स्नेहादचंडया ॥ ३३७ ॥
त्वया सह चिरात् प्रेम्णा कोपोऽपि न मया कृतः । राजन् क्षंतव्यमिह किं त्वत्पुत्रौ न ममापरौ ॥३३८॥
डिंभानां दुर्नये दंडो ह्युपालंभः प्रकीर्तितः । निवेदनं राजकुले नेति लोकेऽपि हि स्थितिः ॥ ३३९ ॥
राज्ञे विज्ञपयिष्यामि नेदृक्षं त्वत्कुमारयोः । कवलः शक्यते क्षेप्तुं नाक्रष्टुं हस्तिनो मुखात् ॥ ३४० ॥
विस्रब्धीभव तद्राजन् गच्छामि विसृजाद्य माम् । मनागपि न कालुष्यं विद्यते मम चेतसि ॥ ३४१ ॥
इत्युक्तवंतं तं दूतं परिरभ्य स्वबंधुवत् । विरचय्याञ्जलिं राजा विससर्ज प्रजापतिः ॥ ३४२ ॥
अश्वग्रीवांतिकं दूतः स ययौ कतिभिर्दिनैः । तद्धर्षणकथा त्वग्रे वर्धापकपुमानिव ॥ ३४३ ॥
तदा हि चंडवेगस्य त्रस्तः सर्वपरिच्छदः । त्रिपृष्ठोदंतमखिलं शशंसागत्य भूपतेः ॥ ३४४ ॥
दूतोऽद्राक्षीद्धयग्रीवमुद्ग्रीवं रक्तलोचनम् । जगत्कवलनोद्युक्तमिव वैवस्वतं[2] स्थितम् ॥ ३४५ ॥
मन्ये मद्धर्षणोदंतो राज्ञो व्यज्ञपि केनचित् । दूतोऽपि निश्चिकायैवमिंगितज्ञा[3] हि सेवकाः ॥ ३४६ ॥
राज्ञा पृष्टः स आचख्यौ वृत्तांतमजितोपि तम् । उग्राणां स्वामिनां ह्यग्रे कोऽन्यथा वक्तुमीश्वरः ॥३४७॥
स्मरन् स्वप्रतिपन्नं[4] च दूत एवं व्यजिज्ञपत् । भक्तोऽहमिव ते देव स्वयं राजा प्रजापतिः ॥ ३४८ ॥
यच्चक्रे तत्कुमाराभ्यां सा बालसुलभाज्ञता । खिद्यते त्वधिकं तेन कर्मणा स कुमारयोः ॥ ३४९ ॥
अतिशेषे यथा शक्त्या त्वमशेषेषु राजसु । तथातिशेते भक्त्या च प्रजापतिर्नृपस्त्वयि ॥ ३५० ॥

---

१ क्षमाधारिणामियमेव परीक्षा इत्यर्थः । २ यमराजम् । ३ इंगितं मनोगतभावस्तज्ज्ञाः । ४ आत्मनांगीकृतम् ।

स्वप्ने स्वयंप्रभाधौताशेंदुलेखाविलोकनात् । स्वयंप्रभेत्यभिधया क्रमेण तनयाप्यभूत् ॥ ४१९ ॥
संप्राप्तयौवनं यौवराज्ये राजा महाभुजम् । अर्ककीर्तिं विनिदधे कीर्तिगंगाहिमाचलम् ॥ ४२० ॥
स्वयंप्रभापि संप्राप क्रमयोगेन यौवनम् । वनस्थलीव सुभगंकरणीं मधुसंपदम् ॥ ४२१ ॥
मुखचंद्रमसा रेजे राका मूर्तिमतीव सा । केशपाशतमिस्रेणामावास्येव च देहिनी ॥ ४२२ ॥
तस्याः कर्णांतगे नेत्रे कर्णोत्तंसांबुजे इव । कर्णौ च प्रसरंत्योर्दृक्सरस्योः संवराविव ॥ ४२३ ॥
पाणिपादाधरदलै रक्तैर्वल्लीव पल्लवैः । साक्षात् कुचाभ्यां चोच्चाभ्यां क्रीडाद्रिभ्यामिव श्रियः ॥ ४२४ ॥
आवर्त इव लावण्यसरितो नाभिराबभौ । अंतरद्वीपसदृशी तस्याः श्रोणी च विस्तृता ॥ ४२५ ॥
तस्याः सर्वांगसौभाग्यनिधेः प्रतिनिधिर्न हि । सुरस्त्रीष्वसुरस्त्रीषु विद्याधरवधूष्वपि ॥ ४२६ ॥
अथाभिनंदनजगन्नंदनौ चारणौ मुनी । विहायसा विहरंतौ पुरे तत्र समेयतुः ॥ ४२७ ॥
ऋद्ध्या महत्या श्रीदेवीमूर्त्यंतरमिवेयुषी । स्वयंप्रभापि तौ गत्वा ववंदे मुनिपुंगवौ ॥ ४२८ ॥
तद्देशनां समाकर्ण्य कर्णामृतरसायनम् । सम्यक्त्वं प्रतिपेदे सा नीलीरागमिव स्थिरम् ॥ ४२९ ॥
सम्यक् श्रावकधर्मं सा प्रत्यश्रौषीत्तदंतिके । प्रमाद्यंति शुभात्मानो न हि ज्ञात्वा मनागपि ॥ ४३० ॥
ततोऽन्यतो जग्मतुस्तौ विहर्तुं मुनिपुंगवौ । साप्यन्यदा पर्वदिने प्रत्यपद्यत पौषधम् ॥ ४३१ ॥
पारणेऽथ द्वितीयेऽह्नि कृत्वार्चादि जिनेशितुः । समानीय च तच्छेषामर्पयामास सा पितुः ॥ ४३२ ॥

---

१ स्वयंप्रभया धौता आशा दिशो येनैतादृश इन्दुः चंद्रस्तस्य लेखा तस्या विलोकनात् । २ कीर्तिरेव गंगा तस्या उद्भवत्वेन हिमाचलम् । ३ वसंतलक्ष्मीम् । ४ पूर्णिमा । ५ प्राकाराविव । ६ शुश्राव । ७ स्नानजलमित्यर्थः ।

नीलीरक्तांशुकमयः स व्योम्न इव कंचुकः । तडिल्लतामंडनभृत्समंताद्व्यानशे दिशः ॥ ५० ॥
अत्रांतरे समुत्तस्थावामूलांदोलितद्रुमः । पातालकुंभसर्वस्वमिवोच्चंडः समीरणः[2] ॥ ५१ ॥
वातेन तेन महता स महानपि वारिदः । अर्कतूलमिवोद्भूय दिशोदिशमनीयत ॥ ५२ ॥
आविर्भूतं क्षणान्मेघं विनष्टं च क्षणादपि । तं प्रेक्ष्य स क्षमानाथः सुधीरेवमचिंतयत् ॥ ५३ ॥
असौ संपश्यमानानां दृष्टनष्टो यथांबुदः । ज्ञातं तथान्यदपि हि संसारे सर्वमीदृशम् ॥ ५४ ॥
तथाहि स्वेच्छया जल्पन् गायन्नृत्यन् हसन्नथ । दीव्यन् विचित्रान्द्रविणार्जनोपायान् विचिंतयन् ॥ ५५ ॥
गच्छंस्तिष्ठन् शयानो वाधिरूढो वाहनेऽपि वा । कुप्यन्वा विलसन्वाऽपि गृहे वा बहिरेव वा ॥ ५६ ॥
कालादिष्टेन सद्योऽपि दंदशूकेन[3] दश्यते । विद्युद्दंडेन चंडेन विनिपत्य निपात्यते ॥ ५७ ॥
मतंगजेन मत्तेन पिष्यते वा रदादिभिः[4] । जीर्णवप्रादिभीत्त्या वा विनिपत्य पिधीयते ॥ ५८ ॥
व्याघ्रेण भक्ष्यते वापि बुभुक्षाक्षामकुक्षिणा । दोषेण वैक्रियेणाथ दुश्चिकित्स्येन गृह्यते ॥ ५९ ॥
अकस्माद्धुन्मदेनाश्व पात्यते तुरगादिना । वैरिचौरादिना वापि हन्यते क्षुरिकादिना ॥ ६० ॥
दह्यते वा प्रदीप्तेन प्रदीपनकवह्निना । कृष्यते वा महावृष्टिसरित्पूरादिरंहसा ॥ ६१ ॥
बलवद्वातदोषेण सर्वांगं भज्यतेऽथवा । आश्लिष्यंते श्लेष्मणा वा शांताशेषतनूष्मणा ॥ ६२ ॥
यदि वा पित्तदोषेण प्रबलेन विलुप्यते । सद्यस्कसन्निपातेन यदि वा परिभूयते ॥ ६३ ॥
लूतया[5] भक्ष्यते वाथ प्राप्यते राजयक्ष्मणा । विसूचिकोपद्रवेण[6] यदि वापि कदर्थ्यते[7] ॥ ६४ ॥

---

१ अतिमहान् । २ वायुः । ३ दंदशूकः सर्पः । ४ दंतादिभिः । ५ लूता रोगविशेषः । ६ रोगविशेषः । ७ पीड्यते ।

तेषां कलकलं श्रुत्वा दूरतोऽपि प्रजापतौ । किमेतदिति संभ्रांतेऽवादीज्ज्वलनजट्यदः ॥ ५३१ ॥
अमी खलु हयग्रीवेणादिष्टाः सुभटा इह । आयांत्यायांतु यूयं तु प्रेक्षध्वं मम कौतुकम् ॥ ५३२ ॥
मा त्रिपृष्ठो माचलो वा संप्रहार्षीन्ममाग्रतः । इत्युत्सुकः परिकरं बद्धोत्तस्थौ रणाय सः ॥ ५३३ ॥
प्रजह्रुर्युगपत्तस्मिन्नश्वग्रीवभटाः क्रुधा । स्वपक्षे हि विपक्षस्थे स्यादमर्शो विशेषतः ॥ ५३४ ॥
निरास तेषां शस्त्राणि शस्त्रैर्ज्वलनजट्यपि । अपवादैरिवोत्सर्गान् सोऽपवादबहिष्कृतः ॥ ५३५ ॥
उपदुद्राव तान् सर्वान्निशातशरवृष्टिभिः । स्तंबेरमानिवोत्पातमेघः करकवृष्टिभिः ॥ ५३६ ॥
विद्याबलाद्दोर्बलाच्च तेषां दर्पं चिरोद्भवम् । जहार ज्वलनजटी वांतिकः फणिनामिव ॥ ५३७ ॥
इत्यभाषत तानग्निजटी भाग्यात यात रे । निर्नाथान् वः समायातान् वराकान् को हनिष्यति ॥५३८॥
मध्येकृत्य हयग्रीवं नाथमायात पर्वते । रथावर्त्ते वयमपि समेष्यामोऽचिरादपि ॥ ५३९ ॥
तेनैवमुक्ताः सावज्ञं हयग्रीवभटा द्रुतम् । काकनाशं प्रणेशुस्ते प्राणानादाय भीरवः ॥ ५४० ॥
मषीलिप्तैरिवामंदमंदाक्षमलिनैर्मुखैः । तेऽपि गत्वा तदाचख्युर्मयूरग्रीवसूनवे ॥ ५४१ ॥
हुताशनइवाहुत्या तद्वचोभिरदीप्यत । सद्यो नीलांजनासूनुरक्षय्यभुजविक्रमः ॥ ५४२ ॥
कोपारुणकरालाक्षः स रक्षइव भीषणः । सामंतामात्यसेनानीप्रभृतीनेवमादिशत् ॥ ५४३ ॥
सर्वे सर्वाभिसारेण भो समागच्छत द्रुतम् । चलत्विदानीं नः सैन्यमुद्वेल इव सागरः ॥ ५४४ ॥

---

१ यथाऽपवादशास्त्रैर्विधिशास्त्राणि बाध्यंते तथा । २ गारुडिकः । ३ तिरस्कारसहितं यथा तथा । ४ अमंदं च तन्मंदाक्षं लज्जा च तेन मलिनैः । ५ सर्वसाधनेन ।

कुर्वंतो भीषणान्नादानाह्वयंतश्चांतकम् । वरूथिनीं त्रिपृष्ठस्य ते वेगादुपदुद्रुवुः ॥ ६११ ॥
अथ म्लानमुखाः सर्वे भग्नोत्साहाः क्षणादपि । एवं विचिंतयामासुः प्राजापत्यस्य सैनिकाः ॥ ६१२ ॥
मार्गभ्रांता वयमिह पैरेतनगरे किमु । राक्षसानां किमावासे विंध्यस्थल्यां किमागताः ॥ ६१३ ॥
भूतान्येतानि सत्वानि क्रूराण्यश्वगलाज्ञया । संप्रहर्तुं सहास्माभिः स्वस्थानेभ्यः किमाययुः ॥ ६१४ ॥
मन्ये कन्यानिमित्तो नः प्रलयोऽयमुपस्थितः । स्थितं नः पौरुषेणाथ त्रिपृष्ठश्चेत् स्वयं जयी ॥ ६१५ ॥
एवं चिंताप्रपन्नेषु तेषु व्यापन्नबुद्धिषु । पराङ्मुखीभवत्सूचे त्रिपृष्ठं वह्निजटयदः ॥ ६१६ ॥
विद्याधराणां मायेयं न किंचित् पारमार्थिकम् । वेद्म्यहं सर्पघर्षं हि सर्पो जानाति नापरः ॥ ६१७ ॥
अशक्तिः स्वयमाख्याता तस्यैवं मंदबुद्धिभिः । शक्तः क एवं कुरुते बालस्येव विभीषिकाम् ॥ ६१८ ॥
तदुत्तिष्ठ महावीर समारोह महारथम् । उत्तुंगादवरोहंतु मानशैलाच्च विद्विषः ॥ ६१९ ॥
त्वयि च स्यंदनारूढे देवेऽपि च दिवाकरे । समुद्यतकरे कस्य तेजो जृंभिष्यते ननु ॥ ६२० ॥
इत्युक्ते वह्निजटिना सैन्यमाश्वासयन्निजम् । त्रिपृष्ठो रथिनां श्रेष्ठोऽध्यारुरोह महारथम् ॥ ६२१ ॥
रथं सांग्रामिकं रामोऽप्यारुरोह महाभुजः । न मुंचत्यन्यदाप्येकं सोऽनुजं किं पुनर्युधि ॥ ६२२ ॥
विद्याधराश्च ज्वलनजटिप्रभृतयो रथान् । समारुरुहुरत्युच्चैः सिंहाइव गिरिस्थलीम् ॥ ६२३ ॥
पुण्याकृष्टास्ततो देवास्त्रिपृष्ठाय समार्पयन् । शार्ङ्गं नाम धनुर्दिव्यं गदां कौमोदकीमपि ॥ ६२४ ॥
पांचजन्याभिधं शंखं कौस्तुभं नामतो मणिम् । खड्गं च नंदकं नाम वनमालेति दाम च ॥ ६२५ ॥

१ प्रेतनगरे । २ नष्टबुद्धिषु । ३ समुद्यतहस्ते, अन्यत्र समुद्यतकिरणे । ४ श्रेष्ठः ।

रागद्वेषादयश्चेतो द्विषंतो नित्यमुद्यताः । इतः कषायाः प्रबलाः खला इव विपत्प्रदाः ॥ ७८ ॥
न किंचन सुखायेह संसारे मरुदेशवत् । सुखवासेन तिष्ठामीत्या[1]ः प्राणी न विरज्यति ॥ ७९ ॥
सुखावासे विमूढस्य प्रसुप्तस्येव सौप्तिकम्[2] । कालपाशः पतत्याशु सद्यः प्राणापहारकृत् ॥ ८० ॥
तदमुष्य शरीरस्य नश्वरस्य यथा तथा । फलं हि धर्माचरणं सिद्धान्नस्येव भोजनम् ॥ ८१ ॥
नश्वरेणशरीरेणाविनश्वरपदार्जनम् । अहो सुकरमप्येतद्विमूढैः क्रियते न हि ॥ ८२ ॥
वपुषा तदनेनाद्य क्रेतुं निर्वाणसंपदम् । भृशमेषोऽहमुत्सास्ये निधास्ये राज्यमात्मजे ॥ ८३ ॥
इति निश्चित्य सत्प्रसादाजूहवदिलापतिः । द्वारपालेन विमलकीर्त्तिं कीर्त्तिप्रियं सुतम् ॥ ८४ ॥
प्रकृष्टदैवतस्येव भक्त्या परमया पितुः । पादौ नत्वा कुमारः स बद्धांजलिरदोऽवदत् ॥ ८५ ॥
महतापि निदेशेन प्रसीदानुगृहाण माम् । पुत्रभांडमसौ बाल इति शंकां च मा कृथाः ॥ ८६ ॥
प्रत्यर्थिनः[3] पार्थिवस्य कस्याच्छिंदेऽद्य मेदिनीम् । सपर्वतं पर्वतीयं[4] नृपं कं साधयामि च ॥ ८७ ॥
सजलं जलदुर्गस्थमंतयामि रिपुं च कम् । यो वः शल्यायतेऽन्योपि तमप्याशूत्खनाम्यहम् ॥ ८८ ॥
बालोऽपि तव पुत्रोऽस्मि क्षमो दुःसाध्यसाधने । तातस्यैव प्रभावोऽयं न भटंमन्यता[5]त्र मे ॥ ८९ ॥
राजापि व्याजहारैवं प्रत्यर्थी पार्थिवो न मे । पर्वतीयो न वा कोऽपि व्यतिक्रामति मद्वचः ॥ ९० ॥
न च द्वीपाधिपः कोऽपि मदाज्ञां व्यतिलंघते । यत्साधनाय वत्स त्वां प्रहिणोमि महाभुज ॥ ९१ ॥
एकः शल्यायते किं तु भववासो ममानिशम् । तदुद्धर कुलोत्तंस धराभारं धुरंधर ॥ ९२ ॥

---

१ प्रवासात । २ रात्रियुद्धं । ३ शत्रोः । ४ पर्वते भवं । ५ भटं आत्मानं मन्यते तस्य भावः ।

रथस्थो व्योमयानेन क्रूरग्रहइवापरः । द्विषो ग्रसितुमव्यग्रो हयग्रीवोऽप्यथाचलत् ॥ ६४० ॥
ववर्ष बाणैः पाषाणैः शल्यैरस्त्रैरथापरैः । अधित्रिपृष्ठसैन्यं सोऽस्त्रमेघइव नूतनः ॥ ६४१ ॥
अस्त्रवृष्ट्या तयाक्राम्यत्त्रैपृष्ठमखिलं बलम् । धीरा अपि हि किं कुर्युर्भूचरा व्योमचारिषु ॥ ६४२ ॥
रामत्रिपृष्ठज्वलनजटिनः स्यंदनस्थिताः । उत्पेतुर्नभसा सद्यः समं विद्याधरैर्निजैः ॥ ६४३ ॥
नभस्युभयतो विद्याधरा युयुधिरेऽधिकम् । विद्याशक्तिं दर्शयंतो गुरुष्विव परस्परम् ॥ ६४४ ॥
भूचरा भूचरैः सार्धं सैन्ययोरुभयोरपि । क्रुध्यंतः[1] समयुध्यंत गजा इव गजैर्वने ॥ ६४५ ॥
विद्याधराणामन्योऽन्यं शस्त्रैः प्रहरतां भृशम् । अदृष्टपूर्वासृग्वृष्टिरुत्पातकृदिवाभवत् ॥ ६४६ ॥
अन्योऽन्याघातशब्देन शब्दायितनभस्तलम् । दंडसंगीतवत्[2] कैश्चिद्दण्डादण्डि प्रचक्रमे ॥ ६४७ ॥
खड्गदंडैः सदोर्दंडचंक्रमिानश्च केचन । डिंडिमानिव कोणेन[3] विपक्षान् पर्यताडयन् ॥ ६४८ ॥
मिलंतः केचिदन्योऽन्यमन्यजन्यजयासहाः[4] । रैंफारानास्फोटयामासुः स्फुरत्कान्[5] कांस्यतालवत् ॥६४९॥
शक्तीः प्रचिक्षिपुः केऽपि सीमंतितनभस्तलाः[7] । तरूत्तरूतिति कुर्वाणास्तरूतितस्तोयदाइव ॥ ६५० ॥
शल्यैः[6] प्रववृषुः केचिदुरगैरिव[8] दारुणैः । पत्रिभिः प्रस्फुरत्पत्रैः[9] पत्रिराजैरिवापरे ॥ ६५१ ॥
बले द्वयोरुत्पतितैः पतितैश्चैवमायुधैः । नानायुधमयीव द्यौर्धरित्रीवाभवत्तदा ॥ ६५२ ॥

---

१ कुप्यंतः । २ दंडान् परस्परमास्फाल्य यत् संगीतं क्रियते तद्दंडसंगीतं तद्वत् । ३ कोणं वीणादिवादनदंडः । ४ अन्यस्य युद्धजयस्तस्यासहाः । ५ दीप्तान् । ६ शस्त्रविशेषान् । ७ सीमन्तः केशवेशस्तेन यथा भागद्वयेन मध्ये मार्गो भवति तद्वत् कृतं नभस्तलं यैस्ते । ८ सर्पैरिव । ९ प्रस्फुरंति पत्राणि वाणाग्राणि गरुडपक्षे पक्षाणि येषां तैः पत्रिभिर्बाणैः, पत्रिराजैर्गरुडैरिव ।

मयेव गृह्यतामेतत्त्वया राज्यं क्रमागतम् । आत्तदीक्षो यथाभीक्ष्णं भववासं त्यजाम्यहम् ॥ ९३ ॥
अलंघनीयां गुर्वाज्ञां स्वसंधां चाधुना कृताम् । संस्मरन् वत्स भक्त्यापि नान्यथा कर्तुमर्हसि ॥ ९४ ॥
दध्याविति कुमारोऽपि तातेनाज्ञां प्रयच्छता । मत्संधां स्मारयता च हा कृतोऽस्मि निरुत्तरः ॥ ९५ ॥
इत्यादि चिंतयन् राजपुत्रो राज्ञा स्वपाणिना । आदाय राज्ये निदधे साभिषेकमहोत्सवम् ॥ ९६ ॥
राजापि कृतदीक्षाभिषेको विमलकीर्त्तिना । शिबिकारूढश्चागात् सूरिं नाम्ना स्वयंप्रभम् ॥ ९७ ॥
तस्य चाचार्यवर्यस्य समीपे स नृपाग्रणीः । प्राव्राजीत्सर्वसावद्यप्रत्याख्यानपुरःसरम् ॥ ९८ ॥
साम्राज्यवत्परिव्रज्यामंतरंगद्विषज्जयात् । स संयमरथारूढो विधिवत्पर्यपालयत् ॥ ९९ ॥
विंशतेः स्थानकानां च स्थानकैरपरैरपि । स पुपोष निजं कर्म तीर्थकृन्नामनामकम् ॥ १०० ॥
उपसर्गैरनुद्विग्नो मोदमानः परीषहैः । स आयुः क्षपयामास स्वयाममिव यामिकः ॥ १०१ ॥
विहितानशनो मृत्वा कल्पं स प्रापदानतम् । निर्वाणफलदायिन्या दीक्षायाः स्तोकमीदृशम् ॥ १०२ ॥
ततश्च जंबूद्वीपे प्राग्भरतार्धस्य भूषणम् । श्रावस्तीत्यस्ति विस्तीर्णा नगरी श्रीगरीयसी ॥ १०३ ॥
बभूव तस्यामिक्ष्वाकुकुलक्षीरोदचंद्रमाः । जितारिरित्यरिजयाद्यथार्थाख्यः क्षमापतिः ॥ १०४ ॥
मृगेष्विव मृगेंद्रस्य पक्षींद्रस्येव पक्षिषु । न समो नाधिको वापि तस्याभूत्कोऽपि राजसु ॥ १०५ ॥
स रेजे राजभीराजा पत्तीकृत्य प्रवेशितैः । ग्रहैरिव ग्रहपतिर्मरुलांतः प्रवेशिभिः ॥ १०६ ॥
नाधर्म्यं किंचिदप्यूचे नाचचार च तादृशम् । नाचिंतयच्च तादृक्षं स धर्म इव मूर्त्तिमान् ॥ १०७ ॥

---

१ प्रतिज्ञां ।

वक्षःस्थले शैलशिलाविशालकठिने हरेः । चपेटयैव तच्चक्रं पपात न तु धारया ॥ ७२६ ॥
आहतस्तस्य चक्रस्य तुम्बाग्रेण दृढीयसा । पपात मूर्छितो विष्णुः कुलिशेनेव ताडितः ॥ ७२७ ॥
तस्थौ तत्रैव तच्चक्रं प्रतिजाग्रदिवांबरे । हाहारवः समुत्तस्थौ विष्णुसैन्येऽखिलेऽपि हि ॥ ७२८ ॥
प्रतिपक्षप्रहारेण भ्रातरं प्रेक्ष्य मूर्छितम् । मुमूर्छ नो हतोऽप्याशु बलभद्रः प्रियानुजः ॥ ७२९ ॥
सिंहनादं हयग्रीवश्चक्रे सिंहइवोच्चकैः । तत्सैन्यैर्जयशंसीव चक्रे किलकिलारवः ॥ ७३० ॥
लब्धसंज्ञः क्षणाद्रामः श्रुत्वा तं चोर्जितध्वनिम् । अस्थाने कस्य हर्षोयमिति पप्रच्छ सैनिकान् ॥ ७३१ ॥
तेऽप्यूचुर्देव हृष्टानां कुमारव्यापदाधुना । हयग्रीवस्य सैन्यानामिदं गर्जितमूर्जितम् ॥ ७३२ ॥
ऊचे रामोऽपि मद्बंधोरपि व्यापत्तिरस्ति किम् । रथे शेते क्षणमसौ रणश्रांतो ममानुजः ॥ ७३३ ॥
मद्बंधोर्व्यापदमिमां व्यलीकां स्वमनीषया । तर्कयित्वा प्रहृष्टानामेष हर्षं हराम्यहम् ॥ ७३४ ॥
अरे तिष्ठ हयग्रीव सरथं सपरिच्छदम् । गदया चूर्णयाम्यद्य सद्यो मशकमुष्टिवत् ॥ ७३५ ॥
इत्युत्पाद्य गदां शृंगं रथावर्तगिरेरिव । दधाव यावत्तावच्च त्रिपृष्ठः प्रत्यबुध्यत ॥ ७३६ ॥
आर्यार्य भवतः कोऽयमायासो मयि सत्यपि । इति ब्रुवन् सुप्तइव समुत्तस्थौ जनार्दनः ॥ ७३७ ॥
त्रिपृष्ठमुत्थितं दृष्ट्वा ग्रामादिव समागतम् । दोर्दंडाभ्यामायताभ्यामालिलिंगाथ लांगली ॥ ७३८ ॥
स्वेशप्रबोधपिशुनो हृदि शल्यायितो द्विषाम् । हर्षकोलाहलश्चक्रे हृषीकेशस्य सैनिकैः ॥ ७३९ ॥

---

१ त्रिपृष्ठस्य व्यापदा । २ अचलः ।

विनेतरि दुराचारानर्थिभ्योऽर्थांश्च दातरि । अधार्मिको दुःस्थितो वा तस्मिन् राज्ञि न कोप्यभूत् १०८
सोऽस्त्रपाणिः कृपालुश्च शक्तिमांश्च क्षमापरः । विद्वांश्च गतमात्सर्यो युवा चासीज्जितेंद्रियः ॥ १०९ ॥
बभूव महिषी तस्यानुरूपा रूपसंपदा । सेनानीर्गुणसैन्यानां सेनादेवीति नामतः ॥ ११० ॥
अबाधमान इतरान् पुरुषार्थान् यथाक्षणम् । अरंस्त स तया देव्या रोहिण्येव हिमद्युतिः ॥ १११ ॥
इतश्च नवमे कल्पे स्वमायुः पर्यपूरयत् । जीवस्तदानीं विपुलवाहनस्य महीपतेः ॥ ११२ ॥
फाल्गुनस्य सिताष्टम्यां चंद्रे मृगशिरःस्थिते । आनंतात्स परिच्युत्य सेनाकुक्षाववातरत् ॥ ११३ ॥
क्षणं सुखं तदा जज्ञे नारकप्राणिनामपि । लोकत्रयेऽपि चोद्योतो विद्युदुद्योतसोदरः ॥ ११४ ॥
शयानया रात्रिशेषे प्रविशंतो मुखांबुजे । सेनादेव्या ददृशिरे महास्वप्नाश्चतुर्दश ॥ ११५ ॥
गर्जन् गजपतिर्गौरः शरन्मेघ इवोच्चकैः । वृषः स्फटिकशैलस्य गंडशैल इवामलः ॥ ११६ ॥
केसरी केसरभरेणातिकुंकुमकेसरः । क्रियमाणाभिषेका च करिभ्यां कमलालया ॥ ११७ ॥
पंचवर्णप्रसूनस्रक् संध्याभ्रछवितस्करा । राजतो दर्पण इव संपूर्णो रजनीकरः ॥ ११८ ॥
विसूत्रितांधकारं च चंद्रदीधीतिमंडलम् । प्रक्वणत्किंकिणीजालपताकश्च महाध्वजः ॥ ११९ ॥
तापनीयः पयस्कुंभः पयोजपिहिताननः । विकासिभिः स्मयमानमिव पद्मैर्महासरः ॥ १२० ॥
ऊर्मिविहस्तकैर्नृत्यन्निव क्षीरमहोदधिः । अदृष्टप्रतिमानं च विमानं रत्ननिर्मितम् ॥ १२१ ॥
रत्नपुंजो मणिगणः पातालफणिनामिव । विभावसुश्च निर्धूमः प्रत्यूषतपनोपमः ॥ १२२ ॥

---

१ देवलोके । २ तन्नाम्नो नवमदेवलोकात् । ३ गिरेश्च्युतः स्थूलोपलः । ४ लक्ष्मीः । ५ सौवर्णः ।

पवित्रं धारयामास हृदि सर्वज्ञशासनम् । श्रीवत्समिव शश्वत् स वत्सलो धर्मशीलिषु ॥ २४ ॥
स्वान्ववायसरोहंसी रतिरूपविजित्वरी । जया नाम महादेवी तस्यासीत् प्रीतिभाजनम् ॥ २५ ॥
सा जाह्नवीव गंभीरा वक्रमन्थरगामिनी । पूर्वाम्भोधिमिवास्ताघं वसुपूज्यमनोऽविशत् ॥ २६ ॥
सद्भक्त्या परमात्मेव शुद्धस्फटिकनिर्मले । वसुपूज्यनृपोऽप्यस्याः सदा चेतस्यवर्तत ॥ २७ ॥
रूपेण लवणिम्ना च गुणैस्तैश्चानुरूपयोः । तयोर्विलसतोः कालः कोऽप्यद्वैतसुखो ययौ ॥ २८ ॥
इतः कल्पे प्राणताख्ये पद्मोत्तरमहीपतेः । जीवः स्वमायुरुत्कृष्टं सुखमग्नोऽत्यवाहयत् ॥ २९ ॥
ज्येष्ठस्य शुक्लनवम्यां चंद्रे शतभिषग्गते । स च्युत्वा प्राणताज्जीवो जयाकुक्षाववातरत् ॥ ३० ॥
ईक्षांचक्रे तदानीं च तीर्थकृज्जन्मसूचकान् । सुखसुप्ता जयादेवी महास्वप्नांश्चतुर्दश ॥ ३१ ॥
मृगांकमभ्रलेखेवाद्रिगुहेव मृगाधिपम् । तं गर्भं धारयामास जया स्वामिन्यनुत्तमम् ॥ ३२ ॥
फाल्गुनश्यामभूतेष्टातिथौ भेऽपि च वारुणे । रक्तवर्णं महिषांकं सासूत समये सुतम् ॥ ३३ ॥
संजातासनकंपाः षट्पंचाशद्दिक्कुमारिकाः । स्वामिनः स्वामिमातुश्च सूतिकर्मेत्य चक्रिरे ॥ ३४ ॥
शक्रोऽपि पालकारूढस्तत्रैत्य सपरिच्छदः । स्वामिवत् स्वामिभुवनं प्रदक्षिण्यकरोद्द्रुतम् ॥ ३५ ॥
तत्प्रविश्य जयादेव्या दत्वावस्वापनीं हरिः । पार्श्वेऽर्हत्प्रतिबिंबं च न्यस्याभूत् पंचमूर्तिकः ॥ ३६ ॥
मूर्त्यैकयाग्रहीन्नाथमातपत्रमथान्यया । द्वाभ्यां तु चमरे वल्गन्नन्यया तु पुरो ययौ ॥ ३७ ॥

---

१ स्वान्ववायः स्ववंशः स एव सरस्तस्मिन् हंसी । २ अतिगंभीरं समुद्रं मनश्च अतिगंभीरं निष्पापम् । ३ सौन्दर्येण ।
४ फाल्गुनकृष्णचतुर्दश्याम् । ५ शतभिषानक्षत्रे । ६ भुवनम् । ७ उत्प्लुत्य गच्छन् ।

अपत्यासंभवे स्त्रीषु क्षेत्रजापत्यवादिनाम् । सदोषाणामपि स्त्रीणां रजसा शुद्धिवादिनाम् ॥ ३३७ ॥
श्रेयोबुद्ध्याध्वरहतच्छागशिश्नोपजीविनाम् । सौत्रामण्यां सशतंतौ सीधुपानविधायिनाम् ॥ ३३८ ॥
गूथाशिनीनां च गवां स्पर्शतः पूतमानिनाम् । जलादिस्नानमात्रेण पापशुद्ध्यभिधायिनाम् ॥ ३३९ ॥
वटाश्वत्थामलक्यादिद्रुमपूजाविधायिनाम् । वह्नौ हुतेन हव्येन देवप्रीणनमानिनाम् ॥ ३४० ॥
भुवि गोदोहकरणाद्विष्टशान्तिकमानिनाम् । योषिद्विडम्बनाप्रायव्रतधर्मोपदेशिनाम् ॥ ३४१ ॥
जटापटलभस्मांगरागकौपीनधारिणाम् । अर्कधत्तूरमालूरैर्देवपूजाविधायिनाम् ॥ ३४२ ॥
कुर्वतां गीतनृत्यादि पुतौ वादयतां मुहुः । मुहुर्वदननादेनातोद्यनादविनोदिनाम् ॥ ३४३ ॥
असभ्यभाषापूर्वं च मुनीन् देवान् जनान् भ्रताम् । विधाय व्रतभंगं च दासीदासत्वमिच्छताम् ॥३४४॥
अनन्तकायकंदादिफलमूलदलाशिनाम् । कलत्रपुत्रयुक्तानां वनवासजुषामपि ॥ ३४५ ॥
भक्ष्याभक्ष्ये पेयापेये गम्यागम्ये समात्मनाम् । योगिनाम्ना प्रसिद्धानां कौलाचार्यान्तवासिनाम् ॥३४६॥
अन्येषामपि जैनेन्द्रशासनास्पृष्टचेतसाम् । क्व धर्मः क्व फलं तस्य तस्य स्वाख्यातता कथम् ॥ ३४७ ॥
जैनेन्द्रस्यापि धर्मस्य यदत्रामुत्र वा फलम् । आनुषंगिकमेवेदं मुख्यं मोक्षं प्रचक्षते ॥ ३४८ ॥
सस्यहेतौ कृषौ यद्वत् पलालाद्यानुषंगिकम् । अपवर्गफले धर्मे तद्वत् सांसारिकं फलम् ॥ ३४९ ॥
एवं तां देशनां श्रुत्वा भूयांसः प्राव्रजञ्जनाः । प्राप द्विपृष्ठः सम्यक्त्वं श्रावकत्वं च लांगली ॥ ३५० ॥

---

१ स्वभार्यासु कुलजेनान्येन वा पुरुषेण पुत्रोत्पादनं क्षेत्रजः । २ ऋतुकालेन । ३ यज्ञविशेषावेतौ । ४ सीधुर्मद्यम् । ५ विष्ठाशिनीनाम् । ६ पुष्पविशेषैः । ७ कौलाचार्यस्य शिष्याणाम् । ८ गौणम् अवांतरफलम् ।

गंधांबुवृष्टिरभवद्दिवि दध्वान दुंदुभिः । रजोऽपनिन्ये पवनो मही चोच्छ्वासमासदत् ॥ १३६ ॥
तथाधोलोकतो भोगंकराद्या दिक्कुमारिकाः । अष्टैयुः स्वामिसदनमर्हज्जन्मविदोऽवधेः ॥ १३७ ॥
तास्त्रिः प्रदक्षिणीकृत्य जिनं तज्जननीमथ । नत्वा स्वं ज्ञापयामासुर्मा भैषीर्वादपूर्वकम् ॥ १३८ ॥
दिश्यैशान्यां स्थिताः कृत्वा समुद्घातं च वैक्रियम् । जह्रुः संवर्तवातेनायोजनं कंटकादि च ॥ १३९ ॥
भगवन्तं ततो नत्वा तदासन्ने निषद्य च । गायन्त्यस्तद्गुणांस्तस्थुर्गोत्रस्त्रिय इवोच्चकैः ॥ १४० ॥
अथोर्ध्वलोकतो मेघंकराद्या दिक्कुमारिकाः । अष्टैयुस्तद्वदानेमुः स्वामिनं स्वामिमातरम् ॥ १४१ ॥
विकृत्याभ्राणि तद्वेश्मपार्श्वतो योजनावधि । रजांसि शमयामासुस्ता गंधोदकवृष्टिभिः ॥ १४२ ॥
जानुदघ्नीं पंचवर्णपुष्पवृष्टिं विधाय ताः । नत्वा जिनं जिनगुणान् गायंत्योऽस्थुर्यथोचितम् ॥ १४३ ॥
दिक्कुमार्यः प्राग्रुचकादष्ट नंदोत्तरादयः । एत्य नत्वा तथैवास्थुर्गायन्त्यो धृतदर्पणाः ॥ १४४ ॥
दिक्कुमार्योऽपाग्रुचकात्समाहारादयोऽष्ट च । एत्य नत्वा दक्षिणेऽस्थुः सभृंगाराग्रपाणयः ॥ १४५ ॥
प्रत्यग्रुचकतोऽष्टैयुर्दिक्कुमार्य इलादयः । नत्वास्थुर्व्यजनभृतो गायंत्यः पश्चिमेन तु ॥ १४६ ॥
अष्टोदग्रुचकादेयुर्देव्यश्चालंबुसादयः । नत्वा चोत्तरतस्तस्थुर्गायन्त्यो धृतचामराः ॥ १४७ ॥
एयुश्चतस्रश्चित्राद्या विदग्रुचकतोऽप्यथ । नत्वा विदिक्षु तस्थुश्च गायंत्यो दीपपाणयः ॥ १४८ ॥
एयुश्चतस्रो रूपाद्या देव्यो रुचकमध्यतः । चतुरंगुलवर्जं ता नालं निचक्रिरे प्रभोः ॥ १४९ ॥

---

१ गंधयुक्तं अम्बु तस्य वृष्टिः । २ योजनपर्यन्तम् । ३ जानुप्रमाणाम् । ४ भृंगारः स्वर्णरचितपात्रविशेषः झारी इति भाषायां तेन सहितः दक्षिणहस्तः यासां ताः । ५ तालवृन्तधराः ।

जीवो नंदिसुमित्रस्य सोऽनुत्तरविमानतः । प्रच्युत्य सुप्रभादेव्या उदरे समवातरत् ॥ ९३ ॥
चतुरोऽथ महास्वप्नान् हलभृज्जन्मसूचकान् । सुखसुप्ता निशाशेषे सुप्रभादेव्युदैक्षत ॥ ९४ ॥
ततो नवसु मासेषु दिनेष्वर्धाष्टमेषु च । सुप्रभा सुषुवे सूनुमनूनं शशितो रुचा ॥ ९५ ॥
भद्र इत्यभिधां तस्य विदधे रुद्रभूपतिः । कुलभद्रश्रिया सार्धं व्यवर्धिष्ट क्रमेण सः ॥ ९६ ॥
धनमित्रस्य जीवोऽपि प्रच्युत्याच्युतकल्पतः । उत्पेदे पृथिवीकुक्षौ सरसीव सरोरुहम् ॥ ९७ ॥
सापि सप्त महास्वप्नान् शार्ङ्गभृज्जन्मसूचकान् । सुखसुप्ता निशाशेषेऽपश्यत् प्रविशतो मुखे ॥ ९८ ॥
संपूर्णे समये सापि श्यामांगमतिभासुरम् । असूत सूनुं वैडूर्यं वैडूरगिरिभूरिव ॥ ९९ ॥
स्वयंभूरिति तस्यापि नामधेयं प्रमोदभाक् । विदधे रुद्रभूपाल उत्सवेन महीयसा ॥ १०० ॥
नित्यमेव हि धात्रीभिः पाल्यमानः स पंचभिः । व्यवर्धिष्ट समितिभिर्मुनेरिव तपोऽनघम् ॥ १०१ ॥
भद्रस्वयंभुवौ प्रीत्या संगच्छेते स्म सर्वदा । प्रवाहाविव तौ गांगयामुनौ श्वेतमेचकौ ॥ १०२ ॥
सेहिरे न तयोः पादघातान् राजकुमारकाः । तत्पादपरिघातेन भ्रश्यंति स्माद्रयोऽपि यत् ॥ १०३ ॥
नीलपीतांशुकभृतौ तौ तालगरुडध्वजौ । चलंतौ क्रीडयाप्युर्वीं पर्यचालयतामिमाम् ॥ १०४ ॥
अभ्यासः सर्वशस्त्रेषु सर्वशास्त्रेषु चाभवत् । दोर्वीर्यबुद्ध्योस्तारुण्यमिवलक्ष्मीविशेषकृत् ॥ १०५ ॥
पुरीपरिसरेऽन्येद्युः क्रीडन्तौ तावपश्यताम् । हस्त्यश्वकोशबहुलं सारक्षं शिविरं स्थितम् ॥ १०६ ॥

---

१ कान्त्या चंद्रादन्यूनम् चन्द्रसदृशमित्यर्थः । २ कुलस्य भद्रया शुभया लक्ष्म्या । ३ हर्षितः । ४ यथा मुनेस्तपः पंचभिः समितिभिर्वर्धते तथा । ५ श्वेतकृष्णौ । ६ आरक्षैः सहवर्तमानम् ।

ताः कृत्वा विवरं भूमौ न्यधुर्नालं विधानवत् । वज्रैरत्नैश्च संपूर्य दुर्वया पीठिकां व्यधुः ॥ १५० ॥
प्रत्यग्वर्जं प्रतिदिशं जिनजन्मगृहस्य ताः । विचक्रुः कदलीगृहं चतुःशालसमन्वितम् ॥ १५१ ॥
पाणिभ्यां जिनमादाय जिनांबां दत्तबाहवः । अपाग्रंभाचतुःशाले नीत्वा सिंहासने व्यधुः ॥ १५२ ॥
अभ्यञ्ज्य तैलेन लक्षपाकेन तास्ततः । सुगंधेनोद्वर्तनेनो[2]द्वर्तयामासुराशु च ॥ १५३ ॥
नीत्वोभौ प्राक्चतुःशाले न्यस्य सिंहासने च ताः । गंधोदकैरस्नपयन् देवदूष्येण[3] चामृजन् ॥ १५४ ॥
गोशीर्षेण व्यलिंपंश्च देवदूष्यांशुकान्यथ । भूषणानि च दिव्यानि ता द्वाभ्यां पर्यधापयन् ॥ १५५ ॥
उदग्रंभाचतुःशाले जिनं तज्जननीं च ताः । नीत्वोपवेशयामासूरत्नसिंहासनोपरि ॥ १५६ ॥
अथाभियोग्यैरानाय्य भूरि गोशीर्षचंदनम् । समिंधीकृत्य[6] जुहुवुर्वह्नावरणिनिर्मिते ॥ १५७ ॥
स्वामिनः स्वामिमातुश्च रक्षापोट्टलिकामथ । तद्वह्निभस्मना कृत्वा बबंधुस्ता यथाविधि ॥ १५८ ॥
पर्वतायुर्भवेत्युच्चैरुच्चारितगिरोऽथ ताः । कर्णाभ्यर्णे भगवतो ग्रावगोलावताडयन् ॥ १५९ ॥
शय्याजुषं सूतिगृहेऽर्हंतं तन्मातरं च ताः । कृत्वावस्थिरे तारं गायंत्यो मंगलान्यथ ॥ १६० ॥
स्वामिपादांबुजाभ्यर्णे यियासूनीव सर्वतः । तदा च पुरुहूतानामासनानि चकंपिरे ॥ १६१ ॥
जिनजन्मावधेर्ज्ञात्वोत्थाय शक्रोऽपपादुकः । दत्वा पदानि सप्ताष्टान्यवंदत जिनेश्वरम् ॥ १६२ ॥
घंटानिर्घोषसेनानी घोषणामिलितैः सुरैः । परिवव्रे सुरेंद्रोऽथ जिनजन्मोत्सवोत्सुकैः ॥ १६३ ॥

---

१ भाषायां 'चौक' तेन युक्तम् । २ लेपनेन । ३ देववस्त्रेण । ४ पीतचंदनेन । ५ सेवकदेवैः । ६ असमिधं समिधमिव कृत्वा । ७ निर्मथनीयेन काष्ठेन उत्पादिते । ८ पाषाणगोलकौ । ९ दीर्घं । १० इन्द्राणां ।

[1]भरतार्धोद्यानमधुरर्धचक्रधरो मधुः । त्वां शासितुं प्राहिणोन्मां श्रूयतां तदिदं नृप ॥ १४२ ॥

चतुर्भिः कलापकम् ।

त्वां कामं भक्तिकारीति पुरा संविद्महे वयम् । पुत्रौजसाद्यान्यथाभूरिति संशृणमहे जनात् ॥ १४३ ॥
तद्यदि त्वं स[3] एवासि न कश्चित्ते विपर्ययः । स्वामिने प्रेष्यतां दंडो मर्यादीकृत्य कुंचि[4]काम् ॥ १४४ ॥
भर्तुः प्रसादाद्भूयोऽपि तव सर्वं भविष्यति । आदत्ते ह्यंबु यद्भानुः पुनरुज्झति भूरि तत् ॥ १४५ ॥
तस्याप्रसादात्सदपि सर्वस्वं तव यास्यति । श्रियः स्वामिनि रुष्टे हि न तिष्ठंति भयादिव ॥ १४६ ॥
दूरे वा संपदः सन्तु यत् स्वामिनि विरोधिते । कलत्रपुत्रमित्रादि जीवितं च कुतस्तव ॥ १४७ ॥
कृत्वा स्वामिन आदेशं देशं शाधि यथास्थिति । गिरस्ताः संतु मोघा[5]स्त्वत्पिशुनानां शुनामिव ॥ १४८ ॥
अथोद्यद्रोषपरुषं बभाषे पुरुषोत्तमः । दूतत्वेन न वध्योऽसि तेनेदं क[6]द्वदावदः ॥ १४९ ॥
किमुन्मत्तोऽथवा मत्तः प्रमत्तोऽथ पिशाचधीः । ईदृग्भाषी त्वं त्वदीश ईदृग्भाषयिता च सः ॥ १५० ॥
यथा क्रीडासु बालानां स्वेच्छया कोऽपि बालकः । नृपायते तथा मूढः सोऽपि स्वामीयते स्वयम् ॥ १५१
प्रतिपन्नः कदास्माभिः स्वामित्वेन स दुर्मदः । इष्टं वचः[7]प्रमाणं चेदिन्द्रो भवति किं न सः ॥ १५२ ॥
प्राज्यराज्यबलेनाद्य सोऽज्ञो मयि समागतः । [8]तिमिस्तटे वेलयेव मरिष्यति न संशयः ॥ १५३ ॥
गच्छानय रणाय स्वं स्वामिनं दंडकामिनम् । तस्य प्राणैः सहादास्ये दासीमिव हठाच्छ्रियम् ॥ १५४ ॥

---

१ भरतार्धमेवोद्यानं तस्मिन् मधुर्वसन्तसदृशः । २ इतिनाभिहितत्वात् प्रथमा । ३ पूर्ववद्वशवर्तीत्यर्थः । ४ उद्घाटनसाधनम् । ५ असत्याः । ६ कुत्सितमत्यंतं वदतीति कद्वदावदः । ७ वचसा प्रमाणं सिद्धमित्यर्थः । ८ मत्स्यः ।

आरुह्य पालकं[1] शक्रः सामरः सपरिच्छदः[2] । मध्येनंदीश्वरं गत्वा स्वामिवेश्मायया ततः ॥ १६४ ॥
स प्रदक्षिणयामास स्वामिवेश्म विमानगः ॥ मुक्त्वा विमानं चैशान्यां[3] ततो हरिरवातरत् ॥ १६५ ॥
अथ तत्स्वामिनो वेश्म प्रविवेश पुरंदरः । तमालोकनमात्रेऽपि प्रणनाम च भक्तितः ॥ १६६ ॥
स त्रिः प्रदक्षिणीकृत्य भगवंतं समातरम् । पंचांगस्पृष्टभूपीठो[4] भूयोऽपि प्रणनाम च ॥ १६७ ॥
अवस्वापनिकां[5] दत्त्वा देव्याः पार्श्वे निधाय च । प्रतिच्छंदं[6] विभोः शक्रः पंचमूर्त्तिरभूत्स्वयम् ॥ १६८ ॥
तत्र चैको दधौ नाथं शक्रश्छत्रमथापरः । चामरे द्वावथैकोऽगाद्वज्रमुल्लालयन् पुरः ॥ १६९ ॥
सुरैर्जयजयारावकारिभिः परिवारितः । गृहीत्वा स्वामिनं शक्रः क्षणान्मेरुशिरो ययौ ॥ १७० ॥
अतिपांडुकंबलायां शिलायां तत्र वासवः । सिंहासने निषसाद कृत्वोत्संगे जगद्गुरुम् ॥ १७१ ॥
तदैवासनकंपेनावधिज्ञानमनाहतम्[7] । प्रयुज्य तत्क्षणादेवाच्युतेंद्रः प्राणतोऽपि च ॥ १७२ ॥
सहस्रारो महाशुक्रो लांतको ब्रह्मवासवः । माहेंद्रः सनत्कुमार ईशानश्चमरो बलिः ॥ १७३ ॥
धारणो भूतानंदश्च हरिर्हरिसहस्तथा । वेणुदेवो वेणुदारी चाग्निशिखोऽग्निमाणवः ॥ १७४ ॥
वेलंबः प्रभंजनश्च सुघोषाभिध एव च । महाघोषो जलकांताभिधानोऽथ जलप्रभः ॥ १७५ ॥
अथ पूर्णोऽवशिष्टश्चामितोऽथामितवाहनः । तथा कालमहाकालौ सुरूपप्रतिरूपकौ ॥ १७६ ॥
पूर्णभद्रस्तथा माणिभद्रो भीमाभिधोऽपि च । महाभीमः किन्नरश्च तथा किंपुरुषाभिधः ॥ १७७ ॥

---

१ तन्नामकं विमानं । २ सपरिवारः । ३ ईशानादिशि । ४ पंचांगैः स्पृष्टः भूभागो येन । ५ तन्नाम्नीं निद्रां । ६ प्रतिबिंबम् । ७ न आहतं अनाहतं अप्रतिहतं.

अभंजि मधुसैन्येन विष्णुसैन्यं क्षणादपि । द्रुमखंडं प्रचंडेनौत्पातिकेनेव वायुना ॥ १६८ ॥

रथिना बलभद्रेणान्वीयमानो रथी हरिः । अपूरयत् पांचजन्यमजन्यमिव विद्विषाम् ॥ १६९ ॥

पांचजन्यस्य नादेन तत्कालं मधुसैनिकाः । त्रेसुः केऽपि मुमूर्छुः केऽप्यपतन् केऽपि भूतले ॥ १७० ॥

इत्थं विधुरमालोक्य सैन्यं मधुरपि स्वयम् । धनुरास्फालयन् स्फारमाह्वास्त पुरुषोत्तमम् ॥ १७१ ॥

अधिज्यीकृत्य तरसा शार्ङ्गं शार्ङ्ग्यप्यवादयत् । रोदसी वादयदिव गरीयस्या प्रतिश्रुता ॥ १७२ ॥

कर्षंकर्षं निषंगात्ताविषून् मुमुचतुः शितान् । अन्योऽन्यं मृत्यवे सर्पानिव वार्तिकवादिनौ ॥ १७३ ॥

जयलक्ष्म्या इव प्राणान् बाणान् बाणैरुभावपि । व्यवच्छेदकलाछेकौ चिच्छेदाते परस्परम् ॥ १७४ ॥

एवमस्त्रांतरैरस्त्रांतराण्यपि मिथस्तयोः । रज्जुकर्तमकृंत्यंत रणो ह्येवं समौजसाम् ॥ १७५ ॥

अन्योऽन्यसाम्यकुपितो दिदर्शयिषुरन्तरम् । चक्रं सस्मार च मधुस्तत्पाणौ तत्पपात च ॥ १७६ ॥

जिघांसुरप्यभिदधे मधुर्विस्फुरिताधरः । भो याहि याहि किं बाह्याद्व्याघ्रीदंतान् दिदृक्षसि ॥ १७७ ॥

को नाम मे बलोत्कर्षस्त्वयि बाले निबर्हिते । किं रंभोन्मूलने स्थामवर्णनं वरदंतिनः ॥ १७८ ॥

एषोऽपि सुभटंमन्यस्तव ज्यायान् ममाग्रतः । लघीयान् कुंजरइव महानपि गिरेः पुरः ॥ १७९ ॥

व्याजहार प्रतिहरिं हरिरप्युल्लसत्स्मितः । तमांसि हंति प्रौढानि बालोऽपि हि दिवाकरः ॥ १८० ॥

---

१ उत्पातसंबंधिना । २ प्रलयकारिणम् उत्पातकारिणं वा । ३ प्रतिध्वनिना । ४ कृष्ट्वा कृष्ट्वा । ५ विषवैधवादिनौ । ६ छेदनकलाकुशलौ । ७ रज्जुकर्त्तनमिवाच्छिघंतेत्यर्थः । ८ साम्यं तुल्यत्वं पराक्रमेणेत्यर्थः । ९ नाशिते ।

स्वामिनः स्वामिशिष्याणां तेषां चाभ्येत्य वासवाः । सामराश्चक्रिरे तत्र निर्वाणमहिमोत्सवम् ॥ ३०० ॥
कौमारे सप्त लक्षाणि सार्धानि शरदामथ । पृथिवीपालने वर्षलक्षाणि दश पंच च ॥ ३०१ ॥
अर्धाष्टमा वर्षलक्षाः प्रव्रज्यापरिपालने । इति त्रिंशद्वर्षलक्षाण्यनंतजित आयुषि ॥ ३०२ ॥
विमलस्वामिनिर्वाणादनंतस्वामिनिर्वृतिः । व्यतिक्रांतेषु नवसु वारिराशिष्वजायत ॥ ३०३ ॥
स त्रिंशद्वर्षलक्षायुर्विष्णुरत्युग्रकर्मभिः । तमःप्रभाख्यामगमत् षष्ठीं नरकमेदिनीम् ॥ ३०४ ॥
कौमारेऽब्दसप्तशती मंडलित्वे त्रयोदश । वर्षशतान्यथाशीतिर्वर्षाणि ककुभां जये ॥ ३०५ ॥
राज्येऽब्दानामथैकोनत्रिंशल्लक्षी सहस्रकाः । नवतिः सप्त च नवशती विंशतिरस्य तु ॥ ३०६ ॥
सुप्रभः पंचपंचाशद्वर्षलक्षायुरुच्चकैः । सभ्रातुरवसानेन दुःखितोऽस्थाच्चिरं भुवि ॥ ३०७ ॥

सोऽप्यथानुजविपत्तिविरक्त्यात्तव्रतो मुनिमृगांकुशपार्श्वे ।
प्राप्य केवलमनंतचतुष्कीं स्थानमापदपुनर्भवरूपम् ॥ ३०८ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये
चतुर्थे पर्वणि श्रीअनंतस्वामिपुरुषोत्तमसुप्रभमधुवर्णनो नाम
चतुर्थः सर्गः संपूर्णः ।

दिव्यांगरागपूजादि भक्त्या जिनपतेर्व्यधात् । स आरणाच्युतपतिर्ववंदे च यथाविधि ॥ १९१ ॥
इंद्रा द्वाषष्टिरन्येऽपि शक्रवर्जं तथा व्यधुः । जगत्पवित्रीकरणं स्नात्रं त्रिभुवनेशितुः ॥ १९२ ॥
भूत्वाथ पंचधेशान एकोंऽके नाथमग्रहीत् । अन्यश्छत्रं चामरे द्वावन्योऽग्रेऽस्थाच्च शक्रवत् ॥ १९३ ॥
शक्रः प्रभोश्चतसृषु दिक्षूक्ष्णः स्फाटिकानथ । उत्तुंगशृंगांश्चतुरो भक्त्यैकचतुरोऽकरोत् ॥ १९४ ॥
तेषां शृंगेभ्य उत्पेतुर्वारिधारा मनोरमाः । मूले भिन्नाः प्रांते मिश्राः पेतुश्च स्वामिमूर्धनि ॥ १९५ ॥
अकरोदित्थमन्यैंद्रकृतस्नात्रविलक्षणम् । स्नात्रं सौधर्मकल्पेंद्रो जिनेंद्रस्यातिभक्तितः ॥ १९६ ॥
उक्षणस्तानुपसंहृत्य चर्चार्चादि जगद्गुरोः । चक्रे शक्रः सप्रमोदं प्रणम्यैवमथास्तवीत् ॥ १९७ ॥
नमो भगवते तुभ्यं विश्वनाथाय तायिने । तृतीयतीर्थनाथाय सनाथाय महर्द्धिभिः ॥ १९८ ॥
ज्ञानैस्त्रिभिश्चतुर्भिश्चातिशयैः सहजन्मभिः । जगद्विलक्षणोऽप्यष्टसहस्रस्फुटलक्षणः ॥ १९९ ॥
सदैव हि प्रमत्तानां प्रमादच्छेदकारणम् । इदं त्वज्जन्मकल्याणं कल्याणायाद्य मादृशाम् ॥ २०० ॥
सकलापि श्लाघनीया यामिनीयं जगत्पते । अकलंकतनुर्यस्यामुदगास्त्वं सुधाकरः ॥ २०१ ॥
अमर्त्यलोकवन्मर्त्यलोकोऽप्यस्त्वधुना प्रभो । देवैस्त्वद्वंदनाहेतोरेहिरे याहिरापरैः ॥ २०२ ॥
देव त्वद्दर्शनसुधास्वादसंतुष्टचेतसाम् । पर्याप्तं जीर्णसुधयातः परेण सुधांधसाम् ॥ २०३ ॥
भगवन् भरतक्षेत्रसरोवरसरोरुह । भूयान्मधुव्रतस्येव त्वयि मे परमो लयः ॥ २०४ ॥

---

१ अच्युतेंद्रः । २ वलिवर्दान् । ३ भक्त्यां एकः एव चतुरः । ४ चर्चा अंगचर्चनं अर्चा पूजनं आदी यस्य तत् । ५ रक्षणकर्त्रे । ६ युक्ताय । ७ अकलंका तनूर्यस्य । ८ स्वर्गलोकवत् ।

नालं क्षणमपि श्रोतुं विधवेत्यक्षराण्यहम् । कौसुंभधारिणी यास्याम्यग्रतस्त्वत्पितुस्ततः ॥ १२१ ॥
कृतार्थं मेऽभवज्जन्म पत्या शिवमहीभुजा । पुत्र त्वया च पुत्रेण पंचमेनार्धचक्रिणा ॥ १२२ ॥
पत्युर्विपत्तौ यास्यंति मत्प्राणाः स्वयमेव हि । त्यक्ष्यामि तान् प्रविश्याग्नौ मा भून्मे हीनसत्वता ॥१२३॥
तत्क्षत्रियकुलाचारमाचरंत्या ममाधुना । मा स्म भूरन्तरायस्त्वं वत्स वात्सल्यतोऽपि हि ॥ १२४ ॥
समं सुदर्शनेन त्वं पुत्र नंद मदाशिषा । पत्युरग्रे प्रयाम्येषा कृष्णवर्त्मैकवर्त्मना ॥ १२५ ॥
अंतिमां प्रार्थनां तेऽद्य कुमारैनां करोम्यहम् । निषेधकं विधेरस्य त्वया वाच्यं न किंचन ॥ १२६ ॥
एवमुक्त्वा तु सा स्वामिविपच्छ्रवणकातरा । परलोकपुरद्वारं प्रवेष्टुमनलं ययौ ॥ १२७ ॥
दुःखानुबंधिभिर्दुःखैः श्लथांगो वीवधैरिव । समेऽपि प्रस्खलत्पादः पितुः पार्श्वे ययौ हरिः ॥ १२८ ॥
स्मरन् स्वां मातरं पश्यंस्तथा पितरमातुरम् । प्रतीकारासहो विष्णुः क्लीबमान्यपतद्भुवि ॥ १२९ ॥
राजा दाहज्वरार्तोऽपि बभाषे धैर्यमाश्रयन् । किमेतद्वत्स कातर्यं स्वकुलानुचितं तव ॥ १३० ॥
इयं हि त्वद्भुजाधारा वत्स देवी वसुंधरा । अधैर्यान्निपतन्नस्यां कथं नाम न लज्जसे ॥ १३१ ॥
त्वय्युच्चैः पुरुषसिंह इत्याख्याकारिणो मम । अज्ञानकारितां मा दास्त्वमेवं धैर्यमुत्सृजन् ॥ १३२ ॥
एवं शार्ङ्गिणमाश्वास्य शिवराजः शिवाशयः । कालधर्मं ययौ सायं कः कालं यातुमीश्वरः ॥ १३३ ॥
श्रुत्वा च मूर्छितो विष्णुः पपात धरणीतले । महाद्रुमो वात्ययेव वातेनेव च वातकी ॥ १३४ ॥

१ कृष्णवर्त्मा वह्निः । २ मरणविधेः । ३ समप्रदेशेऽपि । ४ रोगग्रस्तम् । ५ रोगोपायासमर्थः । ६ भीरुत्वम् । ७ वातसमूहेन झंझावातेन वा । ८ वातरोगी पुमान् ।

मानवा अपि ते धन्या ये त्वां पश्यंति नित्यशः । त्वद्दर्शनोत्सवोऽधीश स्वाराज्याद[1]तिरिच्यते ॥ २०५ ॥
स्तुत्वैवं पंचधा भूत्वेशानात्स्वामिनमाददे । मूर्त्त्यैकया परो[2]भिश्च प्राग्वत्कर्माणि सोऽकरोत् ॥ २०६ ॥
सेनादेव्याः क्षणात्पार्श्वे वस्त्रालंकारभूषितम् । मुमोच प्रभुमुल्लोचे[3]ऽबध्नाच्छ्रीदाम[4]गंडुकम् ॥ २०७ ॥
कुंडले च दुकूले च प्रभोरुच्छीर्षके[5]ऽमुचत् । तामवस्वापनीमर्हत्प्रतिबिंबं च सोऽहरत् ॥ २०८ ॥
अथाभियोगिकान् देवान् दिवस्पति[6]रघोषयत् । कल्पवासिषु देवेषु भवनाधिपतिष्वपि ॥ २०९ ॥
व्यंतरेषु ज्योतिष्केषु प्रभोर्देव्याश्च योऽशुभम् । चिंतयिष्यति तन्मूर्धा[7] सप्तधैव स्फुटिष्यति ॥ २१० ॥ युग्मम् ॥
सोऽथ संक्रमयामासांगुष्ठे भर्तुः सुधारसम् । अर्हतोऽस्तन्यपा[8] यस्मात्क्षुधि स्वांगुष्ठपायिनः ॥ २११ ॥
सर्वाणि धात्रीकर्माणि सदा कारयितुं प्रभोः । समादिदेशाप्सरसः पंच धात्रीः सुरेश्वरः ॥ २१२ ॥
एवमासूत्र्य सुत्रामा नत्वार्हंतं ततो ययौ । मेरुतः पुनरन्येंद्रा द्वीपं नंदीश्वराभिधम् ॥ २१३ ॥
शाश्वतार्हत्प्रतिमानां तत्र चाष्टाह्निकोत्सवम्[9] । कृत्वा निजनिजं स्थानं ययुः सर्वे सुरासुराः ॥ २१४ ॥
प्रातर्जितारिणा राज्ञा पुत्रभूयमुपेयुषः । अर्हतो जगदर्हस्य चक्रे जन्मोत्सवो महान् ॥ २१५ ॥
गृहेगृहे पथिपथि विपणौ विपणावपि । पुर्यां तत्रोत्सवो जज्ञे सर्वस्यां राजवेश्मवत् ॥ २१६ ॥
यद्गर्भस्थेऽत्र संभूतं धान्यं शंबाभवत्ततः । संभवः शंभवश्चेति पिता नाम विभोर्व्यधात् ॥ २१७ ॥
मुहुर्मुहुरुदैक्षिष्ट[10] बालरूपं जगत्पतिम् । सुधामग्नमिवात्मानं मन्यमानो महीपतिः ॥ २१८ ॥

---

१ स्वर्गराज्यात् । २ अन्याभिः मूर्तिभिः । ३ विताने । ४ पुष्पदामगुच्छकं । ५ उपधाने । ६ इन्द्रः । ७ तन्मस्तकं । ८ स्तने भवं स्तन्यं तत् न पिबन्ति ते । ९ अष्टसु अहःसु भवः आष्टाह्निकः स चासौ उत्सवश्च तं । १० दृष्टवान् ।

## षष्ठः सर्गः ।

### श्रीमघवचक्रवर्तिचरित्रम् ।

ॐ भरतेऽत्रैव नगरे महीमंडलनामनि । वासुपूज्यस्य तीर्थेऽभून्नाम्नामरपतिर्नृपः ॥ १ ॥
अनाथानामेकनाथः पृथिवीनाथपुंगवः । सुसाधुरिव चारित्रे स न्यायेऽवहितोऽभवत् ॥ २ ॥
अप्यसौ पुष्पवृन्तेन नाजघान जनं क्वचित् । केवलं पालयामास यत्नेन नवपुष्पवत् ॥ ३ ॥
कामार्थौ पादकटकवद्धर्मं तु किरीटवत् । अधरोत्तरभावेन स दधार विवेकवान् ॥ ४ ॥
अर्हन् देवो गुरुः साधुर्धर्मश्च करुणेति सः । मंत्राक्षरमिवाध्यायदनुत्तरसुखप्रदम् ॥ ५ ॥
राज्यं रुजमिवान्येद्युरुत्सृज्य स महाशयः । परिव्रज्यामुपादत्त दत्तविश्वाभयः सुधीः ॥ ६ ॥
स समितिप्राप्तजयो गुप्तिरक्षणतत्परः । विधिवत् पालयामास प्रव्रज्यां राज्यवच्चिरम् ॥ ७ ॥
अनवद्यैर्मूलगुणैः स उत्तरगुणैरपि । अधिकं शुशुभे दिव्यरत्नालंकरणैरिव ॥ ८ ॥
चिरं व्रतं पालयित्वा कालधर्ममुपेत्य सः । ग्रैवेयके मध्यमेऽभूदहमिंद्रः सुरोत्तमः ॥ ९ ॥
इतश्च जंबूद्वीपेऽस्मिन् क्षेत्रे भरतनामनि । श्रावस्तीत्यस्ति नगरी नगरीणां गरीयसी ॥ १० ॥
गुणरत्नैरसंख्यातैः समुद्रइव मूर्तिमान् । समुद्रविजयस्तत्र विजयी समभून्नृपः ॥ ११ ॥

---

१ पृथ्वीपतिषु पुंगवः श्रेष्ठः । २ मुकुटवत् । ३ कामार्थावधरभावेन धर्मं चोत्तरभावेनेत्यर्थः । ४ व्याधिवत् ।

भूपतिर्धारयामासोत्संगे हृदि शिरस्यपि । प्रकृष्टमिव माणिक्यं प्रभुं तत्स्पर्शलालसः ॥ २१९ ॥
धात्र्यः शक्रकृताः पंच ताः प्रपंचितभक्तयः[1] । कदापि देहच्छायावत्पार्श्वं न मुमुचुः प्रभोः ॥ २२० ॥
स धात्रीं खेदयामासांकादुत्तीर्य परिभ्रमन् । अपेतसाध्वसः सिंहीमिव सिंहकिशोरकः ॥ २२१ ॥
रत्नाश्मभूमिसंक्रांते[2] चंद्रे स ज्ञानवानपि । करं चिक्षेप लोकस्य दर्शयन् बालचापलम् ॥ २२२ ॥
आगतैः सवयोभूय[3] मर्त्यरूपधरैः सुरैः । सहाक्रीडत्प्रभुः कोऽन्यस्तत्क्रीडायामपि क्षमः ॥ २२३ ॥
क्रीडया धावतो भर्तुर्वलद्ग्रीवा दिवौकसः । प्रतिकारा[4] इवेभ्यस्य[5] धावन्ति स्म पुरः पुरः ॥ २२४ ॥
लीलया पातितेष्वेषु रक्ष रक्षेतिवादिषु । तथापि विदधे स्वामी परिणामोचितां कृपाम् ॥ ॥ २२५ ॥
एवं विचित्रक्रीडाभिश्चित्रैः क्रीडनकैश्च सः । शैशवं व्यतिचक्राम प्रदोषमिव चंद्रमाः ॥ २२६ ॥
चतुर्धनुःशतोत्तुंगः स्वर्णवर्णो जगद्गुरुः । बभासे कौतुकान्मेरुरिव पुंस्त्वमुपागतः ॥ २२७ ॥
घनवृत्तोन्नतोष्णीषः[6] स्निग्धश्यामलकुंतलः । अष्टमीन्दुललाटश्रीः कर्णविश्रांतलोचनः ॥ २२८ ॥
स्कंधावलंबिश्रवणो वृषस्कंधो महाभुजः । विशालभुजमध्यश्च सिंहोदरकृशोदरः ॥ २२९ ॥
करींद्रकरकल्पोरुरेणीजंघोऽल्पगुल्फकः[7] । कूर्मपृष्ठोन्नतसमतलांघ्रिः सरलांगुलिः ॥ २३० ॥
असंपृक्तोद्गतश्याममृदुलस्निग्धरोमकः । पद्मामोदिमुखश्वासः सदा मालिन्यवर्जितः ॥ २३१ ॥
एवं निसर्गसर्वांगसुभगोऽपि जगत्पतिः । पार्वणः[8] शरदेवेंदुर्यौवनेनाधिकं बभौ ॥ २३२ ॥

---

१ विस्तारितभक्तयः । २ रत्नोपलनिबद्धभूमिप्रतिबिम्बिते । ३ सवयसः मित्राणि भूत्वा इति । ४ उपायाः । ५ धनिकस्य । ६ शिरोवेष्टनम् । ७ अल्पौ गुल्फौ घुटिके यस्य । ८ पर्वणि भवः ।

अविरतश्रावकत्वेनातिवाह्यायुरात्मनः । सोऽन्तकाले परिव्रज्यामुपादत्त यथाविधि ॥ ५४ ॥
कौमारेऽब्दसहस्राणि पंचविंशतिस्तस्य तु । मंडलित्वेऽपि तावंति दशैव तु दिशां जये ॥ ५५ ॥
चक्रित्वे तु त्र्यब्दलक्षी सहस्रा नवतिस्तथा । व्रतकाले च पंचाशत्सहस्राः शरदां पुनः ॥ ५६ ॥

पंचाब्दलक्षीमतिवाह्य जन्मतः पंचामलात्मा[1] परमेष्ठिनः स्मरन् ।
पंचत्वमाप्येंद्रसमानवैभवः सनत्कुमारेऽजनि सोमराग्रणीः ॥ ५७ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये चतुर्थे पर्वणि मघवचक्रवर्तिचरितवर्णनो नाम षष्ठः सर्गः ।

---

१ निर्मलात्मा पंच परमेष्ठिनः स्मरन्नित्यन्वयः ।

पितृभ्यामुत्सवातृष्णया परेद्युः प्रार्थितः प्रभुः । परिणेतुं नृपकन्याः सुरकन्यासहोदराः ॥ २३३ ॥
जानन् भोगफलं कर्म पित्रोराज्ञां च पालयन् । कन्यानामुपयमनं[1] सोऽनुमेने महामनाः ॥ २३४ ॥
राज्ञा जितारिणा साक्षाच्छक्रेण च समेयुषा[2] । हाहाहूहूप्रभृतिषु गायत्सु मधुरस्वनम् ॥ २३५ ॥
गंधर्वेषु मृदंगादि गंभीरं वादयत्सु च । रंभातिलोत्तमाद्यासु नृत्यंतीष्वप्सरःसु च ॥ २३६ ॥
धवलानुद्गृणंतीषु[3] कुलनारीषु चोच्चकैः । कारितः संभवः स्वामी कन्योद्वाहमहोत्सवम् ॥ २३७ ॥
॥ त्रिभिर्विशेषकम् ॥
नंदनोद्यानकल्पासु[4] कदाप्युद्यानवीथिषु[5] । रत्नाद्रिशृंगतुल्येषु क्रीडाद्रिषु कदापि च ॥ २३८ ॥
सुधाकुंडसदृक्षासु[6] कदाचित् केलिवापिषु । कदाचिच्चित्रशालासु द्युविमानसनाभिषु[7] ॥ २३९ ॥
वैदग्ध्य[8]रमणीयाभीरमणीभिः सहस्रशः । रेमे श्रीसंभवस्वामी करिणीभिरिव द्विपः ॥ २४० ॥
॥ त्रिभिर्विशेषकम् ॥
भुंजानो विविधान् भोगान् कौमारे परमेश्वरः । गमयामास पूर्वाणां[9] लक्षाणि दश पंच च ॥ २४१ ॥
राजाथ भवनिर्विण्णः संभवस्वामिनं तदा । उपरुध्य न्यधाद्राज्येऽगुंलीये[10] वररत्नवत् ॥ २४२ ॥
सद्गुरोः पादपद्मांते जितारिनृपतिः स्वयम् । उपादाय परिव्रज्यां निजमर्थमसाधयत् ॥ २४३ ॥
तातोपरोधादादाय राज्यं प्राज्यं पराक्रमः[11] । ररक्ष संभवस्वामी पृथिवीं पुष्पदामवत् ॥ २४४ ॥

---

१ विवाहं । २ आसदता । ३ उद्गायन्तीषु । ४ नंदनोद्यानादीषन्न्यूनासु । ५ उद्यानराजिषु । ६ सदृक्षा तुल्या । ७ सनाभिः सदृशा । ८ चातुर्यं । ९ षट्पंचाशत्सहस्राधिकसप्ततिलक्षकोटिवर्षात्मकः कालविशेषः पूर्वः । १० मुद्रिकायाम् । ११ पराक्रमवान् ।

स्त्रीशस्त्रेणापि चेत् कामो जगदेतज्जिगीषति । तुच्छपिच्छमयं शस्त्रं किं नादत्ते स मूढधीः ॥ ३९ ॥
संकल्पयोनिना येन हहा विश्वं विडंबितम् । तदुत्खनामि संकल्पमूलमस्यैव सर्वतः ॥ ४० ॥
एवं विचिंत्य संसारविरक्तः स महामनाः । सुव्रताचार्यपादांते गत्वा दीक्षामुपाददे ॥ ४१ ॥
चतुर्थषष्ठमासादितपोभिर्देहनिस्पृहः । आत्मानं शोषयामास करैर्जलमिवार्यमा ॥ ४२ ॥
दुस्तपं स तपस्तप्त्वा कालयोगाद्विपद्य च । सनत्कुमारे कल्पेऽभूत् प्रकृष्टायुः सुरोत्तमः ॥ ४३ ॥
ततोऽप्यायुःक्षये च्युत्वा पुरे रत्नपुराभिधे । अजायत श्रेष्ठिसुतो जिनधर्मोऽभिधानतः ॥ ४४ ॥
आ बाल्यादपि श्रावकधर्मं द्वादशधापि हि । मर्यादामर्णव इव सदैव परिपालयन् ॥ ४५ ॥
आराधयंस्तीर्थंकरान् पूजयाष्टप्रकारया । एषणीयादिदानेन साधूंश्च प्रतिलाभयन् ॥ ४६ ॥
असाधारणवात्सल्यः साधर्मिकजनानपि । प्रीणयन् बंधुवद्दानैः कंचित् कालमलंघयत् ॥ ४७ ॥
॥ त्रिभिर्विशेषकम् ॥

इतश्च नागदत्तोऽपि प्रियाविरहदुःखितः । आर्तध्यानान्मृतोऽभ्राम्यत्तिर्यग्योनिषु जंतुषु ॥ ४८ ॥
भवं भ्रांत्वा चिरं सोऽथ पुरे सिंहपुराभिधे । अग्निशर्माभिधानेन द्विजन्मतनयोऽभवत् ॥ ४९ ॥
कालेन च त्रिदंडित्वं स आदाय समाययौ । पुरं रत्नपुरं तीव्रद्विमासादितपोरतः ॥ ५० ॥
तत्र चासीत् पुरे राजा नामतो हरिवाहनः । स च [2]भागवतोऽश्रौषीत् परिव्राजं तमागतम् ॥ ५१ ॥
राज्ञा निमंत्रितस्तेन स पारणकवासरे । [3]राजौकस्यागतं दैवाज्जिनधर्मं ददर्श च ॥ ५२ ॥

१ कामदेवेन । २ वैष्णवः । ३ राजगृहे ।

निरीतयो[1] निरातंका[2]ः पुरुषायुषजीविताः । संभवस्वामिनो राज्ये प्रभावादभवन् प्रजाः ॥ २४५ ॥
न कस्याप्युपरि स्वामी भ्रुवमप्यध्यरोपयत् । चापारोपणवार्त्ताया अवकाशोऽपि कीदृशः ॥ २४६ ॥
भोग्यं कर्म क्षिपन् राज्ये सपूर्वांग[3]चतुष्टयम् । चतुश्चत्वारिंशत्पूर्व[4]लक्षीं स्वाम्यत्यवाहयत् ॥ २४७ ॥
ज्ञानत्रयपरी[5]तात्मा स्वयंबुद्धो जगत्प्रभुः । तदा च चिंतयामास संसारस्थितिमीदृशीम् ॥ २४८ ॥
संसारे विषयास्वादसुखं सविषभोज्यवत् । आपातमात्रमधुरं परिणामे त्वनर्थदम् ॥ २४९ ॥
अस्मिन्नसारे संसारे कथंचिद्धि शरीरिभिः । अवाप्यते मानुषत्वमूष[6]रे स्वादुवारिवत् ॥ २५० ॥
मानुषत्वमवाप्यापि मूढैर्विषयसेवया । मुधा निर्गम्यते पादशौचेनेव सुधारसः ॥ २५१ ॥
इति चिंतयतो भर्तुरेयुर्लोकांतिकामराः । नत्वा व्यज्ञपयंश्चैवं स्वामिंस्तीर्थं प्रवर्त्तय ॥ २५२ ॥
गतेषु तेषु देवेषु दीक्षादानोत्सवोत्सुकः । सांवत्स[7]रिकमारेभे दानं दातुं जगत्पतिः ॥ २५३ ॥
देवाश्च जृंभ[8]काः शक्रादिष्टैर्वैश्रवणे[9]रिताः । क्षीणस्वामीनि निर्नष्टसेतून्यपडिगतानि च ॥ २५४ ॥
श्मशानस्थानवर्तीनि निगूढानि गृहांतरे । चिरभ्रष्टानि नष्टानि स्वर्णादीनि धनान्यथ ॥ २५५ ॥
आनीय पुर्यां श्रावस्त्यां चत्व[10]रेषु त्रिके[11]षु च । अन्येष्वपि प्रदेशेषु राशींश्चक्रुर्गिरींद्रवत् ॥ २५६ ॥
यो येनार्थी स तद्द्रव्यं स्वैरमर्थयतामिति । आयुक्तै[12]र्घोषणामुच्चैः श्रावस्त्यां स्वाम्यकारयत् ॥ २५७ ॥

---

१ निर्गता अतिवृष्टि अनावृष्टि प्रभृतय ईतयः याभ्यः ताः । २ आतंकः व्याधिः । ३ चतुरशीतिलक्षवर्षं पूर्वांगं तस्य चतुष्टयं तेन सहितं यथा तथा । ४ चतुश्चत्वारिंशत् लक्षपूर्वान् । ५ युक्तः । ६ क्षारभूमौ । ७ संवत्सरे भवं । ८ देवविशेषाः । ९ इन्द्रकृताज्ञकुबरेण प्रेरिताः । १० चतुष्पथेषु । ११ मार्गत्रयसंयोगेषु । १२ नियुक्तजनैः ।

कौमारे वर्षलक्षार्धं मंडलित्वे तदेव हि । दशवर्षसहस्राणि ककुब्जामुपसाधने ॥ ४०२ ॥
चक्रित्वे नवतिवर्षसहस्राणि व्रते पुनः । वर्षलक्षमिति त्र्यब्दलक्षायुस्तुर्यचक्रिणः ॥ ४०३ ॥

ज्ञातेऽवसानसमयेऽनशनं प्रपद्य लक्षत्रयेण शरदां परिपूरितायुः ।
सुध्यानपंचपरमेष्ठिसनत्कुमारः कल्पे सुरः समजनिष्ट सनत्कुमारे ॥ ४०४ ॥
पंचार्हन्तः सीरिणः पंच पंचोपेन्द्राः पञ्चैतद्द्विषश्चक्रिणौ द्वौ ।
यत्रोक्ता द्वाविंशतिः सूत्ररत्नांभोधेस्तुर्यं पर्व तद्वः श्रियेऽस्तु ॥ ४०५ ॥
सूत्रात् किंचिदुदीरितं कथान्यः किंचिद्योगपटाच्च किंचिदत्र ।
तेषु स्याद्यदि किंचनापि मिथ्या मिथ्यादुष्कृतमस्तु तत्र सन्तः ॥ ४०६ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये
चतुर्थे पर्वणि सनत्कुमारचरितवर्णनो नाम
सप्तमः सर्गः संपूर्णः ।

---

## ॥ समाप्तं चेदं चतुर्थं पर्व ॥

---

१ दिशां जये । २ बलभद्राः । ३ वासुदेवाः । ४ संबोधनम् ।

स्वामी कोटिं साष्टलक्षां हाटकस्यान्वहं ददौ । अर्थिनस्तावतोऽर्थस्य भवंति ददतोऽर्हतः ॥ २५८ ॥
कोटीशतत्रयं स्वर्णस्याष्टाशीतिश्च कोटयः । लक्षाशीतिश्च ददिरे स्वामिना वत्सरेण तु ॥ २५९ ॥
सांवत्सरिकदानांते वासवाश्चलितासनाः । सांतःपुरपरीवाराः स्वामिवेश्म समाययुः ॥ २६० ॥
ततः प्रदक्षिणीकृत्य स्वामिवेश्म विमानतः । अवतेरुश्चास्पृशंतः पृथिवीं चतुरंगुलम् ॥ २६१ ॥
द्युसन्नाथा जगन्नाथमथो विनयशालिनः । सर्वे प्रदक्षिणीचक्रुर्नमश्चक्रुश्च भक्तितः ॥ २६२ ॥
जन्माभिषेकवद्भर्तुरभिषेकमथाच्युतः । आभियोग्याहृतैस्तीर्थांभस्कुंभैर्विधिवद्व्यधात् ॥ २६३ ॥
क्रमेण तद्वदन्येऽपि विदधुर्विबुधाधिपाः । दीक्षाकल्याणकस्नात्रं भक्तिकल्यां जगत्पतेः ॥ २६४ ॥
सुरासुरेंद्रवद्भक्त्या नरेंद्रा अपि तत्क्षणम् । संभवस्वामिनश्चक्रुः पवित्रैः स्नात्रमंबुभिः ॥ २६५ ॥
वपुर्देवाधिदेवस्य देवदूष्यैर्दिवौकसः । ममृजुः स्नानतोयार्द्रमादर्शमिव कांचनम् ॥ २६६ ॥
गोशीर्षचंदनेनाथ नाथं विलिलिपुः सुराः । दिव्यानि च दुकूलानि भक्तितः पर्यधापयन् ॥ २६७ ॥
किरीटं मूर्ध्नि सर्वस्वमिव वज्राकरावनेः । कुंडले कर्णयोरभ्रमुक्तामणिमये इव ॥ २६८ ॥
कंठे हारं नीहाराद्रिभ्रश्यद्गंगानुहारकम् । केयूरकंकणान् बाह्वोः सूर्यज्योतिर्मयानिव ॥ २६९ ॥
कुंडलीभूतनालाभान् कटकान्पादपद्मयोः । एवं निदधिरे देवा भूषणानि जगद्विभोः ॥ २७० ॥

---

१ द्युसदां देवानां नाथाः इंद्राः । २ मुकुटम् । ३ वज्राणां आकरः खानिः यस्यां सा चासौ अवनिश्च तस्याः । ४ मेघमौक्तिकमणिप्रचुरे । ५ हिमगिरिपतद्गंगागमनुकुर्वंतम् । ६ अंगदकरभूषणानि । ७ रवितेजोव्याप्तान् । * भक्तिचतुराः ।

न ज्ञायते पिता माता स्वसा भ्राता परोऽपि वा । इ हा जन्मान्तरतिरस्करिण्यन्तरितैर्जनैः ॥ १२६ ॥
यावज्जीवमसौ जीवः संवेष्टयति देहजैः । रागद्वेषादिभिर्लालाजालकैरिव जालिकः ॥ १२७ ॥
रागं द्वेषं च मोहं च तत्परित्यज्य दूरतः । निर्वाणनगरद्वारं प्रव्रज्यां श्रयत द्रुतम् ॥ १२८ ॥
अथ तावूचतुर्मोहादस्माभिः श्वापदैरिव । धिग्धिक्किमिदमारब्धं भगिनीभोगहेतवे ॥ १२९ ॥
त्वं नौ पूर्वभवे माता गुरुरस्मिन् भवे पुनः । आवां येनोत्पथादस्मात् प्रबोध्य विनिवर्तितौ ॥ १३० ॥
इत्युक्त्वा मुक्तसन्नाहौ गुरोर्धर्मरुचेः पुरः । राज्ञां चतुर्भिः सहस्रैः समं जगृहतुर्व्रतम् ॥ १३१ ॥
तौ ततो ध्यानवह्निभ्यां प्लुष्टकर्माध्वकंटकौ । लोकाग्रं जग्मतुर्दुर्गं सरलेनैव वर्त्मना ॥ १३२ ॥
श्रीषेणप्रमुखास्तेऽपि चत्वारो युग्मधर्मिणः । विपद्य प्रथमे कल्पे देवभूयं प्रपेदिरे ॥ १३३ ॥
इतश्चात्रैव भरते वैताढ्येऽस्ति नगोत्तमे । नगरं रथनूपुरचक्रवालमभिख्यया ॥ १३४ ॥
तत्राभूज्ज्वलनजटी नाम विद्याधरेश्वरः । पुरंदरानुज इव सनाथो विविधर्द्धिभिः ॥ १३५ ॥
तस्यार्ककीर्तिस्तनयः प्रौढार्क इव तेजसा । युवराजोऽभवद्वैरिराज्यलक्ष्मीस्वयंवरः ॥ १३६ ॥
अन्वर्ककीर्तिं समभूत् पुत्री तस्य स्वयंप्रभा । प्रभेव शशिनो विश्वनयनानंददायिनी ॥ १३७ ॥
प्रथमो वासुदेवानां प्राजापत्योऽचलानुजः । त्रिपृष्टः पोतनपुरेश्वरः परिणिनाय ताम् ॥ १३८ ॥
तदा च वह्निजटिने स हृष्टः प्रथमो हरिः । ददौ विद्याधरश्रेणिद्वयराज्यमखंडितम् ॥ १३९ ॥

---

१ जन्मांतरमेव तिरस्करिणी तयानंतरितैश्छन्नैः । २ उन्मार्गात् । ३ निवारितौ । ४ दग्धाः कर्माण्येव अध्वकंटका मोक्षमार्गकंटका याभ्यां तौ । ५ देवत्वम् । ६ सहितः । ७ अर्ककीर्तेः पश्चात् । ८ प्रजापतेः पुत्रः

॥ त्रिभिर्विशेषकम् ॥

सिद्धार्थां नामतः सांघ्रिपीठसिंहासनां[1] ततः । शिबिकां रचयांचक्रुर्जंभजुजः स्वामिनः कृते ॥ २७१ ॥

अच्युतेंद्रोऽप्याभियोग्यैः शिबिकां तां व्यकारयत् । वैमानिकविमानानामधिदेवीमिवोच्चकैः[2] ॥ २७२ ॥

स्वयंकृतां तां शिबिकां नरेंद्रशिबिकांतरे । श्रीचंदनेऽगरुमिवाच्युतेंद्रोऽन्तरभावयत् ॥ २७३ ॥

अथारुरोह भगवान् दत्तहस्तो बिडौजसा[3] । शिबिकायां तत्र सिंहासनं हंस इवांबुजम् ॥ २७४ ॥

आदौ तामुद्दधुर्मर्त्या रथ्या[4] इव महारथम् । अनंतरं दिविषदो घनवाता[5] इवावनिम् ॥ २७५ ॥

ध्वनत्सु तूर्यवर्येषु समंताद्वारिदेष्विव । गंधर्वेषु च कुर्वत्सु गीतिं[6] कर्णसुधोपमाम् ॥ २७६ ॥

चित्रांगहारकरणं[7] नृत्यंतीष्वप्सरःसु च । पठत्सु बंदिवृंदेषु ब्रह्मसु ब्रह्मगेषु च ॥ २७७ ॥

आशंसंतीषु मांगल्यं कुलवृद्धासु चोच्चकैः । धवलांश्च[8] कुलस्त्रीषु गायंतीषु मनोरमान् ॥ २७८ ॥

अग्रे पृष्ठे पार्श्वयोश्चाश्ववद्वल्गत्सु नाकिषु[9] । दृश्यमानः स्मेरनेत्रैर्[10] दर्श्यमानोऽगुलीदलैः ॥ २७९ ॥

स्थाने स्थाने नागराणां प्रतीच्छन्मंगलानि च । पीयूषदृष्टिभिरिव[11] दृग्भिरानंदयन् जगत् ॥ २८० ॥

दोधूयमानचमरो[12] धृतछत्रश्च नाकिभिः । श्रावस्तीमध्यतः स्वामी सहस्राम्रवणं[13] ययौ ॥ २८१ ॥

॥ षड्भिः कुलकम् ॥

---

१ पादपीठसिंहानाभ्यां सहितां । २ देवविशेषाः । इन्द्रेण । ४ रथं वहन्ति रथ्याः अश्वाः । ५ तन्नामानो वायवः । ६ संगीतं । ७ चित्राणां अंगहाराणां अभिनयानां करणं यस्मिन्यथा तथा । ८ गीतविशेषान् । ९ देवेषु । १० विकसितचक्षुर्भिः । ११ अमृतदृष्टिभिः । १२ अतिशयेन कंप्यमाने चामरे यस्य । १३ तन्नामकसुद्यानम् ।

तदा च कपिलजीवोऽशनिघोषो विहायसा । विप्रतारणिकां विद्यां साधयित्वा समापतत्[1] ॥ २४१ ॥
रममाणां समं पत्या पतिवत्नीं[2] सुलोचनाम् । देवीं सुतारामैक्षिष्ट प्राग्जन्मगृहमेधिनीम्[3] ॥ २४२ ॥

॥ युग्मम् ॥

ततः प्राग्जन्मसंस्कारात् संबंधमविदन्नपि । चक्रेऽनुरागादुत्कंठां तस्यां स्वस्यामिव स्त्रियाम् ॥ २४३ ॥
विद्यावलाद्विचक्रे च प्लवमानं तयोः पुरः । दिव्यकंडुकवद्धैमं[4] हरिणं नेत्रहारिणम् ॥ २४४ ॥
खुरैरथ विषाणाभ्यामिंद्रनीलमयैरिव । नीलोत्पलविलासिभ्यां लोचनाभ्यां विराजितम् ॥ २४५ ॥
पीतधातुमिवोज्झंतं देहभासातिपीतया । मंडयंतं नभः फालैः पादपातैश्च भूतलम् ॥ २४६ ॥
दृष्ट्वा सुतारा देवी तमिति भर्तारमब्रवीत् । असौ क्रीडनकं मे स्यात्स्वामिन्नानीयतां मृगः ॥ २४७ ॥

॥ त्रिभिर्विशेषकम् ॥

इत्युक्तः कांतया राजान्वधावत तमेणकम्[5] । विश्लिष्टं वाहनमिव वायोर्वायुसमस्यदम्[6] ॥ २४८ ॥
क्वचिद्वक्रः क्वचिदृजुर्मृगः स सरिदोघवत् । मनागप्यस्खलन् दूरं निनाय जगतीपतिम् ॥ २४९ ॥
क्वापि दृश्यः क्वाप्यदृश्यः कदाप्युर्व्यां कदापि खे[7] । स मायादैवतमिव गृहीतुं न ह्यशक्यत ॥ २५० ॥
दूरे गते श्रीविजयेऽशनिघोषः शनैस्ततः । अभिसृत्याहरद्देवीं वनदेवीमिवैककाम् ॥ २५१ ॥
ततः प्रतारणी विद्या तेनायुक्ता[8] दुरात्मना । सुतारीभूय[9] पूच्चक्रे दष्टाहं कुर्कुटाहिना ॥ २५२ ॥

---

१ आगच्छत् । २ पतिरस्त्यस्या इत्यर्थे निपातः । ३ प्राग्जन्मपत्नीम् । ४ सौवर्णम् । ५ मृगम् । ६ वायुसमानवेगम् । ७ आकाशे । ८ प्रयुक्ता । ९ सुतारारूपं कृत्वा ।

तस्माच्च शिबिकारत्नात्पादपादिव बर्हिणः । दीक्षां द्वारमिवादित्सुरुत्ततार जगद्गुरुः ॥ २८२ ॥

मुमोच तत्र भगवान् माल्यालंकरणादिकम् । इंद्रन्यस्तं देवदूष्यं स्कंधदेशे दधार च ॥ २८३ ॥

मार्गशीर्षस्य राकायां[1] चंद्रे मृगशिरःस्थिते । अह्नश्च पश्चिमे भागे कृतषष्ठतपास्ततः ॥ २८४ ॥

पंचभिर्मुष्टिभिमूर्ध्नो लीलयैव जगत्पतिः । उत्पाटयामास केशान् क्लेशान्पूर्वार्जितानिव ॥२८५॥ युग्मम् ॥

शक्रस्तान् स्वामिनः केशान् स्वकीयवसनांचले[2] । शेषामिव प्रतीयेष क्षीरोदे चाक्षिपत्क्षणात् ॥ २८६ ॥

सुरासुरनृणामाशु तुमुलं[3] मुष्टिसंज्ञया । निषिषेध द्वाःस्थइव[4] क्षीरोदादेत्य वासवः ॥ २८७ ॥

सावद्यं[5] योगमखिलं[6] प्रत्याख्यामीत्युदीरयन् । देवादिपर्षत्प्रत्यक्षं[7] चारित्रं शिश्रिये प्रभुः ॥ २८८ ॥

मनःपर्यवमुत्पेदे ज्ञानं तुर्यं[8] प्रभोरथ । ज्ञानस्य केवलस्येव सत्यंकार उपस्थितः ॥ २८९ ॥

एकांतदुःखदग्धानां प्रक्षिप्तानामिवानले । अपि नारकजंतूनां तदा सुखमभूत्क्षणम् ॥ २९० ॥

उत्सृज्य तृणवद्राज्यं सहस्रं पृथिवीभुजः । सह त्रैलोक्यनाथेन दीक्षामाददिरे स्वयम् ॥ २९१ ॥

अथ शक्रो नमस्कृत्य भगवंतं कृतांजलिः । स्तोतुमेवं समारेभे भक्तिनिर्भरया गिरा ॥ २९२ ॥

चतुर्ज्ञानधर चतुर्यामधर्मप्रदर्शक । चतुर्गतिप्राणिगणप्रीतिदायिञ्जय प्रभो ॥ २९३ ॥

धन्यास्त्रिजगन्नाथ भरतक्षेत्रभूमयः । तीर्थेश जंगमं तीर्थं यासु त्वं विहरिष्यसे ॥ २९४ ॥

अस्मिन् वससि संसारे संसारेण न लिप्यसे । पंकजं पंकजमपि[9] याति पंकिलतां[10] न हि ॥ २९५ ॥

---

१ पूर्णिमायां । २ वस्त्रप्रान्तभागे । ३ कोलाहलम् । ४ द्वारपालः । ५ सदोषं । ६ मनोवचनकायात्मकं । ७ देवादीन सभासमक्षम् । ८ चतुर्थं । ९ पंकात् जातमपि । १० पंकयुक्तताम् ।

इतश्च चमरचंचां मरीचिरविशत्पुरीम् । गृहे चाशनिघोषस्य मातुः पार्श्वमुपाययौ ॥ ३७३ ॥
हिमार्तामिव नलिनीं पंकमग्नामिवार्जुनीम्[1] । दवप्राप्तामिव लतां वागुरास्थां[2] मृगीमिव ॥ ३७४ ॥
इन्दुलेखामिवाह्स्थां[3] तटस्थां शफरीमिव । वारीबद्धामिव[4] वशां हंसीं मरुगतामिव ॥ ३७५ ॥
सुतारामुपवासस्थां तत्र चात्यंतदुःखिताम् । मंत्रवत् पतिनामैव स्मरन्तीं स ददृक्षत ॥ ३७६ ॥
॥ त्रिभिर्विशेषकम् ॥

ततः स आख्यदशनिघोषमातुरशेषतः । यत्सुतारानयनायादिष्टोऽस्म्यमिततेजसा ॥ ३७७ ॥
सुतारां समुपादायाशनिघोषजनन्यपि । आययावचलस्वामिसन्नायां यत्र तत्पतिः ॥ ३७८ ॥
सा तत्कालमपि हि श्रीविजयामिततेजसोः । सुतारामर्पयामासानर्घां[5] न्यासीकृतामिव ॥ ३७९ ॥
बलदेवं भगवंतं केवलज्ञानिनं ततः । सा वंदित्वा यथास्थानं निषसाद प्रसादभाक् ॥ ३८० ॥
तदा चाशनिघोषोऽपि क्षमयामास सामवाक् । नरविद्याधरेन्द्रौ श्रीविजयामिततेजसौ ॥ ३८१ ॥
शान्तवैरास्ततः सर्वेऽप्यभवंस्तत्र पर्षदि । देशनां चाचलस्वामी विदधे शुद्धिदायिनीम् ॥ ३८२ ॥
देशनांतेऽशनिघोषो बलभद्रमहामुनिम् । इति विज्ञपयामास ललाटघटितांजलिः ॥ ३८३ ॥
स्वस्थाने तस्थुषी सेयं दंतिनेवारविंदिनी । न हि दुष्टेन मनसा सुतारापहृता मया ॥ ३८४ ॥
किं त्वहं चमरचंचानगर्यां गतवान् पुरा । आयतने भगवतो जयंतस्य महामुनेः ॥ ३८५ ॥
तत्र च भ्रामरीं विद्यां किंचिद्भ्रमरवद्भ्रणन् । असाधयमहं स्वामिन् सप्तरात्रमुपोषितः ॥ ३८६ ॥

---

१ धेनुम् । २ पाशबद्धाम् । ३ दिवसस्थां । ४ वारी गजबंधनस्थानं तस्यां बद्धां वशां हस्तिनीम् । ५ निर्दोषाम् ।

तवासिधारासोदर्य[1] जयतीदं महाव्रतम् । कर्मपाशच्छेदनाय भर्त्रेविष्णु जगत्प्रभो ॥ २९६ ॥

निर्ममोऽपि कृपालुस्त्वं निर्ग्रंथो[3]ऽपि महर्द्धिकः[2] । तेजस्व्यपि सदा सौम्यो धीरोऽपि भवकातरः[4] ॥२९७॥

नितांतं[5] पूजनीयः स नाकिनां मानवोऽपि सन् । विहरन् कार्यसे येन पारणं विश्वतारणम् ॥ २९८ ॥

महोपकारजनकं स्वामिन्नविरतस्य[6] मे । औषधं व्याधितस्येव[7] भवद्दर्शनमीदृशम् ॥ २९९ ॥

त्रिजगन्नाथ नार्थामि[8] त्वयि भूयान्मनो मम । अनुस्यूतमिवोत्कीर्णमिव[9] श्लिष्टमिवानिशम्[10] ॥ ३०० ॥

इति स्तुत्वा प्रभुं शक्रोऽन्येऽपींद्रा अच्युतादयः । स्थानं निजनिजं जग्मुः स्मरंतः प्रभुसंनिधिम् ॥३०१॥

द्वितीयस्मिन् दिने पुर्यां तस्यामेव जगत्पतिः । राज्ञः सुरेंद्रदत्तस्य गृहेऽगात् पारणेच्छया ॥ ३०२ ॥

सोऽभ्युत्थाय जगन्नाथं नमस्कृत्य च भक्तितः । परमान्नमुपादाय गृह्यतामित्यभाषत ॥ ३०३ ॥

एषणीयं कल्पनीयं प्रासुकं[11] पायसं[12] च तत् । पाणिपात्रेण विश्वैकपात्रं प्रभुरुपाददे ॥ ३०४ ॥

कल्याणकारणं दातुः प्राणमात्रकधारणम् । चकार पारणं तेन स्वादागर्द्धमनाः[13] प्रभुः ॥ ३०५ ॥

तदाभूद्दुन्दुभेर्नादो दिग्गजस्येव गर्जितम् । वसुधारापतद्दिव्या[14] दिवः शीर्णेव कंठिका ॥ ३०६ ॥

नंदनस्येव सर्वस्वं पुष्पवृष्टिः पपात खात्[15] । गंधांबुवृष्टिरभवद्दिग्दंतिमदसोदरा ॥ ३०७ ॥

एकरश्मिधृतानीव चेलान्युच्चिक्षिपुः[16] सुराः । अहोदानमहोदानं सुदानं चेति गीरभूत् ॥ ३०८ ॥

---

१ सदृशं । २ सशक्तिकम् । ३ निर्धनः । ४ भवात् कातरः भीरुः । ५ अत्यंतं । ६ अनिवृत्तस्य । ७ व्याधिः संजातः यस्य तस्य । ८ याचे । ९ प्रोतं । १० खचितं । ११ प्रासुकं अचित्तं । १२ पयसा पक्वं क्षीरान्नं इत्यर्थः । १३ स्वादे अगर्द्धं अलुब्धं मनः यस्य सः । १४ वसु धनं । १५ आकाशात् । १६ चेलानि वस्त्राणि ।

तत्राप्यज्ञाग्यादप्राप्तजिनधर्मस्तपस्व्यहम् । बहुकष्टं स्वल्पफलं हहा बालतपो व्यधाम् ॥ ४३१ ॥
कृत्वा निदानं तस्यापि तपसोऽहमिहाभवम् । पुर्यां चमरचंचायां विद्याधरपतिः प्रभो ॥ ४३२ ॥
निदानिनोऽपि तपसः परस्त्रीहरणस्य च । महाज्वालामहाविद्याप्रभवस्य जयस्य च ॥ ४३३ ॥
परिणामः शुभोदर्को ममाजनि जगद्गुरो । शरणं यदवाप्तोऽसि सर्वदुःखविमोचनः ॥ ४३४ ॥
वस्त्विवबोधः पुरोवर्ति जिनधर्ममसंविदन् । इयतोऽहं भवान् भ्रांतो रक्ष रक्षाधुनापि माम् ॥ ४३५ ॥
अतःपरं क्षणोऽप्येको यतिधर्मोज्झितस्य मे । मा गादिति विभोऽद्यैव दीक्षां शैक्षाय देहि मे ॥ ४३६ ॥
युक्तमेतदिति प्रोच्यानुगृहीतोऽचलेन सः । प्रश्रयं संश्रयन्नेवमुवाचामिततेजसम् ॥ ४३७ ॥
ज्वलनः कर्मकक्षाणां पूज्यो ज्वलनजव्ययम् । धर्मः साक्षादिव जयी तव यस्य पितामहः ॥ ४३८ ॥
अयं च भगवान् धन्यस्तृणवत्त्यक्तवैभवः । तपस्तेजोभिरर्कोऽर्ककीर्तिर्यस्य च ते पिता ॥ ४३९ ॥
भाविनश्चक्रिणस्तस्य भाविनश्चार्हतस्तव । प्रणिपातं कुर्वतो मे न लज्जा मानिनोऽपि हि ॥ ४४० ॥
इदं चमरचंचायां मम राज्यममी सुताः । अश्वघोषादयोऽन्यच्च त्वदीयं विद्धि मान्यथा ॥ ४४१ ॥
इत्युदित्वा सोऽश्वघोषं ज्यायांसं निजमात्मजम् । क्षीरकंठमिवाक्षैप्सीदुत्संगेऽमिततेजसः ॥ ४४२ ॥
ततो नरेन्द्रैर्भूयोभिः सहेन्द्राशनिनंदनः । उपादत्त परिव्रज्यामचलस्वामिसंनिधौ ॥ ४४३ ॥
माता श्रीविजयस्यापि तत्रागत्य स्वयंप्रभा । अचलस्वामिपादान्ते परिव्रज्यामुपाददे ॥ ४४४ ॥
बलं नत्वामिततेजा राजा श्रीविजयोऽपि च । अश्वघोषादयश्चेयुः स्थानं निजनिजं ततः ॥ ४४५ ॥

---

१ शिष्याय । २ कर्माण्येव कक्षानि तृणानि तेषां ज्वलनोऽग्निः । ३ बालमिव ।

भगवान् पारयामास यत्र तत्र तदैव हि । सुरेंद्रदत्तो विदधे पीठं स्वर्णमणीमयम् ॥ २०९ ॥
त्रिसंध्यं पूजयामास तत्पीठं स्वामिपादवत् । सुरेंद्रदत्तोऽसंपूज्य बुभुजे जातुचिन्न हि ॥ २१० ॥
स्थानात्ततश्च भगवान् ग्रामे द्रोणमुखे[1] पुरे । आकरे कर्पटे[2] खेटे[3] मंडंबे[4] पत्तने वने ॥ २११ ॥
नवे नवेऽनवस्थानो विविधाभिग्रहोद्यतः । द्वाविंशतिमनुद्विग्नः सहमानः परीषहान् ॥ २१२ ॥
त्रिगुप्तिः[5] पंचसमितिर्[6] मौनभागिर्जयः स्थिरः । एकाग्रदृग्विजहार वत्सराणि चतुर्दश ॥ २१३ ॥
तदानीं च सहस्राम्रवणे सालतरो[7]स्तले । द्वितीयशुक्लध्यानस्थस्तस्थौ प्रतिमया प्रभुः ॥ २१४ ॥
ध्यानांतरे तिष्ठतश्च घातिकर्मचतुष्टयम् । संभवस्वामिनोऽत्रुट्यद्भाविनः शुष्कपत्रवत् ॥ २१५ ॥
ततश्च कार्तिके मासि पक्षे च धवलेतरे । पंचम्यां च तिथौ शीतरश्मौ मृगशिरःस्थिते ॥ २१६ ॥
स्वामिनः कृतषष्ठस्योत्पेदे केवलमु[8]ज्ज्वलम् । सद्भाविभूतवस्तूनां दर्शनप्रतिभूरिव[9] ॥ २१७ ॥
परमाधार्मिककृतक्षेत्रजान्योऽन्यजन्मनः । दुःखस्यांतात्क्षणं सौख्यं तदा निरयिणामभूत् ॥ २१८ ॥
सुरासुरेंद्राः सर्वेऽपि तदानीं चलितासनाः । केवलज्ञानमहिम[11] कर्तुं तत्र समाययुः ॥ २१९ ॥
ततः समवसरणकृते क्षौ[12]मेकयोजनाम् । ममृजुर्वायुकुमाराः सिषिचुश्च पयोमुचः ॥ २२० ॥
बबंधुर्व्यंतरास्तां च स्वर्णरत्नाश्मभिः शुभैः । पंचवर्णानि पुष्पाणि विकिरंति स्म तत्र च ॥ २२१ ॥

---

१ चतुःशतग्रामेषु एकरम्यं ग्रामं द्रोणमुखं । २ स्थानभेदे । ३ कृषीवलग्रामे । ४ धूलिप्राकारवेष्टितो ग्रामः मडंबः । ५ तिस्रः मनोवचनकायरूपाः गुप्तयः यस्य । ६ पंच ईर्यादयः समितयः यस्य । ७ वृक्षविशेषस्य । ८ केवलज्ञानं । ९ प्रतिभूः प्रतिनिधिभूतः भाषायां "जामीन" इति ख्यातः । १० प्रकारत्रयोद्भवस्य । ११ महिमानं । १२ पृथ्वीं ।

वर्षे वर्षे चक्रतुः श्रीविजयामिततेजसौ । श्रीमतामर्हतां चैत्येषूच्चकैर्महिमत्रयम् ॥ ४६० ॥
तत्र चैत्रे चाश्विने चाष्टाह्निकौ महिमोत्सवौ । देवा नंदीश्वरेऽन्ये तु स्वस्वचैत्येषु कुर्वते ॥ ४६१ ॥
ततश्चैत्राश्विनयोस्तौ त्रैपृष्ठ्यमिततेजसौ । स्वस्वचैत्येषु चक्राते परमष्टाह्निकोत्सवम् ॥ ४६२ ॥
महिमानं तृतीयं तु सीमाद्रौ तावशाश्वतम् । नाभेयचैत्ये च बलज्ञानभूमौ च चक्रतुः ॥ ४६३ ॥
अन्येद्युरमिततेजाः सुमेरौ भानुमानिव । स्थितः स्वहर्म्ये प्रकृतिपुरुषैः परिवारितः ॥ ४६४ ॥
तपसाशोषिताशेषमांसशोणितसंचयम् । ग्रीष्मर्तुनेव संशुष्कपंकवारिसरोवरम् ॥ ४६५ ॥
दृश्यमानशिराजालमुद्वेलमिव सागरम् । जीर्णवंशकटमिव किंटत्किटितसंधिकम् ॥ ४६६ ॥
व्यक्तापर्शुमपि क्षामकुक्षिमप्यबिभीषणम् । दीप्यमानं तपस्तेजः संपदा निरवद्यया ॥ ४६७ ॥
मासक्षपणकं कंचिन्मुनिं भिक्षार्थमागतम् । धर्मादर्शं ददर्शैकं प्रियैकजिनदर्शनः ॥ ४६८ ॥
अभ्युत्थायामिततेजाः कृत्वा च त्रिःप्रदक्षिणाम् । वंदित्वा शुद्धैरन्नाद्यैस्तं मुनिं प्रत्यलाभयत् ॥४६९ ॥
तदा च तत्र सत्पात्रान्नादिदानप्रभावतः । वसुधाराप्रभृतीनि पंचदिव्यानि जज्ञिरे ॥ ४७० ॥
धर्म्यया चेष्टयैवं श्रीविजयामिततेजसोः । जग्मुर्वर्षसहस्राणि भूयांसि सुखमग्नयोः ॥ ४७१ ॥
अन्यदा नंदनवने वंदितुं शाश्वतार्हतः । संभूयामिततेजःश्रीविजयावीयतुर्नृपौ ॥ ४७२ ॥
शाश्वतार्हद्वंदनां तौ कृत्वा यावत् कुतूहलात् । भ्रांत्वा निरीक्षांचक्राते नंदनोद्यानभूमिकाम् ॥ ४७३ ॥
तावद्ददृशतुः स्वर्णशिलास्थौ चारणोत्तमौ । महर्षी विपुलमतिमहामत्यभिधानकौ ॥ ४७४ ॥

---

१ अनियमम् । २ प्रधानपुरुषैः । ३ शिराजालं स्नायुसमूहः । ४ ध्वनेरनुकरणमेतत् ।५ "प्रिये च निचदर्शनात्" इति पाठांतरम् ।

श्वेतछत्रध्वजस्तंभमकरास्यादिभूषितान् । प्रत्याशं चतुरस्तत्र तोरणांस्ते विचक्रिरे ॥ ३२२ ॥
रत्नपीठं विकृत्यांतः परितस्तं विचक्रिरे । रौप्यं वप्रं भवनेशाः सौवर्णकपिशीर्षकम् ॥ ३२३ ॥
ज्योतिष्का मध्यमं वप्रं सरत्नकपिशीर्षकम् । तापनीयं विदधिरे भूवधूवलयोपमम् ॥ ३२४ ॥
अथ रत्नमयं वप्रं माणिक्यकपिशीर्षकम् । तत्रोपरितनं चक्रुर्विमानपतयोऽमराः ॥ ३२५ ॥
बभूव प्रतिवप्रं च गोपुराणां चतुष्टयम् । द्वितीयवप्रे चैशान्यां देवछंदं व्यधुः सुराः ॥ ३२६ ॥
ऊर्ध्ववप्रांतराधन्या मध्ये चैत्यतरुं व्यधुः । साष्टधन्वशतक्रोशद्वयोच्चं व्यंतरास्ततः ॥ ३२७ ॥
तस्याधो मणिभिर्बद्धे पीठे ते छंदकं व्यधुः । तन्मध्ये प्राक् सांघ्रिपीठं रत्नसिंहासनं ततः ॥ ३२८ ॥
छंदकोपरि चक्रुश्च ते छत्रत्रितयं शुभम् । दधाते पार्श्वयोर्यक्षौ चामरे चेंदुपांडुरे ॥ ३२९ ॥
चक्रे समवसृत्यग्रे धर्मचक्रं च भासुरं । व्यंतरैर्धर्मचक्रित्वसूचकं परमेशितुः ॥ ३३० ॥
सुरैः संचार्यमाणेषु सौवर्णेष्वंबुजन्मसु । नवस्वारोपयन्पादौ सुरकोटीभिरावृतः ॥ ३३१ ॥
प्रातः समवसरणं पूर्वद्वाराविशद्विभुः । त्रिः प्रदक्षिणयामास तत्र तं चैत्यपादपम् ॥ ३३२ ॥
नमस्तीर्थायेति जल्पंश्छंदकांतर्निवेशितम् । सिंहासनमथाध्यास्त प्राङ्मुखः परमेश्वरः ॥ ३३३ ॥
प्रभावात्स्वामिनः स्वामिप्रतिबिंबानि चक्रिरे । रत्नसिंहासनस्थानि व्यंतरा अन्यदिक्ष्वपि ॥ ३३४ ॥
शिरसः पश्चिमे भागेऽभवद्भामंडलं प्रभोः । इंद्रध्वजः पुरस्ताच्च दुंदुभिश्चाध्वनद्दिवि ॥ ३३५ ॥

---

१ प्रतिदिशं । २ कपिशीर्षकं प्राकाराग्रं भाषायां "कांगरा" इति प्रख्यातं । ३ सूर्यचंद्रादिदेवविशेषाः । ४ सुवर्णमयं । ५ पुरद्वाराणां । ६ विश्रामपीठम् । ७ छायार्थं वृक्षविशेषं । ८ पूर्वद्वारा पूर्वद्वारेण ।

राजापि व्याजहाराथ देवि देव इव श्रिया । लोकोत्तरबलो भावी बलभद्रस्तवात्मजः ॥ १३ ॥
निधानं रत्नगर्भेव मुक्तां वंशलतेव च । तं गर्भं धारयामास ततो देवी वसुंधरा ॥ १४ ॥
श्रीवत्सांकं श्वेतवर्णं पूर्णावयवलक्षणम् । समये सुषुवे सूनुं महादेवी वसुंधरा ॥ १५ ॥
पुत्रस्य जन्मना तेन राजा स्तिमितसागरः । मुमुदे पार्वणस्येन्दोरुदयेनेव सागरः ॥ १६ ॥
दिवसे द्वादशे प्राप्ते द्वादशादित्यतेजसः । अपराजित इत्याख्यां तस्य सूनोर्व्यधात्पिता ॥ १७ ॥
पश्यंश्चुंबन् समाश्लिष्यन्नंके चारोपयन् सुतम् । न व्यरंसीन्नृपो जातु प्राप्तं धनमिवाधनः ॥ १८ ॥
इतश्च सुस्थितावर्ताज्जीवः श्रीविजयस्य तु । प्रच्युत्यानुद्धरादेव्याः कुक्षाववततार सः ॥ १९ ॥
शयानया निशाशेषे विशंतो वदने निजे । देव्यानुद्धरया सप्त स्वप्ना ददृशिरे तदा ॥ २० ॥
तत्रादौ केशरियुवा कुंकुमारुणकेसरः । इन्दुलेखानिभनखश्चमरोपमवालधिः ॥ २१ ॥
कुंजराभ्यां पूर्णकुम्भहस्ताभ्यां क्षीरवारिभिः । क्रियमाणाभिषेका च पद्मा पद्मासनस्थिता ॥ २२ ॥
ध्वंसमानो महाध्वान्तं दोषापि जनयन्नहः । उद्दंडतेजःप्रसरस्त्विषामधिपतिस्ततः ॥ २३ ॥
स्वच्छस्वादुपयःपूर्णः पुंडरीकार्चिताननः । सुवर्णघटितः पुष्पमाली कुंभस्ततोऽपि च ॥ २४ ॥
नानाजलचराकीर्णो रत्नसंभारभासुरः । गगनोदंचिकल्लोलस्ततः कल्लोलिनीपतिः ॥ २५ ॥
पंचवर्णमणिज्योतिःप्रसरैर्गगनांगणे । विपंचितेन्द्रचापश्री रत्नानां संचयस्ततः ॥ २६ ॥

---

१ पूर्णिमासंबंधिनश्चंद्रस्य । २ रात्रिरपि । ३ सूर्यः । ४ पुष्पाणां मालाः संति अस्य । ५नदीपतिः समुद्रः । ६ विस्तारिता इन्द्रधनुषः शोभा येन सः ।

प्रविश्य प्राग्द्वारार्हंतं नत्वाग्नेय्यामुपाविशन् । साधवोऽथ वैमानिक्यः साध्व्यश्चोर्ध्वज्ञवः स्थिताः ॥३३६॥
अपाग्द्वारा प्रविश्यार्हत्पादान्नत्वा च नैर्ऋते । अतिष्ठन् भवनपतिज्योतिष्कव्यंतरस्त्रियः ॥ ३३७ ॥
प्रत्यग्द्वारेण प्रविश्यार्हंतं नत्वा मरुद्दिशि । तस्थुः क्रमाद्भवनेशज्योतिष्कव्यंतराः सुराः ॥ ३३८ ॥
उदग्द्वारा प्रविश्याथ जिनं नत्वा क्रमेण तु । वैमानिका नरा नार्य ऐशान्यामवतस्थिरे ॥ ३३९ ॥
आद्यवप्रे चास्थितैवं श्रीमान् संघश्चतुर्विधः । वप्रे द्वितीये तिर्यंचस्तृतीये वाहनानि च ॥ ३४० ॥
अथ शक्रो नमस्कृत्य स्वामिनं रचितांजलिः । इति प्रचक्रमे स्तोतुं वाचा भक्तिसनाथया ॥ ३४१ ॥
अनाहूतसहायस्त्वं त्वमकारणवत्सलः । अनभ्यर्थितसाधुस्त्वं त्वमसंबंधबांधवः ॥ ३४२ ॥
अनक्तस्निग्धमनसममृजोज्ज्वलवाक्पथम् । अधौतामलशीलं त्वां शरण्यं शरणं श्रये ॥ ३४३ ॥
अचंडवीरव्रतिना शमिना समवर्त्तिना । त्वया काममकुट्यंत कुटिलाः कर्मकंटकाः ॥ ३४४ ॥
अभवाय महेशायागदाय नरकच्छिदे । अराजसाय ब्रह्मणे कस्मैचिद्भवते नमः ॥ ३४५ ॥
अनुच्छितफलोदग्रादनिपातगरीयसः । असंकलितकल्पद्रोस्त्वत्तः फलमवाप्नुयाम् ॥ ३४६ ॥
असंगस्य जिनेशस्य निर्ममस्य कृपात्मनः । मध्यस्थस्य जगत्त्रातुरनंकस्तेऽस्मि किंकरः ॥ ३४७ ॥
अगोपिते रत्ननिधावर्वृते कल्पपादपे । अचिंत्यचिंतारत्ने च त्वय्यात्मायं मयार्पितः ॥ ३४८ ॥
फलानुध्यानवंध्योऽहं फलमात्रतनुर्भवान् । प्रसीद यत्कृत्यविधौ किंकर्तव्यजडे मयि ॥ ३४९ ॥

१ चतुष्प्रकारः । २ भक्तियुक्तया । ३ अनक्तं अभ्यंगरहितम् । ४ अमृजः मलापकर्षरहितः ।५ शरणे साधुं । ६ रजोगुणरहिताय । ७ न अंकं त्रिशूलादि चिन्हं यस्य । ८ अवेष्टने ।

दमितारिस्तु तच्छ्रुत्वा कोऽसाववनिगोचरः । मर्तुकामस्तपस्वीति वदन्नित्यादिशद्भटान् ॥ २०५ ॥
सभ्रातरममुं क्षुद्रं हत्वा धृत्वाथवा द्रुतम् । समानयध्वं तनयामस्मिन् फलतु दुर्नयः ॥ २०६ ॥
तेनैवमुक्ताः सुभटाः स्फुटमुद्भटवृत्तयः । अधावन्तोदस्तशस्त्रा उद्दंता इव दन्तिनः ॥ २०७ ॥
तदापराजितानंतवीर्ययोर्वीर्यशालिनोः । सीरशार्ङ्गप्रभृतीनि दिव्यरत्नानि जज्ञिरे ॥ २०८ ॥
दमितारिभटास्ते प्राग्नैकशो दमितारयः । प्रजह्रुर्युगपच्छस्त्रैर्धाराभिरिव वारिदाः ॥ २०९ ॥
ततोऽचलितयोः क्रोधात् पुरुषव्याघ्रयोस्तयोः । अनायासरणेनापि त्रेसुस्ते हरिणा इव ॥ २१० ॥
श्रुत्वा पलायितांस्तांस्तु दमितारिरमर्षणः । अचालीद्गगनं कुर्वन् शस्त्रैर्वनमिवोद्द्रुमम् ॥ २११ ॥
अरे युध्यस्व युध्यस्व तिष्ठ तिष्ठापतापत । मुंच मुंचायुधमदं मरिष्यसि मरिष्यसि ॥ २१२ ॥
एष रक्षामि ते प्राणान् मुंचेमां स्वामिकन्यकाम् । इत्यादि सुभटालापान् विकटाटोपभीषणान् ॥ २१३ ॥
आकर्ण्य कर्णकटुकान् कनकश्रीरजायत । आर्यपुत्रार्यपुत्रेति जल्पंती मोहविह्वला ॥ २१४ ॥

॥ त्रिभिर्विशेषकम् ॥

स्माहेत्यनन्तवीर्यस्तामंबरे पितृडंबरात् । किं मुह्यसि मुधा मुग्धे मंडूकरटितादिव ॥ २१५ ॥
दमितारिं ससैन्यं त्वं मैनाकमिव वज्रिणा । त्रास्यमानं मया पश्य हन्यमानमथापि वा ॥ २१६ ॥
एवमाश्वास्य कनकश्रियं शार्ङ्गधरो युधि । पंचास्यस्तर्जित इव ववले सापराजितः ॥ २१७ ॥
कोटिशो वैरिकुट्टाकाः दमितारेर्महाभटाः । शार्ङ्गिणं वेष्टयामासुः प्रदीपं शलभा इव ॥ २१८ ॥

---

१ वराकः । २ उद्भटोद्धता वृत्तिर्येषां ते । ३ उदधिकाद्रुमा यस्मिंस्तत् । ४ आगच्छागच्छ । ५ पितुराडंबरेण । ६ सिंहः । ७ वैरिनाशकाः ।

स्तुत्वैवं विरते शक्रे विश्वस्योपचिकीर्षया । भगवान् संभवस्वामी विदधे देशनामिमां ॥ ३५० ॥
अनित्यं सर्वमप्यस्मिन् संसारे वस्तु वस्तुतः । मुधासुखलवेनापि तत्र मूर्च्छा शरीरिणाम् ॥ ३५१ ॥
स्वतोऽन्यतश्च सर्वाभ्यो दिग्भ्यश्चागच्छदापदः । कृतांतदंतयंत्र[1]स्थाः कष्टं जीवंति जंतवः ॥ ३५२ ॥
वज्रसारेषु देहेषु यद्यास्कंदत्यनित्यता । रंभागर्भसगर्भा[2]णां का कथा तर्हि देहिनाम् ॥ ३५३ ॥
असारेषु शरीरेषु स्थेमानं यश्चिकीर्षति । जीर्णशीर्णपलाला[3]त्थे चंचापुंसि[4] करोतु सः ॥ ३५४ ॥
न मंत्रतंत्रभैषज्यकरणानि शरीरिणाम् । त्राणाय मरणव्याघ्रमुखकोटरवासिनाम् ॥ ३५५ ॥
प्रवर्द्धमानं पुरुषं प्रथमं ग्रसते जरा । ततः कृतांतस्त्वरते धिगहो जन्म देहिनाम् ॥ ३५६ ॥
यद्यात्मानं विजानीयात्कृतांतवशवर्तिनम् । को ग्रासमपि गृह्णीयात् पापकर्मसु का कथा ॥ ३५७ ॥
समुत्पद्य समुत्पद्य विपद्यंतेऽप्सु बुद्बुदाः[5] । यथा तथा क्षणेनैव शरीराणि शरीरिणाम् ॥ ३५८ ॥
आढ्यं निःस्वं[6] नृपं रंकं ज्ञं[7] मूर्खं सज्जनं खलम् । अविशेषेण संहर्तुं समवर्ती प्रवर्तते ॥ ३५९ ॥
न गुणेष्वस्य दाक्षिण्यं द्वेषो दोषेषु वास्ति न । दवाग्निवदरण्यानीं[8] विलुंपत्यंतको जनम् ॥ ३६० ॥
इदं तु मा स्म शंकध्वं कुशास्त्रैरपि मोहिताः । कुतोऽप्युपायतः कायो निरपायो[9] भवेदिति ॥ ३६१ ॥
ये मेरुं दंडसात्[10]कर्तुं पृथ्वीं वा छत्रसात्क्षमाः । तेऽपि त्रातुं स्वमन्यं वा न मृत्योः प्रभविष्णवः[11] ॥ ३६२ ॥
आ कीटादा च देवेंद्रात्प्रभावन्तकशासने । अनुन्मत्तो न भाषेत कथंचित्कालवंचनम् ॥ ३६३ ॥

---

१ दंताः एव यंत्राणि तेषु तिष्ठंतीति । २ सगर्भाणां सदृशाम् । ३ पलालो घासः । ४ तृणनिर्मिते पुरुषे । ५ जलविकाराः भाषायां "परपोटा" इति ख्याताः । ६ निर्धनं । ७ पंडितं । ८ महत्अरण्यं । ९ नाशरहितः । १० कृत्स्नः मेरुः दंडः संपद्यते इति दंडसात् । ११ समर्थाः ।

आपदं मरणांतां तां ज्ञात्वा च शुभभावने । विदधाते अनशनं नमस्कारपरायणे ॥ २९८ ॥
कनकश्रीर्विपद्याहं सौधर्मस्वर्गशासितुः । अभूवमग्रमहिषी नाम्ना नवमिका स्वसः ॥ २९९ ॥
विपद्य च धनश्रीस्त्वं धनदस्य महिष्यभूः । च्युत्वा ततोऽत्र सुमतिः सीरिणस्त्वं सुताभवः ॥ ३०० ॥
आसीत्तदा नौ संकेतश्च्यवते प्रथमं हि या । सार्हद्धर्मं बोधनीया समुपेत्य द्वितीयया ॥ ३०१ ॥
त्वां बोधयितुमेषाहमागतास्मि तव स्वसा । जैनं बुध्यस्व धर्मं त्वं संसारोदधितारणम् ॥ ३०२ ॥
नंदीश्वरमहाद्वीपेऽष्टाह्निकाः शाश्वतार्हताम् । यथास्थानं जन्मस्नात्राद्युत्सवाञ्जगमार्हताम् ॥ ३०३ ॥
तांश्च ता देशनावाचः स्वानुभूताः पुराभवे । स्मरानया विस्मरसि किं जन्मांतरनिद्रया ॥ ३०४ ॥
॥ युग्मम् ॥

देवानामप्यसुलभां मर्त्यजन्मतरोः फलम् । तदादत्स्व[1] परिव्रज्यां सिद्धेः प्रियसखीमिव ॥ ३०५ ॥
इत्युक्त्वा शक्रमहिषी विमानमधिरुह्य सा । द्युतिभिर्द्योतयन्ती द्यां ययौ विद्युदिवोपरि ॥ ३०६ ॥
संजातजातिस्मरणा तद्गिरा सुमतिस्ततः । पपात मूर्छिता भूमौ सद्यो भवभयादिव[2] ॥ ३०७ ॥
संसिक्ता चंदनांभोभिर्वीजिता व्यजनानिलैः । लब्धसंज्ञा समुत्तस्थौ निशात्यय इवाथ सा ॥ ३०८ ॥
सा कृताञ्जलिरित्यूचे भो भोः सर्वे कुलोद्भवाः[3] । प्रार्थये पृथिवीनाथा जातिस्मरणवत्यहम् ॥ ३०९ ॥
मदर्थं यूयमाहूता अनुजानीत तेन माम् । उपादास्ये पारिव्रज्यां भवभ्रमिरुगोषधिम्[4] ॥ ३१० ॥
॥ युग्मम् ॥

---

१ गृहाण । २ संसारभयादिव । ३ उच्चकुलोत्पन्नाः । ४ संसारे भ्रमणमेव व्याधिस्तत्सौषधतुल्याम् ।

पूर्वेषां चेत्कचित्कश्चिज्जीवन् दृश्येत कैश्चन । न्यायपथातीतमपि स्यात्तदा कालवंचनम् ॥ ३६४ ॥
अनित्यं यौवनमपि प्रतियंतु मनीषिणः । बलरूपापहारिण्या जरसा जर्जरीभवत् ॥ ३६५ ॥
यौवने कामिनीभिर्ये काम्यंते कामलीलया । निकामकृतथूत्कारं त्यज्यंते तेऽपि वार्द्धके ॥ ३६६ ॥
यदर्जितं बहुक्लेशैरभुक्त्वा यच्च पालितम् । तद्याति क्षणमात्रेण निर्धनं धनिनां धनम् ॥ ३६७ ॥
उपमा न पदं किं स्यात्फेनबुद्बुदविद्युता । धनस्य नश्यतोऽवश्यं पश्यतामपि तद्वताम् ॥ ३६८ ॥
समागमाः सापगमाः सुहृद्भिर्बंधुभिर्जनैः । स्वस्य वान्यस्य वा नाशे विकृतेऽपकृतेऽपि वा ॥ ३६९ ॥
ध्यायन्ननित्यतां नित्यं मृतं पुत्रं न शोचति । नित्यताग्रहमूढस्तु कुंड्यभंगेऽपि रोदिति ॥ ३७० ॥
शरीरयौवनधनबांधवादि न केवलम् । अनित्यं किंतु भुवनमप्येतत्सचराचरम् ॥ ३७१ ॥
इत्यनित्यं विदन् सर्वं शरीरी निष्परिग्रहः । नित्याय नित्यसौख्याय पदाय प्रयतेत तत् ॥ ३७२ ॥
श्रुत्वा तां देशनां भर्तुः पादपद्मांतिके ततः । नरा नार्यश्च बहवो दीक्षामाददिरे तदा ॥ ३७३ ॥
तदा चारुप्रभृतीनां गणभृन्नामकर्मणाम् । स्वाम्युद्दिदेश त्रिपदीं स्थित्युत्पादव्ययात्मिकाम् ॥ ३७४ ॥
द्व्यग्रं शतं गणधरास्ते त्रिपद्यनुसारतः । असूत्रयन् द्वादशांगीं सचतुर्दशपूर्विकाम् ॥ ३७५ ॥
उत्थायादाय शक्रोपनीतं चूर्णं क्षिपन्प्रभुः । अनुयोगगणानुज्ञे तेषां द्रव्यादिभिर्ददौ ॥ ३७६ ॥
वासान् सुरादयस्तेषु ध्वनद्दुंदुभि चिक्षिपुः । स्वामिवाचं प्रतीच्छंतस्तस्थुर्गणभृतश्च ते ॥ ३७७ ॥
दिव्यसिंहासनं भूयोऽप्यध्यास्य प्राङ्मुखो विभुः । अनुशिष्टिमयीं तेषां विदधे धर्मदेशनाम् ॥ ३७८ ॥

१ नाशं । २ बुद्बुदो जलविकारः । ३ नाशयुक्ताः । ४ भित्तिःभंगेऽपि । ५ द्वौ अग्रे यस्य। ६वासक्षेपान्।७ध्वनंतःदुंदुभयःयस्मिन्यथातथा ।

सुचिरं स तपस्तेपे सहमानः परीषहान् । अन्ते चानशनं कृत्वा विपद्येन्द्रोऽच्युतेऽभवत् ॥ ४०५ ॥
अनंतवीर्यजीवोऽपि भुक्त्वा दुष्कर्मणां फलम् । निर्ययौ नरकाच्छुद्धः स्वर्णधातुरिवानलात् ॥ ४०६ ॥
सोऽस्यैव जंबूद्वीपस्य क्षेत्रे भरतनामनि । वैताढ्यस्योत्तरश्रेण्यां पुरे गगनवल्लभे ॥ ४०७ ॥
विद्याधरपतेर्मेघवाहनस्य महात्मनः । जायायां मेघमालिन्यां मेघनादः सुतोऽभवत् ॥ ४०८ ॥
॥ युग्मम् ॥

क्रमेण यौवनं प्राप्तं तं राज्ये मेघवाहनः । निवेश्य परलोकाय निजकार्यमसाधयत् ॥ ४०९ ॥
उभयोरपि वैताढ्यश्रेण्योरधिपतिः क्रमात् । स बभूवैकतेजस्वी द्यावाभूम्योरिवार्यमा[1] ॥ ४१० ॥
दशोत्तरं देशशतं विभज्य तनुजन्मनाम्[2] । दत्वान्येद्युर्मंदराद्रिं सोऽगात् प्रज्ञप्तिविद्यया ॥ ४११ ॥
तत्रांतर्नंदनवनं सिद्धचैत्येऽर्चनं व्यधात् । तदा तत्रावतेरुश्च त्रिदशाः कल्पवासिनः ॥ ४१२ ॥
प्राग्भवभ्रातृसौहार्दादच्युतेन्द्रो विलोक्य तम् । प्राबोधयद्गुरुरिव संसारस्त्यज्यतामिति ॥ ४१३ ॥
तदामरगुरुर्नाम मुनीन्द्रः समुपाययौ । विद्याधरपतेस्तस्य स्वार्थसिद्धिरिवांगवान् ॥ ४१४ ॥
तत्पादमूले जग्राह मेघनादस्ततो व्रतम् । अपालयच्चाप्रमत्तस्तपो नियमपूर्वकम् ॥ ४१५ ॥
सोऽपरेद्युरथारुह्य गिरिं नंदनपर्वतम् । ध्यानी तस्थौ समालंब्य प्रतिमामेकरात्रिकीम् ॥ ४१६ ॥
तथास्थितं च प्राग्जन्मवैर्यश्वग्रीवनंदनः[3] । भवं भ्रांत्वा चिरं दैत्यजन्म प्राप्तो ददर्श तम् ॥ ४१७ ॥
प्राग्वैरादुपसर्गान् स क्रुद्धस्तस्य महामुनेः । चक्रे निसर्गधीरस्य महाद्रोरिव कासरः[4] ॥ ४१८ ॥

---

१ सूर्यः । २ पुत्राणाम् । ३ पूर्वजन्मशत्रुः । ४ महिषो महावृक्षस्येव ।

पूर्णायामथ पौरुष्यां व्यसाक्षीद्देशनां प्रभुः । शाल्यांढकबली राजन्नवनादाजगाम च ॥ ३७९ ॥
द्विसस्य तस्य खाद्धस्यदर्धं देवैश्चयुतस्य तु । नृपैरर्धं नरैरर्धं विभज्य जगृहे मुदा ॥ ३८० ॥
अथोछायोत्तरद्वारा विनिर्गत्य जगद्गुरुः । देवछंदे विशश्रामाश्रांतोऽपि स्थितिरीदृशी ॥ ३८१ ॥
स्वाम्यंघ्रिपीठमध्यास्य चारुर्गणधराग्रणीः । स्वामिप्रभावाद्विदधे देशनां संशयछिदम् ॥ ३८२ ॥
द्वितीयस्यां च पौरुष्यां पूर्णायां देशनाविधेः । व्यरंसीत् कालवेलायामागमाध्ययनादिव ॥ ३८३ ॥
ततश्च स्वामिनं नत्वा सुरासुरनृपादयः । स्वं स्वं स्थानं ययुः सर्वे मुदा वीतोत्सवा इव ॥ ३८४ ॥
तीर्थे तत्र समुत्पन्नस्त्रिमुखो नाम यक्षराट् । त्रिनेत्रस्त्रिमुखः श्यामः षड्बाहुर्बर्हिवाहनः ॥ ३८५ ॥
दक्षिणैर्नकुलधरगदाभृदभयप्रदैः । युतो वामैर्भुजैर्मातुलिंगदामाक्षसूत्रिभिः ॥ ३८६ ॥
तीर्थे तत्रैव चोत्पन्ना दुरितारिरभिख्यया । चतुर्भुजा गौरवर्णा मेषवाहनगामिनी ॥ ३८७ ॥
दक्षिणाभ्यां भुजाभ्यां तु वरदेनाक्षसूत्रिणा । वामाभ्यां शोभमाना तु फणिनाभयदेन च ॥ ३८८ ॥
त्रिमुखो दुरितारिश्च ततः शासनदेवते । सन्निधाने सदा भर्तुरभूतामात्मरक्षवत् ॥ ३८९ ॥
ततः स्थानात् प्रभुरपि साधुभिः परिवारितः । चतुस्त्रिंशदतिशयान्वितो व्यहरदन्यतः ॥ ३९० ॥
विभोर्विहरतोऽभूवन् द्वे लक्षे व्रतिनामथ । व्रतिनीनां तु षट्त्रिंशत्सहस्राणि त्रिलक्ष्यपि ॥ ३९१ ॥
सर्वपूर्वभृतां सार्धा शतानामेकविंशतिः । शतानि च षण्णवतिरवधिज्ञानशालिनाम् ॥ ३९२ ॥

---

१ आढकप्रमाणः शालिबलिः । २ आकाशात् । ३ विश्रामस्थानविशेषे । ४ निवृत्तोत्सवाः ५ मयूरवाहनः । ६ नाम्ना । ७ चतुर्दशपूर्वधारिणां ।

## अथतृतीयः सर्गः ।

अस्यैव जंबूद्वीपस्य प्राग्विदेहेषु विद्यते । सीताया दक्षिणतटे विजयो मंगलावती ॥ १ ॥
तत्रास्ति नगरी रत्नसंचया नाम विस्तृता । रत्नसंचयवत्त्वेन रत्नाकरवधूरिव ॥ २ ॥
तत्र क्षेमंकरो नाम योगक्षेमकरः श्रियः । समीरण इवौजस्वी बभूव वसुधाधरः ॥ ३ ॥
निर्मला रत्नमालेव रत्नमालेति नामतः । पुष्पमालेव मृद्वंगी तस्याभूत्सहचारिणी ॥ ४ ॥
अपराजितजीवः सोऽच्युतेन्द्रः प्रच्युतोऽच्युतात् । शौक्तिकेयमिव शुक्तौ तत्कुक्षावुदपद्यत ॥ ५ ॥
चतुर्दश महास्वप्नान् वज्रं पंचदशं तथा । सुखसुप्ता महादेवी निशाशेषे ददर्श सा ॥ ६ ॥
पत्ये प्रबुद्धा साचख्यौ व्याचख्यौ सोऽपि यत्तव । वज्रीव वीरतनयश्चक्रवर्ती भविष्यति ॥ ७ ॥
काले सा सुषुवे पुत्रं पवित्रं मधुराकृतिम् । षष्ठमिव लोकपालं लोकोत्तरपराक्रमम् ॥ ८ ॥
गर्भस्थितेस्मिन्सा स्वप्ने देवी वज्रं व्यलोकयत् । तेन वज्रायुध इति तस्य नाम ददौ पिता ॥ ९ ॥
लोकोत्तरवपुर्लोकचक्षुर्दोषाद्दिने दिने । [१]स्फुटल्ललंतिकारिष्टो व्यवर्धिष्ट क्रमेण सः ॥ १० ॥
सुरासुरनरस्त्रीणामेकं हृदयमोहनम् । स प्राप यौवनं सर्वकलाजलधिपारगः ॥ ११ ॥
सोऽथ लक्ष्मीवतीं नाम लक्ष्मीमिव वपुष्मतीम् । राजपुत्रीमुपायंस्त हस्तविन्यस्तकंकणः ॥ १२ ॥

---

१ मौक्तिकम् । २ स्फुटंती विकसंती ललंतिका माला तया अरिष्टः शुभः ।

तुर्यज्ञानिनां द्वादश सहस्राः सार्धकं शतम् । सहस्राणि पंचदश केवलज्ञानिनां पुनः ॥ ३९३ ॥
वैक्रिय[1]लब्धिसहस्रा विंशतिर्द्विशतोनिता । द्वादशैव सहस्राणि वादलब्धिमतां पुनः ॥ ३९४ ॥
सहस्रैः सप्तभिर्न्यूना श्रावकाणां त्रिलक्ष्यथ । श्राविकाणां च षड्लक्षी सषट्त्रिंशत्सहस्रिका ॥ ३९५ ॥
आरभ्य केवलात्पूर्वलक्षं व्यहरत प्रभुः । चतुर्दशाब्द्या च चतुःपूर्वांग्या च विवर्जितम् ॥ ३९६ ॥
ज्ञात्वात्मनो मोक्षकालं सर्वज्ञो भगवानथ । संमेतशैलशिखरं जगाम सपरिच्छदः ॥ ३९७ ॥
समं मुनिसहस्रेण तत्र च प्रत्यपद्यत । पादपोपगमं नामानशनं संभवप्रभुः ॥ ३९८ ॥
सुरासुराणामधिपास्तदानीं सपरिच्छदाः । तत्रैत्य भक्तितस्तस्थुः सेवमाना जगत्प्रभुम् ॥ ३९९ ॥
मासांते संभवस्वामी सर्वयोगनिरोधिनीम् । शैलेशीं[2] शैलनिष्कंपः प्रपेदे ध्यानमंतिमम् ॥ ४०० ॥
चैत्रस्य सितपंचम्यां विधौ मृगशिरःस्थिते । सिद्धानंतचतुष्कोऽगादव्याबाधपदं प्रभुः ॥ ४०१ ॥
सहस्रं मुनयस्तेऽपि स्वामिनोंऽशा इवामलाः । तेनैव विधिना प्रापुस्तदेव परमं पदम् ॥ ४०२ ॥
पूर्वलक्षाः कुमारत्वे ययुः पंचदश प्रभोः । चतुश्चत्वारिंशद्राज्ये सपूर्वांगचतुष्टयाः ॥ ४०३ ॥
प्रव्रज्यायां पूर्वलक्षं चतुष्पूर्वांगवर्जितम् । इत्यायुः पूर्वलक्षाणि षष्टिः श्रीसंभवप्रभोः ॥ ४०४ ॥
अजितस्वामिनिर्वाणात् कोटिलक्षेषु त्रिंशति । सागराणां गतेष्वासीन्निर्वाणं संभवप्रभोः ॥ ४०५ ॥

तत्राथ संभवजिनाधिपतेः शरीरसंस्कारमन्यदपि कर्म यथावदिन्द्राः ।
चक्रुर्विभज्य जगृहुश्च यथार्हमेते दंष्ट्रा रदान्[3] दिविषदः[4] पुनरस्थिजातम् ॥ ४०६ ॥

---

१ अनेकरूपोत्पादकतन्नाम्नि लब्धिविशेषवतां । २ तन्नामकं ध्यानम् । ३ दन्तान् । ४ देवाः ।

विद्याधरोऽस्मि वैताढ्यशैलादर्थेन केनचित् । अग्रतो गा वलितः सन्निहोद्याने समापदम् ॥ १६९ ॥
क्षणमस्थामहमिह पश्यन्नुद्यानरम्यताम् । अस्मार्षं यावदुत्पित्सुर्विद्यामाकाशगामिनीम् ॥ १७० ॥
विद्यायाः पदमेकं मे विस्मृतं तावदेव तत् । आबद्धपक्षः[2] पक्षीवोत्पतामि निपतामि च ॥ १७१ ॥
॥ युग्मम् ॥
व्याजहार कुमारोऽपि पुरस्तादपरस्य चेत् । युज्यते पठितुं विद्या महापुरुष तत् पठ ॥ १७२ ॥
सोऽप्यूचे सामान्यपुंसां पुरो विद्या न पठ्यते । महात्मनां त्वादृशां सा देया पाठे तु का कथा ॥ १७३ ॥
सोऽथ विद्याधरो विद्यां पदहीनां पपाठ ताम् । पदानुसारिधी[3]राख्यत् कुमारोऽपि हि तत्पदम् ॥ १७४ ॥
विद्याधरः पुनर्भूतविद्याशक्तिस्ततश्च सः । कुमाराय ददौ विद्याः कृतज्ञा हि विवेकिनः ॥ १७५ ॥
ययौ विद्याधरः सोऽथ कुमारोऽपि यथाविधि । विद्यास्ताः साधयित्वा च महाविद्याधरोऽभवत् ॥ १७६ ॥
पैतृष्वस्रेयो वसंतसेनायां स च रोपभाक् । अक्षमः कनकशक्तेरपकर्तुं मनागपि ॥ १७७ ॥
लज्जया भक्तपानादि परिहृत्य विपद्य च । हिमचूल इति नाम्ना त्रिदशः समजायत ॥ १७८ ॥
॥ युग्मम् ॥
वसन्तसेनाकनकमालाभ्यां सहितो मही[1]म् । बभ्राम कनकशक्तिर्विद्याशक्त्या समीरवत् ॥ १७९ ॥
स जगामैकदा स्वैरी हिमवन्तं महागिरिम् । तत्रापश्यच्च विपुलमत्याख्यं चारणं मुनिम् ॥ १८० ॥
उत्तप्तस्वर्णवर्णं तं तपस्तेज इ[4]वांगवत् । कृशांगं विजितानंगमवन्दिष्ट[5] स भक्तितः ॥ १८१ ॥

१ महीम् । २ ईषद्बद्धौ पक्षौ यस्य सः । ३ पदस्यानुसारिणी बुद्धिर्यस्य सः । ४ मूर्तिमत् । ५ विजितः अनंगः कामो येन ।

स्वं स्वं स्थानं जग्मुरिंद्राः सुराश्च स्वाम्यस्थीनि स्थापयामासुरुच्चैः ।
अर्चाहेतोर्माणवस्तंभमूर्ध्नि तीर्थेशानामर्चनीयं न किंवा ॥ ४०१ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिशष्टिशलाकापुरुषचरिते महाकाव्ये तृतीयपर्वणि श्रीसंभवस्वामिचरितवर्णनो

नाम प्रथमः सर्गः ॥ १ ॥

उष्ट्रग्रांकाररावैश्च वेसराणां खरस्वनैः । नादैश्च रणतूर्याणां जगद्बधिरयन् क्षणात् ॥ ४० ॥
सुरेन्द्रदत्तनृपतिः सद्यः सर्वाभिसारतः । उपतस्थे मेघरथं रणातिथ्यविधित्सया ॥ ४१ ॥

॥ त्रिभिर्विशेषकम् ॥

जैत्रं रथं मेघरथोऽप्यथो दृढरथश्च सः । आरुरोह युधे ध्वान्तध्वंसायेव दिवाकरः ॥ ४२ ॥
शंकून् शल्यानि चक्राणि प्रासान्दंडान् गदा अपि । तीरीतैद्बलनाराचप्रभृतीन् विशिखानपि ॥ ४३ ॥
पाषाणलोहगोलांश्च कैर्यंत्रैश्च सैन्यकाः । अस्त्रमेघा इवोन्नम्य सैन्ययोर्ववृषुर्द्वयोः ॥ ४४ ॥
नीरंध्रः शस्त्रसंपातः सैन्ययोरुभयोरपि । तदाभूत् खेचरस्त्रीणां युद्धदर्शनविघ्नकृत् ॥ ४५ ॥
अस्त्रैरस्त्राण्यखंड्यंताभज्यंत च रथै रथाः । समरे तत्र यादांसि यादोभिरिव वारिधौ ॥ ४६ ॥
अस्खल्यमानप्रसरैः क्षणादपि परैरथ । प्रभंजनैर्वनमिवाभंजि सैन्यं कुमारयोः ॥ ४७ ॥
क्रुद्धावथ कुमारौ तावद्वैतभुजविक्रमौ । परसैन्यं जगाहाते महासर इव द्विपौ ॥ ४८ ॥
उद्भ्रान्तयोरिवांभोध्योस्तयोरस्त्रोर्मिमालिनोः । स्खलनाय न केऽप्यग्रे तस्थुः प्रत्यर्थिसैन्यकाः ॥ ४९ ॥
मथ्यमाने बले ताभ्यां करिभ्यामिक्षुवाटवत् । सुरेन्द्रदत्तोऽधाविष्ट युवराजान्वितो युधे ॥ ५० ॥
सुरेन्द्रदत्तः श्रीमेघरथेन युयुधे समम् । युवराजो युवा तस्य समं दृढरथेन तु ॥ ५१ ॥
अन्योऽन्यं चिच्छिदुः शस्त्राण्यस्त्राणि च बबाधिरे । रणाजिरे रेजिरे ते चत्वारो लोकपालवत् ॥ ५२ ॥

---

१ ग्रांकारः शब्दविशेषः । २ अश्वतराणाम् । ३ युद्धाय । ४ सर्वाणि शस्त्रविशेषाणि । ५ सर्वे बाणविशेषाः । ६ जलजंतवः । ७ शत्रुसैनिकाः ।

# द्वितीयः सर्गः ।

## श्रीमदभिनंदनजिनचरित्रम् ।

गुणद्रुनंदनं श्रीमत्संवरोर्वीशनंदनम् । जगदानंदनं वंदे जिनेंद्रमभिनंदनम् ॥ १ ॥
तस्य प्रभोर्भव्यजनमोहनिद्रादिवामुखम् । तत्वज्ञानसुधाकुंभं वक्ष्ये चरितमुज्ज्वलम् ॥ २ ॥
अस्यैव जंबूद्वीपस्य प्राग्विदेहेषु सुंदरी । अस्ति श्रीमंगलकुलं विजयो मंगलावती ॥ ३ ॥
तस्यामस्ति समस्तानां रत्नानामाकरोऽब्धिवत् । वसुंधराशिरोरत्नं पूरत्नं रत्नसंचया ॥ ४ ॥
तस्यामासीन्महाराजो राजराज इव श्रिया । महाबलो नाम बलान्महाबल इवापरः ॥ ५ ॥
उत्साहमंत्रप्रभुताशक्तिभिः स व्यभासत । गंगासिंधुरोहितांशानदीभिर्हिमवानिव ॥ ६ ॥
स उपायैश्चतुर्भिश्च द्विषद्वर्गविजित्वरैः । चकासामास दशनैरिव निर्जरकुंजरः ॥ ७ ॥
देवमर्हंतमेवैकं साधुमेव गुरुं पुनः । धर्मं जिनोपज्ञमेवातिष्ठते स्म स धीनिधिः ॥ ८ ॥
दानशीलतपोभावभेदाद्धर्मे चतुर्विधे । सोऽरंस्त महतां यस्मात्पुण्यं पुण्यानुबंधकम् ॥ ९ ॥
स विवेकी भवोद्विग्नः सर्वत्रानित्यतां विदन् । नातुष्यच्छ्रावकधर्मे देशमात्रविरागिणि ॥ १० ॥
ततो विमलसूरीणां पादांते दांतपुंगवः । सोऽग्रहीत्सर्वविरतिं व्रतोच्चारणपूर्वकम् ॥ ११ ॥

---

१ गुणाः एव द्रवः वृक्षाः तेषां नंदनं नंदननामकं वनं । २ प्रातःकालसमानम् । ३ नगररत्नं । ४ कुबेरः । ५ सामदामभेददंडैः ।

एकदा पर्यटंतौ तौ पृथग्यूथेन यूथपौ । अन्योऽन्यदर्शनं बिंबप्रतिबिंबे इवेयतुः ॥ ९६ ॥
प्राग्जन्मरोषाडुद्गोषाडुद्दवाग्नी इवाचलौ । परस्परवधायोच्चौ सवेगावभ्यधावताम् ॥ ९७ ॥
चिरं तौ दन्तिनौ कृत्वा दंतादंति कराकरि । जन्मान्तरेऽपि युद्धार्थमिवोच्चौ युगपन्मृतौ ॥ ९८ ॥
अथास्य जंबूद्वीपस्य क्षेत्रे भरतनामनि । अयोध्यायां नंदिमित्रोऽभूद्भूरिमहिषीधनः ॥ ९९ ॥
तस्यातिवल्लभे यूथेऽभूतां तौ महिषौ वरौ[1] । यौवनं च प्रपेदाते पीनांगौ कलभाविव[2] ॥ १०० ॥
देवानंदाकुक्षिभवौ शत्रुंजयनृपात्मजौ । धनसेननंदिषेणौ महिषौ तावपश्यताम् ॥ १०१ ॥
अयोध्याराजपुत्राभ्यामयोध्येतां कुतूहलात् । उच्चौ तौ महिषौ दृप्तौ कृतान्तमहिषोपमौ ॥ १०२ ॥
चिरं युध्वा विपेदाते पुर्यां तौ तत्र मेंढकौ । नाम्ना कालमहाकालावुत्पेदाते दृढांगकौ ॥ १०३ ॥
दैवादेकत्र मिलितौ प्राग्वैरादभियुध्य तौ । विपद्य कुर्कुटावेतावुत्पन्नौ समविक्रमौ ॥ १०४ ॥
नैकोऽप्येकेन विजितः पुराप्येतौ समौजसौ[3] । इदानीमपि हि प्राग्वदेको नैकेन जेष्यते ॥ १०५ ॥
ऊचे मेघरथः पूर्ववैराविष्टौ न केवलम् । विद्याधराधिष्ठितौ च युध्येते कुर्कुटाविमौ ॥ १०६ ॥
राज्ञा घनरथेनाथोन्नमितैकभ्रुवेरितः[4] । कृतांजलिर्मेघरथः सविस्तरमदोऽवदत् ॥ १०७ ॥
अस्यैव जंबूद्वीपस्य क्षेत्रे भरतनामनि । वैताढ्यस्योत्तरश्रेण्यां स्वर्णनामाभिधे पुरे ॥ १०८ ॥
नाम्ना गरुडवेगोऽभूद्राजा गरुडविक्रमः । सधर्मचारिणी तस्य धृतिषेणेति चानघा ॥ १०९ ॥
स्वोत्संगस्थितचंद्रार्कस्वप्नदर्शनसूचितौ । सा चंद्रतिलकसूर्यतिलकौ सुषुवे सुतौ ॥ ११० ॥

---

१ श्रेष्ठौ महिषौ । २ गजडिंभाविव । ३ तुल्यबलौ । ४ वक्रीकृतैकभ्रुकुट्या प्रेरितः ।

दुर्जनैर्निंद्यमानः सन् हृदये मुमुदे चिरम् । साधुभिः पूज्यमानस्तु प्रत्युत त्रपते स्म सः ॥ १२ ॥
न मनागप्युद्विविजे क्लिश्यमानोऽपि पापिभिः । महद्भिः पूज्यमानोऽपि स नोत्सेकमशिश्रियत् ॥ १३ ॥
उद्यानादिषु रम्येषु नारज्यद्विहरन्नसौ । सिंहव्याघ्रादिघोरेषु नारण्येषु व्यरज्यत ॥ १४ ॥
हेमंते हिमगहनाः क्षपयामास स क्षपाः । बहिः प्रतिमया तिष्ठन्नालानमिव निश्चलः ॥ १५ ॥
ग्रीष्मे सूर्योष्मभीष्मेऽपि कृतोत्सर्गः स आतपे । नाम्लायद्विद्युते किंतु वह्निशौचमिवांशुकम् ॥ १६ ॥
प्रावृषि द्रुमारुहतले तस्थौ प्रतिमया च सः । मतंगज इव ध्याननिष्पंदनयनद्वयः[1] ॥ १७ ॥
तपांस्येकावलीरत्नावलीप्रभृतिकानि सः । सर्वाण्यनेकशोऽकार्षीदतृप्तोऽर्थार्जनं यथा ॥ १८ ॥
विंशतेः स्थानकानां च मध्यात्कतिपयैरपि । स्थानकैरर्जयामास तीर्थकृन्नामकर्म सः ॥ १९ ॥
चिरं व्रतं पालयित्वा प्रपन्नानशनः स तु । मृत्वा विमाने विजये महर्द्धिरभवत्सुरः ॥ २० ॥
इतश्च जंबूद्वीपस्य द्वीपस्य भरताभिधे । क्षेत्रेऽस्त्ययोध्येति पुरी पुरंदरपुरीसमा ॥ २१ ॥
प्रतिवेश्म मणिस्तंभसंक्रांतो रजनीकरः । तत्र स्थावरशृंगारादर्शलक्ष्मीं[2] प्रपद्यते ॥ २२ ॥
तत्र क्रीडामयूरीभिराकृष्याकृष्य [3]लंबितैः । हारैः कल्पद्रुमायंते गृहाणामंगणद्रुमाः ॥ २३ ॥
चंद्रकांताश्मनिःस्यंदैस्तत्रोच्चैश्चैत्यपंक्तयः[4] । उदारनिर्झरोद्गारगिरिलीलां वितन्वते ॥ २४ ॥
चैत्याग्रे रत्नवप्रोर्व्यस्तत्र संक्रांततारकाः । बिभ्रांति देवतामुक्तकुसुमांजलिविभ्रमाः[5] ॥ २५ ॥

---

१ ध्यानेन निष्पंदं स्थिरनयनयोः द्वयं यस्य । २ स्थावरशृंगारदर्पणशोभाम् । ३ आंदोलायितैः । ४ चंद्रकान्तमणिश्रावैः । ५ विभ्रमः शोभा।

इदानीमनुभवितुं मधुलक्ष्मीं नवागमाम् । यथोचितपरीवारा गच्छामः प्राणवल्लभ ॥ १२६ ॥
अत्रांतरे च पृथिवीसेना नृपमुपास्थित । दधाना कोटिमूल्यानि युक्तिपुष्पाणि पाणिना ॥ १२७ ॥
वीक्ष्यादाय च तान्याशु स्मेराक्षः स क्षितीश्वरः । यथोचितपरीवारो ययौ चिक्रीडु तत्र च ॥ १२८ ॥
पृथ्वीसेना त्वनुज्ञाता भ्रमंती तत्र चैकतः । ददर्श दन्तमथनं विशिष्टज्ञानिनं मुनिम् ॥ १२९ ॥
ववंदे मुदिता तं च मुनिं निर्भरभक्तिभाक् । भवनिर्वेदजननीं देशनां चाशृणोत्ततः ॥ १३० ॥
तत्कालमपि राजानमापृच्छ्य भवकातरा । प्रव्रज्यां साददे दन्तमथनस्य मुनेः पुरः ॥ १३१ ॥
प्रशंसन् पृथिवीसेनादेव्याश्चारित्रमद्भुतम् । स्वं धामाभयघोषोऽपि जगाम जगतीपतिः ॥ १३२ ॥
अन्येद्युरभयघोषः स्वमंदिरशिरोभुवि । रत्नसिंहासनासीनो विश्रांत इव भास्करः ॥ १३३ ॥
ददर्श तीर्थकृल्लिंगं छद्मस्थत्वविहारिणम् । द्वारदेशे प्रविशन्तमनंतं जिनपुंगवम् ॥ १३४ ॥

युग्मम् ॥

ससंभ्रमं समुत्थाय भोज्यमादाय चोचितम् । उपतस्थे भगवन्तं स प्रणामपुरःसरम् ॥ १३५ ॥
पारयामास भगवानपि तद्दत्तभिक्षया । देवैश्च विदधे तत्र वसुधारादिपंचकम् ॥ १३६ ॥
कृतपारणकोऽन्यत्र जगाम भगवानपि । छद्मस्था हि जिना नान्यमुनिवत्क्वचिदासते ॥ १३७ ॥
विहरन्नन्यदोत्पन्नकेवलोऽनन्ततीर्थकृत् । एत्य वज्रपुरे तत्र नगरे समवासरत् ॥ १३८ ॥
एत्य भक्त्याभयघोषः कृत्वा त्रिश्च प्रदक्षिणाम् । तं ववंदेऽशृणोद्धर्मदेशनां च भवच्छिदम् ॥ १३९ ॥
देशनान्ते भगवन्तं नत्वा राजैवमब्रवीत् । त्वमत्र भविनां पुण्यैः कल्पद्रुम इवागमः ॥ १४० ॥

तत्र खेलायमानाढ्यललनागृहदीर्घिकाः । निर्यदप्सरसो लक्ष्मीं हरंति क्षीरनीरधेः ॥ २६ ॥
तत्र चाकंठमग्नानां गौरांगीणां मुखैः क्षणम् । कनकांभोजमालिन्यो राजंते गृहदीर्घिकाः ॥ २७ ॥
उद्यानैर्विपुलैस्तत्र श्यामायंते बहिर्भुवः । अधित्यका भुव इव गिरेर्वारिधरैर्नवैः ॥ २८ ॥
वप्रो वलयितस्तत्र महादीर्घिकया भृशम् । द्युसद्दीर्घिकयेवाष्टापदशैलो विराजते ॥ २९ ॥
तत्रानुवेश्म दातारो दिवि कल्पद्रुमा इव । सर्वदा सुलभा एव दुर्लभाः पुनरर्थिनः ॥ ३० ॥
बभूव तस्यामिक्ष्वाकुकुलक्षीरोदचंद्रमाः । नृपतिः संवरो नाम सर्वारिश्रीस्वयंवरः ॥ ३१ ॥
तस्याज्ञासाधिताशेषभूतलस्यैकभूभुजः । द्रविणं कृपणस्येव न कोशान्निर्ययावसिः ॥ ३२ ॥
महाभुजेन तेनोग्रप्रतापप्रभविष्णुना । एकछत्रा मही चक्रे द्यौरिवैकनिशाकरा ॥ ३३ ॥
स दृढं वसुधां दध्रे दिग्यात्रायायिनोऽन्यथा । अस्य सेनाभरेणैषा विशीर्येत सहस्रशः ॥ ३४ ॥
दासीरिव समाकृष्य समाकृष्य दिगंततः । श्रियो निगडयामास स गुणैश्चपला अपि ॥ ३५ ॥
स राज्ञामाहृतैर्दण्डैर्नोत्सेकं जातु शिश्रिये । सरिदंभोभिरंभोधिः किं माद्यति मनागपि ॥ ३६ ॥
प्रसन्नचेताः सततमगृध्नुः सोऽप्रमद्वरः । ईश्वरे च दरिद्रे च समो मुनिरिवाभवत् ॥ ३७ ॥
प्रजाः शशास धर्माय न पुनः सोऽर्थकाम्यया । द्विषोऽशिषत्प्रजात्राणकृते द्वेषधिया न तु ॥ ३८ ॥
एकतः सर्वकृत्यानि धर्मकृत्यमथैकतः । युगपद्धारयामास स तुलायामिवात्मनि ॥ ३९ ॥

---

१ निर्गच्छत्यः अप्सरसः यस्मात् । २ पर्वतासन्नाः । ३ देववापिकया । ४ तन्नामागिरिः । ५ कोशः निधिः खड्गपिधानं च । ६ खड्गः । ७ गर्वं । ८ नदीजलैः । ९ अलुब्धः । १० प्रमादरहितः ।

पूर्णे च समये सूनुं सुषुवे वज्रमालिनी । वज्रिप्रभृतयो[1] जन्माभिषेकं तस्य च व्यधुः ॥ १५५ ॥
नाम्ना घनरथः सोऽद्याप्यवनीं पाति तीर्थकृत् । विजयवैजयंतौ तु जातौ विद्याधरौ युवाम् ॥ १५६ ॥
इति पूर्वभवान् श्रुत्वा प्रीतौ नत्वा च तं मुनिम् । प्राग्जन्मपितरं भक्त्या त्वां द्रष्टुं ताविहागतौ ॥१५७॥
प्रचक्रतुः संक्रमणमनयोस्ताम्रचूडयोः । तौ तु त्वद्दर्शनोपायभूतं[2] स्वामिन् कुतूहलात् ॥ १५८ ॥
इतश्च गत्वैतौ भोगवर्धनस्यांतिके गुरोः । प्रव्रज्य क्षीणकर्माणौ प्राप्स्यतः पदमव्ययम् ॥ १५९ ॥
श्रुत्वेति प्रकटीभूय पूर्ववत् सुतमानिनौ । विद्याधरौ घनरथं तौ नत्वा जग्मतुर्गृहम् ॥ १६० ॥
एतत्तु कुर्कुटौ श्रुत्वा तावचिंतयतामिति । अहो ईदृगसारोऽयं संसारः क्लेशकारणम् ॥ १६१ ॥
नृजन्मनि वणिग्भ्यामप्यावाभ्यां किमुपार्जितम् । दूरेऽस्त्वन्यद्येन भूयो नृजन्मापि हि दुर्लभम् ॥१६२॥
इदानीं ग्रासलुब्धाभ्यां लुब्धकाभ्यामिवान्वहम्[3] । तैस्तैरुपायैरावाभ्यां वंचिताः प्राणिनो ह हा ॥१६३॥
वञ्चयित्वा चिरं लोकं कूटमानतुलादिभिः । असंतुष्टौ मिथोऽप्यावां धिक् तदा कलहायितौ[4] ॥ १६४ ॥
आर्तध्यानं प्रपन्नौ च निहत्यावां मिथो मृतौ । प्रासवन्तौ तत्फलं च तिर्यग्योनिमनेकशः ॥ १६५ ॥
विमृश्यैवं नृपं नत्वा प्रोचतुस्तौ स्वभाषया । देवादिश किमद्यावां कुर्वहे हितमात्मनः ॥ १६६ ॥
विज्ञाय चावधिज्ञानाद्राजा घनरथोऽवदत् । अर्हन् देवो गुरुः साधुर्धर्मो जीवदयास्तु वाम् ॥ १६७ ॥
एवं घनरथेनोक्तं कुर्कुटौ प्रतिपद्य तौ । प्रपेदाते अनशनं विपेदाते[5] उभावपि ॥ १६८ ॥
मृत्वाभूतां भूतरत्नामहाटव्यां महर्द्धिकौ । ताम्रचूलस्वर्णचूलसंज्ञौ तौ भूतनायकौ ॥ १६९ ॥

---

१ इन्द्रादयः । २ तव दर्शने उपायभूतमिति संक्रमणविशेषणम् । ३ मृगवधाजीवी लुब्धकः । ४ कलिं कृतवन्तौ । ५ म्रियेते स्म ।

सिद्धार्था नाम शुद्धांत[1]मंडनं शुद्धवंशजा । सधर्मचारिणी तस्य बभूव गुणहारिणी ॥ ४० ॥
विलासमंदया गत्या भृशं मधुरया गिरा । चकासामास सा राजहंसीव मधुराकृतिः ॥ ४१ ॥
तस्यां च पुण्यलावण्य निम्नगायां[2] मनोरमम् । वक्त्रनेत्रं पाणिपादं पद्मखंडमिवाशुभत् ॥ ४२ ॥
इन्द्रनीलमयीवांतर्विलोचनकुशेशये[3] । मुक्तामयीव दंतेषु वैद्रुमीवौष्टपत्रयोः ॥ ४३ ॥
नखेषु शोणा[4]श्ममयीवांगे स्वर्णमयीव च। बभासे चारुसर्वांगमपि रत्नमयीव सा ॥ ४४ ॥ युग्मम् ॥
नगरीणां विनीतेव विद्यानामिव रोहिणी[5] । मंदाकिनी[6]व सरितां सा सतीनामभूद्धुरि ॥ ४५ ॥
नाकुप्यत् प्रणयेनापि सा पत्यौ यत्कुलस्त्रियः । पतिव्रतात्वे व्रतवदतिचारं[7]स्य भीरवः ॥ ४६ ॥
तस्यामात्मानुरूपायां प्रेयस्यां प्रेम भूपतेः । अजायताविसंवादि[8] नीलीरागसहोदरम् ॥ ४७ ॥
अबाधितौ मदस्थानैः सर्वैर्धर्माविबाधया । दंपती बुभुजाते तौ तत्तद्वैषयिकं सुखम् ॥ ४८ ॥
इतो विमानविजये त्रयस्त्रिंशतमर्णवान्[9] । जीवो महाबलस्यायुः सुखमग्नोऽत्यवाहयत् ॥ ४९ ॥
वैशाखसितचतुर्थ्यामभिचित्स्थे निशाकरे । ततश्च्युत्वा स सिद्धार्थादेवीकुक्षाववातरत् ॥ ५० ॥
ज्ञानत्रयधरे तत्रावतीर्णे त्रिजगत्यपि । उद्योतोऽभूत्सुखं चासीन्नारकप्राणिनामपि ॥ ५१ ॥
सुखसुप्ता तु सा देवी निशायाः प्रहरेऽतिमे । मुखे प्रविशतोऽद्राक्षीन्महास्वप्नांश्चतुर्दश ॥ ५२ ॥
श्वेतवर्णश्चतुर्दंतः करी कुंदद्युति[10]र्वृषः । व्यात्त[11]वक्त्रो हरिर्लक्ष्मीरभिषेकमनोरमा ॥ ५३ ॥

---

१ अंतःपुरभूषणं । २ निम्नगा नदी । ३ कुशेशयं शतपत्रकमलं । ४ पद्मरागमणिमयी । ५ विद्यादेवीनां अग्रिमा देवी । ६ गंगा । ७ अतिक्रमणस्य । ८ विसंवादः वंचनायुक्तभाषणं स नास्त्यस्मिन्।९सागरोपमान्।१०कुंदं माघ्यकुसुमं११व्यात्तं विवृतं वक्त्रं मुखं येन सः।

उदधिर्लवणोदोऽयं नक्रचक्रनिकेतनम्¹ । अयं च धातकीखंडद्वीपः कालोदवेष्टितः ॥ १८४ ॥
क्षुद्रमेरुगिरी चैतावर्हत्स्नात्रशिलांकितौ । ईष्वाकारौ गिरी चैतौ शाश्वतार्हत्पवित्रितौ ॥ १८५ ॥
अदोऽर्धपुष्करद्वीपं धातकीखंडसन्निभम् । मानुषोत्तरशैलोऽयं मर्त्यजन्म न ह्यतः परम् ॥ १८६ ॥
इत्थमाख्यानपूर्वं तौ दर्शयित्वा वसुंधराम् । आनिन्यतुर्मेघरथं नगरीं पुंडरीकिणीम् ॥ १८७ ॥
राजौकसि कुमारं तं मुक्त्वा च प्रणिपत्य च । विधाय रत्नवृष्टिं च जग्मतुर्निजमाश्रयम् ॥ १८८ ॥
अथैकदा घनरथोऽभ्येत्य लोकान्तिकामरैः । तीर्थं प्रवर्तयेत्युच्चैः स्वयं बुद्धोऽपि बोधितः ॥ १८९ ॥
राज्ये मेघरथं यौवराज्ये दृढरथं तथा । न्यस्य दत्त्वाब्दिकं² दानं दीक्षां घनरथोऽग्रहीत् ॥ १९० ॥
उत्पन्नकेवलज्ञानो भविकान् प्रतिबोधयन् । तीर्थंकरो घनरथो विजहार वसुंधराम् ॥ १९१ ॥
नरेन्द्रवृन्दमुकुटोद्घृष्टपादांबुजासनः । राजा मेघरथस्तूर्वीमशाद्दृढरथान्वितः ॥ १९२ ॥
अन्यदा देवरमणनाम्न्युद्याने रिरंसया⁴ । ययौ जनोपरोधेन⁵ राजा मेघरथः स्वयम् ॥ १९३ ॥
तत्राशोकतले सार्धं प्रियया प्रियमित्रया । स कारयितुमारेभे संगीतमविगीतकम्⁶ ॥ १९४ ॥
अत्रांतरे तस्य पुरः प्रादुरासन्महीपतेः । भूताः सहस्रशोऽपूर्वसंगीतकचिकीर्षया ॥ १९५ ॥
विशालैरुदरैः केऽपि लंबोदरसहोदराः । क्षामैस्तैरेव⁷ केचिच्च पातालानीव बिभ्रतः ॥ १९६ ॥
प्रलंबैः कर्कशैः पादैस्तालारूढा⁸ इवापरे । केचिदध्यायतैर्दोर्भिर्द्रुमाः साजगरा इव ॥ १९७ ॥

---

१ नक्राणां मकराणां चक्रस्य समूहस्य स्थानम् । २ धनुर्वेदाकारी । ३ सांवत्सरिकम् । ४ रंतुमिच्छया । ५ लोकस्याग्रहेण । ६ सुंदरम् । ७ कृशैः । ८ तालवृक्षारूढाः ।

पंचवर्णा च पुष्पस्रक् पूर्णश्च रजनीकरः । द्योतमानश्च मार्त्तंडः किंकिणीमालितो ध्वजः ॥ ५४ ॥
पूर्णकुंभश्च सौवर्णः पद्मछत्रं महासरः । उत्तरंगः सरिन्नाथो विमानं च मनोरमम् ॥ ५५ ॥
रुचिरो रत्नपुंजश्च निर्धूमश्च विभावसुः[1] । प्रबुद्धा स्वामिनी स्वप्नानेतान् राज्ञे शशंस च ॥ ५६ ॥
एभिः स्वप्नैस्तव देवि भावी त्रिजगदीश्वरः । नूनं सूनुरिति स्वप्नान्पार्थिवोऽपि व्यचारयत् ॥ ५७ ॥
इंद्रा अपि समेत्यैवं स्वप्नार्थं व्याचचक्षिरे । चतुर्थस्तीर्थनाथस्ते देवि सूनुर्भविष्यति ॥ ५८ ॥
तं देव्यपि निशाशेषं जाग्रत्यैवात्यवाहयत् । निद्रा दूरं ययौ तस्या हर्षेणैवापहस्तिता[2] ॥ ५९ ॥
सिद्धार्थास्वामिनी कुक्षौ गर्भः सोऽथ दिने दिने । पद्मकोशे बीजकोश इव गूढमवर्धत ॥ ६० ॥
सिद्धार्था स्वामिनी गर्भं सुखेन तमधारयत् । तादृशानामवतारः सुखाय जगतोऽपि हि ॥ ६१ ॥
ततो नवसु मासेषु दिनेष्वर्धाष्टमेषु[3] च । माघशुक्लद्वितीयायामभिचिस्थे क्षपाकरे ॥ ६२ ॥
सिद्धार्था स्वामिनी सूनुमनूनं[4] तेजसा रवेः । सुखेन सुषुवे स्वर्णवर्णं प्लवगलांछनम्[5] ॥ ६३ ॥
लोकत्रयेऽपि युगपदुद्योतोऽभूत्तदा क्षणम् । क्षणं च सौख्यमुत्पेदे नारकप्राणिनामपि ॥ ६४ ॥
षट्पंचाशद्दिक्कुमार्यः स्वस्वस्थानादुपेत्य ताः । देव्याः सूनोश्च विदधुः सूतिकर्म यथोचितम् ॥ ६५ ॥
विज्ञायासनकंपेन शक्रोऽर्हज्जन्म तत्तदा । आययौ पालकारूढः स्वामिवेश्मामरैः सह ॥ ६६ ॥
शक्रो विमानादुत्तीर्य प्राविशत्स्वामिवेश्म तत् । तत्र च स्वामिनं स्वामिजननीं च नमोऽकरोत् ॥ ६७ ॥
दत्वावस्वापिनीं[6] देव्याः पार्श्वे सौधर्मवासवः । निधायार्हत्प्रतिच्छंदं पंचरूपोऽभवत्स्वयम् ॥ ६८ ॥

---

१ अग्निः । २ अपसारिता । ३ अर्धः अष्टसंख्यापूरकः येषु । ४ पूर्ण । ५ प्लवगः कपिः लांछनं चिन्हं यस्य । ६ अवस्वापिनीं निद्रां ।

तस्यापारो यशोराशिः पयोराशिरिवापरः । जग्रसे विद्विषां कीर्तीर्गुर्वीरपि नदीरिव ॥ १२ ॥
प्रज्ञावसाधिताशेषद्विपस्तस्यैकभूपतेः । अस्त्राण्यव्यापृतान्यासन्निधानीकृतवित्तवत् ॥ १३ ॥
गलेषु युध्यमानानां पृष्ठेषु शरणार्थिनाम् । पादं पाणिं च स ददौ निर्विशेष इव द्वयोः ॥ १४ ॥
तेन कोशादपकृष्टैस्तरवारी रणांगणे । कोशीबभूव स्वयमप्यागताया जयश्रियः ॥ १५ ॥
बंधुर्न्यायः प्रिया कीर्तिः सुहृदो विमला गुणाः । पत्तिः प्रताप इत्यासीत्तस्यांगोत्थः परिच्छदः ॥ १६ ॥
समुन्नतिजुषस्तस्य जगदानंददायिनः । जीमूतस्येवाचिरांशुरचिरा नाम पत्न्यभूत् ॥ १७ ॥
यथा बभूव सा देवी स्त्रीजनेषु शिरोमणिः । तस्याः शीलमपि तथा गुणेषु विनयादिषु ॥ १८ ॥
सतीमतल्लिका साधाद्धृदयस्य विभूषणम् । बहिर्मुक्ताहार इव मध्येपतिमहर्निशम् ॥ १९ ॥
तन्निर्माणबहिर्भूतैः परमाणुकणैरिव । सृष्टाः सुरस्त्रियोऽप्याज्ञांस्तद्रूपालोकने सति ॥ २० ॥
विचरंती जगद्वंद्या पादचंक्रमणेन सा । पृथिवीं पावयामास प्रवाहेणेव जाह्नवी ॥ २१ ॥
ह्रीनमत्कन्धरा नित्यमपश्यद्भुवमेव सा । मत्पतेरपि पाद्येयमिति प्रीतिवशादिव ॥ २२ ॥
सर्वेऽपि स्त्रीगुणास्तस्यामवदाताश्चकाशिरे । यथा सौमनसोद्यानवीथ्यां कुसुमजातयः ॥ २३ ॥
विश्वसेनाचिरादेव्योः साम्राज्यसुखलीनयोः । कालः कियानपि ययाविन्द्रेन्द्राण्योरिवोन्मुदोः ॥ २४ ॥
इतश्च सर्वार्थसिद्धे विमानेऽनुत्तरोत्तमे । सुखमग्नो मेघरथजीवः स्वायुरपूरयत् ॥ २५ ॥

---

१ अप्रयुक्तानि । २ युध्यमानानां गलेषु पादं शरणार्थिनां पृष्ठेषु हस्तमिति क्रमात् । ३ असिः । ४ मेघस्य विद्युदिव । ५ सतीषु श्रेष्ठा ।

एकः शक्रः प्रभुं दध्रेऽन्यश्छत्रं द्वौ च चामरे । कुलिशं नर्तयन्नन्यो नृत्यन्नेव ययौ पुरः ॥ ६९ ॥
प्राप मेरावतिपांडुकंबलां स क्षणाच्छिलाम् । तत्सिंहासनमध्यास्त शक्रोऽङ्कारोपितप्रभुः ॥ ७० ॥
तत्राच्युतादयोऽपींद्रास्त्रिषष्टिः सपरिच्छदाः । समेत्यास्नपयन्नाथमंभस्कुंभैर्यथाविधि ॥ ७१ ॥
पंचमूर्त्तीभूयेशानोऽप्यंके स्वामिनमादधे । एकश्छत्रं चामरे द्वौ शूलमन्यः पुरःसरः ॥ ७२ ॥
विचक्रे स्फाटिकानुक्ष्णश्चतुरो दिक्चतुष्टये । तच्छृंगोत्थैर्जलैः शक्रोऽस्नपयत्परमेश्वरम् ॥ ७३ ॥
प्रभुं विलिप्य संपूज्य वस्त्रालंकरणादिना । उत्तार्यारात्रिकं चेत्थं शक्रः प्रांजलिरस्तवीत् ॥ ७४ ॥
स्वामिंश्चतुर्थतीर्थेश चतुर्थारनभोरवे । चतुर्थपुरुषार्थश्रीप्रकाशक जय प्रभो ॥ ७५ ॥
चिरान्नाथेन भवता सनाथमधुना जगत् । विवेकचौरैर्मोहाद्यैर्नैवोपद्रोष्यते क्वचित् ॥ ७६ ॥
पादपीठलुठन्मूर्ध्नि मयि पादरजस्तव । चिरं निविशतां पुण्यपरमाणुकणोपमम् ॥ ७७ ॥
मद्दृशौ त्वन्मुखासक्ते हर्षबाष्पजलोर्मिभिः । अप्रेक्ष्यप्रेक्षणोद्भूतं क्षणात्क्षालयतां मलम् ॥ ७८ ॥
मम त्वदर्शनोद्भूताश्चिरं रोमांचकंटकाः । नुदंतां चिरकालोत्थामसद्दर्शनवासनाम् ॥ ७९ ॥
त्वदास्यलासिनी नेत्रे त्वदुपास्तिकरौ करौ । त्वद्गुणश्रोतृणी श्रोत्रे भूयास्तां सर्वदा मम ॥ ८० ॥
कुंठापि यदि सोत्कंठा त्वद्गुणग्रहणं प्रति । ममैषा भारती तर्हि स्वस्त्येतस्यै किमन्यथा ॥ ८१ ॥
तव प्रेष्योऽस्मि दासोऽस्मि सेवकोऽस्म्यस्मि किंकरः । ओमिति प्रतिपद्यस्व नाथ नातः परं ब्रुवे ॥ ८२ ॥
स्तुत्वैवं पंचधाभूयेशानादादाय च प्रभुम् । प्राग्वच्छत्रादिभृच्छक्रः स्वामिवेश्म क्षणाद्ययौ ॥ ८३ ॥

---

१ वज्रं । २ तन्नाम्नींशिलाम् । ३ बलीवर्दान् ४ लासिनी नर्तके । ५ उपास्तिः उपासना ।

नभस्य[1]कृष्णसप्तम्यां भरणीस्थे निशाकरे । ततश्च्युत्वाचिरादेव्याः स कुक्षौ समवासरत् ॥ २६ ॥
सुखप्रसुप्तया देव्या निशाशेषे क्रमादमी । मुखे विशंतोऽदृश्यंत महास्वप्नाश्चतुर्दश ॥ २७ ॥
क्षरन्[2]मदजलामोदमाद्यन्मधुलिहां स्वनैः । मुखे प्रवेशनानुज्ञां याचमान इव द्विपः ॥ २८ ॥
त्रसत्व[3]माप्तः कैलासगंडशैल इवामलः । उद्यत्[4]पुंडरीकश्रीलुंटाकोऽङ्गत्विषा वृषः ॥ २९ ॥
ऊर्ध्व[5]नालमुकुलीभूतरक्तराजीवबंधुना । उत्क्षिप्त[6]वालहस्तेन शोभमानश्च केसरी ॥ ३० ॥
क्रियमाणाभिषेका च करिभ्यां पार्श्वयोर्द्वयोः । महालक्ष्मीर्दिव्यरूपा रूपान्तर[7]मिवात्मनः ॥ ३१ ॥
पंचवर्णैर्दिव्यपुष्पैर्दाम ग्रथितमायतम् । ऋजु[8]रोहितसंकाशमाकाशश्रीविभूषणम् ॥ ३२ ॥
अखंडमंडलोद्योती पार्वणो[9] रजनीपतिः । नैर्मल्यभूमिः ककुभा[10]मादर्श इव राजतः[11] ॥ ३३ ॥
सत्यामपि विभावर्यां दर्शयन् वासरश्रियम् । करांकुर[12]प्ररोहैकमहाकन्दो दिनेश्वरः ॥ ३४ ॥
पाताकाया लासिकाया[13] इव लास्यैकमंदिरम्[14] । दृशां विश्रामसदनमायतश्च महाध्वजः ॥ ३५ ॥
आमोद[15]मेदुरस्मेरसरोजपिहिताननः । विशालपूर्णकुंभश्च श्रीदेवा इव विष्टरः[16] ॥ ३६ ॥

---

१ भाद्रपदमासः । २ क्षरन्मदजलस्यामोदेन मत्तानां भ्रमराणाम् । ३ जंगमत्वमिति तात्पर्यम् । ४ अंगकांत्या विकसितकमलानां शोभां चोरयतीति तथा । ५ ऊर्ध्वनालं मुकुलीभूतं च यद्रक्तकमलं तत्सदृशेन । ६ ऊर्ध्वकृतपुच्छेन । ७ अचिरादेव्याः प्रतिकृतिमिव । ८ इन्द्रधनुःसदृशम् । ९ पूर्णिमायाः । १० दिशाम् । ११ रूप्यमयः । १२ कराः किरणा एवांकुराः तेषां प्ररोहेऽद्वितीयो महाकन्दसमानः । १३ नर्तक्याः । १४ नृत्यैकमंदिरम् । १५ आमोदेन व्याप्तानि यानि प्रफुल्लकमलानि तैः छन्नमुखः । १६ आसनम् ।

तत्रापस्वापिनीमर्हत्प्रतिबिंबं च सोऽहरत् । देव्याः पार्श्वे च निदधे तया स्थित्या जगत्पतिम् ॥ ८४ ॥
स्वामिहर्म्यात्ततः शक्रो मेरुतोऽन्ये तु वासवाः । यथायथागतेनैव स्वं स्वं स्थानं ययुः क्षणात् ॥८५॥
राज्ञापि विदधे प्रातः सूनुजन्मोत्सवो महान् । हर्षस्यैकातपत्रत्वजनकः सकले जने ॥ ८६ ॥
कुलं राज्यं पुरी चात्राभ्यनंदज्जनंगे हि तत् । अभिनंदन इत्यस्य पितरौ नाम चक्रतुः ॥ ८७ ॥
शक्रसंक्रमितसुधां स्वकीयांगुष्ठकात्पिबन् । पाल्यमानो धुधात्रीभिः क्रमेण ववृधे प्रभुः ॥ ८८ ॥
सुरासुरकुमारैश्च चित्रक्रीडनपाणिभिः । विचित्रक्रीडया क्रीडन् बाल्यं स्वाम्यत्यवाहयत् ॥ ८९ ॥
उद्यानपादप इव वसंतमिव यौवनम् । सर्वांगशोभाजनकं प्राप स्वाम्यभिनंदनः ॥ ९० ॥
सार्धधन्वत्रिशत्युच्चो जानुलंबिभुजो बभौ । सदोलाद्रुरिवाबद्धदोलायष्टिद्वयः श्रियः ॥ ९१ ॥
भालगंडस्थलेनार्धचंद्रशोभाभिभाविना । मुखेन च बभौ स्वामी पूर्णेन्दुश्रीविडंबिना ॥ ९२ ॥
स्वर्णशैलशिलोरस्कः पीनस्कंधः कृशोदरः । एणीजंघो जगन्नाथः कूर्मोन्नतपदोऽशुभत् ॥ ९३ ॥
विषयेषु निरीहोऽपि भोग्यं कर्म निजं विदन् । पितृभ्यां प्रार्थितो राजपुत्रीः प्रभुरुपायत ॥ ९४ ॥
क्रीडोद्यानसरोवापीशिलादिषु यदृच्छया । स रामाभिः समं रेमे ताराभिरिव चंद्रमाः ॥ ९५ ॥
इत्थं च जन्मतः स्वामी सौख्यमग्नोऽहमिंद्रवत् । पूर्वलक्षद्वादशकं गमयामास सार्धकम् ॥ ९६ ॥
अनुनीय न्यधाद्राज्येऽभिनंदनविभुं ततः । स्वयं तु संवरनृपः प्रव्रज्याराज्यमाददे ॥ ९७ ॥
शशास लीलया स्वामी ग्राममेकमिवावनिम् । त्रिजगत्त्राणशौंडस्य तस्योर्वीशासनं कियत् ॥ ९८ ॥

---

१ निद्रां । २ चित्राणि विचित्राणि क्रीडनानि क्रीडासाधनानि पाणिषु करेषु येषाम् । ३ एण्याः मृग्याः जंघा इव जंघा यस्य । ४ निर्गता ईहा इच्छा यस्य । ५ त्रयाणां जगतां त्राणे रक्षणे शौंडः चतुरः तस्य ।

अर्हतोऽर्हज्जनन्याश्च योऽशुभं चिंतयिष्यति । तस्यार्जकमंजरीवद्भेत्स्यते सप्तधा शिरः ॥ ९६ ॥

॥ युग्मम् ॥

रत्नस्वर्णमहावृष्टिं नगरे हस्तिनापुरे । तत्राकरोद्वैश्रवणः पाकशासनशासनात् ॥ ९७ ॥

तां चापस्वापनीं देव्याः पद्मिन्या इव भास्करः । हरिर्जहार तच्चार्हत्प्रतिबिंबं क्षणादपि ॥ ९८ ॥

अथार्हतः पंचधात्रीरादिश्याप्सरसो हरिः । ततो नंदीश्वरेऽगच्छन्मेरोरन्ये तु वासवाः ॥ ९९ ॥

शाश्वतार्हत्प्रतिमानां तत्र चाष्टाह्निकोत्सवम् । विधाय विधिवत्प्रीताः सर्वे स्वस्वपदं ययुः ॥ १०० ॥

अपनिद्रा[2] ततो देवी दिव्यालंकारवाससम् । दिव्यांगरागमुत्तेजःप्रसरं सूनुमैक्षत ॥ १०१ ॥

आनंदरभसोद्भ्रान्तो गत्वा देव्याः परिच्छदः । राज्ञेऽशंसत् सूनुजन्म दिक्कुमार्यादि कर्म च ॥ १०२ ॥

ततश्च मुदितो राजादात्तस्मै पारितोषिकम् । ऋद्ध्या चक्रे महत्या च सूनुजन्ममहोत्सवम् ॥ १०३ ॥

अशाम्यन्नशिवान्यस्मिन्गर्भस्थ एव भूपतिः । तस्य नामाकरोत्प्रीतः शांतिरित्यात्मजन्मनः ॥ १०४ ॥

शक्रसंक्रमितसुधं निजांगुष्ठं क्षुधा पिबन् । धात्रीभिर्लाल्यमानश्च क्रमेण ववृधे प्रभुः ॥ १०५ ॥

आजन्म ज्ञानवृद्धोऽपि बाललीलायितानि सः । विविधानि व्यधात्सर्वं शोभते समयोचितम् ॥ १०६ ॥

आशातनाभीतभीता द्युसदोऽरमयन् प्रभुम् । स्वामिना पांशुखेलाभिः स्वं महार्घं चिकीर्षवः ॥ १०७ ॥

निःशंकं तांश्च पादादि क्रीडायां न व्यहन् प्रभुः । दयावीरा महात्मानः प्रसृतेऽन्यरसेऽपि हि ॥१०८॥

एवं च नानाक्रीडाभिः क्रीडन् क्रीडागृहं श्रियः । चत्वारिंशद्धनुस्तुंगः प्रपेदे यौवनं प्रभुः ॥ १०९ ॥

---

१ अर्जको वृक्षविशेषः । २ अपगता निद्रा यस्याः सा ।

सार्धाः षट्त्रिंशतं पूर्वलक्षा अष्टांगसंयुताः । निनाय राज्यं कुर्वाणो जगन्नाथोऽभिनंदनः ॥ ९९ ॥
अथैयेष प्रभुर्दीक्षां ते च लोकांतिकामराः । सचिवा इव चावज्ञा एत्य व्यज्ञपयन्निति ॥ १०० ॥
अलं संसारवासेन नाथ तीर्थं प्रवर्तय । संसारसिंधुं येनान्येऽप्युत्तरंति दुरुत्तरम् ॥ १०१ ॥
लोकांतिकेषु देवेषु विज्ञपय्य गतेष्विति । प्रारेभे वार्षिकं दानं निर्निदानं जगत्पतिः ॥ १०२ ॥
स्वामिनो ददतो द्रव्यमानीयानीय जृं[2]भकाः । शक्रादिष्टकुबेरेण प्रेरिताः पर्यपूरयन् ॥ १०३ ॥
सांवत्सरिकदानांते चतुःषष्ट्यापि वासवैः । दीक्षाभिषेको विदधे विधिवज्जगदीशितुः ॥ १०४ ॥
कृतांगराग आमुक्तदिव्यांशुकविभूषणः । आरोहच्छिबिकां नाथोऽर्थसिद्धां स्वार्थसिद्धये ॥ १०५ ॥
आदावु[3]त्क्षिप्तया मर्त्यैरमर्त्यैस्तदनंतरम् । तया शिबिकया नाथः सहस्राम्रवणं ययौ ॥ १०६ ॥
तत्र चोत्तीर्य तत्याज भगवान्भूषणादिकम् । तदंसदेशे निदधे देव[4]दूष्यं च वासवः ॥ १०७ ॥
माघस्य शुक्लद्वादश्यामभी[5]चौ पश्चिमेऽहनि । कृतषष्ठः प्रभुः केशानुदभ्रे पंचमुष्टिना ॥ १०८ ॥
शक्रः प्रती[6]ष्य चिकुरानुत्तरीयांचलेन तान् । क्षणेन गत्वा क्षीरोदेऽब्धिपक्ष्योऽपि चागमत् ॥ १०९ ॥
सुरासुरनृणां शक्रस्तुमुलं निषिषेध च । प्रतिपेदे च चारित्रं स्वामी सामायिकं पठन् ॥ ११० ॥
मनःपर्ययसंज्ञं च तुर्यं ज्ञानमभूद्विभोः । नारकाणामपि सुखं तदा क्षणमजायत ॥ १११ ॥
त्यक्त्वांगमलवद्राज्यं सहस्रं पृथिवीभुजः । जगृहुः स्वामिना सार्धं प्रव्रज्यां मोहशातनीम् ॥ ११२ ॥
प्रभुं नत्वा ततः शक्रोऽन्येऽपींद्राः सपरि[7]च्छदाः । स्थानं निजनिजं जग्मुः प्रावृषि प्रो[8]षिता इव ॥ ११३ ॥

१ निर्हेतुकम् । २ असुरविशेषाः । ३ ऊढया । ४ देववस्त्रम् । ५ अभिजिन्नक्षत्रे । ६ गृहीत्वा । ७ सपरिवाराः । ८ प्रवासिनः ।

किमेतदिति संभ्रांता देवाः सारस्वतादयः । प्रायुंजतावधिं सम्यग्ज्ञात्वा चैवं मिथोऽवदन् ॥ २६८ ॥
अयि द्वीपे जंबूद्वीपे भरतार्धे च दक्षिणे । अर्हतः शांतिनाथस्य दीक्षाकालोऽयमागतः ॥ २६९ ॥
तत्प्रभावेण संजातचेतनानीव संप्रति । ज्ञापयंत्यासनान्यस्मान् दीक्षाकालोचितां क्रियाम् ॥ २७० ॥
ज्ञानत्रयेण जानाति भगवान् यद्यपि स्वयम् । तथापि कल्प इति तं स्मारयामो व्रतक्षणम् ॥ २७१ ॥
एवमन्योऽन्यमालप्य विमानान्यधिरुह्य च । शांतिनाथमुपाजग्मुर्देवाः सारस्वतादयः ॥ २७२ ॥
ते त्रिः प्रदक्षिणीकृत्य शांतिनाथं प्रणम्य च । तीर्थं प्रवर्तय स्वामिन्निति प्रांजलयोऽवदन् ॥ २७३ ॥
इत्युदित्वा नमस्कृत्य ययुर्लौकांतिका दिवम् । पूर्णार्थो जृंभिकैः स्वामी ददौ दानं च वार्षिकम् ॥२७४॥
आत्मानुरूपे तनये राज्यं चक्रायुधे न्यधात् । स्वयं संयमसाम्राज्यमुपादित्सुर्जगत्पतिः ॥ २७५ ॥
अथेन्द्रप्रमुखैर्देवैर्नृपैश्चक्रायुधादिभिः । चक्रेऽभिषेको दीक्षायां चक्रितायामिव प्रभोः ॥ २७६ ॥
सर्वार्था नाम शिबिकां रत्नसिंहासनान्विताम् । आरुरोह जगन्नाथस्तामूहुः प्रथमं नराः ॥ २७७ ॥
ततोऽप्युदूहुः पूर्वत्र सुरा दक्षिणतोऽसुराः । सौपर्णेयाश्चापरतो नागा उत्तरतश्च ताम् ॥ २७८ ॥
संध्याभ्रवत्पाटलाभिः पाटलीकृतदिग्मुखम् । शिरीषैः शोभितं ग्रीष्मश्रीसंगात्पुलकैरिव ॥ २७९ ॥
घर्मोदबिंदुभिरिव मल्लिकाभिः समाकुलम् । सुवर्णकेतकीकोशैः स्मरेष्वासैरिवांकितम् ॥ २८० ॥
प्रत्यग्रमुकुलोद्भ्रांतगुंजन्मधुकरालिभिः । धातकीभिर्ग्रीष्मलक्ष्म्या गायनीभिरिवांचितम् ॥ २८१ ॥
वनश्रीस्तनसंकाशपुष्पस्तबकसंपदा । खर्जूरैर्जर्जरीभूतां मधोर्हसदिव श्रियम् ॥ २८२ ॥

---

१ कामबाणैः ।

सदने विदधे स्वामी परमान्नेन पारणम् ॥ ११४ ॥
द्वितीयेऽहन्ययोध्यायामिंद्रदत्तस्य भूभुजः । खे दुंदुभिध्वनिश्चेलोत्क्षेपश्च विदधेऽमरैः ॥ ११५ ॥
वसुधारा पुष्पवृष्टिर्वृष्टिर्गंधोदकस्य च । जुघुषे हर्षविवशैः सुरासुरनरैस्तदा ॥ ११६ ॥
अहोदानमहोदानं सुदानमिति चोच्चकैः । रत्नपीठं न्यधादिंद्रदत्तोऽर्चितुमनाः सदा ॥ ११७ ॥
ततोऽन्यत्र ययौ स्वामी स्थाने च स्वामिपादयोः । अष्टादश समा यावद्विविधाभिग्रहोद्यतः ॥ ११८ ॥
छद्मस्थो व्यहरत्स्वामी सहमानः परीषहान् । कृतषष्ठः प्रियालस्याधोऽस्थात्प्रतिमया ततः ॥ ११९ ॥
विहरन्नन्यदा नाथः सहस्राम्रवणं ययौ । पौषशुक्लचतुर्दश्यामश्वीनीस्थे निशाकरे ॥ १२० ॥
द्वितीयशुक्लध्यानांते घातिकर्मक्षये सति । नारकाणामपि बाधानिषेधनमहौषधम् ॥ १२१ ॥
अमलं केवलज्ञानमाविरासीज्जगत्पतेः । उच्चैः समवसरणं देशे योजनमात्रके ॥ १२२ ॥
चतुःषष्टिरथैत्येंद्रा विधिवद्विदधुः प्रभोः । स्वामी समवसरणं प्राग्द्वारा प्राविशत्ततः ॥ १२३ ॥
देवैः संचार्यमाणेषु स्वर्णाब्जेषु क्रमौ दधत् । तत्र प्रदक्षिणीचक्रे चैत्यवृक्षं जिनेश्वरः ॥ १२४ ॥
स धनुर्विंशतीकं तु गव्यूतद्वयमुच्छ्रितम् । सिंहासनमलंचक्रे प्राङ्मुखः परमेश्वरः ॥ १२५ ॥
नमस्तीर्थायेति वदन् देवच्छंदस्य मध्यतः । संप्रविश्य यथाद्वारं यथास्थानमुपाविशत् ॥ १२६ ॥
ततश्चतुर्विधः संघः ससुरासुरमानुषः । रोमांचितवपुः स्वामिस्तवनं प्रास्तवीदिति ॥ १२७ ॥
भगवंतं नमस्कृत्य शक्रो विरचितांजलिः । श्लथत्वेनैव भवता मनःशल्यं वियोजितम् ॥ १२८ ॥
मनोवचःकायचेष्टाः कष्टाः संहृत्य सर्वथा ।

---

१ चेलस्य वस्त्रस्योत्क्षेपः । २ राजादनीवृक्षस्य । ३ सुवर्णकमलेषु । ४ पादौ । ५ क्रोशयुगलम् । ६ मनसः शल्यं ।

अनागतं प्रविष्टोऽस्मि त्वां जिहीर्षुः[1] कृशोदरि ॥ ४९९ ॥
निष्कारणवयस्यस्यामुष्य बुद्ध्या महात्मनः । अनागतं प्रविष्टोऽस्मि त्वां जिहीर्षुः कृशोदरि ॥ ५०० ॥
तदर्पयस्व नेपथ्यं येन त्वद्वेषधार्यसौ । मोहयंस्ते परिजनं त्वद्गत्त्ववेश्म गच्छति ॥ ५०१ ॥
समं त्वत्परिवारेण किंचिदस्मिन्नुपेयुषि । देशांतरमभिप्रेतं यास्यावः श्यामकुंतले ॥ ५०२ ॥
इत्युक्ता निजनेपथ्यं कामपालाय सार्पयत् । पृष्ठे च कामदेवस्य स वसन्तोऽप्यवास्थित ॥ ५०३ ॥
कामदेवं कामपालोऽप्यर्चित्वा कुसुमादिना । चकार केसरावेषं नीरंगीपिहिताननः ॥ ५०४ ॥
स्वयमुद्घाट्य तद्द्वारमवलंब्य प्रियंकराम् । याप्ययानं समारोहद्वाहीकैस्तदुदौह्यत ॥ ५०५ ॥
सोऽलक्षितः परिजनैः पंचनंदिगृहं ययौ । सुप्रयुक्तस्य दंभस्य ब्रह्माप्यंतं न गच्छति ॥ ५०६ ॥
स प्रियंकरया यानादवतार्य वधूगृहम् । अनाय्युपावेश्यत च स्वर्णवेत्रासने तया ॥ ५०७ ॥
स्मरंती केसरे तिष्ठ मंत्रं प्रियसमागमम् । इत्युदित्वा निर्जगाम सा प्रियाकृत् प्रियंकरा ॥ ५०८ ॥
सोऽथ तद्वाक्यसद्भावार्थमुपादायास्मरन्मुहुः । मंत्रं कामरतिसमागमं नाम महामतिः ॥ ५०९ ॥
केसरामातुलसुता जन्ययात्रानिमंत्रिता । सा शंखपुरवास्तव्या मदिरा तत्र चाययौ ॥ ५१० ॥
तस्योपविश्य पुरतः किंचिन्निःश्वस्य चाब्रवीत् । केसरे किं सखेदासि विध्यधीनासु सिद्धिषु ॥ ५११ ॥
समं वसन्तदेवेन संगमं ते वरांगने । अभीष्टमहमश्रौषमपि शंखपुरे स्थिता ॥ ५१२ ॥
अहमात्मानुभूतत्वात् प्रेयोविरहवेदनाम् । जानामि तेन वच्मि त्वां समाश्वासयितुं सखि ॥ ५१३ ॥
अनभीष्टं करोत्येष प्रतिकूलो यथा विधिः । दशावशेनानुकूलोऽभीष्टं कर्ता तथैव सः ॥ ५१४ ॥

१ हर्तुमिच्छुः ।

संयतानि[1] न चाक्षाणि नैवोच्छृंखलितानि[2] च । इति सम्यक् प्रतिपदा[3] त्वयेंद्रियजयः कृतः ॥ १२९ ॥
योगस्याष्टांगता नूनं प्रपंचः कथमन्यथा । आबाल्यावतोऽप्येष तव सात्म्य[4]मुपेयिवान् ॥ १३० ॥
विषयेषु विरागस्ते चिरं सहचरेष्वपि । योगे सात्म्यमदृष्टेऽपि स्वामिन्निदमलौकिकम् ॥ १३१ ॥
तथा परे न रज्यंत उपकारपरे परे । यथापकारिणि भवानहो सर्वमलौकिकम् ॥ १३२ ॥
हिंसका अप्युपकृता आश्रिता अप्युपेक्षिताः । इदं चित्रं चरित्रं ते के वा पर्यनुयुंजताम्[5] ॥ १३३ ॥
तथा समाधौ परमे त्वयात्मा विनिवेशितः । सुखी दुःख्यस्मि नास्मीति यथा न प्रतिपन्नवान् ॥१३४॥
ध्याता ध्यानं तथा ध्येयं त्रयमेकात्मतां गतम् । इति ते योगमाहात्म्यं कथं श्रद्धीयतां परैः ॥ १३५ ॥
स्तुत्वैवं विरते शक्रे स्वामी गंभीरया गिरा । आयोजन[6]विसर्पिण्या प्रारेभे देशनामिति ॥ १३६ ॥
संसारोऽयं विपत्खानिरस्मिन्निपततः सतः । पिता माता सुहृद्बंधुरन्योऽपि शरणं नहि ॥ १३७ ॥
इंद्रोपेंद्रादयोऽप्यत्र यन्मृत्योर्याति गोचरम् । अहो तदंतकातंके[7] कः शरण्यः शरीरिणाम् ॥ १३८ ॥
पितुर्मातुः स्वसुर्भ्रातुस्तनयानां च पश्यताम् । अत्राणो नियते जंतुः कर्मभिर्यमसद्मनि ॥ १३९ ॥
शोचंति स्वजनानंतं नीयमानान् स्वकर्मभिः । नेष्यमाणं तु शोचंति नात्मानं मूढबुद्धयः ॥ १४० ॥
संसारे दुःखदावाग्निज्वलज्ज्वालाकरालिते । वने मृगार्भकस्येव शरणं नास्ति देहिनः ॥ १४१ ॥
अष्टांगेनायुर्वेदेन जीवातुभि[8]रथागदैः । मृत्युंजयादिभिर्मंत्रैस्त्राणं नैवास्ति मृत्युतः ॥ १४२ ॥
खड्गपंजरमध्यस्थश्चतुरंगचमूवृतः । रंकवत्कृष्यते राजा हठेन यमकिंकरैः ॥ १४३ ॥

---

१ नियमितानि । २ उद्धतानि । ३ प्रतिपादनं कुर्वता । ४ साहचर्य । ५ अनुसरंतु । ६ योजनपर्यंतं गामिन्या । ७ तस्य अन्तकस्य आतंको भयम् तस्मिन् । ८ जीवनप्रदैः ।

श्राविकाणां त्रीणि लक्षाण्येकाशीतिसहस्र्यपि । आकेवलाद्विहरतः परिवारोऽभवत्प्रभोः ॥ १२५ ॥
गतेष्वब्दसहस्रेषु त्रयोविंशेषु केवलात् । चतुस्त्रिंशत्सहितेषु शतेष्वपि च सप्तसु ॥ १२६ ॥
निर्वाणसमयं ज्ञात्वा संमेताद्रिं ययौ प्रभुः । समं मुनिसहस्रेण शिश्रियेऽनशनं पुनः ॥ १२७ ॥
मासांते राधकृष्णादितिथौ भे कृत्तिकासु च । समं तैर्मुनिभिः स्वामी प्रपेदे पदमव्ययम् ॥ १२८ ॥
कौमारराज्यचक्रित्वव्रतेषु समभागकम् । आयुः पंचनवत्यब्दसहस्रमभवत् प्रभोः ॥ १२९ ॥
श्रीशांतिनाथनिर्वाणादर्धपल्योपमे गते । कुन्थुनाथजिनेन्द्रस्य निर्वाणं समजायत ॥ १३० ॥

निर्वाणपर्वमहिमा विदधे सुपर्वनाथैः सुपर्वसहितैः परमेश्वरस्य ।
दंष्ट्रारदादि परिपूजयितुं यथावन्निन्ये च तैर्निजनिजेषु निकेतनेषु ॥ १३१ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये षष्ठे पर्वणि
श्रीकुन्थुनाथचरित्रवर्णनो नाम
प्रथमः सर्गः ॥

यथा मृत्युप्रतीकारं पशवो नैव जानते । विपश्चितोऽपि हि तथा धिक् प्रतीकारमूढता ॥ १४४ ॥
येऽसिमात्रोपकरणाः कुर्वते क्ष्मामकंटकाम् । यमभ्रूभंगभीतास्तेऽप्यास्ये निदधतेंऽगुलीः ॥ १४५ ॥
मुनीनामप्यपापानामसिधारोपमैर्व्रतैः । न शक्यते कृतांतस्य प्रतिकर्तुं कदाचन ॥ १४६ ॥
अशरण्यमहो विश्वमराजकमनायकम् । यदेतदप्रतीकारं ग्रस्यते यमरक्षसा ॥ १४७ ॥
योऽपि धर्मप्रतीकारो न सोऽपि मरणं प्रति । शुभां गतिं ददानस्तु प्रतिकर्तेति कीर्त्यते ॥ १४८ ॥
प्रव्रज्यालक्षणोपायमादायाक्षय्यशर्मणे । चतुर्थपुरुषार्थाय यतितव्यमहो ततः ॥ १४९ ॥
तया देशनया प्रायो नरा नार्यः प्रवव्रजुः । गणेशा वज्रनाभाद्याः षोडशाग्रमभूच्छतम् ॥ १५० ॥
अनुयोगगणानुज्ञे तेषां दत्वा यथाविधि । अनुशिष्टिमयीं धर्मदेशनां विदधे प्रभुः ॥ १५१ ॥
जन्मव्ययध्रौव्यमयीं स्वाम्येभ्यस्त्रिपदीं जगौ । जग्रंथुर्द्वादशांगीं ते तत्त्रिपद्यनुसारतः ॥ १५२ ॥
देशनां पूर्वपौरुष्यां व्यसृजत्स्वाम्यथो बलिम् । राजानीतं क्षिप्त्वा गृह्णन् देवा नृपा जनाः क्रमात् ॥ १५३ ॥
अथोत्तस्थौ जगन्नाथो मध्यवप्रमुपेत्य च । ईशानदिक्स्थिते देवच्छंदके समुपाविशत् ॥ १५४ ॥
स्वाम्यंघ्रिपीठस्थो वज्रनाभो गणधरो व्यधात् । लोकैः केवलिवज्ज्ञातो देशनां श्रुतकेवली ॥ १५५ ॥
पूर्णद्वितीयपौरुष्यां व्यसृजत्सोऽपि देशनाम् । नत्वार्हतं ययुः स्वं स्वं स्थानं सर्वे सुरादयः ॥ १५६ ॥
तीर्थे यक्षेश्वरस्तत्र श्यामो द्विरदवाहनः । दोर्दंडौ दक्षिणौ बिभ्रन्मातुलिंगाक्षसूत्रिणौ ॥ १५७ ॥

---

१ विद्वांसोऽपि । २ खड्गधारासदृशैः । ३ यम एव रक्षः राक्षसः तेन । ४ मोक्षसुखाय । ५ गजवाहनः ।

व्याघ्रभीतैरिवार्चिष्मान्नैर्नाथ्यैर्विधुरैश्चिरात् । तीर्थनाथ त्वमस्माभिर्नाथः प्राप्तोऽसि संप्रति ॥ ३८ ॥

॥ त्रिभिर्विशेषकम् ॥

भवन्तं नाथमासाद्य सुरासुरनरा अमी । स्वस्वस्थानेभ्य आगच्छंत्यमांत इव हर्षतः ॥ ३९ ॥

भवतो नाथ नाथामि न खल्वन्यत् किमप्यहम् । नाथामि किंत्विदं मे त्वं नाथो भूया भवे भवे ॥४०॥

स्तुत्वेतीशं गृहीत्वा च गत्वा चेभपुरे पुरे । सौधर्मवासवो देवीस्वामिन्याः पार्श्वतोऽमुचत् ॥ ४१ ॥

राजा सुदर्शनोऽकार्षीत् सूनोर्जन्ममहोत्सवम् । अर इत्यभिधानं च देव्याः स्वप्नेऽरदर्शनात् ॥ ४२ ॥

सुरांगनाभिर्धात्रीभिः सवयोभूय चामरैः । क्रीड्यमानः क्रीडनकैः क्रमेण ववृधे प्रभुः ॥ ४३ ॥

समये राजकन्याश्च त्रिंशद्धन्वसमुन्नतः । अरनाथ उपायंस्त पितृशासनगौरवात् ॥ ४४ ॥

जन्मतोऽब्दसहस्राणां गतायामेकविंशतौ । पित्राज्ञया राज्यधुरां दधार परमेश्वरः ॥ ४५ ॥

मण्डलिकत्वेऽपि काले तावत्यपीयुषि । अस्त्रागारे समुत्पेदे चक्ररत्नं नभश्चरम् ॥ ४६ ॥

त्रयोदशभिरन्यैश्च युतो रत्नैररप्रभुः । चक्रानुगश्चतुर्वर्षशत्या भरतमन्वशात् ॥ ४७ ॥

तावत्येव गते काले स्वामिनश्चक्रिणः सतः । तीर्थं प्रवर्तयेत्यूचेऽभ्येत्य लोकांतिकामरैः ॥ ४८ ॥

दानं दत्वाब्दिकं राज्यं त्वरविंदसुताय सः । वैजयन्त्या शिबिकया सहस्राम्रवणं ययौ ॥ ४९ ॥

वाचंयमैरिव पिकैस्तूष्णीकैराश्रितद्रुमम् । कृष्णेक्षुवाटगोपीनां गीतिभिः स्खलिताध्वगम् ॥ ५० ॥

---

१ अग्निं दृष्ट्वा व्याघ्रः पलायत इति प्रसिद्धिः । २ नाथराहित्येन विधुरैः । ३ याचामि । ४ हस्तिनापुरे । ५ अरश्चक्रधारा । ६ मित्रीभूय । ७ गते सति । ८ मुनिभिरिव । ९ स्खलिताः पान्था यस्मिंस्तत् ।

वामौ च धारयन् बाहू नकुलांकुशधारिणौ । सदा सन्निहिता भर्तुरभूच्छासनदेवता ॥ १५८ ॥ युग्मम् ॥
कालिका च तथोत्पन्ना श्यामवर्णांबुजासना[1] । दक्षिणौ धारयंती तु भुजौ वरदपाशिनौ ॥ १५९ ॥
नागांकुशधरौ बाहू दधाना दक्षिणेतरौ । पारिपार्श्विक्य[2]भून्नित्यं भर्तुः शासनदेवता ॥ १६० ॥ युग्मम् ॥
ततः स्वाम्यप्यतिशयैश्चतुस्त्रिंशद्भिरन्वितः । व्यहरद्बोधयञ्जन्तून् ग्रामाकरपुरादिषु ॥ १६१ ॥
साधुत्रिलक्षी साध्वीषट्लक्षी त्रिंशतसहस्रयुक् । शतानि चाष्टनवतिरवधिज्ञानशालिनाम् ॥ १६२ ॥
सहस्रं पूर्विणां सार्धं मनःपर्ययिणां पुनः । एकादशसहस्राणि सपंचाशच्च षट्शती ॥ १६३ ॥
चतुर्दशसहस्राणि केवलज्ञानधारिणाम् । सहस्रं वैक्रियलब्धिमतामेकोनविंशतिः ॥ १६४ ॥
एकादशसहस्राणि वादलब्धिमतां पुनः । लक्षद्वयं श्रावकाणामष्टाशीतिसहस्रयुक् ॥ १६५ ॥
श्राविकाणां पंचलक्षी सप्तविंशतिसहस्रयुक् । अजायंत जगद्भर्तुरुर्व्यां विहरतः सतः ॥ १६६ ॥
अष्टांग्याष्टादशाब्दोने पूर्वलक्षे च केवलात् । ज्ञात्वा निर्वाणकालं स्वं संमेताद्रिं ययौ प्रभुः ॥ १६७ ॥
समं मुनिसहस्रेण प्रपन्नानशनो विभुः । मासं तस्थौ सुरैः सेंद्रैः सेव्यमानो नृपैरपि ॥ १६८ ॥
शैलेशी ध्यानमास्थाय भवोपग्राहिकर्मभित् । सिद्धानंतचतुष्कः सन् भगवानभिनंदनः ॥ १६९ ॥
वैशाखस्य सिताष्टम्यां[3] पुष्पस्थे रजनीकरे । समं मुनिसहस्रेणापुनरावृत्त्यगात्पदम्[4] ॥ १७० ॥ ॥ युग्मम् ॥
कौमारे पूर्वाणां लक्षाः सहार्धा द्वादशागमन् । लक्षाणि सार्धषट्त्रिंशद्राज्येऽष्टांगयुतानि च ॥ १७१ ॥
अष्टांगोनं पूर्वलक्षं प्रव्रज्यायामिति प्रभोः । पंचाशत्पूर्वलक्षाणि यावदायुरजायत ॥ १७२ ॥

---

१ अंबुजं कमलं आसनं यस्याः सा । २ पार्श्ववर्तिनी । ३ शुक्लाष्टम्यां । ४ न पुनः आवृत्तिः आगमनं यस्मात्तत् पदम् मोक्षाख्यम् ।

दैवानुकूल्यात्तदयं संगमः साधुरावयोः । चिराद्वधूवरत्वेन घटेतां तनयौ द्वयोः ॥ १२१ ॥
अनुरूपस्तुपालाज्जाज्ञत्वा हृष्टो निजां पुरीम् । स प्राहिणोद्वीरभद्रं महत्या जन्ययात्रया ॥ १२२ ॥
वीरभद्रं वरं प्रेक्ष्यामंदमानंदमासदम् । तत्पित्राख्याततद्रूपगुणसंवाददर्शनात् ॥ १२३ ॥
शुभे दिने पर्यणैपीत् कन्यां मे प्रियदर्शनाम् । वीरभद्रः कुलस्त्रैणभद्रमंगलपूर्वकम् ॥ १२४ ॥
कत्यप्यहानि स स्थित्वा सदारः स्वां पुरीं ययौ । तिष्ठंति न चिरं जातु मानिनः श्वशुरौकसि ॥ १२५ ॥
अश्रौषं चान्यदा वीरभद्रो यामे निशान्तिमे । मुक्त्वा स तनयां सुप्तामेकाकी क्वचिदप्यगात् ॥ १२६ ॥
आनैषीत्तत्प्रवृत्तिं च वामनः कोऽपि संप्रति । परं न व्यक्तमाख्याति स्फुटमाख्याहि तत्प्रभो ॥ १२७ ॥
इति सागरदत्तेन विज्ञप्तो भगवानपि । कुंभो गणधरश्रेष्ठो जगादैवं कृपानिधिः ॥ १२८ ॥
तस्यां निशायां जामाता स तवैवमचिंतयत् । कलानां पारदृश्वास्मि मंत्राः सिद्धाश्च भूरिशः ॥ १२९ ॥
ज्ञाताश्च दिव्यगुटिकाप्रयोगा विस्मयास्पदम् । विज्ञानेषु च सर्वेषु भृशं प्राप्तं च पाटवम् ॥ १३० ॥
सर्वं निरर्थकं तत्तु मनागप्यप्रकाशनात् । नियंत्रितोऽस्मि यदिह गुरुसान्निध्यलज्जया ॥ १३१ ॥
कूपमंडूकवत्तिष्ठन्नहो कापुरुषोऽस्म्यहम् । प्रकाशयामि तद्गत्वान्यदेशेषु निजान् गुणान् ॥ १३२ ॥
विचिंत्येति समुत्थाय भूयोऽप्येवमचिंतयत् । प्रिया कृतकसुप्ता[1] चेज्ज्ञतेर्विज्ञाय तद्भवेत् ॥ १३३ ॥
ततः क्रीडाकृते तां स समुदस्थापयत् प्रियाम् । साप्युवाच शिरोऽर्तिर्मे किं कदर्थयसि प्रिय ॥ १३४ ॥
शिरोऽर्तिः कस्य दोषेण तवेति तेनोदीरिता[2] । त्वद्दोषेणेति सावादीत् कीदृशेनेति सोऽवदत् ॥ १३५ ॥

१ कृतकेन कृत्रिमेण सुप्ता । २ तेनोक्ता ।

संभवस्वामिनिर्वाणादभिनंदननिर्वृतिः । समुद्रकोटिलक्षेषु व्यतीतेषु दशस्वभूत् ॥ १७३ ॥
शक्रश्चक्रेऽगसंस्कारं स्वामिनो व्रतिनामपि। दंष्ट्रारदास्थि जगृहुः पूजनाय सुरासुराः ॥ १७४ ॥
कुर्वंतोऽष्टाह्निकां शाश्वतार्हद्बिंबानां तेऽभ्येत्य नंदीश्वरांतः ।
स्वं स्वं लोकं सामरा जग्मुरिंद्रास्ते च स्वां स्वां राजधानीं नरेंद्राः ॥ १७५ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये तृतीये पर्वणि अभिनंदनस्वामिचरित्रवर्णनो नाम द्वितीयः सर्गः संपूर्णः ॥

आश्रयन् प्रश्रयं वीरभद्रोऽप्येवमवोचत । निष्क्रान्तोऽपि पितुर्गेहात् पितुर्गेहेऽहमागमम् ॥ १५० ॥
तवाज्ञावशवर्त्यस्मि शिष्योऽस्मि तव सर्वदा । औरसो हि पापपुत्रो धर्मपुत्रोऽस्म्यहं पुनः ॥ १५१ ॥
ततः स सुखमेवास्थाच्छंखस्य श्रेष्ठिनो गृहे । पौरान् विस्मापयन्नाविः कलाविज्ञानकौशलैः ॥ १५२ ॥
तत्र रत्नाकरनृपस्यासीद्विश्वैकसुंदरी । अनंगसुंदरी नाम पुरुषद्वेषिणी सुता ॥ १५३ ॥
तस्याः पार्श्वे प्रतिदिनं श्रेष्ठिशंखसुता ययौ । नामतो विनयवती विनयैकनिकेतनम् ॥ १५४ ॥
स्वसः क्व यासीति पृष्टा वीरभद्रेण सान्यदा । भ्रातृस्नेहाद्विनयवत्याचचक्षे यथातथम् ॥ १५५ ॥
सा सखी ते विनोदैः कैः कालं गमयति स्वसः । इत्युक्ता वीरभद्रेण वीणाद्यैरिति सावदत् ॥ १५६ ॥
तर्ह्यायास्याम्यहमपीत्युक्ता तेन तु सावदत् । न पुंसो बालकस्यापि प्रवेशस्तत्र ते कुतः ॥ १५७ ॥
विधास्यामि वधूरूपं सम्यगित्यभिधाय सः । तत्संमतो नट इव सद्यः स्त्रीवेषमाददे ॥ १५८ ॥
सोऽगात्तया समं तत्र सखि केयं त्वया सह । पृष्टेत्यनंगसुंदर्या मत्स्वसेति जगाद सा ॥ १५९ ॥
तदा चानंगसुंदर्या सुंदरैर्वर्णकैर्नवैः । फलके लिखितुं हंसी विरहार्तोपचक्रमे ॥ १६० ॥
तां वीरभद्र इत्यूचे त्वया विरहपीडिता । इयं लिखितुमारेभे परं दृष्ट्यादि नेदृशम् ॥ १६१ ॥
तर्हि त्वमालिखेत्युक्त्वा फलकं वर्णकैः सह । अनंगसुंदरी वीरभद्रायार्पयति स्म सा ॥ १६२ ॥
लिखित्वा तादृशीं हंसीं वीरभद्रोऽपि तत्क्षणम् । तस्यै समर्पयामास सा निरूप्यैवमब्रवीत् ॥ १६३ ॥
अहो आलेख्यनैपुण्यमंतर्भावप्रकाशकम् । तथाहि दृष्टिरेतस्या बाष्पांबुकणवर्षिणी ॥ १६४ ॥

१ आविः प्रकटं यथा स्यात्तथा । २ तया संगतः ।

# तृतीयः सर्गः ।

## सुमतिनाथ चरित्रं ।

ॐ ॥ नमः सुमतिनाथाय प्रकृष्टज्ञानहेतवे । अपारसंसारमहासागरोत्तारसेतवे ॥१॥
तत्प्रसादात्तच्चरित्रं यथावत्कीर्तयिष्यते । भव्यसंसारिकल्याणतरुकुल्यांबुसन्निभम् ॥ २ ॥
अत्रैव जंबूद्वीपेऽस्ति प्राग्विदेहविशेषकः । ऋद्ध्या पुष्कलया राजन् विजयः पुष्कलावती ॥ ३ ॥
विचित्रचैत्यहर्म्यादि ध्वजदंतुरितांबरम् । तत्र शंखपुरं नाम पुरमस्त्यतिसुंदरम् ॥ ४ ॥
विजयी तत्र विजयसेन इत्यभवन्नृपः । शोभामात्रमभूत्सेना यस्य दोर्वीर्यशालिनः ॥ ५ ॥
सकलांतःपुरस्त्रैणभूषणं तस्य चाभवत् । प्रिया सुदर्शना नामेंदुलेखेव सुदर्शना ॥ ६ ॥
रममाणस्तया सार्धं रत्येव कुसुमायुधः । निनाय कालं विजयसेनः प्रथितवैभवः ॥ ७ ॥
ययावन्येद्युरुद्यानमुद्यते क्वचिदुत्सवे । सर्वर्द्ध्या सपरिवारो जनः सर्वोऽपि नागरः ॥ ८ ॥
वपुष्मतीव राज्यश्रीश्छत्रचामरलांछिता । आरुह्य हस्तिनीं तत्रागाद्देव्यपि सुदर्शना ॥ ९ ॥
अपश्यत्तत्र चानर्घ्यभूषणश्रीभिरष्टभिः । दिक्कन्याभिरिवोपेतां वधूभिः कामपि स्त्रियम् ॥ १० ॥
उपास्यमानां तां ताभिरप्सरोभिः शचीमिव । दृष्ट्वा सुदर्शना देवी भृशं चित्ते विसिष्मिये ॥ ११ ॥
इयं का पारिपार्श्विक्यः काश्चैतस्या अमूरिति । ज्ञातुं सुदर्शना देवी सौविदल्लं समादिशत् ॥ १२ ॥

१ कुल्या जलप्रवाहः नीक इति प्रसिद्धा । २ ध्वजैर्दंतुरितं उन्नतमंबरम् यस्मिन् । ३ स्त्रैणस्य स्त्रीसमूहस्य भुषणम् । ४ पार्श्ववर्तिन्यो दास्यः । ५ अंतःपुरस्य किंकरम् ।

साप्युवाच म्लानमुखी त्वयेदं साधु जल्पितम् । यत्राकर्णितमात्रेऽपि यियासंतीव मेऽसवः ॥ २३८ ॥
ज्ञातं कठिनचित्तोऽसि य एवं वक्तुमीश्वरः । त्वादृशी यद्यहमपि तदा स्यां श्रोतुमीश्वरा ॥ २३९ ॥
वीरङ्गदस्तयेत्युक्तोऽब्रवीन्मा स्म कुपः प्रिये । सहैव नयनोपायश्चिंतितोऽयं मया तव ॥ २४० ॥
आपप्रच्छे सनिर्बन्धं वीरङ्गदस्ततो नृपम् । सहैवानंगसुन्दर्या स्वदेशगमनं प्रति ॥ २४१ ॥
कथंचिद्व्यसृजद्राजा वीरङ्गदं प्रियान्वितम् । पुत्रीजामातृविरहः प्रायः कस्य न दुःसहः ॥ २४२ ॥
पोतारूढौ ततस्तौ तु चेलतुर्जलवर्त्मना । गतिः साहसिकानां हि समा स्थलजलाध्वनोः ॥ २४३ ॥
पत्रीव कार्मुकोन्मुक्तो नीडोत्थित इवांडजः । प्रससार ततः पोतोऽनुकूलमरुदीरितः ॥ २४४ ॥
कियंतमपि चाध्वानं स पोतो यावदभ्यगात् । तावद्ववौ महावायुः कल्पांतानिलसन्निभः ॥ २४५ ॥
कल्पांत इव पाथोधिरुद्भ्रमन्नतिभीषणः । पोतमुल्लालयामास तृणपूलमिव द्विपः ॥ २४६ ॥
मुहुरुल्लाल्यमानः सन् भ्रामं भ्रामं त्रिवासरीम् । ग्रावोपरि परिभ्रष्टांडजांडमिव चास्फुटत् ॥ २४७ ॥
पोते स्फुटितमात्रेऽपि संप्रापानंगसुंदरी । एकं तदीयफलकं मृत्युर्नात्रुटितायुषः ॥ २४८ ॥
उल्लाल्यमाना कल्लोलैर्हंसीवानंगसुंदरी । प्रपेदे पंचरात्रेण तटमेकं वनाकुलम् ॥ २४९ ॥
स्वबांधववियोगेन विदेशगमनेन च । प्रियस्य विप्रयोगेण भंगेन वहनस्य च ॥ २५० ॥
धनक्षयेण कल्लोलास्फालनेन क्षुधापि च । तृषा च विधुरा वारिमानुषीव जलाद्बहिः ॥ २५१ ॥

---

१ यातुमिच्छन्ति । २ प्राणाः । ३ बाण इव । ४ पक्षी । ५ त्रयाणां वासराणां दिनानां समाहारस्ताम् । ६ दृषदुपरि ।

तत्पृष्टा सौविदल्लोऽपि समेत्यैवं व्यजिज्ञपत् । श्रेष्ठिनो नंदिषेणस्य प्रेयसीयं सुलक्षणा ॥ १३ ॥
सुलक्षणाया द्वौ पुत्रौ प्रत्येकं च तयोरिमाः । वध्वश्चतस्रो दासीवच्छ्वश्रूशुश्रूषणोद्यताः ॥ १४ ॥
श्रुत्वा सुदर्शना तच्च चेतस्येवमचिंतयत् । इयं हि श्रेष्ठिनी श्रेष्ठा या पुत्रमुखमीक्षते ॥ १५ ॥
यस्याश्चैताः स्नुषीभूय रूपवत्यः कुलस्त्रियः । नागकन्या इवाष्टापि सेवां कुर्वंति सर्वदा ॥ १६ ॥
न सूनुर्न स्नुषा यस्या धिग्धिग्मां तामपुण्यकाम् । पत्युर्हृदयभूताया अपि मे जीवितं वृथा ॥ १७ ॥
इतस्ततः क्षिपन्पाणिं समंताद्धूलिधूसरः । अंके क्रीडति धन्यानां पुत्रो वृक्षे प्लवंगवत् ॥ १८ ॥
असंजातफला वल्ल्य इवानाप इवाचलाः । निंदनीयाः शोचनीया योषितस्तनयं विना ॥ १९ ॥
किमन्यैरुत्सवैस्तासां न यासां स्युर्महोत्सवाः । सूनुजन्मनामचूलाविवाहकरणादयः ॥ २० ॥
विचिंत्यैवं म्लानमुखी पद्मिनीव हिमार्दिता । ययौ सुदर्शना देवी सखेदा सदनं निजम् ॥ २१ ॥
अपि प्रियसखीस्तत्र विसृज्य शयनीयके । निःसहा मुक्तनिःश्वासा व्याधितेव पपात सा ॥ २२ ॥
नाभुंक्त न बभाषे च प्रतिकर्म च नाकरोत् । तस्थौ किं तु मनःशून्या रत्नपांचालिकेव सा ॥ २३ ॥
तां तथावस्थितां ज्ञात्वा परिवारमुखान्नृपः । उपेत्यैवमभाषिष्ट प्रेमपेशलया गिरा ॥ २४ ॥
स्वाधीने मय्यपि सदा किमपूर्णं समीहितम् । देवि ताम्यसि येनैवं हंसीव पतिता मरौ ॥ २५ ॥
किमाधिर्बाधते कोऽपि व्याधिर्वा कोऽपि नूतनः । किं कोऽप्याज्ञां ललंघे किं दुःस्वप्नं दृष्टवत्यसि ॥ २६ ॥

---

१ पुत्रवधूभूय । २ कपिवत् । ३ प्रेम्णा पेशला कोमला तया । ४ सीदासि ।

आख्यास्याम्यपरं प्रातरित्युत्थाय जगाम सः । ताश्चैकपतिसंवादात्तिस्रोऽप्युच्चैरुदश्वसन् ॥ ३५४ ॥
स एष तव जामाता वामनः श्रेष्ठिसागर । रमणस्तिसृणां तासां क्रीडया विरहं ददौ ॥ ३५५ ॥
वामनोऽपि जगादैवं वंदित्वा गणभृद्वरम् । युष्मज्ज्ञानदृशा दृष्टमेवमेतद्धि नान्यथा ॥ ३५६ ॥
पूर्णद्वितीयपौरुष्यां कुंभो गणधराग्रणीः । व्यसृजद्देशनां तेषां तावत्कालैव देशना ॥ ३५७ ॥
नत्वा गणधरं कुंभं वामनेन सहैव सः । श्रेष्ठी सागरदत्तोऽगान्मुदितस्तं प्रतिश्रयम् ॥ ३५८ ॥
तास्तं वामनमायांतं तिस्रोऽपि प्रेक्ष्य तत्क्षणम् । उपाजग्मुः प्रियोदन्ताहरः कस्य न वल्लभः ॥ ३५९ ॥
ऊचे सागरदत्तोऽपि पतिर्वस्तिसृणामसौ । ताभिश्च कथमित्युक्तस्तदाख्यदखिलं च सः ॥ ३६० ॥
तिस्रोऽपि विस्मयं प्रापुर्गणिन्या सममेव ताः । प्रविश्यांतर्वामनोऽपि वामनत्वं मुमोच तत् ॥ ३६१ ॥
यादृशोऽनंगसुंदर्या दृष्टस्तादृगभूत्पुरः । पुनः श्यामत्वमुत्सृज्य गौरत्वं प्रत्यपद्यत ॥ ३६२ ॥
सर्वाभिः प्रत्यभिज्ञातः सोत्कंठाभिः समादृतः । गणिन्याभिदधे चैवं किमेतद्भवता कृतम् ॥ ३६३ ॥
सोऽप्यभ्यधाद्भगवति क्रीडया निरगां गृहात् । क्रीडयोपेक्षितस्तासामिहापि विरहो मया ॥ ३६४ ॥
सुव्रतागणिनी चैवमवोचत्तात्त्विकं वचः । दूरे देशांतरेऽरण्ये पर्वते वारिधावपि ॥ ३६५ ॥
अन्यत्र वा दुःखपदे यांति यत्रापि धर्मिणः । तत्रापि सौख्यमतुलं लभंते निजवेश्मवत् ॥ ३६६ ॥
भोगाः सत्पात्रदानानुभावादित्यार्हतं वचः । कस्मै दत्तमनेनेति पृच्छामोऽरजिनेश्वरम् ॥ ३६७ ॥
गणिनी सागरदत्तो वीरभद्रः प्रियान्वितः । अरस्वामिनमभ्येयुः प्रणेमुश्च यथाविधि ॥ ३६८ ॥
कर्मभोगफलं वीरभद्रः किं प्राग्भवे व्यधात् । इति सुव्रतया पृष्टो जगाद परमेश्वरः ॥ ३६९ ॥

वाह्यमाभ्यंतरं वापि दुर्निमित्तमथाभवत् । खेदस्य कारणं ब्रूहि रहस्यं न हि ते मयि ॥ २७ ॥
सुदर्शनापि निःश्वस्येत्यवदज्जदाक्षरम् । त्वत्प्रसादात्तवेवाज्ञां न मे कश्चिदखंडयत् ॥ २८ ॥
नाधिव्याधी न दुःस्वप्नदुर्निमित्ते न चापरम् । तादृक्किमपि बाधायै किं त्वेकं नाथ बाधते ॥ २९ ॥
वृथैव राज्यसंपत्तिर्वृथा वैषयिकं सुखम् । वृथैव चावयोः प्रीतिरदृष्टसुतवक्त्रयोः[1] ॥ ३० ॥
अद्दधाति श्रियः पश्यन् दरिद्रः श्रीमतां यथा । पुत्रान्पुत्रवतां पश्यंत्यहमप्येवमस्मि हा ॥ ३१ ॥
एकतः सर्वसौख्यानि पुत्राप्तिसुखमन्यतः । मनस्तुलातोलनतो[2] द्वितीयमतिरिच्यते[3] ॥ ३२ ॥
वरं मृगादयोऽरण्ये ये पुत्रपरिवारिताः । अस्माकं पुत्रहीनानां धिक् तेभ्योऽप्यदृष्टभाग्यताम् ॥ ३३ ॥
अथोचे पृथिवीशोऽपि देवि धीरा भवाचिरात् । मनोरथं पूरयिष्ये देवताराधनेन ते ॥ ३४ ॥
विक्रमेण न यत्साध्यं यद्बुद्धीनामगोचरः।यन्मंत्राणामविषयस्तंत्राणां यच्च दूरतः ॥ ३५ ॥
अन्येषामप्युपायानां यदगम्यं तदप्यलम् । साधयंति नृणामर्थं प्रसन्ना देवि देवताः ॥ ३६ ॥
तद्विद्धि सिद्धमेवार्थममुं मानिनि किं शुचा[4] । कुलदेव्याः पुरः स्थास्याम्येष प्रायेण सूनवे ॥ ३७ ॥
राज्ञीं राजैवमाश्वास्य जगाम निजधामतः । कृतशौचः शुचिवेषः कुलदेव्या निकेतनम् ॥ ३८ ॥
अर्चित्वा देवतां तत्र भूपतिर्दृढनिश्चयः । आपुत्रलाभं[5] त्यक्तान्नपानवृत्तिरुपाविशत् ॥ ३९ ॥
उपवासे ततः षष्ठे प्रत्यक्षीभूय देवता । प्रसन्ना व्याजहारैवं वरं वृणु महीपते ॥ ४० ॥
राजा विजयसेनोऽपि देवीं नत्वैवमब्रवीत् । समस्तपुरुषोत्कृष्टं पुत्रं देहि प्रसीद मे ॥ ४१ ॥
च्युत्वा दिवः सुरवरस्तव सूनुर्भविष्यति । एवं वरमदादेवी तत्क्षणाच्च तिरोदधे ॥ ४२ ॥

---

१ अदृष्ट सुतस्य वक्त्रं मुखं याभ्यां तयोः । २ मन एव तुला तया तोलनात् । ३ पुत्रसुखम् । ४ शोकेन । ५ पुत्रलाभपर्यंतं ।

विष्णुरुत्पाटयामास मगधान्तरवस्थिताम् । महाशिलां कोटिशिलां तां तुलाकोटिलीलया ॥ ४२ ॥
पंचषष्टिसहस्राणि वर्षाणामायुरात्मनः । सोऽतिवाह्य ययौ षष्ठं नरकं स्वोग्रकर्मभिः ॥ ४३ ॥
पुंडरीकस्य कौमारे सार्धं वर्षशतद्वयम् । तदेव मंडलित्वेऽपि दिग्जये षष्टिवत्सरी ॥ ४४ ॥
राज्ये संवत्सराणां च चतुःषष्टिसहस्र्यगात् । शतान्यपि च चत्वारि चत्वारिंशच्च वत्सराः ॥ ४५ ॥
पंचाशीतिवर्षसहस्रायुरेकोऽनुजं विना । आनन्दोऽथ निरानंदः कथंचित्कालमत्यगात् ॥ ४६ ॥

सोऽथ स्वस्य भ्रातुरुच्चैर्वियोगाद्वैराग्येणोपात्तदीक्षः सुमित्रात् ।
आत्मारामः केवलज्ञानमाप्य प्राप स्थानं शाश्वतं शर्मधाम ॥ ४७ ॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये
षष्ठे पर्वण्यानंदपुरुषपुंडरीकबलिचरितकीर्तनो
नाम तृतीयः सर्गः ।

आख्यद्राजापि तं देव्या देव्या दत्तं वरं वरम् । स्तनितेन बलाकेव मुदिता तेन देव्यपि ॥ ४३ ॥
देव्याः सुदर्शनायास्तु स्नातायाः अपरेऽहनि । दिवो महर्द्धिको देवश्च्युत्वा कुक्षाववातरत् ॥ ४४ ॥
तदा च ददृशे देव्या सुप्तया प्रविशन्मुखे । एकः केसरिकिशोरः कुंकुमारुणकेसरः ॥ ४५ ॥
उत्थाय शयनीयाच्च सत्वरं भीतभीतया । तया निजगदे राज्ञे स्वास्ये सिंहप्रवेशनम् ॥ ४६ ॥
राजाप्यूचे विक्रमी ते भावी सिंहस्वात्मजः। स्वप्नेनानेनैतदुक्तं देवीवरतरोः फलम् ॥ ४७ ॥
तेन स्वप्नविचारेण राज्ञी भृशममोदत । जजागार च तं रात्रिशेषं शुभकथापरा ॥ ४८ ॥
देव्याः कुक्षाववर्धिष्ट गर्भः सोऽपि दिने दिने । मध्येसरिद्वरावारि सौवर्णमिव वारिजम् ॥ ४९ ॥
अन्यदा दोहदान् देवी समुत्पन्नान्महीभुजे । शशंसेत्यभयं दित्साम्यहं निःशेषदेहिनाम् ॥ ५० ॥
अमारिमाघोषयितुमिच्छामि च पुरादिषु । अष्टाह्निकाश्चिकीर्षामि निखिलायतनेषु च ॥ ५१ ॥
राजाप्यूचे देवि देवीवरस्वप्नार्थयोरयम् । साधु सत्यापको गर्भप्रभावाद्दोहदस्तव ॥ ५२ ॥
महेच्छस्य हि गर्भस्य वशादिच्छेयमीदृशी । प्रतिमायाः प्रभावोऽधिष्ठातृदेवोचितः खलु ॥ ५३ ॥
इत्युक्त्वा भूपतिः सद्यो भीतानामभयं ददौ । घोषयामास चामारिं डिंडिमास्फालपूर्वकम् ॥ ५४ ॥
अष्टप्रकारपूजाभिर्दिव्यैः संगीतकैरपि । अष्टाह्निकोत्सवानुच्चैः प्रतिचैत्यं चकार च ॥ ५५ ॥
हृष्टा तैर्दोहदैः पूर्णैः पूर्णेंदुविशदानना । फलं वल्लीव समये पुत्ररत्नमसूत सा ॥ ५६ ॥
यथाकाममथार्थिभ्यश्चिंतामणिरिवार्थितम् । ददावाघोषणापूर्वं नरेश्वरशिरोमणिः ॥ ५७ ॥

१ मेघगर्जितेन । २ ऋतुस्नातायाः । ३ श्रेष्ठनदीजलमध्ये । ४ अहिंसां । ५ पूर्णेंदुवत् विशदमाननं यस्याः सा ।

कन्यार्थमागतोऽस्मीति मुनिनोक्तेऽब्रवीन्नृपः । मध्ये शतस्य कन्यानां त्वां येच्छति गृहाण ताम् ॥ ४० ॥
स कन्यान्तःपुरे गत्वा जगाद नृपकन्यकाः । धर्मपत्नी मम काचिद्भवतीभ्यो भवत्विति ॥ ४१ ॥
जटिलः पलितः क्षामो भिक्षाजीवी वदन्निदम् । न लज्जसे त्वमिति ताः कृतथूत्कारमूचिरे ॥ ४२ ॥
समीरण इव क्रुद्धो जमदग्निर्मुनिस्ततः । अधिज्येष्वासयष्ट्याभाः कन्याः कुब्जीचकार ताः ॥ ४३ ॥
अथांगणे रेणुपुंजे रममाणां नृपात्मजाम् । एकामालोकयामास रेणुकेत्यब्रवीच्च ताम् ॥ ४४ ॥
स तस्या इच्छसीत्युक्त्वा मातुलिंगमदर्शयत् । तया प्रसारितः पाणिः पाणिग्रहणसूचकः ॥ ४५ ॥
तां मुनिः परिजग्राह रोरो धनमिवोरसा । सार्धं गवादिभिस्तस्य ददौ च विधिवन्नृपः ॥ ४६ ॥
स श्यालीः स्नेहसंबंधादेकोनं कन्यकाशतम् । सज्जीचक्रे तपःशक्त्या धिङ्मूढानां तपोव्ययः ॥ ४७ ॥
नीत्वाश्रमपदं तां च सुमुग्धमधुराकृतिम् । हरिणीमिव लोलाक्षीं प्रेम्णा मुनिरवर्धयत् ॥ ४८ ॥
अंगुलीभिर्गणयतो दिनान्यस्य तपस्विनः । यौवनं चारुकंदर्पलीलावनमवाप सा ॥ ४९ ॥
साक्षीकृत्य ज्वलदग्निं जमदग्निर्मुनिस्ततः । यथावदुपयेमे तां भूतेश इव पार्वतीम् ॥ ५० ॥
ऋतुकाले स ऊचे तां चरुं ते साधयाम्यहम् । यथा ब्राह्मणमूर्धन्यो धन्य उत्पद्यते सुतः ॥ ५१ ॥
सोवाच हास्तिनपुरेऽनंतवीर्यस्य भूपतेः । पत्न्यस्ति मत्स्वसा तस्यै चरुः क्षात्रोऽपि साध्यताम् ॥ ५२ ॥
ब्राह्मं सधर्मचारिण्यै क्षात्रं तेजामयेऽपरम् । स चरुं साधयामास पुत्रीयमुपजीवितुम् ॥ ५३ ॥
साचिन्तयदहं तावदभूवमटवी मृगी । माभून्मादृक् सुतोऽपीति क्षात्रं चरुमभक्षयत् ॥ ५४ ॥

---

१ सज्जीकृतधनुर्यष्टिसदृश्यः । २ निर्धनः । ३ तस्याः स्वस्रे ।

राज्ञा महोत्सवश्चक्रे हृदयाब्धिनिशाकरः[1] । नागरैरपि तदनु स्वतोऽपि स्वजनैरिव ॥ ५८ ॥
राज्ञीस्वप्नानुसारेण कुमारस्य महीभुजा । विदधे पुरुषसिंह इति नाम मनोरमम् ॥ ५९ ॥
लाल्यमानः स धात्रीभिः कुमारो ववृधे क्रमात् । मातुः पितुः प्रजानां च सममेव मनोरथैः ॥ ६० ॥
कला जग्राह सकलाः स इंदुरिव पार्वणः । प्रापच्च यौवनं लीलावनं मकरलक्ष्मणः[2] ॥ ६१ ॥
आत्मानुरूपा रूपेण कलाभिश्च कुलेन च । उपायतायतभुजः सोऽष्टौ कन्याः क्षमाभुजाम् ॥ ६२ ॥
सुखं वैषयिकं ताभिरप्सरोभिरिवामरः । यथाक्षणं रममाणोऽन्वभूद्विजयसेनभूः ॥ ६३ ॥
ऋतुः साक्षादिव मधुः साक्षान्मधुसखो[3]ऽथवा । सोऽगात् क्रीडितुमन्येद्युः क्रीडोद्यानं यदृच्छया ॥ ६४ ॥
तत्रापश्यच्च समवसृतं विनयनंदनम् । नाम सूरिं जितानंगं रूपेण च शमेन च ॥ ६५ ॥
तं तस्य पश्यतः पीतामृतस्येव विलोचने । हृदयं चापराण्यंगान्यपि च व्यकसन्निव ॥ ६६ ॥
सोऽथेति दध्यौ वेश्यांते सतीत्वस्येव पालनम् । तस्कराणां सन्निधाने निधानस्येव गोपनम्[4] ॥ ६७ ॥
मार्जारयूनामभ्यर्णे पीयूषस्येव रक्षणम् । शाकिन्याः प्रातिवेश्मिक्ये[5] स्वस्येव क्षेमकारिता ॥ ६८ ॥
रूपस्याप्रतिरूपस्य[6] वयसो मध्यमस्य[7] च । उन्मादहेतावुदयेऽमुष्याहो व्रतधारणम् ॥ ६९ ॥

॥ त्रिभिर्विशेषकम् ॥

हिमं सह्येत हेमंते ग्रीष्मे च तपनातपः[8] । झंझावातो[9]ऽपि वर्षासु न पुनर्यौवने स्मरः ॥ ७० ॥

---

१ हृदयमेवाब्धिस्तस्मिन्निशाकरसदृशः । २ मकरः लक्ष्म चिह्नं यस्य सः कामः । ३ कामः । ४ रक्षणम् । ५ समीपगृहवासत्वे । ६ असदृशस्य । ७ यौवनस्य । ८ तपनस्य सूर्यस्यातपः । ९ सवृष्टिको वातः ।

अग्निवत्तेजसा तत्र सिंहवच्च पराक्रमात् । अग्निसिंह इतीक्ष्वाकुवंशोऽभूद्वसुधाधवः ॥ १३ ॥
तस्य स्थैर्याभियोगाभ्यां पक्षाभ्यामिव विष्टपे । निरंतरं यशोहंसो न व्यरंसीत् परिभ्रमन् ॥ १४ ॥
सलीलं समरारंभे दृष्ट्वा तैर्नमितं धनुः । तल्लेखामिव बिभ्राणा नेमुः प्रत्यर्थिपार्थिवाः ॥ १५ ॥
बलिष्ठे तस्य दोःस्तंभे दृढैरालानिता गुणैः । स्थिरतां कलयामास श्रीर्वारणवधूरिव ॥ १६ ॥
तस्याभूतामुभे पत्न्यौ जयंती शेषवत्यपि । अशेषभुवनस्त्रीणां जयंत्यौ रूपसंपदम् ॥ १७ ॥
वसुंधरवरो देवश्च्युत्वा पंचमकल्पतः । स जयन्त्या महादेव्या उदरे समवातरत् ॥ १८ ॥
चतुःस्वप्नाख्यातरामावतारो नंदनाभिधः । जगदानंदनस्तस्याः समये समभूत् सुतः ॥ १९ ॥
सौधर्माच्चलितश्च्युत्वा शेषवत्यामभूत्सुतः । सप्तस्वप्नाख्यातकृष्णावतारो दत्तसंज्ञया ॥ २० ॥
तौ षड्विंशतिधन्वोच्चौ श्वेतश्यामावुभावपि । अब्धी क्षीरोदकालोदाविव पुंस्त्वमुपेयतुः ॥ २१ ॥
नीलपीतांबरधरौ तालतार्क्ष्यध्वजौ च तौ । सवयस्काविव ज्येष्ठकनिष्ठावपि चेरतुः ॥ २२ ॥
भरतार्धप्रभुर्विष्णुः प्रतिविष्णुरथान्यदा । श्रुत्वैरावणसंकाशं गजेन्द्रं तावयाचत ॥ २३ ॥
तस्मिन्नंदनदत्ताभ्यामदत्ते कुंजरोत्तमे । सद्यश्चुकोप प्रह्लादः पंचास्य इव तर्जितः ॥ २४ ॥
सर्वाभिसारतो द्वावप्यभ्यषेणयतां मिथः । विष्णुश्च प्रतिविष्णुश्च क्रुद्धौ वनगजाविव ॥ २५ ॥
सैन्ये प्रह्लादसैन्येन नीते दैन्यदशां क्षणात् । युधि चेलतुरारूढस्यंदनौ सीरिशार्ङ्गिणौ ॥ २६ ॥
दध्मौ दत्तः पांचजन्यं द्विषद्बलहरं वरम् । शार्ङ्गं चास्फालयामास जयकुंजरर्बिंहिमम् ॥ २७ ॥

---

१ अभियोगो व्यवसाय उद्योग इति यावत् । २ जगति । ३ तेनाकृष्टम् । ४ शत्रुनृपाः । ५ सिंहः । ६ तिरस्कृतः ।

शातकुंभमयैः[1] कुंभैः प्रासादास्तत्र बिभ्रति । उपर्युदितमार्तंडोदयपर्वतविभ्रमम् ॥ २५ ॥
सर्वरत्नमयीं दृष्ट्वा तां पुरीमपराः पुरीः । अलकाद्या रत्नमयीः कथासु श्रद्दधे जनः ॥ २६ ॥
क्षणं दिवि क्षणं तस्यां क्षणं तस्यां क्षणं दिवि । तद्रामणीयकात्तृप्तास्तस्थुर्दिविषदोऽनिशम् ॥ २७ ॥
इक्ष्वाकुवंशक्षीराब्धिसुधाकुंभो भुवः पतिः । कुंभ इत्यभवल्लक्ष्मीनिवासो निधिकुंभवत् ॥ २८ ॥
आश्रयः स श्रियामेकः स्रवंतीनामिवार्णवः[2] । उत्पत्तिभूमिर्नीतीनां मणीनामिव रोहणः ॥ २९ ॥
विदांचकार शास्त्राणि शस्त्राणि च महामतिः । मेदिन्याः करमादत्त दुःस्थितेभ्यो[3] ददौ च सः ॥ ३० ॥
लोभो यशसि नो लक्ष्म्यां त्यागो[4] द्रव्ये न सीमनि । धर्मे च व्यसनं नाक्षादिष्वभूत्तस्य धीमतः ॥ ३१ ॥
आस्यप्रभापराभूतचंद्रा[5] नाम्ना प्रभावती । अभूत्तस्य महादेवी शची देवीव वज्रिणः ॥ ३२ ॥
पृथिव्या मंडनं सैका तस्याः शीलं च मंडनम् । प्रक्रियामात्रमभवत् केयूरकटकादि तु ॥ ३३ ॥
पावयन्ती सतीत्वेनामलेन सकलं जगत् । कल्याणहेतुः शुशुभे सा तीर्थमिव जंगमम् ॥ ३४ ॥
भोगान् सह तया देव्या बुभुजे कुंभभूपतिः । सदा हृदयहारिण्या दाक्षायण्येव चन्द्रमाः ॥ ३५ ॥
जीवो महाबलस्याथ पूर्णायुर्वैजयन्ततः । प्रच्युत्य फाल्गुनश्वेतचतुर्थ्यां भेऽश्वयुज्यपि[6] ॥ ३६ ॥
चतुर्दशमहास्वप्नसूचितार्हतवैभवः । प्रभावतीमहादेव्याः कुक्षाववततार सः ॥ ३७ ॥
अस्मिन् गर्भस्थिते देव्यास्तृतीये मासि दोहदः । माल्येषु शयितुं जज्ञे देवताभिश्च पूरितः ॥ ३८ ॥
पूर्णे काले मार्गशुक्लैकादश्यां भेऽश्वयुज्यथ । प्राग्जन्ममायाजनितस्त्रीकर्मत्वेन कन्यकाम् ॥ ३९ ॥

---

१ सुवर्णमयैः । २ नदीनाम् । ३ दरिद्रेभ्यः । ४ दानम् । ५ मुखकांत्या पराभूतश्चंद्रो यया सा । ६ अश्विन्यां भे नक्षत्रे ।

निर्ममत्वं शरीरादावप्यकिंचनता मता । तपस्तु द्विविधं बाह्यमांतरं चेति तद्यथा ॥ ८५ ॥
अनशनमौनोदर्य[1] वृत्तेः संक्षेपणं तथा । रसत्यागस्तनुक्लेशो[2] लीनतेति बहिस्तपः ॥ ८६ ॥
प्रायश्चित्तं वैयावृत्त्यं[3] स्वाध्यायो विनयोऽपि च । व्युत्सर्गो[4]ऽथ शुभध्यानं षोढेत्याभ्यंतरं तपः ॥ ८७ ॥
क्षांतिः शक्तावशक्तौ वा सहनं क्रोधनिग्रहात् । मददोषपरीहारो मार्दवं माननिर्जयात् ॥ ८८ ॥
मायाजयादार्जवं वाङ्मनःकायैरवक्रता । मुक्तिश्च तृष्णाविच्छेदो बाह्याभ्यंतरवस्तुषु ॥ ८९ ॥
इत्थं दशविधो धर्मः संसारोत्तारणक्षमः । जगत्यवाप्यते पुण्यैश्चिंतामणिरिवानघः ॥ ९० ॥
श्रुत्वा पुरुषसिंहोऽपि सप्रश्रयमदोऽवदत् । रोर[5]स्येव निधानं मे धर्मोऽयं साधु दर्शितः ॥ ९१ ॥
किं त्वसौ गृहवासस्थैरनुष्ठातुं न शक्यते । गृहवासो हि संसारतरोर्दौर्हदमुत्तमम् ॥ ९२ ॥
प्रव्रज्यां धर्मराजस्य राजधानीं प्रयच्छ मे । भगवन् भवदुर्ग्रामवासादुद्विग्नवानहम् ॥ ९३ ॥
अथोचे भगवानेवं सूरिर्विनयनंदनः । मनोरथोऽपि ते साधुः साधकः पुण्यसंपदाम् ॥ ९४ ॥
महासत्व महाबुद्धे विवेकिन् दृढनिश्चय । योग्योऽसि व्रतभारस्य दास्यामस्त्वत्समीहितम् ॥ ९५ ॥
आपृच्छस्व परं गत्वा पितरौ पुत्रवत्सलौ । यतस्तावेव जगति गुरू प्रथमतो नृणाम् ॥ ९६ ॥
ततः स गत्वा पितरौ प्रणम्य च कृतांजलिः । मां व्रतायानुमन्येथामेवमुच्चैर्व्यजिज्ञपत् ॥ ९७ ॥
इत्यूचतुश्च तौ युक्ता प्रव्रज्या वत्स किं त्विह । उद्वोढव्यः[6] पंचमहाव्रतभारोऽतिदुर्वहः ॥ ९८ ॥
निर्ममत्वं स्वदेहेऽपि विरती[7] रात्रिभोजनात् । द्विचत्वारिंशता दोषैर्मुक्तः पिंडश्च भोजने ॥ ९९ ॥

---

१ तदाख्यं तपः यत्राहारस्य क्रमेणाल्पत्वं क्रियते । २ देहकष्टरूपं । ३ सेवा । ४ कायोत्सर्गः । ५ निर्धनस्य।६पालयः।७विरमणम् ।

चोक्षा स्मेरमुखीत्यूचे राजन्नन्तःपुरं निजम् । कूपभेकः कूपमिव किमिदं बहु मन्यसे ॥ १३९ ॥
यदस्ति मिथिलापुर्यां कुंभस्य पृथिवीपतेः । मल्लीति कन्यकारत्नं चूडारत्नं मृगीदृशाम् ॥ १४० ॥
अंगुष्ठमात्रकस्यापि श्रीस्तदीयस्य कापि या । न सा त्रिदशकन्यासु नागकन्यासु चेक्ष्यते ॥ १४१ ॥
संस्थानलक्ष्मीरन्यैव रूपमप्यन्यदेव हि । लावण्यसंपदन्यैव तस्याः किं चान्यदुच्यते ॥ १४२ ॥
जितशत्रुस्तदुक्त्यैवं पूर्वस्नेहेन च क्षणात् । तत्प्रार्थनकृते प्रैषीद्दूतं कुंभनृपांतिके ॥ १४३ ॥
प्राग्जन्मसुहृदां तेषां षण्णां मल्लिर्महीभुजाम् । पश्यन्त्यवधिना बोधमशोकवनिकांतरे ॥ १४४ ॥
मध्येसौधापवरकं रत्नपीठे मनोहरे । आत्मनः प्रतिमां हैमीं पद्मरागकृताधराम् ॥ १४५ ॥
नीलकेशीमिन्द्रनीलस्फटिकोपललोचनाम् । प्रवालमयहस्तांघ्रिमाताल्शुषिरोदराम् ॥ १४६ ॥
सच्छिद्रां तालुनि तत्र स्वर्णाम्भोजपिधानिकाम् । नितान्तरम्यावयवां कारयित्वा न्यवेशयत् ॥ १४७ ॥
॥ चतुर्भिः कलापकम् ॥
प्रतिमापवरकस्य पुरो भित्तावकारयत् । सजालककपाटानि षड्द्वाराणि च कुंभसूः ॥ १४८ ॥
द्वाराणां च पुरस्तेषां ह्रस्वापवरकांश्च षट् । प्रतिमापृष्ठभित्तौ च सैकं द्वारमकारयत् ॥ १४९ ॥
ततः सर्वाहारपिंडं प्रतिमायास्तु तालुनि । क्षिप्त्वा स्वर्णाम्बुजेनाथ पिधाय बुभुजेऽन्वहम् ॥ १५० ॥
इतश्च तेषां युगपत् षण्णामप्यवनीभुजाम् । आययुर्दूतपुरुषा मिथिलानाथसन्निधौ ॥ १५१ ॥

---

१ देहशोभा । २ अपवरको गर्भगृहम् । ३ तालुपर्यंतं शुषिरं रंध्रसहितमुदरं यस्यास्ताम् । ४ जालकपाटसहितानि ।

मूत्रैकस्रोतसः श्लेष्मदृतेर्दुर्गन्धधारिणः । किं पुरस्रोतस इव सारमस्ति मनागपि ॥ १९३ ॥
॥ युग्मम् ॥

अत्र संस्कारहेतुश्च कर्पूरादि सुगन्ध्यपि । मलसात् स्याल्लवणसात् सुधावृष्टिरिवोषरे ॥ १९४ ॥
बहिरन्तश्च बीभत्से कथंकारमिहांगके । अंगानुरागं कुर्वन्तु मनागपि विवेकिनः ॥ १९५ ॥
इतो भवे तृतीयेऽस्मिन् यद्भवद्भिर्मया सह । तपः प्रव्रजितैश्चक्रे मुग्धाः स्मरत तन्न किम् ॥ १९६ ॥
मल्लीवचो विमृशतां तत्तेषां पृथिवीभुजाम् । जातिस्मरणमुत्पेदे किं स्यान्नार्हदनुग्रहात् ॥ १९७ ॥
ततो जालकपाटानि श्रीमल्लिरुदघाटयत् । ते चाभ्युपेत्य षडपि प्रबुद्धा एवमब्रुवन् ॥ १९८ ॥
स्मरामो यद्भवे पूर्वे सप्तापि सुहृदो वयम् । संभूय कृतसंकेतास्तपस्तीव्रमकृष्महि ॥ १९९ ॥
बोधितास्मस्त्वया साधु नरकात्साधु रक्षिताः । आदिशातः परं कृत्यं गुरुस्त्वमसि नः प्रभो ॥ २०० ॥
प्रव्रज्या समये ग्राह्येत्युदीर्य विससर्ज तान् । षडपि क्ष्मापतीन् मल्लिर्जग्मुः स्वं स्वं पुरं च ते ॥ २०१ ॥
तीर्थं प्रवर्तयेत्युक्ते तदा लौकांतिकामरैः । मल्ल्यदाद्वार्षिकं दानं पूर्णार्थं जृंभकामरैः ॥ २०२ ॥
जन्मतोऽब्दशते पूर्णे पंचविंशधनून्नतिः । कुंभराजसुरेन्द्राद्यैः कृतनिष्क्रमणोत्सवा ॥ २०३ ॥
जरतीनामशिबिकारत्नमारुह्य मल्ल्यथ । सहस्राम्रवणं नाम जगामोपवनोत्तमम् ॥ २०४ ॥
कृष्णेक्षुवाटैरभ्युद्यत्कृष्णपक्षमिव क्वचित् । उज्ज्वलपक्षमिव च क्वचित्पुंड्रेक्षुवाटकैः ॥ २०५ ॥
नागरंगीपक्वफलैः शोणाश्मभिरिवांचितम् । राजमानं मरुबकैर्नीलबद्धमिवाजितः ॥ २०६ ॥

---

१ दृतिः पात्रविशेषः । २ विचारयताम् । ३ श्वेतेक्षुवाटैः । ४ शोणमणिभिः ।

कुष्ठादिव्याधिजा बाधा गुप्तिवासोऽगकर्तनम्[1] । त्वचनं[2] ज्वालनं शीर्षच्छेदादि च नृणामपि ॥ ११३ ॥
विप्रयोगः[3] प्रियजनैः शत्रुतश्च पराभवः । च्यवनज्ञानजं दुःखं दुःसहं नाकिनामपि ॥ ११४ ॥
तेनैवं पितरौ प्रोक्तौ साधु साध्विति वादिनौ । मुदितावनुमेनाते व्रतादानाय तं ततः ॥ ११५ ॥
सप्रमोदं ततः पित्रा कृतनिःक्रमणोत्सवः । दीक्षार्थी तं मुनिं सोऽगात्फलार्थीव वनस्पतिम्[4] ॥ ११६ ॥
आददे मुनिपादांते सामायिकमुदीरयन् । प्रव्रज्यां पुरुषसिंहो भवाब्धितरणे तरीम्[5] ॥ ११७ ॥
प्रमादपरिहारेण रक्षन्नुः सर्वदेहिनाम् । स दृढं पालयामास प्रव्रज्यां राज्यवन्नृपः ॥ ११८ ॥
विंशतिस्थानकानां च स्थानैः कतिपयैरपि । अर्जयामास विशदं तीर्थकृन्नाम कर्म सः ॥ ११९ ॥
चिरं विहृत्य कालं च कृत्वानशनकर्मणा । विमाने वैजयंते स महर्द्धिरमरोऽभवत् ॥ १२० ॥
इतश्च जंबूद्वीपेऽस्मिन् क्षेत्रे भरतनामनि । विनीतेत्यस्ति नगरी गरीयः[6] संपदास्पदम् ॥ १२१ ॥
राजते राजतैस्तत्र[7] प्राकारः कपिशीर्षकैः । सर्वद्वीपान्तरानीतेंदुबिंबरचितैरिव[8] ॥ १२२ ॥
नानारत्ननिधानं सा रूप्यवप्रेण राजन्निः । रक्षार्थं कुंडलीभूतशेषेणेव निषेविता ॥ १२३ ॥
सौधेषु रत्नवलभीसंक्रांतस्तत्र चंद्रमाः । लिह्यते गृहमार्जारैर्दधिपिंडधिया मुहुः ॥ १२४ ॥
अर्हन् देवो गुरुः साधुरिति क्रीडाशुका अपि । पठंति तस्यां शृण्वंतस्तदेव हि गृहे गृहे ॥ १२५ ॥
प्रतिवासगृहं तत्र दह्यमानागरूद्भवाः । धूमलेखा वितन्वंति तमालवनमंबरे ॥ १२६ ॥

---

१ कारागृहवासः । २ त्वचाच्छेदनम् । ३ वियोगः । ४ वृक्षम् । ५ नावं । ६ महतीनां समृद्धीनां स्थानम् । ७ रूप्यमयैः । ८ सर्वद्वीपांतरेभ्य आनीतानि चंद्रबिंबानि तैः रचितैः ।

मल्लिपादौ नमस्कृत्य देवराजादयः सुराः । कुंभराजादयो भूपाः स्थानं निजनिजं ययुः ॥ २५० ॥
तत्तीर्थजन्मा कुबेरयक्ष इन्द्रायुधद्युतिः[1] । चतुर्मुखो गजरथश्चतुर्भिर्दक्षिणैर्भुजैः ॥ २५१ ॥
वरदेन पर्शुशूलभृद्भ्यामभयदेन च । वामैर्बीजपूरशक्तिमुद्गरकाक्षसूत्रिभिः ॥ २५२ ॥
तत्तीर्थभूश्च वैरोट्या कृष्णांगी कमलासना । भांती दोर्भ्यां दक्षिणाभ्यां वरदेनाक्षसूत्रिणा ॥ २५३ ॥
मातुलिंगशक्तिभृद्भ्यां वामदोर्भ्यां च शोभिता[2] । श्रीमल्लेरर्हतोऽभूतामुभे शासनदेवते ॥ २५४ ॥
ततः स्थानादथान्यत्र ग्रामाकरपुरादिषु । भव्यलोकावबोधाय विजहार महीं प्रभुः ॥ २५५ ॥
चत्वारिंशत्सहस्राणि श्रमणानां महात्मनाम् । सहस्राः पंचपंचाशदार्यिकाणां तपोजुषाम् ॥ २५६ ॥
चतुर्दशपूर्वभृतां साष्टषष्टिश्च षट्शती । अवधिज्ञानयुक्तानां द्वाविंशतिशती पुनः ॥ २५७ ॥
मनोविदां सप्तदशशती पंचाशदन्विता । केवलज्ञानधराणां द्वाविंशतिशती पुनः ॥ २५८ ॥
जातवैक्रियलब्धीनां त्रिसहस्री शतोनिता[3] । उत्पन्नवादलब्धीनां चतुर्दश शतानि च ॥ २५९ ॥
श्रावकाणां लक्षमेकं सत्र्यशीतिसहस्रकम् । श्राविकाणां त्रिलक्षी च ससप्ततिसहस्रिका ॥ २६० ॥
संवत्सरशतन्यूनां पंचपंचाशतं प्रभोः । समासहस्रान् विहर्तुः परिवारो ह्यसावभूत् ॥ २६१ ॥
संमेताद्रिं मल्लिरगाच्चक्रे चानशनं समम् । साध्वीनामथ साधूनां पंचशत्या पृथक् पृथक् ॥ २६२ ॥
मासांते फाल्गुनशुद्धदशम्यां याम्यभे विभुः । निर्वाणमासदत् सार्धं साध्वीभिः साधुभिश्च तैः ॥२६३॥

---

१ इंद्रधनुरिव कांतिर्यस्य सः । २ शोभमाना । ३ शतेन न्यूना ।

तत्रोद्यानेष्वरघट्टशीकरासारमालिषु । शीतभीत्येव नो जातु प्रविशंत्यर्करश्मयः ॥ १२७ ॥
इक्ष्वाकुवंशतिलकस्तस्यामासीन्महीपतिः । मेघो नाम महामेघ इव विश्वाभिनंदकः ॥ १२८ ॥
सदैवोदयमानापि कृतार्थीकर्तुमर्थिनः । सिरावारीव ववृधे तस्य श्रीरतिशायिनी ॥ १२९ ॥
देवतामिव तं नेमुः पंचांगस्पृष्टभूतलाः । वस्त्रालंकाररत्नाद्यैरानर्चुश्च महीभुजः ॥ १३० ॥
प्रतापः प्रसरंस्तस्य माध्यंदिन इवार्यमा । द्विषां संकोचयामास देहच्छायामिव श्रियम् ॥ १३१ ॥
ऋद्ध्या महत्या शक्त्या च प्रभावेण च भूयसा । चतुःषष्टेः स इंद्राणां पंचषष्टितमोऽभवद्भात् ॥ १३२ ॥
तस्यासीन्मंगला नाम मंगलानां निकेतनम् । सच्छीलकेतना पत्नी कुललक्ष्मीरिवांगिनी ॥ १३३ ॥
पत्युः सा हृदयेऽवात्सीत्तस्याश्च हृदये पतिः । बहिरंगस्तयोश्चासीद्वासो वासगृहादिषु ॥ १३४ ॥
उद्यानादिप्रदेशेऽपि संचरंती गृहेऽपि वा । अधिकं देवतातोऽपि भर्त्तारं ध्यायति स्म सा ॥ १३५ ॥
रूपलावण्यसौभाग्यदासीकृतसुरांगना । दासीचक्रे मुखेनेंदुमपि सा वरलोचना ॥ १३६ ॥
विशदे रूपलावण्ये तस्याश्चातिशयान्विते । परस्परमभूष्येतामंगुलीयमणी इव ॥ १३७ ॥
पौलोम्येव महेंद्रस्य नरेंद्रस्य तया समम् । उपभुंजानस्य भोगानभवत् प्रीतिरद्भुया ॥ १३८ ॥
इतः पुरुषसिंहस्य वैजयंतविमानगः । जीवः स्वायुस्त्रयस्त्रिंशदब्धिसंख्यामपूरयत् ॥ १३९ ॥
श्रावणस्याथ शुक्लायां द्वितीयायां मघागते । मृगांके मंगलादेव्याः कुक्षाववततार सः ॥ १४० ॥
ईक्षां चक्रे तदानीं च तीर्थकृज्जन्मसूचकान् । गजादीन्मंगलादेवी महास्वप्नांश्चतुर्दश ॥ १४१ ॥

१ जलघटीयंत्रान्निर्गतानां । बिंदूनां आसारः वृष्टिः तेन मालिनस्तेषु । २ कूपाद्युद्भूतजलमार्गः सिरा । ३ इंद्राण्या ।

इयं कस्यापि शापेन दिवो भ्रष्टा किमप्सराः । वनलक्ष्मीः स्वयमथ वसंतश्रीरथ स्वयम् ॥ २४ ॥
रतिः स्मरवियुक्ता वा नागी[1] वा भुवमागता । स्त्रीरत्नं वा किमप्येतत्कौतुकाद्वेधसा कृतम् ॥ २५ ॥
एवं विचिन्तयन् राजा तत्रैवाश्रमयत्क्षणम् । प्रतीक्षमाणः कमपीवाग्रतः प्रययौ न हि ॥ २६ ॥
स्वामिन् सर्वं बलं प्राप्तं किमद्यापि विलंब्यते । भावं जिज्ञासुरित्यूचे सचिवस्तं नरेश्वरम् ॥ २७ ॥
अमात्यवचसा चेतः संस्थाप्य कथमप्यथ । जगाम यमुनोपान्ते महोद्यानं महीपतिः ॥ २८ ॥
न हि चूतवने मंक्षु मंजरीपुंजमञ्जुले[2] । नाप्यशोकवने नृत्यन्नवपल्लवशालिनि ॥ २९ ॥
न वा बकुलषंडेऽपि मधुव्रतकुलाकुले । तालवृन्तायतदले कदलीविपिनेऽपि न ॥ ३० ॥
मधुश्रीकर्णिकाच्यूते कर्णिकारवने न च । नान्यत्रापि रतिं प्राप तया हृतमना नृपः ॥ ३१ ॥
सचिवः सुमतिर्नाम तं तथोद्विग्नमानसम् । एवमज्ञ इवोवाच भावज्ञोऽपि महीपतिम् ॥ ३२ ॥
विकारो मानसो वाथ भयं वा शत्रुसंभवम् । मोहाय क्षितिपालानां तृतीयं संभवेन्न हि ॥ ३३ ॥
न तावद्विक्रमाक्रान्तजगतस्ते द्विपद्भयम् । मनोविकारो यद्यस्ति यद्यगोप्यश्च तद्वद ॥ ३४ ॥
राजापि व्याजहारैवं त्वया निर्व्याजशक्तिना । वशीकृता विद्विषन्तः साक्षिणौ तु भुजौ मम ॥ ३५ ॥
तवात्मनो विकारेऽपि प्रतीकारकरः खलु । इति मे निश्चयस्तेन कथयामि कथं न ते ॥ ३६ ॥
इहाधुनैवापतता[3] मया पथि निरीक्षिता । सर्वस्त्रीरूपसर्वस्वलुंटाकी[4] काचिदंगना ॥ ३७ ॥
मदीयमप्यपहृतं तया चेतः स्मरातुरम् । तेन ताम्यामि सचिव कुरूपायमिहोचितम् ॥ ३८ ॥

---

१ नागकन्या । २ मंजरीणां समूहेन सुंदरे । ३ आगच्छता । ४ लुंटतीत्येवं शीला लुंटाकी ।

भुवनत्रितयाधारभूतं गर्भं दधार तम्। निगूढं[1] मंगला देवी निधानमिव मेदिनी ॥ १४२ ॥
इतश्च कश्चिदप्याढ्यस्ततः[2] पुर्या वणिज्यया[3]। सद्दग् भार्याद्वययुतो दूरदेशांतरं ययौ ॥ १४३ ॥
तस्य मार्गस्थितस्यैवैकस्यां समभवत्सुतः। उभाभ्यां च सपत्नीभ्यां निर्विशेषमवर्ध्यत ॥ १४४ ॥
अर्जयित्वा धनं देशान्तराद्व्यावृत्तवानथ। वर्त्मन्येव विपेदे स दैवस्य विषमा गतिः ॥ १४५ ॥
तस्य द्वे अपि ते भार्ये उदश्रुवदने शुचा। विरचय्याग्निसंस्कारं चक्राते और्ध्वदेहिकम्[4] ॥ १४६ ॥
ततः पुत्रश्च वित्तं च मदीये इति भाषिणी। पुत्रमात्रा सहान्या तु मायिन्यकलहायत ॥ १४७ ॥
क्षेममेका परा योगमिच्छंत्यौ पुत्रवित्तयोः। अयोध्यामीयतुः शीघ्रं सूनोर्मातृविमातरौ ॥ १४८ ॥
तत्र च स्वान्यकुलयोर्धर्माधिकरणे[5]ऽपि च। ढुढौकाते[6] भिन्नो न तद्वादो मनागपि ॥ १४९ ॥
ततस्ते उपतस्थाते विवदंत्यौ नरेश्वरम्। उपवेश्य सभां राज्ञा पृष्टे ते वादकारणम् ॥ १५० ॥
ऊचे विमाता वादोऽयमाख्यातः सकले पुरे। किं त्वेनं नाच्छिदत्कोऽपि कः परव्यसनेऽर्तिमान् ॥ १५१ ॥
सुखिनं परसौख्येन परदुःखेन दुःखिनम्। पृथिव्यां धर्मराजं त्वामिदानीमस्म्युपस्थिता ॥ १५२ ॥
ममौरसोऽयं तनयः सद्दग्मे वर्द्धितो मया। वित्तं ममैतद्यस्या हि पुत्रस्तस्या धनादिकम् ॥ १५३ ॥
पुत्रमाताप्युवाचैवं पुत्रोऽसौ मे धनं च मे। सपत्नी मेऽनपत्यासौ लोभेन कलहायते ॥ १५४ ॥
प्राक् पुत्रं पालयंत्येषा न निषिद्धा मयार्जवात्। पादांते शायिता स्नेहादुच्छीर्षग्राहिणी ह्यसौ ॥ १५५ ॥
तदुत्तिष्ठ स्वनिर्णेतुं विवादस्त्वयि तिष्ठते। राज्ञा दृष्टः कुदृष्टो वा निर्णयो ह्यपुनर्भवः ॥ १५६ ॥

---

१ गुप्तं क्रियाविशेषणम्। २ धनिकः। ३ व्यापारेण। ४ दाहादिकम्। ५ न्यायाधिकारिमंदिरे। ६ जग्मतुः।

राज्ञा सह प्रगे[1] योगं करिष्यामि तवानघे । ज्वलन्तं ज्वलनमथ[2] प्रवेक्ष्याम्याश्वसिह्यपि ॥ ५५ ॥
आश्वास्यैवं वनमालां सा परिव्राजिकाव्रजत् । सिद्धप्रायं नृपार्थं तं चाख्यत्सुमतिमंत्रिणे ॥ ५६ ॥
सोऽप्यमात्यस्तदाख्यायाश्वासयत् पृथिवीपतिम् । प्रायेण प्रेयसीप्राप्तिप्रत्याशापि हि शर्मणे ॥ ५७ ॥
प्रातर्गत्वात्रेयिकापि वनमालामवोचत । मया कृतोऽस्ति ते प्रेमाभिमुखः सुमुखो नृपः ॥ ५८ ॥
उत्तिष्ठ वत्से गच्छावस्तदद्य नृपसद्मनि । रमस्व राजपत्नीव राज्ञा सह यथासुखम् ॥ ५९ ॥
वनमाला तया सार्धं नृपवेश्म ययौ ततः । अवरोधे[3] सा निदधे सानुरागेण भूभुजा ॥ ६० ॥
क्रीडोद्यानसरिद्वापीशैलादिषु तया सह । विहरन्नन्वभूद्भोगसुखं सुमुखभूपतिः ॥ ६१ ॥
इतो वीरकुविंदोऽपि वियुक्तो वनमालया । भूताविष्ट इवोन्मत्त इव मत्त इवाभ्रमत् ॥ ६२ ॥
धूलीधूसरसर्वांगो जीर्णकर्पटखंडवत्[4] । विसंस्थुलशिरःकेशो दीर्घरोमनखावलिः ॥ ६३ ॥
उत्तालतुमुलैः[5] पौरदारकैः परिवारितः । वनमाले वनमाले क्वासि मे देहि दर्शनम् ॥ ६४ ॥
निरागसं किमत्याक्षीरेकमेकपदेऽपि माम् । अथवा नर्मणात्याक्षीः सुचिरं युज्यते न तत् ॥ ६५ ॥
रूपलुब्धेन वा रक्षोयक्षविद्याधरादिना । केनाप्यपहृतासि त्वं धिग्धिङ्मां गतभाग्यकम् ॥ ६६ ॥
इत्यादि प्रलपन् पुर्यां चत्वरेषु त्रिकेषु च । वराको रंकवत् कालमतिवाहयति स्म सः ॥ ६७ ॥

॥ पंचभिः कुलकम् ॥

तथैव प्रलपन्नुच्चैरन्येद्यू राजवेश्मनः । प्रययावंगणे डिंभगणैः कपिवदावृतः ॥ ६८ ॥

---

१ प्रातःकाले । २ अग्निम् । ३ अन्तःपुरमध्ये । ४ जीर्णवस्त्रखंडवत् । ५ हास्येन ।

द्वे अप्येते सुसदृश्यावेकवृंतच्युते इव ॥ १५७ ॥
उजाभ्यामिति विज्ञप्तो जगाद जगतीपतिः । द्वे अप्येते सुसदृश्यावेकवृंतच्युते इव ॥ १५७ ॥
अन्योऽन्यं वैसदृश्ये हि यस्याः सादृश्यभाग्भवेत् । तस्याः पुत्रोऽनुमीयेत द्वयोः सदृश एष नु ॥१५८॥
न वक्तुमपि जानाति बाल्यादेषोऽपि दारकः । असौ माता विमातासाविति ज्ञाने तु का कथा ॥ १५९ ॥
दुर्निर्णयार्थचकितस्येत्थं निगदितोऽपि हि । जज्ञे राज्ञोऽथ मध्याह्नो नित्यकृत्यांतरोचितः ॥ १६० ॥
पारिषद्यैरथेत्यूचे मासैः षड्भिरपि प्रभो । विवादोऽभेदि नास्माभिर्वज्रग्रंथिरिवानयोः ॥ १६१ ॥
इदानीं नित्यकृत्यानां क्षणो वो मातिवर्ततताम् । क्षणांतरे विवादोऽयं विचार्यः स्वामिना पुनः ॥ १६२ ॥
एवमस्त्विति राजापि निगद्य व्यसृजत्सभाम् । कृत्वानंतरकृत्यानि चांतरन्तःपुरं ययौ ॥ १६३ ॥
विज्ञप्तो मंगलादेव्या तत्र चैवं महीपतिः । स्वामिन्मध्याह्नकृत्यानामतिवेलाऽभवत्कुतः ॥ १६४ ॥
तयोर्विवादवृत्तांतो राज्यै राज्ञाप्यकथ्यत । गर्भप्रभावात्सुमती राज्यप्येवमभाषत ॥ १६५ ॥
स्त्रीणां विवादो निर्णेतुं स्त्रीभिरेव हि युज्यते । तत्करिष्याम्यहं देव विवादच्छेदनं तयोः ॥ १६६ ॥
राज्ञा सविस्मयं देव्या सममागत्य पर्षदि । आनायिते ततस्ते तु पृष्टे पूर्ववदूचतुः ॥ १६७ ॥
राज्ञीभापामुत्तरं च विचार्यैवमवोचत । ज्ञानत्रयधरस्तीर्थकरोऽस्त्येप ममोदरे ॥ १६८ ॥
स प्रसूतो जगन्नाथोऽमुष्याशोकतरोस्तले । निर्णयं दास्यते तस्मात्प्रतीक्षेथामुभे अपि ॥ १६९ ॥
उमित्यूचे विमाता तु माता त्वेवमवोचत । अहमागमयिष्ये न महादेवि मनागपि ॥ १७० ॥
सर्वज्ञमाता भवती करोत्वद्यैव निर्णयम् । सपत्नीसात्करिष्यामि नेयत्कालं स्वमात्मजम् ॥ १७१ ॥

१ असादृश्ये । २ निर्णयाभावाशङ्कितस्य । ३ सभासद्भिः । ४ समयः । ५ सभायाम् । ६ आहूते । ७ उत्पन्नः । ८ प्रतीक्षां करिष्ये ।

# अष्टमः सर्गः ।

## ॥ श्रीमहापद्मचक्रिचरितम् ॥

इतश्च विहरत्येव जिनेन्द्रे मुनिसुव्रते । जज्ञे चक्री महापद्मश्चरितं तस्य कीर्त्यते ॥ १ ॥
जंबूद्वीपस्यास्य पूर्वविदेहावनिभूषणे । सुकच्छविजये ख्यातमस्ति श्रीनगरं पुरम् ॥ २ ॥
तत्र राजा प्रजापालः प्रजापालनतत्परः । पर[1]राजयशोहंसनाशनांबुधरोऽभवत् ॥ ३ ॥
सोऽन्यदाकस्मिकं विद्युत्पातं दृष्ट्वा विरक्तधीः । समाधिगुप्तस्य मुनेः समीपे व्रतमाददे ॥ ४ ॥
स चिरं पालयामास खड्गधारोपमं व्रतम् । विपद्य चाच्युतेन्द्रोऽभूत्तपोलेशोऽपि नाफलः ॥ ५ ॥
इतश्च जंबूद्वीपस्य क्षेत्रे भरतनामनि । समस्ति हास्तिनपुरं पुरं सुरपुरोपमम् ॥ ६ ॥
इक्ष्वाकुवंश्यस्तत्राभून्नाम्ना पद्मोत्तरो नृपः । पद्मानिकेतनं पद्ममिव पद्ममहाह्रदे ॥ ७ ॥
तस्योज्वलगुणा ज्वाला नामान्तःपुरभूषणम् । बभूव महिषी रूपेणाभिभूतामरांगना ॥ ८ ॥
तस्यां च केसरिस्वप्नसूचितः प्रथमः सुतः । जज्ञे विष्णुकुमाराख्यः श्रिया सुरकुमारवत् ॥ ९ ॥
स प्रजापालजीवोऽपि पूरयित्वायुरच्युतात् । च्युत्वा ज्वालामहादेव्या उदरे समवातरत् ॥ १० ॥
चतुर्दशमहास्वप्नसूचितोऽथ सुतोऽभवत् । ज्वालादेव्या महापद्मो नाम धामाखिलश्रियाम् ॥ ११ ॥

---

१ शत्रुभूतराज्ञां यश एव हंसस्तस्य नाशने मेघसमानः मेघागमे हि हंसाः सरोवराणि विहाय पलायन्ते इति स्थितिः।२स्थानम् ।

ततश्च मंगलादेवी निर्णीयैवमभाषत । कालक्षेपासहत्वेन नूनमस्या अयं सुतः ॥ १७२ ॥
विदधात्युन्नयाधीने परपुत्रधने यतः । तेनेहकालहरणं विमाता सहते खलु ॥ १७३ ॥
आत्मपुत्रमुन्नयसात् क्रियमाणं तितिक्षितुम् । अक्षमा कालहरणं सहते जननी कथम् ॥ १७४ ॥
भद्रे न कालहरणं सहसे यन्मनागपि । तज्ज्ञातं तव पुत्रोऽयं गृहाण स्वगृहं व्रज ॥ १७५ ॥
एतस्यास्तनयो नायं पालितो लालितोऽपि हि । कोकिलायाः खल्वपत्यं काक्या पुष्टोऽपि कोकिलः॥१७६
गर्भप्रभावादेव्यैवं विहिते तत्र निर्णये । विसिष्मिये स्मेरनेत्रा[1] परिषत्[2]सा चतुर्विधा ॥ १७७ ॥
तदा ते जग्मतुर्वेश्म सूनोर्मातृविमातरौ । हृष्टम्लाने कमलिनीकुमुदिन्याविवोषसि[3] ॥ १७८ ॥
बाधामजनयन् देव्या लघूकरणवानिव । क्रमेण ववृधे गर्भः शुक्लपक्ष इवोडुपः[4] ॥ १७९ ॥
ततो नवसु मासेषु दिनेष्वर्धाष्टमेषु च । वैशाखविशदाष्टम्यां[5] मघास्थे च निशाकरे ॥ १८० ॥
सुवर्णवर्णं क्रौंचांकं मृगांकमिव पूर्वदिक् । मंगलास्वामिनी सूनुरत्नं प्रसुषुवे सुखम् ॥ १८१ ॥
त्रैलोक्ये क्षणमुद्योतो नारकाणां क्षणं सुखम् । तदानीमभवच्छक्रादीनां चासनकंपनम् ॥ १८२ ॥
दिक्कुमार्यस्तत्र चक्रुः सूतिकर्म यथोचितम् । शक्रश्च मंगलातल्पात् सुमेरावनयत् प्रभुम् ॥ १८३ ॥
शक्रांकवर्तिनं नाथमिंद्रास्तत्राच्युतादयः । त्रिषष्टिः स्नपयामासुस्तीर्थाम्भोभिर्यथाक्रमम् ॥ १८४ ॥
ईशानांके निवेश्येशं शक्रोऽप्यस्नपयज्जलैः । विकृतस्फाटिकचतुर्वृषशृंगविनिर्गतैः ॥ १८५ ॥
विलिप्य पूजयित्वा च वस्त्रालंकरणैः प्रभुम् । आरात्रिकं च प्रोत्तार्य शक्रो भक्त्यैवमस्तवीत् ॥ १८६ ॥

---

१ विकसितनयना । २ सभा । ३ प्रातःकाले । ४ चंद्रः । ५ शुक्लाष्टम्यां ।

अथैकसुव्रताचार्यपादान् क्षुल्लकोऽन्यधादिदम् । स्वयं वो युज्यते वक्तुं न विद्वन्मानिनामुना ॥ २६ ॥
अमुं वादे विजेष्येऽहं सन्न्यीजूयैव पश्यथ । जल्पो वदत्वसौ पक्षं दूषयामि यथातथम् ॥ २७ ॥
ऊचे नमुचिजल्पोऽपि क्रोधकर्कशवागिति । अशौचाः पाखंडिनश्च त्रयीबाह्याश्च सर्वदा ॥ २८ ॥
तत्संवासयितुं यूयं न युक्ता निजमंडले[3] । इत्येष खलु मे पक्षो युष्मास्वन्यत् किमुच्यते ॥ २९ ॥
प्रत्यूचे क्षुल्लकोऽप्येवमशौचं सुरतं विदुः । तत्सेवकश्च पाखंडी त्रयीबाह्यः स एव हि ॥ ३० ॥
त्र्यामर्थोऽयमप्कुंजः कंडनी पेषणी तथा । चुल्ली प्रमार्जनी पंच सूनाः पापाय गेहिनाम् ॥ ३१ ॥
सेवंते य इमाः सूनास्त्रयीबाह्या हि ते खलु । सूनापंचकहीनास्तु त्रयीबाह्याः कथं वयम् ॥ ३२ ॥
अस्माकमपदोषाणां दोषवत्सु जनेषु नोः । म्लेच्छेषूत्तमजातीनामिव वासश्च नोचितः ॥ ३३ ॥
इत्थंकारं क्षुल्लकेन सुयुक्तिन्निरपोदितः[6] । स्वस्थानं सोऽगमन्मंत्री राजा राजजनोऽपि च ॥ ३४ ॥
स मंत्री निशि चोत्थाय निशाचर इवोत्कटः । ज्वलन्निवातिक्रोधेन तद्वधाय समाययौ ॥ ३५ ॥
सद्यः शासनदेव्या च वार्तिकेनेवैं पन्नगः । स स्तंभितः प्रभाते च ददृशे विस्मितैर्जनैः ॥ ३६ ॥
आश्चर्यं प्रेक्ष्य तद्राजा लोकाश्च बहवस्तदा । श्रुत्वा धर्ममुपाशाम्यन् विमदा इव दन्तिनः ॥ ३७ ॥
तथापमानान्नमुचिर्नगरं हस्तिनापुरम् । ययौ स्थानं विदेशो हि मानिनामपमानिनाम् ॥ ३८ ॥
युवराजो महापद्मः स्वसाचिव्ये चकार तम् । अभ्यागतेऽन्यनृपतिप्रधाने ह्यर्थिनो नृपाः ॥ ३९ ॥

---

१ लघुसाधुः । २ आत्मानं विद्वांसं मन्यते इति विद्वन्मानी तेन । ३ अस्मद्देशे निवासयितुं यूयं न युक्ताः । ४ जलस्थानम् । ५ जीवानां वधस्थानं सूनोच्यते । ६ निरसितः । ७ गरुडेन । ८ तिरस्कृतानाम् ।

किं पुनः पादकमलैर्यत्र त्वं विहरिष्यसे ॥ १८७ ॥

देव त्वज्जन्मकल्याणेनापि कल्याणभाग्मही । किं पुनः पादकमलैर्यत्र त्वं विहरिष्यसे ॥ १८७ ॥

त्वद्दर्शनसुखप्राप्त्या कृतकृत्या दृशोऽधुना । कृतार्थाः पाणयश्चैते भगवन् पूजितोऽसि यैः ॥ १८८ ॥

जिननाथ तव स्नात्रचर्चार्चादिमहोत्सवः । [1]मन्मनोरथचैत्यस्य चिरात् कलशतां ययौ ॥ १८९ ॥

जगन्नाथ प्रशंसामि संसारमपि संप्रति । यत्र त्वद्दर्शनं देव मुक्तेरेकं निबंधनम् ॥ १९० ॥

जगन्नाथ प्रशंसामि संसारमपि संप्रति । यत्र त्वद्दर्शनं देव मुक्तेरेकं निबंधनम् ॥ १९० ॥

ऊर्मयोऽपि हि गण्यंते स्वयंभूरमणोदधेः । तवातिशयपात्रस्य न पुनर्मादृशैर्गुणाः ॥ १९१ ॥

धर्मैकमंरूपस्तंभ जगदुद्योतभास्कर । कृपावल्लीमहावृक्ष रक्ष विश्वं जगत्पते ॥ १९२ ॥

निर्वृतेः संवृतद्वारसमुद्घाटनकुंचिका । धन्यैः शरीरिभिर्देव श्रोष्यते तव देशना ॥ १९३ ॥

मन्मनस्युज्ज्वलादर्शसन्निभे भुवनेश्वर । त्वन्मूर्त्तिर्नित्यसंक्रांता भूयान्निर्वृतिकारणम् ॥ १९४ ॥

इति स्तुत्वा [3]हरिर्नाथमादायोत्प्लुत्य च क्षणात् । मंगलास्वामिनीपार्श्वे मुक्त्वा च स्वाश्रयं ययौ ॥ १९५ ॥

जनन्यास्तत्र गर्भस्थे यदभूच्छोभना मतिः । स्वामिनो नाम सुमतिरित्यकार्षीत् पिता ततः ॥ १९६ ॥

धात्रीभिरिंद्रादिष्टाभिर्लाल्यमानो जगत्पतिः । [4]शैशवं व्यतिचक्राम प्रतिपेदे च यौवनम् ॥ १९७ ॥

धनुःशतत्रयोत्तुंगः [5]पीनस्कंधो बभौ विभुः । [6]आजानुलंबिदोःशाखः कल्पशाखीव जंगमः ॥ १९८ ॥

स्वामिनः स्वच्छलावण्यकल्लोलिन्यां निरंतरम् । ललनानां लुलंति स्म दृशः शफरि[7]का इव ॥ १९९ ॥

भोग्यं कर्म निजं जानन् पित्रोरप्युपरो[8]धतः । राज्ञां कन्याश्चारुरूपाः पर्यणैषीदथ प्रभुः ॥ २०० ॥

---

१ मम मनोरथ एव चैत्यं तस्य । २ संवृतद्वारस्योद्घाटने कुंचिकेव कुंचिका । ३ इंद्रः । ४ बाल्यम् । ५ पीनौ पुष्टौ स्कंधौ यस्य ।
६ जानुपर्यंतं लंबमाने दोषौ हस्तावेव शाखे यस्य । ७ मत्स्याः । ८ आग्रहात् ।

स गच्छन्नुन्मुखः स्वैरं प्रापदेकां महाटवीम् । तत्रापि पर्यटन्नेकमपश्यत्तापसाश्रमम् ॥ ५५ ॥
तापसैः कृतसत्कारः प्रियातिथिसमागमैः । प्रावर्त्तत महापद्मस्तत्र स्थातुं स्ववेश्मवत् ॥ ५६ ॥
इतश्च पुर्यां चंपायां नृपतिर्जनमेजयः । रुद्धः कालनरेन्द्रेण युयुधे च ननाश च ॥ ५७ ॥
भज्यमाने पुरे तत्र नेशुरन्तःपुरस्त्रियः । कुरंग्य इव दिङ्मूढा दीप्यमाने दवानले ॥ ५८ ॥
चंपेशस्य नागवती प्रियां स्वसुतया सह । प्रणष्टा मदनावल्या तत्रागात्तापसाश्रमे ॥ ५९ ॥
पद्मस्य मदनावल्याश्चान्योऽन्यमदनास्त्रयोः । जज्ञे दर्शनमन्योऽन्यमनुरागश्च तत्क्षणम् ॥ ६० ॥
जातानुरागां तां ज्ञात्वा जनन्येवमवोचत । पुत्रि मा चापलं कार्षीर्नैमित्तिकवचः स्मर ॥ ६१ ॥
त्वं हि नैमित्तिकेनैवमाख्यातासि भविष्यसि । प्रधानपत्नी षट्खंडभरतक्षेत्रशासितुः ॥ ६२ ॥
पुरुषे यत्र तत्रापि मानुरागं ततः कृथाः । संयता तिष्ठ समये चक्री त्वां परिणेष्यति ॥ ६३ ॥
तद्विप्लवभयात्पद्ममूचे कुलपतिस्ततः । यत्राचालीस्तत्र वत्स गच्छ स्वस्त्यस्तु तेऽनघ ॥ ६४ ॥
श्रुत्वा दध्यौ कुमारोऽपि युगपद्द्वौ न चक्रिणौ । चक्री भाव्यहमेवेह तन्ममैव हि पत्न्यसौ ॥ ६५ ॥
निश्चित्यैवं महापद्मो निर्गतस्तापसाश्रमात् । पर्यटन्नासदत् सिन्धुसदनं नाम पत्तनम् ॥ ६६ ॥
तदा च बहिरुद्याने पौरनार्यो मधूत्सवे[2] । चिक्रीडुर्विविधं तत्र स्थिताः कंदर्पशासने ॥ ६७ ॥
तत्केलितुमुलं श्रुत्वा महासेनमहीपतेः । स्तंभमुन्मूलयामास कदलीकांडवत् करी ॥ ६८ ॥
निपात्यारोहकौ सद्यः शय्यासंसक्तरेणुवत् । अंगे वायोरपि स्पर्शासह उत्तब्धरोमकः ॥ ६९ ॥

१ प्रियोऽतिथिसमागमो येषां तैः । २ वसंतोत्सवे ।

जन्मतः पूर्वलक्षेषु गतेषु दशसु प्रभुः । अनुजाप्यर्थितोऽत्यर्थं राज्यभारमुपाददे ॥ २०१ ॥
एकोनत्रिंशतं पूर्वलक्षाः सद्वादशांगिकाः । राज्येऽनैषीत्सुखं स्वामी वैजयंत इव स्थितः ॥ २०२ ॥
स्वयंबुद्धो बोधितश्च ततो लोकांतिकामरैः । दीक्षेच्छुर्वार्षिकं दानमदत्त सुमतिः प्रभुः ॥ २०३ ॥
अंते वार्षिकदानस्य वासवैश्चलितासनैः । दीक्षाभिषेको विदधे स्वामिनः पार्थिवैरपि ॥ २०४ ॥
अथाभयकरां नामाध्यारुह्य शिबिकां विभुः । सुरासुरनृपोपेतः सहस्राम्रवणं ययौ ॥ २०५ ॥
वैशाखसितनवम्यां पूर्वाह्ने स मघासु भे । प्राव्राजीन्नित्यभक्तेन सहस्रेण नृपैः सह ॥ २०६ ॥
उत्पेदे स्वामिनो ज्ञानं मनःपर्ययसंज्ञकम् । अनुजन्मेव दीक्षायाः प्रियमित्रमिवाथवा ॥ २०७ ॥
दिने द्वितीये विजयपुरे पद्मस्य भूपतेः । सदने विदधे स्वामी परमान्नेन पारणम् ॥ २०८ ॥
वसुधारादीनि पंचाद्भुतदिव्यानि चक्रिरे । तत्र देवा रत्नपीठं त्वर्चायै पद्मपार्थिवः ॥ २०९ ॥
विविधाभिग्रहधरः सहमानः परीषहान् । वर्षाणि विंशतिं स्वामी विजहार ततो महीम् ॥ २१० ॥
ग्रामाकरप्रभृतिषु विहरन् प्रभुरन्यदा । सहस्राम्रवणं दीक्षाग्रहणस्थानमाययौ ॥ २११ ॥
प्रियंगुमूले ध्यानस्थस्यापूर्वकरणात्प्रभोः । क्षपकश्रेण्यारूढस्य घातिकर्माणि तुत्रुटुः ॥ २१२ ॥
चैत्रस्य शुक्लैकादश्यां मघास्थे च निशाकरे । स्वामिनः कृतषष्ठस्योत्पेदे केवलमुज्ज्वलम् ॥ २१३ ॥
तज्ज्ञात्वासनकंपेनागत्येंद्राः ससुरासुराः । चक्रुः समवसरणं स्वामिनो देशनाकृते ॥ २१४ ॥
तत्र प्रविश्य प्राग्द्वारा प्रदक्षिण्यकृतप्रभुः । धनुःषोडशशत्यग्रक्रोशोच्चं चैत्यपादपम् ॥ २१५ ॥

---

१ कनीयान् भ्रातेव । २ गृहे ।

संघानुरोधान्नमुचिं मुमोच स महामुनिः । तं मंत्रिपांसनं सद्यः पद्मस्तु निरवासयत् ॥ २०१ ॥
तया त्रिपद्या स मुनिस्ततः प्रभृति पावनीम् । त्रिविक्रम इति ख्यातिमाससाद जगत्त्रये ॥ २०२ ॥
संघकार्यं स तत्कृत्वा शांतस्तप्त्वा तपः परम् । उत्पन्नकेवलो विष्णुकुमारः प्रययौ शिवम् ॥ २०३ ॥
पद्मोऽपि हि भवोद्विग्नस्त्यक्त्वा राज्यं पलालवत् । सद्गुरोः पादपद्मांते परिव्रज्यामुपाददे ॥ २०४ ॥
कौमारेऽब्दपंचशती मंडलित्वेऽपि सैव हि । जये त्र्यब्दशती चक्रभृत्त्वे सप्तशतीयुता ॥ २०५ ॥
अष्टादशसहस्र्यब्दसहस्रास्तु व्रते दश । त्रिंशद्वर्षसहस्रायुरित्यभूत्पद्मचक्रभृत् ॥ २०६ ॥ युग्मम् ॥

नानाविधाभिग्रहसुंदराणि प्रतप्य तीव्राणि तपांसि पद्मः ।
घातिक्षयासादितकेवलर्द्धिः पदं ययौ शाश्वतशर्मधाम ॥ २०७ ॥

अत्र द्वौ जिनचक्रिणौ जिनपती चोभावुभौ चक्रिणौ रामौ द्वौ च हरी उभौ प्रतिहरी चोभावमी कीर्तिताः
कीर्तिंव्याप्तदिशश्चतुर्दश महात्मानः शलाकानरास्तेषां वृत्तमुदारमस्तु तदिदं लोकस्य कर्णातिथि ॥२०८॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये
षष्ठे पर्वणि श्रीपद्मचक्रवर्तिवर्णनो नामाष्टमः सर्गः ।

## समाप्तं चेदं षष्ठं पर्व

"तीर्थाय नम" इत्युक्त्वाध्यास्त सिंहासनं प्रभुः। प्राङ्मुखो दिक्षु चान्यासु तद्रूपाणि व्यधुः सुराः॥२१६॥
संघोऽप्यस्थाद्यथास्थानं ससुरासुरमानुषः। नमस्कृत्य जगन्नाथं वज्रभृच्चैवमस्तवीत् ॥ २१७ ॥
गायन्निवालि[1]विरुतैर्नृत्यन्निव चलैर्[2]दलैः। त्वद्गुणैरिव रक्तोऽसौ मोदतेऽशोकपादपः ॥ २१८ ॥
आयोजनं सुमनसो[3]ऽधस्तान्निक्षिप्तबंधनाः। जानुदघ्नीः[4] सुमनसो[5] देशनोर्व्यां किरंति ते ॥ २१९ ॥
मालवकैशिकीमुख्यग्रामरागपवित्रितः। तव दिव्यो ध्वनिः पीतो हर्षोद्ग्रीवैर्मृगैरिव ॥ २२० ॥
तवेंदुधाम[6]धवला चकास्ति चमरावली। हंसालिरिव वक्त्राब्जपरिचर्यापरायणा ॥ २२१ ॥
मृगेंद्रासनमारूढे त्वयि तन्वति देशनाम्। श्रोतुं मृगाः समायांति मृगेंद्रमिव सेवितुम् ॥ २२२ ॥
भासां चयैः परिवृतो ज्योत्स्नाभिरिव चंद्रमाः। चकोराणामिव दृशां ददासि परमां मुदम्[7] ॥ २२३ ॥
दुंदुभिर्विश्वविश्वेश पुरो व्योम्नि प्रतिध्वनन्। जगत्याप्तेषु ते प्राज्यं साम्राज्यमिव शंसति ॥ २२४ ॥
तवोर्ध्वमूर्ध्वं पुण्यर्द्धिक्रमसब्रह्मचारिणी[8]। छत्रत्रयी त्रिभुवनप्रभुत्वप्रौढिशंसिनी ॥ २२५ ॥
एतां चमत्कारकरीं प्रातिहार्यश्रियं तव। चित्रीयंते[9] न के दृष्ट्वा नाथ मिथ्यादृशोऽपि हि ॥ २२६ ॥
स्तुत्वैवं विरते शक्रे भगवान् सुमतिप्रभुः। सर्वभाषानुगामिन्या प्रारेभे देशनां गिरा ॥ २२७ ॥
कृत्याकृत्यपरिज्ञानयोग्यतामभ्युपेयुषा। इह स्वकार्यमूढेन न स्थातव्यं शरीरिणा ॥ २२८ ॥
पुत्रमित्रकलत्रादेः शरीरस्यापि सत्क्रिया। परकार्यमिदं सर्वं न स्वकार्यं मनागपि ॥ २२९ ॥
एक उत्पद्यते जंतुरेक एव विपद्यते। कर्माण्यनुभवत्येकः प्रचितानि भवांतरे ॥ २३० ॥

---

१ भ्रमरशब्दैः। २ कंपमानैः। ३ देवाः। ४ जानुप्रमाणाः। ५ पुष्पाणि। ६ चंद्रज्योत्स्नावत्धवला। ७ हर्षम्। ८ पुण्यसमृद्धिक्रमसदृशी। ९ क्रियते।

अन्यैस्तेनार्जितं वित्तं जूयः संजूय जुज्यते । सत्वेको नरकक्रोडे क्लिश्यते निजकर्मजिः ॥ २३१ ॥
दुःखदावाग्निजीष्मेऽस्मिन् वितते जवकानने । बंभ्रमीत्येक एवासौ जंतुः कर्मवशीकृतः ॥ २३२ ॥
इह जीवस्य मा जूवन् सहाया बांधवादयः । शरीरं तु सहायश्चेत्सुखदुःखानुजूतिदम् ॥ २३३ ॥
नायाति पूर्वजवतो न याति च जवांतरम् । ततः कायः सहायः स्यात्संफेटमिलितः कथम् ॥ २३४ ॥
धर्माधर्मौ समासन्नौ सहायाविति चेन्मतिः । नैषा सत्या न मोक्षेऽस्ति धर्माधर्मसहायता ॥ २३५ ॥
तस्मादेको बंभ्रमीति जवे कुर्वन् शुजाशुजे । जंतुर्वेदयते चैतदनुरूपे शुजाशुजे ॥ २३६ ॥
एक एव समादत्ते मोक्षश्रियमनुत्तराम् । सर्वसंबंधिविरहाद्वितीयस्य न संजवः ॥ २३७ ॥
यद्दुःखं जवसंबंधि यत्सुखं मोक्षसंजवम् । एक एवोपजुंक्ते तत्र सहायोऽस्ति कश्चन ॥ २३८ ॥
यथा चैकस्तरन् सिंधुं पारं व्रजति तत्क्षणात् । न तु हस्तपाणिपादादिसंयोजितपरिग्रहः ॥ २३९ ॥
तथैव धनदेहादिपरिग्रहपराङ्मुखः । स्वस्थ एको जवांजोधेः पारमासादयत्यसौ ॥ २४० ॥
तत्सांसारिकसंबंधं विहायैकाकिना सता । यतितव्यं हि मोक्षाय शाश्वतानंदशर्मणे ॥ २४१ ॥
तां प्रजोर्देशनां श्रुत्वा प्रबुद्धा बहवस्तदा । नरा नार्यश्च निःसंगीजूयोपाददिरे व्रतम् ॥ २४२ ॥
चमराद्या गणजृतोऽजूवन् शतमनुत्तमाः । ते जर्तुस्त्रिपदीं प्राप्य द्वादशांगीमसूत्रयन् ॥ २४३ ॥
पूर्णायामादिपौरुष्यां व्यसृजद्देशनां विजुः । चक्रे स्वाम्यंघ्रिपीठस्थो देशनां गणजृद्वरः ॥ २४४ ॥

---

१ विस्तृते । २ पुनःपुनः भ्रमति । ३ मार्गे मिलित इव ।

नत्वार्हतं ततो जग्मुः स्वं स्वमिंद्रादयः पदम् ॥ २४५ ॥
द्वितीयपौरुषीप्रांते व्यसृजत्सोऽपि देशनाम् । दक्षिणौ वरदशक्तिधरौ बाहू समुद्वहन् ॥ २४६ ॥
तत्तीर्थे तुंबुरुर्नाम श्वेतांगस्तार्क्ष्यवाहनः[1] । सदा संनिहितो भर्तुरभूच्छासनदेवता ॥ २४७ ॥ युग्मम्
वामौ बाहू गदाधारपाशयुक्तौ च धारयन् । दधाना दक्षिणौ बाहुदंडौ वरदपाशिनौ ॥ २४८ ॥
तथोत्पन्ना महाकाली स्वर्णरुक्[2] पद्मवाहना । भर्तुः शासनदेव्यासीत्सदा संनिधिवर्तिनी ॥ २४९ ॥
मातुलिंगांकुशधरौ परौ बाहू च बिभ्रती । बोधयन् भव्यभविनो विजहार वसुंधराम् ॥ २५० ॥
वचनातिशयैः पंचत्रिंशता शोभितः प्रभुः । साध्वीनां पंचलक्षी च सहत्रिंशत्सहस्रिका ॥ २५१ ॥
साधूनां त्रीणि लक्षाणि सहस्राणि च विंशतिः । एकादश सहस्राणि त्ववधिज्ञानशालिनाम् ॥ २५२ ॥
चतुर्दशपूर्विणां द्वे सहस्रे सचतुःशते । त्रयोदश सहस्राणि केवलज्ञानिनां पुनः ॥ २५३ ॥
मनोज्ञानिनामयुतं सपंचाशच्चतुःशती । अयुतं वादलब्धीनां सपंचाशच्चतुःशती ॥ २५४ ॥
वैक्रियलब्धिसहस्राण्यष्टादश चतुःशती । श्राविकाणां पंचलक्षी सहस्राणि च षोडश ॥ २५५ ॥
श्रावकाणामुभे लक्षे सैकाशीतिसहस्रके । भव्यां विहरमाणस्य बभूवेति परिच्छदः[3] ॥ २५६ ॥
चतुस्त्रिंशदतिशयान्वितस्य सुमतिप्रभोः । आरभ्य केवलोत्पत्तेर्व्यहरत् सुमतिः प्रभुः ॥ २५७ ॥
पूर्वलक्षं द्वादशांग्या विंशत्यब्द्या च वर्जितम् । समं मुनिसहस्रेण तस्थावनशनेन च ॥ २५८ ॥
स्वं मोक्षकालं ज्ञात्वाथ संमेताद्रिं ययौ विभुः । संप्राप्तानंतचतुष्कः शैलेशीध्यानमास्थितः ॥ २५९ ॥
मासांते क्षतभवोपग्राहिकर्मा[4] जगत्पतिः ।

---

१ गरुडवाहनः । २ सुवर्णकांतिः । ३ परिजनः । ४ क्षतानि भवस्योपग्राहीणि कर्माणि येन यस्य वा ।

चैत्रस्य सितनवम्यां पुनर्वसुगते विधौ । समं तैर्मुनिभिः स्वामी प्रपेदे पदमव्ययम् ॥ २६० ॥ युग्मम्
कौमारेऽयुः पूर्वलक्षा दश राज्ये पुनः प्रभोः । पूर्वलक्षैकोनात्रिंशद्द्वादशांगसमन्विता ॥ २६१ ॥
पूर्वलक्षं द्वादशांगन्यूनं व्रतधरस्य तु । चत्वारिंशत्पूर्वलक्षा इत्यायुः सुमतिप्रभोः ॥ २६२ ॥
अभिनंदननिर्वाणात् सुमतिस्वामिनिर्वृतिः । कोटिलक्षेषु नवसु सागराणां गतेष्वभूत् ॥ २६३ ॥

भर्तुः सहस्रयतिनां च तदाशरीरसंस्कारमग्निजनितं विधिवद्विधाय ।
निर्वाणपर्वमहिमानमकार्षुरिंद्रा नंदीश्वरांतरगमंश्च पुनः स्वलोकम् ॥ २६४ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये तृतीयपर्वणि सुमतिस्वामिचरितवर्णनो

नाम तृतीयः सर्गः ॥ ३ ॥

---

१ निर्वाणस्य पर्वणो महिमानम् ।

## चतुर्थः सर्गः ।

### श्रीपद्मप्रभचरित्रम् ।

॥ ॐ ॥ वंदामहे पद्मवर्णं पद्मप्रभजिनेश्वरम् । लीलानिवासं पद्मायाः पद्मराशिमिव स्थितम् ॥ १ ॥
पद्मप्रभजिनेंद्रस्य चरितं दुरितापहम् । तत्प्रभावादसामान्याद्वक्ष्यामि क्षामधीरपि ॥ २ ॥
धातकीखंडद्वीपस्य प्राग्विदेहैकमंडने । वत्साभिधाने विजये सुसीमेत्यस्ति पूर्वरा ॥ ३ ॥
तत्रापराजितो नाम द्विषद्भिरपराजितः । जितेंद्रियः समभवद्रूपो धर्मइवांगवान् ॥ ४ ॥
तस्य न्यायः सुहृदभूद्धर्मो बंधुर्गुणा धनम् । सुहृद्बंधुधनान्यासन् बहिरंगानि केवलम् ॥ ५ ॥
तस्यार्जवं च शीलं च सत्त्वं चेत्यूर्जिता गुणाः । मिथो भूषणतां जग्मुः पादपस्येव पल्लवाः ॥ ६ ॥
अकोपनोऽदीनशिपदनासक्तोऽन्वभूत्सुखम् । अलुब्धश्च श्रियं दधे स विवेकिशिरोमणिः ॥ ७ ॥
अर्हत्प्रवचनसुधां पिबन् देवइवान्यदा । स एवं चिंतयामास तत्त्वनिष्ठेन चेतसा ॥ ८ ॥
संपदो यौवनं रूपं शरीरं हरिणीदृशः । पुत्रमित्राणि हर्म्याणि दुस्त्यजानि शरीरिणाम् ॥ ९ ॥
जीवन्नप्यदशां प्राप्तः कालधर्मं गतोऽपि वा । एभिस्तु त्यज्यते जंतुर्विनष्टांडमिवांडजैः ॥ १० ॥
एकपादेन कालाभं स्नेहं तेष्वेकपक्षकम् । कुर्वाणो भ्रश्यति स्वार्थाद्भिगहो मंदधीर्जनः ॥ ११ ॥

---

१ लक्ष्म्याः । २ कमलसमूहम् । ३ पापनाशकम् । ४ अल्पधीः । ५ कालसदृशम् ।

त्यजंत्येते न यावन्मां पुण्यपाकक्षयादिह । तावत् पौरुषमालंब्य त्यजाम्येतानसंशयम् ॥ १२ ॥
एवं विचिंत्य सुचिरं विवेकमणिरोहणः[1] । धारा[2]धिरूढवैराग्यो राज्यं पुत्राय दत्तवान् ॥ १३ ॥
पिहिताश्रवसूरीणां पादपद्मांतमेत्य सः । उपाददे परिव्रज्यां मोक्ष[3]व्रज्यामहारथीम् ॥ १४ ॥
त्रिगुप्तिः पंचसमितिर्निर्ममो निःपरिग्रहः । निशितं खड्गधारावच्चिरं सोऽपालयद्व्रतम् ॥ १५ ॥
स विंशतिस्थानकेभ्यः स्थानैः कतिपयैरपि । आर्जयत्तीर्थकृन्नाम कर्म निर्मलमानसः ॥ १६ ॥
शुक्लध्यानपरः स्वायुः क्षपयित्वा महामनाः । ग्रैवेयकेऽभून्नवमे महर्द्धिरमरोऽथ सः ॥ १७ ॥
इतश्च जंबूद्वीपांतर्वर्षेऽत्र भरताभिधे । कौशांबीत्यस्ति नगरी वत्सदेशस्य मंडनम् ॥ १८ ॥
तत्रोच्चतरचैत्याग्रसिंहाभ्यर्णे परिभ्रमन् । त्रस्यतांककुरंगेण[4] यातींदुर्निष्कलंकताम् ॥ १९ ॥
तत्रावासगृहेषूच्चैर्धूपधूमा वितन्वते । युग्मयूनां[5] रत[6]भ्रष्टांशुकानामंशुकश्रियम् ॥ २० ॥
स्वस्तिकन्यस्तमुक्तासु तत्र प्रतिगृहं शुकाः । चंच्वाघातं वितन्वंति दाडिमीबीजशंकया ॥ २१ ॥
श्रीमान् सर्वो जनस्तत्र नान्यस्वं कोऽपि लुंटति । उद्यानकुसुमामोदस्योल्लुंटाकः परं मरुत् ॥ २२ ॥
आसीत्तत्र धरो राजा धरायास्तापनोदनात् । धारणाच्चाप्यधरयन् धाराधर[7]धराधरान् ॥ २३ ॥
न भूपाः खंडयामासुस्तस्याज्ञां क्षितिमंडले । पुष्पस्रजमिवाखंडां दधुः शिरसि किं तु ते ॥ २४ ॥
कोदंडोद्दंडदोर्दंडो[8]ऽप्येष नो दंडचंडताम् । अदर्शयत् किं तु सौम्यस्तस्थौ भद्र इव द्विपः ॥ २५ ॥

---

१ विवेक एव मणयस्तेषां रोहणो गिरिः । २ वर्धमानवैराग्यवान् । ३ मोक्षमार्गे महारथसदृशीम् । ४ लांछनभूतमृगेण । ५ दंपतीनाम् । ६ मैथुने वस्त्ररहितानाम् । ७ मेघान् पर्वतांश्च । ८ धनुषा प्रचंडौ दोर्दंडौ यस्य ।

अचचर्यच्चिरं सोऽर्धश्रीखंडघुसृणैरिव ॥ २६ ॥
यशोऽनुरागैर्युगपद्विस्तीर्णैः ककुंभोऽञ्चितः । गुणराशिरभूद्वास्तुदेवतेव सहोत्थितः ॥ २७ ॥
तस्मिन् महीपतौ लक्ष्मीदेव्या लीलानिकेतने । सधर्मचारिणी देवकन्यासब्रह्मचारिणी ॥ २८ ॥
सतीनां सीमभूतासीत् सुसीमा नाम तस्य तु । दोर्भ्यां सशाखा शुशुभे कल्पद्रुमलतेव सा ॥ २९ ॥
पाणिपादाधरेणाविःपैल्लवा पुष्पिता रँदैः । ईर्यासमितिलीनेव मंथँरं संचचार सा ॥ ३० ॥
नीरंगीछैन्नवदना पश्यंती भुवमेव हि । आर्जवेन मनइव वचनं सूनृतेन च ॥ ३१ ॥
तस्याः शरीरं कांत्येव ह्रिया शीलमभूष्यत । रजनीरँमणज्योत्स्नाप्लवैरिव विभावरी ॥ ३२ ॥
वदंती सातिविशँदैर्दंतांशुभिरशोभत । एकाग्रात्रिंशदंभोधिमितमायुरपूरयत् ॥ ३३ ॥
इतो ग्रैवेयके जीवः सोऽपराजितभूपतेः । कुक्षाववततार च ॥ ३४ ॥
माघस्य षष्ठ्यां कृष्णायां चित्रास्थे रजनीकरे । च्युत्वा सुसीमास्वामिन्याः कुक्षाववततार च ॥ ३४ ॥
तदा मुखे प्रविशतस्तीर्थकृज्जन्मसूचकान् । चतुर्दश महास्वप्नान् सुसीमा देव्युदैक्षत ॥ ३५ ॥
वर्धमाने क्रमाद्गर्भे पद्मशय्यासु दोहदः । अभूद्देव्या देवताभिः पर्यपूर्यत तत्क्षणात् ॥ ३६ ॥
ततो नवसु मासेषु दिनेष्वर्धाष्टमेषु च । कार्तिककृष्णद्वादश्यां चंद्रे चित्रागते सति ॥ ३७ ॥
सद्यो वक्रातिचाराभ्यां ग्रहेषूच्चगतेषु च । पद्मवर्णं पद्मचिह्नं सा देवी सुषुवे सुतम् ॥ ३८ ॥
षट्पंचाशद्दिक्कुमार्यः सूतिकर्मैत्य चक्रिरे । अथागत्य प्रभुं शक्रोऽनैषीत्स्वर्णाद्रिमूर्धनि ॥ ३९ ॥

---

१ दिशः । २ मिश्रितचंदनकेसरैरिव । ३ प्रकटितपल्लवा । ४ दंतैः । ५ नीरंगी सर्वांगाच्छादनवस्त्रवेषः "बुर्खा" इति भाषायां प्रसिद्धः । ६ मंदं । ७ अतिनिर्मलैः । ८ चंद्रज्योत्स्नाप्रवाहैः ।

शक्रोत्संगस्थितं नाथमिंद्रास्तत्राच्युतादयः । क्रमेणास्नपयन्सर्वेऽनुज्येष्ठं सोदरा इव ॥ ४० ॥
ईशानांकस्थितं नाथं शक्रोऽपि हि यथाविधि । स्नपयामास पूजादि कृत्वा चेत्यभितुष्टुवे ॥ ४१ ॥
अस्मिन्नसारे संसारे मरौ संचारिणां चिरात् । त्वद्दर्शनमभूद्देव देहभाजां सुधाप्रपा ॥ ४२ ॥
रूपेणाप्रतिरूपं[1] त्वामश्रांतं पश्यतां सताम् । कृतार्थेयं समभवद्देवानां निर्निमेषता ॥ ४३ ॥
नित्यांधकारे प्रद्योतः सुखं नैरयिणामपि[2] । अभूत्ते तीर्थनाथत्वरूपकस्य सुखं ह्यदः ॥ ४४ ॥
पुण्यैः संसारिणां देव कृपासारणिवारिणा[3] । सिक्त्वा नयसि वृद्धित्वं चिराद्धर्ममहीरुहम् ॥ ४५ ॥
जगत्त्रितयनाथत्वं ज्ञानत्रितयधारिता । इदमाजन्म सिद्धं ते शीतलत्वमिवाम्भसां ॥ ४६ ॥
पद्मवर्ण पद्मचिह्न पद्मगंधिमुखानिल । पद्मानन पद्मान्वितपद्मासद्म[4] जय प्रभो ॥ ४७ ॥
अपारो दुस्तरश्चायं सदा संसारसागरः । जानुदघ्नोऽधुना[5] नाथ त्वत्प्रसादाद्भविष्यति ॥ ४८ ॥
न कल्पांतरसाम्राज्यं नानुत्तरनिवासिताम् । वांछामि किं तु शुश्रूषां भवतः पादपद्मयोः ॥ ४९ ॥
स्तुत्वैवं नाथमादाय शक्रो द्रुतमुपेत्य च । सुसीमास्वामिनीपार्श्वे मुमोच द्यां[6] जगाम च ॥ ५० ॥
पद्मशय्यादोहदोऽस्मिन् यन्मातुर्गर्भगेऽभवत् । पद्माभश्चेत्यमुं पद्मप्रभ इत्याह्वयत् पिता ॥ ५१ ॥
लाल्यमानो द्युधात्रीभिः क्रीडन् सुरकुमारकैः । क्रमेण ववृधे स्वामी द्वितीयं चासदद्वयः ॥ ५२ ॥
सार्धधन्वद्विशत्युच्चः पृथूरस्को[7] बभौ प्रभुः । पद्मरागशिलाक्लृप्तक्रीडाशैलइव श्रियः ॥ ५३ ॥

---

१ अनुपमम् । २ नारकिणाम् । ३ कृपैव सारणिः तस्या वारि तेन । ४ कमलयुक्तलक्ष्म्याः गृह । ५ जानुप्रमाणः । ६ स्वर्गम् ।
७ विशालवक्षाः ।

तित्यक्षुरपि[1] संसारं स्वामी लोकानुवर्तनात् । मातापित्रनुरोधाच्च चक्रे दारपरिग्रहम् ॥ ५४ ॥
जन्मतः पूर्वलक्षेषु गतेष्वर्धाष्टमेष्वथ । उपरोधात्[2] पितुः स्वामी राज्यभारमुपाददे ॥ ५५ ॥
राज्यं च पालयन् सार्धा पूर्वलक्षैकविंशतिम् । तथा षोडश पूर्वांगाण्यत्यक्रामज्जगत्पतिः ॥ ५६ ॥
भवपारं जिगमिषुः स्वामी लोकांतिकामरैः । दीक्षायै प्रेरितो गत्यै पथिकः शकुनैरिव ॥ ५७ ॥
ददौ च वार्षिकं दानं ददतश्च प्रभोर्वसु । कुबेरप्रेरिताः संतो जृंभकाः[3] पर्यपूरयन् ॥ ५८ ॥
अथेंद्रनृपैर्विहिताभिषेकः शिबिकां प्रभुः । आरुह्य निर्वृतिकरं[4] सहस्राम्रवणं ययौ ॥ ५९ ॥
चित्रायां कार्तिके कृष्णत्रयोदश्यां च षष्ठकृत् । समं राजसहस्रेणापराह्ने प्राव्रजत्प्रभुः ॥ ६० ॥
द्वितीयदिवसे स्वामी पुरे ब्रह्मस्थलेऽकरोत् । पारणं परमान्नेन सोमदेवनृपौकसि ॥ ६१ ॥
अमरा विदधुस्तत्र पंचदिव्याद्भुतान्यथ । स तु चक्रे नृपो रत्नपीठं यत्र स्थितो विभुः ॥ ६२ ॥
विजहार च षण्मासांश्छद्मस्थः परमेश्वरः । आगाद्भूयः सहस्राम्रवणं दीक्षैकसाक्षिकम् ॥ ६३ ॥
षष्ठेन प्रतिमास्थस्य विभोर्वटतरोस्तले । प्रणेशुर्घातिकर्माणि वातोद्धूताभ्रजालवत्[5] ॥ ६४ ॥
ततश्चैत्रस्य राकायां चंद्रे चित्रामुपेयुषि । अम्लानं[6] केवलज्ञानमभूत् पद्मप्रभप्रभोः ॥ ६५ ॥
सुरासुरेंद्राः समवसरणं तत्र चक्रिरे । प्राग्द्वारा प्रविवेशाथ तत्र त्रिभुवनेश्वरः ॥ ६६ ॥
सार्धक्रोशोन्नतं चैत्यपादपं परमेश्वरः । तत्र प्रदक्षिणीचक्रे तमिव त्रिदिवेश्वरः ॥ ६७ ॥
"तीर्थाय नम" इत्येवमुच्चैरुच्चारितस्तुतिः । रत्नसिंहासने पूर्वाभिमुखो न्यषदत्प्रभुः ॥ ६८ ॥

---

१ त्यक्तुमिच्छुः । २ आग्रहात् । ३ सुरविशेषाः । ४ सुखकरं वनविशेषणमिदम् । ५ वायुनिरस्तमेघसमूहवत् । ६ शुद्धं ।

प्रभोश्च प्रतिबिंबानि दिक्ष्वन्यास्वपि नाकिनः[1] । तत्प्रभावेण तद्रूपनिर्विशेषाणि चक्रिरे ॥ ६९ ॥
तत्र चास्थाद्यथास्थानं श्रीमान् संघश्चतुर्विधः । स्वामिन्युत्कंठयोत्कंठः केकिव्रजइवांबुदे ॥ ७० ॥
अथ सौधर्मकल्पेंद्रः प्रणम्य परमेश्वरम् । यथार्थसारया वाचा तुष्टाव स्पष्टभक्तितः ॥ ७१ ॥
निघ्नन् परीषहचमूमुपसर्गान् प्रतिक्षिपन्[2] । प्राप्तोऽसि शमसौहित्यं[3] महतां कापि वैदुषी ॥ ७२ ॥
अरक्तो भुक्तवान् मुक्तिमद्विष्टो हतवान्द्विषः । अहो महात्मनां कोऽपि महिमा लोकदुर्लभः ॥ ७३ ॥
सर्वथा निर्जिगीषेण[4] भीतभीतेन चागसः । त्वया जगत्त्रयं जिग्ये महतां कापि चातुरी ॥ ७४ ॥
दत्तं न किंचित्कस्मैचिन्नात्तं[5] किंचित्कुतश्चन । प्रभुत्वं ते तथाप्येतत्कला कापि विपश्चिताम् ॥ ७५ ॥
यद्देहस्यापि दानेन सुकृतं नार्जितं परैः । उदासीनस्य तन्नाथ पादपीठे तवालुठत् ॥ ७६ ॥
रागादिषु नृशंसेन सर्वात्मसु कृपालुना । भीमकांतगुणेनोच्चैः साम्राज्यं साधितं त्वया ॥ ७७ ॥
महीयसामपि महान् महनीयो[6] महात्मनाम् । अहो मे स्तुवतः स्वामी स्तुतेर्गोचरमागमत् ॥ ७८ ॥
सर्वे सर्वात्मनान्येषु दोषास्त्वयि पुनर्गुणाः । स्तुतिस्तवेयं चेन्मिथ्या तत्प्रमाणं सभासदः ॥ ७९ ॥
भूयो भूयो भवत्पाददर्शनं मे भवत्विति । आशंसामि जगन्नाथ निर्वाणमपि[7] नापरम् ॥ ८० ॥
एवं स्तुत्वा स्थिते शक्रे प्रारेभे धर्मदेशनाम् । पंचत्रिंशदतिशयान्वितया भगवान् गिरा ॥ ८१ ॥
पारावारइवापारः[8] संसारो घोर एष भोः । प्राणिनश्चतुरशीतियोनिलक्षेषु पातयन् ॥ ८२ ॥

---

१ देवाः । २ नाशयन् । ३ शमतृप्तिम् । ४ निर्गता जिगीषा यस्य तेन । ५ गृहीतम् । ६ पूज्यः । ७ मोक्षम् । ८ समुद्रः ।

श्रोत्रियः[1] श्वपचः[2] स्वामी पत्तिर्ब्रह्मा कृमिश्च सः । संसारनाट्ये नटवत् संसारी हंत चेष्टते ॥ ८३ ॥
न याति कतमां योनिं कतमां वा न मुंचति । संसारी कर्मसंबंधादवक्रय[3]कुटीमिव ॥ ८४ ॥
समस्तलोकाकाशेऽपि नानारूपैः स्वकर्मतः । वालाग्रमपि तन्नास्ति यन्नस्पृष्टं शरीरिभिः ॥ ८५ ॥
संसारिणश्चतुर्भेदाः श्वभ्रि[4]तिर्यग्नरामराः । प्रायेण दुःखबहुलाः कर्मसंबंधबाधिताः ॥ ८६ ॥
आद्येषु त्रिषु नरकेषूष्णं शीतं परेषु च । चतुर्थे शीतमुष्णं च दुःखक्षेत्रोद्भवं त्विदम् ॥ ८७ ॥
नरकेषूष्णशीतेषु चेत्पतेल्लोहपर्वतः । विलीयेत विशीर्येत तदा भुवमनाप्नुवन् ॥ ८८ ॥
उदीरितमहादुःखा अन्योऽन्येनासुरैश्च ते । इति त्रिविधदुःखार्ता वसंति नरकावनौ ॥ ८९ ॥
समुत्पन्ना घटीयंत्रेष्वधार्मिकसुरैर्बलात् । आकृष्यंते लघुद्वारा यथा सीसशलाकिका ॥ ९० ॥
गृहीत्वा पाणिपादादौ वज्रकंटकसंकटे । आस्फाल्यंते शिलापृष्ठे वासांसि रजकैरिव ॥ ९१ ॥
दारुदारं[5] विदार्यंते दारुणैः क्रकचैः[6] क्वचित् । तिलपेशं च पिष्यंते चित्रयंत्रैः क्वचित्पुनः ॥ ९२ ॥
पिपासार्त्ताः पुनस्तप्तत्रपुसीसकवाहिनीम् । नदीं वैतरणीं नामावतार्यंते वराककाः[7] ॥ ९३ ॥
छायाभिकांक्षिणः क्षिप्रमसिपत्रवनं गताः । यत्र शस्त्रैः पतद्भिस्ते छिद्यंते तिलशोऽसकृत् ॥ ९४ ॥
संश्लेष्यंते च शाल्मल्यो वज्रकंटकसंकटाः । तप्तायःपुत्रिकाः क्वापि स्मारितान्यवधूरतम् ॥ ९५ ॥
संस्मार्य मांसलोलत्वमाश्यंते मांसमंगजम् । प्रख्याप्य मधुलौल्यं[8] च पाय्यंते तापितं त्रपुः ॥ ९६ ॥

---

१ वेदज्ञब्राह्मणः । २ चांडालः । ३ भाटकरूपवेतनेन गृहीतं गृहम् । ४ नारकः । ५ काष्ठदारणसदृशम् । ६ करपत्रैः । ७ दीनाः ।
८ मदिरासक्तत्वं ।

आष्टुकंडुमहाशूलकुंभीपाकादिवेदनाः । अश्रांतमनुभाव्यंते भृज्यंते च [1]भटित्रवत् ॥ ९७ ॥
छिन्नभिन्नशरीराणां भूयो [2]मिलितवर्ष्मणाम् । नेत्राद्यंगानि कृष्यंते बककंकादिपक्षिभिः ॥ ९८ ॥
एवं महादुःखहताः सुखांशेनापि वर्जिताः । गमयंति बहुं कालमात्रयस्त्रिंशसागरम् ॥ ९९ ॥
तिर्यग्गतिमपि प्राप्ताः संप्राप्यैकेंद्रियादिताम् । तत्रापि पृथिवीकायरूपतां समुपागताः ॥ १०० ॥
हलादिशस्त्रैः पाट्यंते मृद्यंतेऽश्वगजादिभिः । वारिप्रवाहैः प्लाव्यंते दह्यंते च दवाग्निना ॥ १०१ ॥
व्यथ्यंते लवणाचाम्लमूत्रादिसलिलैरपि । लवणक्षारतां प्राप्ताः क्वथ्यंते चोष्णवारिणि ॥ १०२ ॥
पच्यंते कुंभकाराद्यैः कृत्वा [3]कुंभेष्टकादिसात् । चीयंते भित्तिमध्ये च नीत्वा कर्दमरूपताम् ॥ १०३ ॥
केचिच्छाणैर्निघृष्यंते विपच्य क्षारमुत्पुटैः । टंकांकुशैर्विदार्यंते पाट्यंतेऽद्रिसरित्प्लवैः ॥ १०४ ॥
अप्कायतां पुनः प्राप्तास्ताप्यंते तपनांशुभिः । घनीक्रियंते तुहिनैः संशोष्यंते च पांसुभिः ॥ १०५ ॥
क्षारेतररसाश्लेशाद्विपद्यंते परस्परम् । स्थाल्यंतःस्था विपच्यंते पीयंते च पिपासितैः ॥ १०६ ॥
तेजःकायत्वमासाद्य विध्याप्यंते जलादिभिः । घनादिभिः प्रकुट्यंते ज्वाल्यंते चेंधनादिभिः ॥ १०७ ॥
वायुकायत्वमप्याप्ता हन्यंते व्यजनादिभिः । शीतोष्णादिद्रव्ययोगाद्विपद्यंते क्षणेक्षणे ॥ १०८ ॥
प्राचीनाद्यास्तु सर्वेऽपि विराध्यंते परस्परम् । मुखादिवातैर्बाध्यंते पीयंते चोरगादिभिः ॥ १०९ ॥
वनस्पतित्वं दशधा प्राप्ताः कंदादिभेदतः । छिद्यंते वाथ भिद्यंते पच्यंते वाग्नियोगतः ॥ ११० ॥
संशोष्यंते निपिष्यंते पुष्यंतेऽन्योऽन्यघर्षणैः । क्षारादिभिश्च दह्यंते संधीयंते च भोक्तृभिः ॥ १११ ॥

---

१ आष्टपात्रारोपितमांसवत् । २ मिलितशरीराणाम् । ३ कुंभेष्टकाधीनाः ।

सर्वावस्थासु खाद्यंते भज्यंते च प्रभंजनैः[1] । क्रियंते भस्मसाद्दावैरुन्मूल्यंते सरित्प्लवैः ॥ ११२ ॥
सर्वेऽपि वनस्पतयः सर्वेषां भोज्यतां गताः । सर्वैः शस्त्रैः सर्वदानुभवंति क्लेशसंततिम् ॥ ११३ ॥
द्वींद्रियत्वे च ताप्यंते पीयंते पूतरादयः । चूर्ण्यंते कृमयः पादैर्भक्ष्यंते चटकादिभिः ॥ ११४ ॥
शंखादयो निखन्यंते निष्कृष्यंते जलौकसः । गंडूपदाद्याः पात्यंते जठरादौषधादिभिः ॥ ११५ ॥
त्रींद्रियत्वेऽपि संप्राप्ते षट्पदीमत्कुणादयः[2] । विमृद्यंते शरीरेण ताप्यंते चोष्णवारिणा ॥ ११६ ॥
पिपीलिकास्तु तुद्यंते पादैः संमार्जनेन च । अदृश्यमानाः कुंथ्वाद्या मथ्यंते चासनादिभिः ॥ ११७ ॥
चतुरिंद्रियताभाजः सरघा[3]भ्रमरादयः । मधुभक्षै[4]र्विराध्यंते यष्टिलोष्टादिताडनैः ॥ ११८ ॥
ताड्यंते तालवृन्ताद्यैर्द्राग्दंशमशकादयः । ग्रस्यंते गृहगोधाद्यैर्मक्षिकामर्कटा[5]दयः ॥ ११९ ॥
पंचेंद्रिया जलचराः खाद्यंतेऽन्योऽन्यमुत्सुकाः । धीवरैः परिगृह्यंते गिल्यंते च बकादिभिः ॥ १२० ॥
उत्कील्यंते त्वचयद्भिः प्राप्यंते च भटित्रताम्[6] । भोक्तुकामैर्विपाच्यंते[7] निगाल्यंते वसार्थिभिः ॥ १२१ ॥
स्थलचारिषु चोत्पन्ना अबला बलवत्तरैः । मृगाद्याः सिंहप्रमुखैर्मार्यंते मांसकांक्षिभिः ॥ १२२ ॥
मृगयासक्तचित्तैस्तु क्रीडया मांसकाम्यया । नरैस्तत्तदुपायेन हन्यंतेऽनपराधिनः ॥ १२३ ॥
क्षुधापिपासाशीतोष्णातिभारारोपणादिना । कशांकुशप्रतोदैश्च[8] वेदनां प्रसहंत्यमी ॥ १२४ ॥
खेचरास्तित्तिरिशुककपोतचटकादयः । श्येनसिंचानगृध्राद्यैर्ग्रस्यंते मांसगृध्नुभिः[9] ॥ १२५ ॥

---

१ वायुभिः । २ यूकामत्कुणादयः । ३ मधुमक्षिकाः । ४ मधुभक्षकैः पुरुषैः । ५ मर्कट ऊर्णनाभः । ६ शूलेन संस्कृतं मांसं भटित्रं तस्य भावस्तत्ताम् । ७ "खादिभिः" इति पाठांतरम् । ८ अश्वताडनी कशा, वृषताडनः प्रतोदः । ९ मांसलोलुपैः ।

मांसलुब्धैः शाकुनिकैर्नानोपायप्रपंचतः । संगृह्य प्रतिहन्यंते नानारूपैर्विडंबितैः ॥ १२६ ॥
जलाग्निशस्त्रादिभवं तिरश्चां सर्वतोभयम् । कियद्वा वर्ण्यते स्वस्वकर्मबंधनिबंधनम् ॥ १२७ ॥
मनुष्यत्वेऽनार्यदेशे समुत्पन्नाः शरीरिणः । तत्तत्पापं प्रकुर्वंति यद्वक्तुमपि न क्षमम् ॥ १२८ ॥
उत्पन्ना आर्यदेशेऽपि चांडालश्वपचादयः । तत्तत्पापं प्रकुर्वंति दुःखान्यनुभवंति च ॥ १२९ ॥
आर्यदेशे समुत्पन्ना अप्यनार्यविचेष्टिताः । दुःखदारिद्र्यदौर्भाग्यनिर्दग्धा दुःखमासते ॥ १३० ॥
परसंपत्प्रकर्षेणापकर्षेण स्वसंपदाम् । परप्रेष्यतया दग्धा दुःखं जीवंति मानवाः ॥ १३१ ॥
रुग्जरामरणैर्ग्रस्ता नीचैर्कर्मकदर्थिताः । तां तां दुःखदशां दीनाः प्रपद्यंते दयास्पदम् ॥ १३२ ॥
जरा रुजा मृतिर्दास्यं न तथा दुःखकारणम् । गर्भे वासो यथा घोरनरके वाससंनिभः ॥ १३३ ॥
सूचीभिरग्निवर्णाभिर्भिन्नस्य प्रतिरोम यत् । दुःखं नरस्याष्टगुणं तद्भवेद्गर्भवासिनः ॥ १३४ ॥
योनियंत्राद्विनिष्क्रामन् यद्दुःखं लभते भवी । गर्भवासभवाद्दुःखात्तदनंतगुणं खलु ॥ १३५ ॥
बाल्ये मूत्रपुरीषाभ्यां यौवने रतचेष्टितैः । वार्धके श्वासकासाद्यैर्जनो जातु न लज्जते ॥ १३६ ॥
पुरीषसूकरः पूर्वं ततो मदनगर्दभः । जराजरद्गवः पश्चात् कदापि न पुमान् पुमान् ॥ १३७ ॥
स्याच्छैशवे मातृमुखस्तारुण्ये तरुणीमुखः । वृद्धभावे सुतमुखो मूर्खो नात्ममुखः क्वचित् ॥ १३८ ॥
सेवाकर्षणवाणिज्यपाशुपाल्यादिकर्मभिः । क्षपयत्यफलं जन्म धनाशाविह्वलो जनः ॥ १३९ ॥

---

१ पक्षिहंतृभिः । २ सेवया । ३ नीचकर्मभिर्दूषिताः । ४ मैथुनचेष्टाभिः । ५ "नान्तर्मुखः" इति पाठान्तरं।

क्वचिच्चौर्यं क्वचिद् द्यूतं क्वचिन्नीचैर्भुजंगता । मनुष्याणां यथा भूयो भवभ्रमनिबंधनम् ॥ १४० ॥
सुखित्वे कामदलितैर्दुःखित्वे दैन्यरोदनैः । नयंति जन्ममोहांधा न पुनर्धर्मकर्मभिः ॥ १४१ ॥
अनंतकर्मप्रचयक्षयक्षममिदं क्षणात् । मानुषत्वमपि प्राप्ताः पापाः पापानि कुर्वते ॥ १४२ ॥
ज्ञानदर्शनचारित्ररत्नत्रितयभाजने । मनुजत्वे पापकर्म स्वर्णभांडे सुरोपमम् ॥ १४३ ॥
संसारसागरगतैः शमिलायुगयोगवत् । लब्धं कथंचिन्मानुष्यं हा रत्नमिव हार्यते ॥ १४४ ॥
लब्धे मानुष्यके स्वर्गमोक्षप्राप्तिनिबंधने । हा नरकाद्युपायेषु कर्मसूत्तिष्ठते जनः ॥ १४५ ॥
आशास्यते यत्प्रयत्नादनुत्तरसुरैरपि । तत्संप्राप्तं मनुष्यत्वं पापैः पापेषु योज्यते ॥ १४६ ॥
परोक्षं नरके दुःखं प्रत्यक्षं नरजन्मनि । तत्प्रपंचः प्रपंचेन किमर्थमुपवर्ण्यते ॥ १४७ ॥
शोकामर्षविषादेर्ष्यादैन्यादिहतबुद्धिषु । अमरेष्वपि दुःखस्य साम्राज्यमनुवर्तते ॥ १४८ ॥
दृष्ट्वा परस्य महतीं श्रियं प्राग्जन्मजीवितम् । अर्जितस्वल्पसुकृतं शोचंति सुचिरं सुराः ॥ १४९ ॥
चिराद्धा बलिनान्येन प्रतिकर्तुं तमक्षमाः । तीक्ष्णेनामर्षशल्येन दोदूयंते निरंतरम् ॥ १५० ॥
न कृतं सुकृतं किंचिदाभियोग्यं ततो हि नः । दृष्टोत्तरोत्तरश्रीका विषीदंतीति नाकिनः ॥ १५१ ॥
दृष्ट्वान्येषां विमानस्त्रीरत्नोपवनसंपदम् । यावज्जीवं विपच्यंते ज्वलदीर्ष्यानलोर्मिभिः ॥ १५२ ॥
हा प्राणेश प्रभो देव प्रसीदेति सगद्गदम् । परैर्मूषितसर्वस्वा भाषंते दीनवृत्तयः ॥ १५३ ॥

---

१ अनंतकर्मणां प्रचयः समूहस्तस्य क्षये क्षमम् । २ जीवितविशेषणमिदम् । ३ दासत्वम् ।

प्राप्तेऽपि पुण्यतः स्वर्गे कामक्रोधभयातुराः । न स्वस्थतामश्नुवते सुराः कांदर्पिकादयः ॥ १५४ ॥
अथ च्यवनचिह्नानि दृष्ट्वा दृष्ट्वा विमृश्य च । विलीयंतेऽथ जल्पंति क निलीयामहे वयम् ॥ १५५ ॥
तथाहि ॥ अम्लाना अपि हि मालाः सुरद्रुमसमुद्भवाः । म्लानीभवंति देवानां वदनांभोरुहैः समम् ॥ १५६ ॥
हृदयेन समं विश्वग्विश्लिष्यत्संधिबंधनाः । महाबलैरप्यकंप्याः कंपंते कल्पपादपाः ॥ १५७ ॥
आकालप्रतिपन्नाभ्यां प्रियाभ्यां च सहैव हि । श्रीह्रीभ्यां परिमुच्यंते कृतागस इवामराः ॥ १५८ ॥
अंबरश्रीरपमला मलिनीभवति तत्क्षणात् । अप्यकस्माद्विसृमरैरघौघैर्मलिनैर्घनैः ॥ १५९ ॥
अदीना अपि दैन्येन विनिद्रा अपि निद्रया । आश्रीयंते मृत्युकाले पक्षाभ्यामिव कीटिकाः ॥ १६० ॥
विषयेष्वतिरज्यंते न्यायधर्मविबाधया । अपथ्यान्यपि यत्नेन स्पृहयंति मुमूर्षवः ॥ १६१ ॥
नीरुजामपि भज्यंते सर्वांगोपांगसंधयः । भाविदुर्गतिपातोत्थवेदनाविवशा इव ॥ १६२ ॥
पदार्थग्रहणेऽकस्माद्भवंत्यपटुदृष्टयः । परेषां संपदुत्कर्षमिव प्रेक्षितुमक्षमाः ॥ १६३ ॥
गर्भवासनिवासोत्थदुःखागमभयादिव । प्रकंपतरलैरंगैर्भापयंति परानपि ॥ १६४ ॥
निश्चितच्यवनाश्चिन्हैर्लभंते न रतिं क्वचित् । विमाने नंदने वाप्यामंगारालिंगिता इव ॥ १६५ ॥
हा प्रिया हा विमानानि हा वाप्यो हा सुरद्रुमाः । क दृष्टव्याः पुनर्यूयं हतदैववियोजिताः ॥ १६६ ॥
अहो स्मितं सुधावृष्टिरहो बिंबाधरः सुधा । अहो वाणी सुधावर्षिण्यहो कांता सुधामयी ॥ १६७ ॥

---

१ कामवृद्धिकारकाः । २ विश्लिष्यंति त्रुट्यंति संधिबंधनानि येषाम् । ३ जन्मत आरभ्य प्राप्ताभ्याम् । ४ कृतापराधाः । ५ नभःशोभा । ६ प्रसरद्भिः । ७ पापसमूहैः । ८ न्यायधर्मयोर्विबाधया ।

बिभ्रत्पाणी नकुलाक्षसूत्रिणौ दक्षिणेतरौ । सदा सन्निधिवर्त्यासीद्भर्तुः शासनदेवता ॥ १८१ ॥
युग्मम् ।

तथोत्पन्नाऽच्युता नाम श्यामांगी नरवाहना । बिभ्राणा दक्षिणौ बाहुदण्डौ वरदपाशिनौ ॥ १८२ ॥
वामौ च कार्मुकधरावभयदौ बिभ्रती भुजौ । पद्मप्रभजिनेन्द्रस्याभवच्छासनदेवता ॥ १८३ ॥
अमुक्तसंनिधिस्ताभ्यां विश्वानुग्रहकाम्यया । विजहार जगत्स्वामी ग्रामाकरपुरादिषु ॥ १८४ ॥
साधूनां त्रीणि लक्षाणि सहस्राख्रिंशदेव च । साध्वीनां च चतुर्लक्षी सहस्राणि च विंशतिः ॥ १८५ ॥
चतुर्दशपूर्वधराणां द्वे सहस्रे शतत्रयम् । अवधिज्ञानवतां च सहस्राणि पुनर्दश ॥ १८६ ॥
मनःपर्ययिणां त्रीणि शतान्ययुतमेव च । सहस्राणि द्वादश तु केवलज्ञानशालिनाम् ॥ १८७ ॥
वैक्रियलब्धिसहस्राः षोडशाष्टोत्तरं शतम् । वादलब्धिधराणां तु सहस्रा नव षट्शती ॥ १८८ ॥
श्रावकाणामुभे लक्षे षट्सप्ततिसहस्र्यपि । श्राविकाणां पुनः पंच लक्षाः पंच सहस्र्यपि ॥ १८९ ॥
परिवारोऽभवद्भर्तुः केवलज्ञानकालतः । षण्मास्या षोडशांग्योनं पूर्वलक्षं विहारिणः ॥ १९० ॥
मोक्षकालमथासन्नं विदित्वा परमेश्वरः । संमेताद्रिं जगामाथानशनं मासिकं व्यधात् ॥ १९१ ॥
मार्गशीर्षे च कृष्णैकादश्यां चित्रास्थिते विधौ । क्षीणशेषचतुष्कर्मा सिद्धानंतचतुष्टयः ॥ १९२ ॥
मुनीनामनशनिनां शतैस्त्र्यग्रैः सहाष्टभिः । ध्यानाच्चतुर्थाच्चतुर्थं पुमर्थमगमत्प्रभुः ॥ १९३ ॥ युग्मम् ।

१ शुक्लध्यानात् । २ मोक्षम् ।

अर्धाष्टमाः पूर्वलक्षाः कौमारे षोडशांगयुक् । पूर्वलक्षाणां साधैकविंशती राज्यपालने ॥ १९४ ॥
अंगैः षोडशभिर्न्यूनं पूर्वलक्षं पुनर्व्रते । इति त्रिंशत्पूर्वलक्षाण्यायुः पद्मप्रभप्रभोः ॥ १९५ ॥
सुमति स्वामिनिर्वाणान्मोक्षः पद्मप्रभप्रभोः । गतेष्वर्णवकोटीनां सहस्रेषु नवस्वभूत् ॥ १९६ ॥

इंद्राश्चतुःषष्टिरुपेत्य तत्र प्रभोर्मुनीनामपि भक्तिभाजः ।
शरीरसंस्कारमकार्षुरुच्चैर्निर्वाणकल्याणमहोत्सवं च ॥ १९७ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये तृतीये पर्वणि पद्मप्रभस्वामिचरितवर्णनो नाम चतुर्थः सर्गः संपूर्णः ॥

# पंचमः सर्गः ।

## श्री सुपार्श्वनाथचरित्रं ।

श्रीसुपार्श्वजिनेंद्रस्य पांतु वो देशनागिरः । उद्वेलकेवलज्ञानसमुद्रस्येव वीचयः ॥ १ ॥
चरितं श्रीसुपार्श्वस्य वक्ष्येऽहं सप्तमार्हतः । कुबोधध्वांतसुदिनमशेषाणां शरीरिणाम् ॥ २ ॥
धातकीखंडद्वीपस्य प्राग्विदेहविशेषके । विजये रमणीयेऽस्ति नाम्ना क्षेमपुरी पुरी ॥ ३ ॥
तत्रासीज्जगदानंदी नंदिषेणो नरेश्वरः । दिनेश्वरइव श्रीमांस्तेजसामेकमास्पदम् ॥ ४ ॥
अशेषराज्यव्यापारे जागरूकस्य सर्वदा । तस्य प्रधान्यभूद्धर्मो दोर्दंडइव दक्षिणः ॥ ५ ॥
निघ्नतः कंटकीभूताञ्जनतासुखहेतवे । तस्य कोपोऽपि धर्माय किं पुनः प्रस्तुताः क्रियाः ॥ ६ ॥
अहो आश्चर्यमनिशं स्मृतिगोचरतां गतः । श्रीवीतरागो भगवांस्तस्य हृच्छयतां ययौ ॥ ७ ॥
आर्त्तानामर्त्तिहरणे स शरण्यः सदाऽभवत् । स्मरातुरपरस्त्रीणां न कदापि कथंचन ॥ ८ ॥
कालेन गच्छता सोऽथ भवोद्विग्नो महामनाः । गत्वारिंदमनाचार्यांतिके दीक्षामुपाददे ॥ ९ ॥
स व्रतं पालयंस्तीक्ष्णं स्थानकैः कैश्चिदप्यथ । तीर्थकृन्नाम कर्मोपार्जयामास महामुनिः ॥ १० ॥
ततो विधायानशनं समये स महामतिः । मृत्वा ग्रैवेयके षष्ठे महर्द्धिरमरोऽभवत् ॥ ११ ॥

---

१ कुबोध एव ध्वांतस्तस्मिन् सुदिनं शुभदिवसः । २ सूर्यः । ३ हृदि शेत इति हृच्छयः तस्य भावस्तत्ता ताम् ।

दत्से समस्तकल्याणैर्यत्सुखं श्वभ्रिणामपि । तिर्यङ्नरामराणां तत्कथं नासि सुखप्रदः ॥ ४० ॥
अप्युद्योतो जगत्त्रय्यामस्मिञ्जन्मोत्सवे तव । उदेष्यत्केवलज्ञानतरणेररुणायते ॥ ४१ ॥
त्वत्प्रसादस्य संपर्कादिवैताः ककुभोऽखिलाः । प्रसादं कलयामासुरधुना परमेश्वर ॥ ४२ ॥
अमी च वांति सुखदाः पवनाः पावनाकृते । सुखदे त्वयि नाथे हि जगतां कः प्रतीपकृत् ॥ ४३ ॥
धिग्नः प्रमादिनो धन्यान्यासनान्यपि तानि नः । देव त्वज्जन्मकल्याणं चलित्वाऽज्ञापि यैः क्षणात् ॥४४॥
निदानं देव बध्नामि निषिद्धमपि संप्रति । त्वद्दर्शनफलं मेऽस्तु त्वयि भक्तिर्निरंतरा ॥ ४५ ॥
स्तुत्वैवं प्रभुमादाय शक्रः सत्वरमेत्य च । मुमोचालक्षितं पृथ्वीदेव्याः पार्श्वे यथास्थिति ॥ ४६ ॥
प्राणिनः प्रीणयन् कारामोक्षणादिभिरद्भुतैः । महोत्सवं नृपोऽकार्षीदानंदफलपादपम् ॥ ४७ ॥
गर्भस्थेऽस्मिन्सुपार्श्वाभूज्जननी यत्ततः प्रभोः । सुपार्श्व इत्यभिधानं प्रतिष्ठः प्रत्यतिष्ठिपत् ॥ ४८ ॥
शक्रसंक्रमितांगुष्ठसुधापो ववृधे प्रभुः । सुधांधसामपि वंद्या अर्हतोऽस्तन्यपा यतः ॥ ४९ ॥
उत्तीर्योत्तीर्य चोत्संगाच्चापलाच्छैशवोचितात् । [7]वंचंवंचं मुहुर्धात्रीश्चिक्रीडेतस्ततः प्रभुः ॥ ५० ॥
पणपूर्वं क्रीडतश्च मर्त्यरूपान् सुरान् प्रभुः । जिगाय लीलया शक्ताः क्रीडायामपि केऽर्हताम् ॥ ५१ ॥
शैशवं व्यतिचक्राम क्रमेण परमेश्वरः । क्रीडन् विचित्रक्रीडाभिस्त्रियामामिव कामुकः ॥ ५२ ॥
धनुःशतद्वयोत्तुंगः सर्वलक्षणलक्षितः । प्रपेदे यौवनं स्वामी भूषणं रूपसंपदः ॥ ५३ ॥

२ उदयं प्राप्स्यत् यत्केवलज्ञानं तदेव तरणिः सूर्यस्तस्य । ३ दिशः । ४ प्रतिकूलकृत् । ५ चकार।
१ नारकाणामपि । ६ देवानां । ७ वंचयित्वा वंचयित्वा । ८ प्रतिज्ञापूर्वकं । ९ रात्रिम्।

दाक्षिण्येन प्रभुः पित्रोर्नृपपुत्रीरुपायत[1] । अपि त्रिलोकनाथानां मान्यं हि पितृशासनम् ॥ ५४ ॥
भोग्यं कर्म क्षपयितुं रमणीभिः समं विभुः । अरंस्त भगवंतो हि कर्मछेदाय तत्पराः ॥ ५५ ॥
ततो गतेषु कौमारे पूर्वलक्षेषु पंचसु । अभ्यर्थ्यारोपितं पित्रा प्रभुर्भूभारमुद्दधे ॥ ५६ ॥
विंशत्यंगैः समधिकाः पूर्वलक्षाश्चतुर्दश । व्यतीयाय जगन्नाथः पृथिवीं परिपालयन् ॥ ५७ ॥
उपलक्ष्य च संसारविरक्तं स्वामिनो मनः । उपस्वाम्याययुर्[2]ब्रह्मलोकाल्लोकांतिकामराः ॥ ५८ ॥
न बोध्यसे स्वयंबुद्धः स्वभक्त्या स्मार्यसे पुनः । तीर्थं प्रवर्तय स्वामिन्नित्युक्त्वा ते दिवं ययुः ॥ ५९ ॥
सुपार्श्वस्वाम्यपि ततो दीक्षादानोत्सवोत्सुकः । दानचिंतामणिर्दानं ददौ संवत्सरावधि ॥ ६० ॥
सांवत्सरिकदानांते वासवैश्चलितासनैः । दीक्षाभिषेको विदधे सुपार्श्वस्वामिनस्ततः ॥ ६१ ॥
अथो मनोहरां नाम नानारत्नमनोहराम् । अध्यारुरोह शिबिकां शिवंगामी[3] जगत्पतिः ॥ ६२ ॥
अन्वीयमानो[4] भगवान् सुरासुरनरेश्वरैः । सहस्राम्रवणं नाम जगामोपवनोत्तमम् ॥ ६३ ॥
त्रिजगद्भूषणं स्वामी तत्रोज्झद्भूषणादिकम् । शक्रन्यस्तं देवदूष्यं स्कंधदेशे दधार च ॥ ६४ ॥
ज्येष्ठशुक्लत्रयोदश्यां राधायां पश्चिमेऽहनि । समं नृपसहस्रेण षष्ठेन प्राव्रजत्प्रभुः ॥ ६५ ॥
मनःपर्ययमुत्पेदे तुर्यं ज्ञानं जगत्पतेः । नारकाणामपि तदा सुखं क्षणमजायत ॥ ६६ ॥
पाटलीखंडनगरे महेन्द्रनृपसद्मनि । द्वितीयेऽह्नि प्रभुश्चक्रे परमान्नेन पारणम् ॥ ६७ ॥
विदधुर्वसुधारादि देवाश्चाद्भुतपंचकम् । रत्नपीठं महेन्द्रस्तु यत्र तस्थौ जगत्पतिः ॥ ६८ ॥

---

१ परिणिनाय । २ स्वामिनः समीपम् । ३ शिवं मोक्षं गच्छतीति अथवा शिवं गमिष्यतीति भविष्यदर्थे । ४ अनुगम्यमानः ।

अथ सौधर्मकल्पेंद्रः प्रणम्य परमेश्वरम् । विरचय्यांजलिं मूर्ध्नि स्तोतुमेवं प्रचक्रमे ॥ ७३ ॥
निःशेषभुवनकोशपद्मकोशविवस्वते । तुभ्यं नमो भगवते श्रीमते सप्तमार्हते ॥ ७४ ॥
गतं दुःखेन विश्वस्याविर्भूतं च मुदा प्रभो विश्वं । तीर्थपरावृत्त्या परावृत्तमिवाधुना ॥ ७५ ॥
धर्मचक्रिंस्तववचोरत्नदंडेन भास्वता । निर्वाणवैताढ्यगिरेर्द्वारमद्योद्घटिष्यते ॥ ७६ ॥
उन्नतस्येव मेघस्य भगवन् दर्शनं तव । विश्वस्य जीवलोकस्य संतापच्छेदनान्मुदे ॥ ७७ ॥
अनंतज्ञान भगवन् देशनावचनं तव । दरिद्रैर्द्रविणमिव चिरादस्माभिराप्स्यते ॥ ७८ ॥
कृतार्था दर्शनेनापि तवाद्य वचनेन तु । विशेषतो भविष्यामो मुक्तिद्वारप्रकाशिना ॥ ७९ ॥
अनंतदर्शनज्ञानवीर्यानंदमयात्मने । सर्वातिशयपात्राय तुभ्यं योगात्मने नमः ॥ ८० ॥
इंद्रादिपदवीप्राप्तिः कियदेतज्जगत्पते । तव शुश्रूषया यस्मात् त्वादृशैरपि भूयते ॥ ८१ ॥
इति स्तुत्वा द्युसन्नाथे तूष्णीकत्वमुपेयुषि । प्रारेभे भगवानेवं सर्वज्ञो धर्मदेशनाम् ॥ ८२ ॥
आत्मनः सर्वमप्येतदन्यत्तदिह तत्कृते । कृत्वा कर्म भवाब्धौ स्वं पातयत्यबुधो जनः ॥ ८३ ॥
यत्रान्यत्वं शरीरस्य वैसदृश्याच्छरीरिणः । धनबंधुसहायानां तत्रान्यत्वं न दुर्वचम् ॥ ८४ ॥
यो देहधनबंधुभ्यो भिन्नमात्मानमीक्षते । क्व शोकशंकुना तस्य हंतातंकः प्रतन्यते ॥ ८५ ॥

---

१ समग्रभुवनकोश एव पद्मकोशस्तस्मिन् विवस्वान् सूर्यः तस्मै । २ दीप्तिमता, सूर्येण च । ३ हर्षाय । ४ द्रव्यम् । ५ आत्मना वैलक्षण्यात् । ६ भयम् ।

तत्तीर्थजन्मा मातंगो नीलांगो गजवाहनः । बिल्वधरं पाशधरं बिभ्राणो दक्षिणौ करौ ॥ ११० ॥
दधद्वामौ च दोर्दंडौ नकुलांकुशधारिणौ । सुपार्श्वस्वामिनः पार्श्वेऽभवच्छासनदेवता ॥ १११ ॥
तथोत्पन्ना शांतादेवी स्वर्णरुग्गजवाहना । वरदं साक्षसूत्रं च बिभ्राणा दक्षिणौ भुजौ ॥ ११२ ॥
सशूलाभयदौ बाहू दधाना दक्षिणेतरौ । भर्तुः शासनदेव्यासीत्सदा संनिधिवर्तिनी ॥ ११३ ॥
विजहार ततोऽन्यत्र स्वामी ग्रामपुरादिषु । बोधयन् भव्यभविनः पंकजानीव भास्करः ॥ ११४ ॥
साधुत्रिलक्षी साध्वीनां सहात्रिंशतसहस्रिका । चतुर्लक्षी पूर्विणां तु सहस्रौ त्रिंशदन्वितौ ॥ ११५ ॥
सहस्राणि नव पुनरवधिज्ञानधारिणाम् । सार्धैकनवतिशती मनःपर्ययशालिनाम् ॥ ११६ ॥
एकादशसहस्राणि केवलज्ञानिनां पुनः । वैक्रियलब्धिसहस्राः पंचदश त्रिशत्यपि ॥ ११७ ॥
अष्टौ च वादलब्धीनां सहस्राः सचतुःशताः । द्वे लक्षे सप्तपंचाशत् सहस्राः श्रावकाः पुनः ॥ ११८ ॥
श्राविकाणां पंचलक्षी सहस्रैः सप्तभिर्वियुक् । परिवारेऽभवन् भर्तुः पृथ्वीं विहरतः सतः ॥ ११९ ॥
आ केवलान्नवमास्या विंशत्यंग्या च वर्जिते । पूर्वलक्षे गते स्वामी गत्वा संमेतपर्वतम् ॥ १२० ॥
जगत्स्वामी समं तत्र मुनीनां पंचभिः शतैः । तपः प्रपेदेऽनशनं सेव्यमानः सुरासुरैः ॥ १२१ ॥
युग्मम् ॥
मासांते फाल्गुने कृष्णसप्तम्यां मूलगे विधौ । समं तैर्मुनिभिः स्वामी जगाम पदमव्ययम् ॥ १२२ ॥

---

१ न्यूना ।

पंचलक्षाणि कौमारे पृथिवीपालने पुनः । युक्ता विंशतिपूर्वांग्या पूर्वलक्षाश्चतुर्दश ॥ १२३ ॥
न्यूनं विंशतिपूर्वांग्या पूर्वलक्षं पुनर्व्रते । इत्यायुः श्रीसुपार्श्वस्य पूर्वलक्षाणि विंशतिः ॥ १२४ ॥
श्रीपद्मप्रभनिर्वाणात् सुपार्श्वस्वामिनिर्वृतिः । गतेष्वर्णवकोटीनां सहस्रेषु नवस्वभूत् ॥ १२५ ॥

अच्युतप्रभृतयोऽथ सुरेंद्राः स्वामिनो मुनिजनस्य च तस्य ।
अग्निसंस्करणपूर्वमकुर्वन् मोक्षपर्वमहिमानमखर्वम् ॥ १२६ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये तृतीये पर्वणि सुपार्श्वस्वामिचरितवर्णनो नाम पंचमः सर्गः ॥ ५ ॥

# षष्ठः सर्गः ।

## श्रीचंद्रप्रभचरित्रम् ।

ॐ ॥ वंदे ध्वंस्तमहामोहध्वांतामानंददायिनीम् । चंद्रप्रभामिव गिरं चंद्रप्रभजिनप्रभोः ॥ १ ॥
चरितं कीर्तयिष्यामि चंद्रप्रभजिनेशितुः । भव्यानां भविनां मोहहिमान्यर्कातपोपमम् ॥ २ ॥
धातकीखंडद्वीपस्य प्राग्विदेहस्य मंडने । विजये मंगलावत्यामस्ति पूरत्नसंचया ॥ ३ ॥
पद्मो राजाऽभवत्तस्यां पद्मायाः पद्मवद्गृहम् । भोगावत्यां भोगिराजइवोर्जितपराक्रमः ॥ ४ ॥
सेव्यमानोऽपि गंधर्वैर्दिव्यसंगीतकारिभिः । अत्यप्सरोभिर्वारस्त्रीजनैश्च परिवारितः ॥ ५ ॥
दिव्यांगरागनेपथ्यदुकूलैश्च मनोरमैः । विभूष्यमाणसर्वांगश्रीविशेषोऽपि सर्वदा ॥ ६ ॥
भूमिपालैः पाल्यमानशासनोऽपि दिवा निशम् । नित्यमक्षीणकोशोऽपि सदा सुस्थप्रजोऽपि हि ॥ ७ ॥
सर्वथा दुःखलेशस्याप्यनास्पदतया स्थितः । संसारवासवैराग्यं स भेजे तत्त्वविद्वरः ॥ ८ ॥

चतुर्भिः कलापकम् ।

भवस्य छेदनायाथ गिरेरिव पविं हरिः । अग्रहीत्स परिव्रज्यां युगंधरगुरोः पुनः ॥ ९ ॥
विविधाभिग्रहो दांतो विहितेंद्रियनिग्रहः । स्वविग्रहेऽप्यनाकांक्षश्चिरं सोऽपालयद्व्रतम् ॥ १० ॥
महारत्नं महामूल्यैरिव स्थानैस्तु कैरपि । दुरर्जमर्जयामास तीर्थकृन्नाम कर्म सः ॥ ११ ॥

---

१ ध्वस्तो महामोह एव ध्वान्तो यया ताम् । २ मोह एव हिमानी तस्यां सूर्यातपसमानम् । ३ लक्ष्म्याः । ४ इंद्रः । ५ अनासक्तः ।

कालेन क्षपयित्वायुर्व्रतद्रोः[1] प्रथमं फलम् । विमानं वैजयंताख्यं स जगाम महातपाः ॥ १२ ॥
इतश्च जंबूद्वीपेऽस्मिन् क्षेत्रे च भरताभिधे । पुरी चंद्राननेत्यस्ति क्षितेराननसंनिभा ॥ १३ ॥
तस्यामनेकरत्नाढ्या विभात्यापणवीथिका । उद्रेचितांभोविभवं[2] भांडमंभोनिधेरिव ॥ १४ ॥
नानाकाराण्यगाराणि[3] नानावर्णानि तत्र च । अदभ्राणीव[4] संध्याभ्राण्यवतीर्णानि भूतले ॥ १५ ॥
तदुद्यानेषु दृश्यंते चारणाः[5] प्रतिमास्थिताः । आशिरःपादनिष्कंपाः[6] पुंरूपा इव पर्वताः ॥ १६ ॥
तस्यां च वासागारेषु रत्नेषु[7] प्रतिबिंबितैः । स्वैरेव केयमन्येति कुप्यंति प्रेयसि स्त्रियः ॥ १७ ॥
तस्यामासीन्महासेनः सेनाछन्नमहीतलः । महीपतिः पतिरपामिवाधृष्यशिरोमणिः ॥ १८ ॥
तद्विक्रमस्य समभूद्भक्तो भृत्यइवानिशम् । प्रतापस्तत्क्रियां कुर्वन्नुर्वीविजयलक्षणाम् ॥ १९ ॥
अलंघ्यशासने तस्मिन् शासत्यवनिमंडलम् । अभूदाजन्मविरतः परस्वहरणे जनः ॥ २० ॥
अलब्धमध्योऽब्धिरिव शशीवातिमनोरमः । कल्पद्रुरिव दानेंदु[8] इवाधीशश्च सोऽभवत् ॥ २१ ॥
कपाटपृथुले तस्योरःस्थलेऽनन्यमानसा । हंसीव गंगापुलिने रमा रेमे निरंतरम् ॥ २२ ॥
तस्यासील्लक्ष्मणा नाम पत्नी संपूर्णलक्षणा । मुखलक्ष्म्यातिहारिण्या विजेत्री शशलक्ष्मणः ॥ २३ ॥
लावण्यपुरमसमं सर्वांगीणं दधत्यपि । पीयूषमेव सावर्षद्दृशापि च गिरापि च ॥ २४ ॥
सा स्थलांभोरुहाणीव विकचानि पदे पदे । पादाभ्यां रोपयामास विचरंत्यंतिमंथरम्[9] ॥ २५ ॥

---

१ व्रतवृक्षस्य । २ उद्रेचितोऽधिकवृद्धः अंभोविभवो यस्य । ३ गृहाणि । ४ अनल्पानि । ५ गगनचारिमुनयः । ६ शिरसः आरभ्य पादपर्यंतं कंपरहिताः । ७ रत्नमयेषु । ८ चंद्रस्य । ९ अतिमन्दम् ।

तस्या भ्रुवोश्च गत्यां च कौटिल्यं न तु चेतसि । मध्यप्रदेशे तुच्छत्वं न पुनर्मतिसंपदि ॥ २६ ॥
तस्या गुणचमूं सर्वामपि सर्वातिशायिनीम् । अलंचकार सेनानीरिव शीलगुणो महान् ॥ २७ ॥
इतश्च वैजयंतस्थः स जीवः पद्मभूपतेः । त्रयस्त्रिंशत्पयोराशिसंख्यमायुरपूरयत् ॥ २८ ॥
च्युत्वा च लक्ष्मणादेव्याः कुक्षाववततार सः । चैत्रस्य कृष्णपंचम्यामनुराधागते विधौ ॥ २९ ॥
तदानीं लक्ष्मणादेवी तीर्थकृज्जन्मसूचकान् । चतुर्दश महास्वप्नान् सुखसुप्ता निरैक्षत ॥ ३० ॥
तं रत्नं रत्नगर्भेव रत्नसर्वस्वमुज्ज्वलम् । सुखेन धारयामास लक्ष्मणादेव्यलक्षितम् ॥ ३१ ॥
पौषस्य कृष्णद्वादश्यामनुराधास्थिते विधौ । चंद्रांकं चंद्रवर्णं च सुतरत्नमसूत सा ॥ ३२ ॥
तदा चासनकंपेन ज्ञात्वा जन्माष्टमार्हतः । सूतिकाकर्म चक्रुः षट्पंचाशद्दिक्कुमारिकाः ॥ ३३ ॥
जन्मस्नात्रोत्सवं चक्रे मुदा सौधर्मवासवः । अनैषीन्मेरुशिरसि स्वामिनं सुमनोवृतः ॥ ३४ ॥
अतिपांडुकंबलायां शिलायां परमेश्वरम् । विधायांके निषसाद रत्नसिंहासने हरिः ॥ ३५ ॥
अथाच्युतप्रभृतयस्त्रिषष्टिरपि वासवाः । स्वामिनं स्नपयामासुरानुपूर्व्योल्लसन्मुदः ॥ ३६ ॥
ईशानेंद्रांकपर्यंके निवेश्य स्वामिनं ततः । शक्रोऽपि स्नपयामास वृषशृंगोत्थितैर्जलैः ॥ ३७ ॥
दिव्यांगरागनेपथ्यवस्त्रैरभ्यर्च्य भक्तितः । भगवंतमिति स्तोतुमारेभे पाकशासनः ॥ ३८ ॥
त्वामनंतगुणं स्तोतुं प्रवृत्तोऽस्मि हसास्पदम् । आधारबुध्या गगनस्योत्पाद इव टिट्टिभः ॥ ३९ ॥

---

१ महीव । २ देवैः परिवृतः । ३ अनुक्रमेण । ४ ईशानेंद्रस्यांक एव पर्यंकस्तस्मिन् । ५ हास्यस्थानमस्मि ।

व्यापिप्रज्ञस्त्वत्प्रभावात्क्षमोऽस्मि नु तव स्तवे[1]। दिशोऽश्नुतेऽभ्रलेशोऽपि[2] पौरस्त्यानिलसंगमात्[3] ॥ ४० ॥
भविना दृष्टमात्रो वा ध्यातमात्रोऽपि वा प्रभो। कर्मपाशच्छेदनायापूर्वशस्त्रं किमप्यसि ॥ ४१ ॥
शुभानां कर्मणामद्य जगत्यभ्युदयः खलु। पंकजानामिवादित्ये त्वयि विश्वतमश्छिदि[4] ॥ ४२ ॥
निजं फलमदत्वापि गलिष्यत्यशुभं मम। शेफालिकापुष्पमिव निशाकरकराहतम् ॥ ४३ ॥
प्रव्रज्याधारि रूपं ते दूरे विश्वाभयप्रदम्। मूर्त्यानयापि भगवन् दुःखं हरसि जन्मिनाम् ॥ ४४ ॥
कर्माणि भवमूलानि छेत्तुमभ्यागमः प्रभो। द्रुमानिवोन्मूलयितुं वने मत्तमतंगजः[5] ॥ ४५ ॥
अलंकारो यथा मुक्ताहारादिर्हृदयस्य मे। बहिरेष तथांतस्त्वं भूयास्त्रिभुवनेश्वर ॥ ४६ ॥
स्तुत्वेति प्रभुमीशानादादाय च पुरंदरः। नीत्वा च लक्ष्मणादेवीपार्श्वेऽमुंचद्यथाविधि ॥ ४७ ॥
महीपतिर्महासेनोऽप्यथाकार्षीन्महोत्सवम्। अन्यत्राप्युत्सवायैव जातोऽर्हन् किं पुनर्गृहे ॥ ४८ ॥
गर्भस्थेऽस्मिन् मातुरासीच्चंद्रपानाय दोहदः। चंद्राभश्चैष इत्याह्वच्चंद्रप्रभममुं पिता ॥ ४९ ॥
ज्योत्स्नागौरप्रभापूरपरिवेषमनोरमम्। वैजयंतस्थितस्येव रूपं भर्तुः शिशोर्बभौ ॥ ५० ॥
लतानामिव धात्रीणामाकर्षन् पाणिपल्लवान्। दिने दिने कलाभेवद्ववृधे परमेश्वरः ॥ ५१ ॥
अप्राप्तं देवभावेऽपि स्वेच्छाप्राप्तमिव प्रभुः। बालत्वमन्वभूज्ज्ञानत्रयभागपि मुग्धवत् ॥ ५२ ॥
नानाविधाभिः क्रीडाभिर्ललंघे शैशवं विभुः। कथाभिरतिरम्याभिः पंथानं पथिको यथा ॥ ५३ ॥
शिशुत्वसरितः पारं स्त्रीवशीकारकार्मणम्। प्रपेदे यौवनं स्वामी सार्धधन्वशतोन्नतिः ॥ ५४ ॥

---

१ स्तुतौ। २ अल्पोऽपि मेघः। ३ पूर्वदिग्वायुसंगात्। ४ विश्वस्य तमोऽज्ञानमंधकारश्च तच्छिनत्ति तस्मिन्। ५ गजबालवत्।

विदन् भोगफलं कर्मादेशं पित्रोश्च पालयन् । जगत्पतिरुपायंस्तानुरूपा राजकन्यकाः ॥ ५५ ॥
पूर्वलक्षद्वये सार्धे जन्मतोऽतिगते सति । पितृभ्यामर्थितोऽत्यर्थं चतुर्विंशांगसंयुताः ॥ ५६ ॥
पूर्वलक्षास्तु षट् सार्धा अनैषीत्पालयन्महीम् । अनध्यायमिवाध्यायरतो दीक्षोत्सुकः प्रभुः॥५७॥युग्मम्॥
आयुक्तैरिव मौहूर्त्तैरथ लोकांतिकामरैः । अज्ञापि दीक्षासमयं स्वयं जानन्नपि प्रभुः ॥ ५८ ॥
आढ्यो विव्रजिषुरिव प्रविव्रजिषुरुच्चकैः । दानं प्रदातुमारेभे स्वामी संवत्सरावधि ॥ ५९ ॥
संवत्सरांते चलितासनैरेत्य सुरेश्वरैः । दीक्षाभिषेको विदधे स्वामिनः किंकरैरिव ॥ ६० ॥
ततो मनोरमां नाम शिबिकां श्रीमनोरमाम् । स्वाम्यारुरोह नृसुरासुरेंद्रपरिवारितः ॥ ६१ ॥
स्तूयमानो गीयमानः प्रेक्ष्यमाणो जनैर्मुदा । सहस्राम्रवणं नामोपवनं भगवानगात् ॥ ६२ ॥
शिबिकातः समुत्तीर्य रत्नालंकरणादिकम् । अपि रत्नत्रयं प्रेप्सुस्तत्याज परमेश्वरः ॥ ६३ ॥
पौषकृष्णत्रयोदश्यां भे मैत्रेयेऽपरेऽहनि । समं नृपसहस्रेण षष्ठेन प्राव्रजत्प्रभुः ॥ ६४ ॥
मर्त्यक्षेत्रस्थितप्राणिमनोद्रव्यप्रकाशकम् । मनःपर्ययमुत्पेदे तुर्यं ज्ञानं ततः प्रभोः ॥ ६५ ॥
पद्मखंरूपुरे राज्ञः सोमदत्तस्य सद्मनि । पारणं परमान्नेन द्वितीयेऽह्नि प्रभुर्व्यधात् ॥ ६६ ॥
दिव्यं च वसुधारादिपंचकं विदधेऽमरैः । रत्नपीठं तेन राज्ञा त्वर्हत्पादांकितावनौ ॥ ६७ ॥
हिमान्याप्यपराभूतः पराभूतार्कतेजसा । अकंपितः समीरैश्च कृतावश्यायदुर्दिनैः ॥ ६८ ॥

१ अध्ययनपरः । २ प्रेरितैः । ३ ज्योतिर्विद्भिः । ४ नक्षत्रे । ५ पराभूतमर्कतेजो यया तया हिमान्या महद्धिमेनाप्यपराभूतः ।
६ कृतमवश्यायेन हिमेन दुर्दिनं यैस्तैः ।

हैमनेन निशीथेन हिमीकृतसरोंभसा । अखंडमानप्रतिमः प्रतिमानविवर्जितः ॥ ६९ ॥
अरण्ये व्याघ्रसिंहादिदुःश्वापदभयानके । पुरे च श्राद्धबहुले निर्विशेषगतिस्थितिः ॥ ७० ॥
एकाकी निर्ममो मौनी निर्ग्रंथो ध्यानतत्परः । त्रीन्मासान्विजहारोर्व्यां छद्मस्थः परमेश्वरः ॥ ७१ ॥
॥ चतुर्भिः कलापकम् ॥

विहरन् भगवान् भूयः सहस्राम्रवणं ययौ । तस्थौ प्रतिमया तत्र पुन्नागस्य तरोस्तले ॥ ७२ ॥
द्वितीयशुक्लध्यानांते तस्थुषोऽथ जगत्पतेः । प्रणेशुर्घातिकर्माणि हिमवच्छिशिरात्यये ॥ ७३ ॥
फाल्गुनासितसप्तम्यामनुराधागते विधौ । स्वामिनः कृतषष्ठस्योत्पेदे केवलमुज्ज्वलम् ॥ ७४ ॥
सुरासुरेंद्राः सद्योऽपि क्षेत्रे योजनमात्रके । चक्रुः समवसरणं देशनार्थं जगद्गुरोः ॥ ७५ ॥
सुरैः संचार्यमाणानि स्वर्णाब्जानि नव क्रमात् । क्रमन्यासैः[1] पुनानस्तत्प्राग्द्वारा प्राविशत्प्रभुः ॥ ७६ ॥
तत्र चाष्टादशधनुःशतोच्चं चैत्यपादपम् । प्रभुः प्रदक्षिणीचक्रे पालयन्नार्हतीं स्थितिम् ॥ ७७ ॥
"तीर्थाय नम" इत्युच्चैर्वाचमुच्चारयन् प्रभुः । रत्नसिंहासने तत्र न्यषदत्पूर्वदिङ्मुखः ॥ ७८ ॥
प्रविश्य च यथाद्वारं यथास्थानमवास्थित । चतुर्विधोऽपि श्रीसंघःससुरासुरमानुषः ॥ ७९ ॥
पंचांगस्पृष्टभूपृष्ठः प्रणम्य परमेश्वरम् । जंभारि[2]र्भक्तिरभसादारेभे स्तोतुमित्यथ ॥ ८० ॥
सुरासुरनरैर्मूर्ध्नि धार्यमाणमिदं प्रभो । शासनं ते विजयते त्रिलोकीचक्रवर्तिनः ॥ ८१ ॥
ज्ञानत्रयधरः पूर्वं मनःपर्ययभृत्ततः । केवली चाधुना दिष्ट्या दृष्टस्त्वमधिकाधिकम् ॥ ८२ ॥

१ पादन्यासैः । २ इंद्रः ।

तव ज्ञानमिदं नाथ केवलाभिधमुज्वलम् । विश्वोपकारकृज्जीयाच्छाया मार्गतरोरिव ॥ ८३ ॥
तावदेवांधकाराणि न यावद्दिवसेश्वरः[1] । मदांधास्तावदेवेभा यावत्पंचाननो[2] न हि ॥ ८४ ॥
तावदेव हि दारिद्र्यं न यावत्कल्पपादपः । तावदेव पयोदौस्थ्यं न यावद्वार्षुकोऽम्बुदः ॥ ८५ ॥
तावद्दिवससंतापो न यावत्पूर्णचंद्रमाः । कुबोधास्तावदेवेह न यावत्त्वं निरीक्ष्यसे ॥ ८६ ॥
दृश्यसे नित्यमपि यैः सेव्यसे च शरीरिभिः ।ताननुमोदयामीश सर्वदापि प्रमद्वरः ॥ ८७ ॥
इदानीं त्वत्प्रसादेन त्वद्दर्शनफलं मम । सम्यक्त्वमुत्तममिदं भूयादाजन्म निश्चलम् ॥ ८८ ॥
इति स्तुत्वा सुनाशीरे[3] स्थिते सति जगद्गुरुः । प्रारेभे देशनामेवं गिरा स्तनितधीरया[4] ॥ ८९ ॥
[5]अनंतक्लेशकल्लोलनिलयो भवसागरः । तिर्यगूर्ध्वमधो जंतून् क्षिपत्येष प्रतिक्षणम् ॥ ९० ॥
एकं निबंधनं तस्य क्रियते प्राणिभीरतिः । अशुचौ कृमिभिरिव यदत्रापि शरीरके ॥ ९१ ॥
रसासृग्मांसमेदोऽस्थिमज्जाशुक्रांत्रवर्चसाम् । अशुचीनां पदं कायः शुचित्वं तस्य तत्कुतः ॥ ९२ ॥
नव[6]स्रोतःस्रवद्विस्रसनिःस्यंदपिच्छिले । देहेऽपि शौचसंकल्पो महामोहविजृंभितम् ॥ ९३ ॥
शुक्र[7]शोणितसंभूतो मलनिःस्यंदवर्द्धितः । गर्भे जरायु[8]संछन्नः शुचिः कायः कथं भवेत् ॥ ९४ ॥
मातृजग्धान्नपानोत्थरसनाडीक्रमागतम् । पायंपायं विवृद्धः सन् शौचं मन्येत कस्तनोः ॥ ९५ ॥
दोषधातुमलाकीर्णं कृमिगंडूपदास्पदम् । रोगभोगिगणैर्जग्धं शरीरं को वदेच्छुचि ॥ ९६ ॥

---

१ सूर्यः । २ सिंहः । ३ इंद्रे । ४ "मेघगभीरया" इति पाठांतरम् । ५ "अनंतक्लेशनिलयो दुःखौघो भवसागरः" इति पाठांतरम् । ६ नवसंख्याकानि यानि स्रोतांसि द्वाराणि तेभ्यः स्रवन्तो विस्रसस्य दुर्गंधरसस्य निःस्यंदास्तैः पिच्छिले व्याप्ते । ७ वीर्यरजोभ्यां जातः । ८ जरायुर्गर्भावरणपदार्थः तेन छन्नः ।

सुस्वादून्यन्नपानानि क्षीरेक्षुविकृतीरपि । भुक्तानि यत्र विष्ठायै तच्छरीरं कथं शुचि ॥ ९७ ॥
विलेपनार्थमासक्तः सुगंधिर्यक्षकर्दमः । मलीभवति यत्राशु क्व शौचं तत्र वर्ष्मणि ॥ ९८ ॥
जग्ध्वा सुगंधितांबूलं सुप्तो निश्युत्थितः प्रगे[१] । जुगुप्सते वक्त्रगंधं यत्र तत्किं वपुः शुचि ॥ ९९ ॥
स्वतःसुगंधयो गंधधूपपुष्पस्रगादयः । यत्संगाद्यांति दौर्गंध्यं सोऽपि कायः शुचीयते ॥ १०० ॥
अभ्यक्तोऽपि विलिप्तोऽपि धौतोऽपि घटकोटिभिः । न याति शुचितां कायः शुंडाघट[२]इवाशुचिः ॥१०१॥
मृज्जलानलवातांशुस्नानैः शौच वदंति ये । गतानुगतिकैस्तैस्तु विहितं तुषकंडनम् ॥ १०२ ॥
तदनेन शरीरेण कार्यं मोक्षफलं तपः । क्षाराब्धे रत्नवद्धीमानसारात्सारमुद्धरेत् ॥ १०३ ॥
धर्मदेशनया भर्तुरनया च शरीरिणः । बहवः प्रत्यबुध्यंत प्राव्रजंश्च सहस्रशः ॥ १०४ ॥
भर्तुस्त्रिनवतिर्दत्तादयो गणभृतोऽभवन् । उत्पादादित्रिपद्या ते द्वादशांगीमसूत्रयन् ॥ १०५ ॥
देशनांते प्रभोः पादपीठस्थो गणभृद्वरः । विदधे देशनां दत्तो दत्तबोधः शरीरिणाम् ॥ १०६ ॥
तस्यापि देशनाप्रांते स्वं स्वं स्थानं सुरादयः । जग्मुर्नागरयुवानो वीतसंगीतका[३] इव ॥ १०७ ॥
तत्तीर्थभूर्हरियक्षो विजयो हंसवाहनः । दधानो दक्षिणे चक्रं भुजे वामे तु मुद्गरम् ॥ १०८ ॥
मरालयाना[४] पीतांगी भृकुटी नाम देव्यपि । दधती दक्षिणौ बाहू खड्गमुद्गरधारिणौ ॥ १०९ ॥
वामौ फलकपरशुलांछितौ बिभ्रती भुजौ । तदा भगवतोऽभूतामुभे शासनदेवते ॥ ११० ॥

॥ त्रिभिर्विशेषकम् ॥

---

१ प्रातःकाले । २ मद्यकुंभ इव । ३ समाप्तसंगीतकाः । ४ हंसयाना ।

अमुक्तसंनिधिस्ताभ्यां सर्वातिशयभ्राजनम् । व्योमेव चंद्रो व्यहरत् पृथ्वीं चंद्रप्रभप्रभुः ॥ १११ ॥
सार्धा द्विलक्षी साधूनां साध्वीलक्षत्रयी पुनः । सहस्राशीतिसहिता द्वे सहस्रे तु पूर्विणाम् ॥ ११२ ॥
शताशीतिः सावधीनां मनःपर्ययिणां तथा । तथा दश सहस्राणि केवलज्ञानधारिणाम् ॥ ११३ ॥
जातवैक्रियलब्धीनां सहस्राणि चतुर्दश । वादलब्धिमतां सप्तसहस्री षट्शतानि च ॥ ११४ ॥
सार्धे लक्षे श्रावकाणां श्राविकालक्षपंचकम् । सहस्रैर्नवभिर्न्यूनं परिवारोऽभवत्प्रभोः ॥ ११५ ॥
पूर्वलक्षं त्रिमासोनं चतुर्विंशांगवर्जितम् । विहृत्य केवले स्वामी ययौ संमेतपर्वतम् ॥ ११६ ॥
समं मुनिसहस्रेण प्रपेदेऽनशनं प्रभुः । सुरासुरैः सेव्यमानो मासं चास्थात्तथाविधः ॥ ११७ ॥
सर्वयोगनिरोधेन निष्कंपं ध्यानमास्थितः । तत्क्षणं क्षीणभवोपग्राहिकर्मचतुष्टयः[१] ॥ ११८ ॥
नभस्यकृष्णसप्तम्यां श्रवणस्थे निशाकरे । समं तैर्मुनिभिः स्वामी जगाम परमं पदम् ॥ ११९ ॥
कौमारे पूर्वलक्षे द्वे सार्धे राज्यस्थितौ पुनः । पूर्वलक्षाः षट् च सार्धाश्चतुर्विंशांगसंयुताः ॥ १२० ॥
चतुर्विंशत्यंगहीनं पूर्वलक्षं पुनर्व्रते । इत्यायुः पूर्वलक्षाणि दश चंद्रप्रभप्रभोः ॥ १२१ ॥
सुपार्श्वस्वामिनिर्वाणाच्छ्रीचंद्रप्रभनिर्वृतिः । शतेष्वर्णवकोटीनां व्यतीतेषु नवस्वभूत् ॥ १२२ ॥

इति मोक्षमुपेयुषः प्रभोर्व्रतिनां चैव शरीरसंस्क्रियाम् ।
विधिवद्विदधुः सुरेश्वराः पुनरेव त्रिदिवं प्रपेदिरे ॥ १२३ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये तृतीये पर्वणि चंद्रप्रभस्वामिचरितवर्णनोनाम षष्ठःसर्गः ६

---

१ क्षीणं भवोपग्राहि भवपर्यंतस्थायि कर्मचतुष्टयं यस्य सः ।

एकावलीप्रभृतिभिः स तपोभिः सुदुस्तपैः । अर्हद्भक्त्यादिभिश्चोच्चैस्तीर्थकृन्नाम निर्ममे ॥ १२ ॥
एवंविधैरनुष्ठानैर्निजायुरतिवाह्य सः । विमाने वैजयन्ताख्ये महर्द्धिरमरोऽभवत् ॥ १३ ॥
इतश्च जंबूद्वीपेस्मिन् भरतार्धे तु दक्षिणे । काकंदीत्यस्ति नगरी श्रीविशेषगरीयसी ॥ १४ ॥
भांति तत्रौकसां मुक्तावचूला[1]ः पुष्पधन्वनः । मनस्विनीवशीकारजपमाला इवामलाः ॥ १५ ॥
तत्रायतनसंगीतगीतमुच्चैश्चतुर्विधम् । प्रपद्यते खेचरीणां[2] गतेः स्तंभनमंत्रताम् ॥ १६ ॥
उद्दंडपुंडरीकाढ्या विशदापा[3] जलाशयाः । व्यक्तोडुशारदाभ्रां द्यामनुकुर्वंति तत्र च ॥ १७ ॥
दूरादप्यभिगम्यंते[4] नीयंते पाद्यपात्रताम् । प्रीण्यंते चोचितैरर्थैस्तस्यां गुरुवदर्थिनः ॥ १८ ॥
सुग्रीवो नाम समभूद्ग्रैवेयकमिवावनेः । ग्रैवेयकामर इव श्रिया तत्र महीपतिः ॥ १९ ॥
तस्याज्ञा नगरारण्यसागरेषु गिरिष्वपि । सिद्धमंत्रायुधमिव न क्वापि प्रत्यहन्यत ॥ २० ॥
तस्मादद्रेरिव प्रादुर्भूता नीतितरंगिणी । उत्कल्लोलयशोवारिः प्रासरत्सागरावधि ॥ २१ ॥
यशोराशिपयोराशिस्तस्योर्वीशशिरोमणेः । विस्तृताः कीर्त्तिसरितो जग्रास सर्वभूभृताम् ॥ २२ ॥
विरामः सर्वदोषाणामभिरामामलैर्गुणैः । सर्वरामाशिरोरत्नं तस्य रामेति पत्न्यभूत् ॥ २३ ॥
निसर्गमानोज्ञकभूर्दृशामानंददायिनी । गगने चंद्रलेखेव सैकैवाभून्महीतले ॥ २४ ॥
पक्षद्वयेन शुद्धेन राजंती मधुरस्वरा । सा पत्युर्मानसे राजहंसीवोवास सर्वदा ॥ २५ ॥

---

१ मौक्तिकैर्भूषितानि वस्त्रांचलानि अवचूला इति उच्यते । २ विद्याधरीणाम् । ३ निर्मलजलाः । ४ दातृभिरिति शेषः ।

जगदीश तव ब्रूमः किं नामातिशयांतरम् । यन्माहात्म्यगुणकीर्ति त्रिलोकी याति दासताम् ॥ ४१ ॥
स्वर्गराज्येऽपि न भ्राजे तथा दास्ये यथा तव । भात्यङ्गौ न तथा रत्नमप्यंघ्रिकटके यथा ॥ ४२ ॥
शिवं यियासुरायासीर्वैजयन्ताच्छि[1]वांतिकात् । मार्गभ्रांतस्य लोकस्य मार्गं दर्शयितुं ध्रुवम् ॥ ४३ ॥
भरतक्षेत्रगेहस्य चिरात्त्वमसि दैवतम् । निःशंकं तत्र धर्मोऽद्य गृहस्थ इव नंदतु ॥ ४४ ॥
विश्वनाथ त्वदीयस्य रूपस्यास्यातिशायिनः । अवतारणतां यातु सर्वोऽयं दिविषद्गणः ॥ ४५ ॥
ज्योत्स्नायिते प्रभापूरे लीयमानानि सस्पृहम् । दिष्ट्या त्वयि [2]चकोरंति लोचनानि चिरात्प्रभो ॥ ४६ ॥
वासागारे सभायां वा तिष्ठतश्चलतोऽपि मे । त्वन्नाममंत्रस्मरणमस्तु सर्वार्थसिद्धिदम् ॥ ४७ ॥
जिनेश्वरमिति स्तुत्वा गृहीत्वा च सुरेश्वरः । नीत्वा च रामास्वामिन्याः पार्श्वे [3]न्यास्त यथास्थिति ॥४८॥
कुशला सर्वविधिषु गर्भस्थेऽस्मिन् जनन्यभूत् । पुष्पदोहदतो दंतोद्गमोऽस्य समभूदिति ॥ ४९ ॥
सुविधिः पुष्पदंतश्चेत्यभिधानद्वयं विभोः । महोत्सवेन चक्राते पितरौ दिवसे शुभे ॥ ५० ॥ युग्मम् ।
जन्मतः प्रभृति स्वामी दर्शयन्नंतरं महत् । क्रमेण ववृधे मेषसंक्रांतेरिव [4]वासरः ॥ ५१ ॥
अवाप च जगन्नाथो यौवनं रूपपावनम् । धनुःशतोच्चश्वेतांगः क्षीरोद इव मूर्त्तिमान् ॥ ५२ ॥
स्वामी भवविरक्तोऽपि भृशं पित्रनुरोधतः । उपयेमे राजकन्याः श्रियो विजयिनीः श्रिया ॥ ५३ ॥
गतायां पूर्वपंचाशत्सहस्र्यां जन्मतः प्रभुः । [5]अलुब्धः पितृदाक्षिण्याद्राज्यभारमुपाददे ॥ ५४ ॥

---

१ मोक्षांतिकात् । २ चकोर इवाचरंति । ३ अस्थापयत् । ४ चैत्रमासदिवसवत् । ५ अनासक्तः ।

साष्टाविंशतिपूर्वांगं कालं तावंतमेव हि। साम्राज्यं पालयामास विधिवत्सुविधिप्रभुः ॥ ५५ ॥
ऐयेष[1] च व्रतं स्वामी ते च लौकांतिकामराः। तत्कृते प्रेरयामासुश्चाटुकाराइव[2] प्रभुम् ॥ ५६ ॥
गतकामो[3] यथाकामं चिंतामणिरिवार्थिनाम्। ददौ दानं जगन्नाथस्ततः संवत्सरावधि ॥ ५७ ॥
पर्यंते तस्य दानस्य जन्मकाल इवामरैः। विधिवद्विदधे दीक्षाभिषेकः परमेशितुः ॥ ५८ ॥
ततः सूरप्रभां नामाध्यारुह्य शिबिकां प्रभुः। वृतः सुरासुरनरैः सहस्राम्रवणं ययौ ॥ ५९ ॥
मार्गकृष्णषष्ठ्यां मूलेऽपराह्णे षष्ठपूर्वकम्। समं राज्ञां सहस्रेण प्रव्रज्यामाददे प्रभुः ॥ ६० ॥
द्वितीयेऽह्नि श्वेतपुरे पुरे पुष्पनृपौकसि। चकार परमान्नेन पारणं परमेश्वरः ॥ ६१ ॥
विदधुर्वसुधारादिपंचकं च दिवौकसः। रत्नपीठं स्वामिपादस्थाने पुष्पनृपः पुनः ॥ ६२ ॥
एकांगो निर्ममो[4]ऽसंगः सहमानः परीषहान्। छद्मस्थो विजहाराथ चतुर्मासीं जगत्पतिः ॥ ६३ ॥
आजगाम प्रभुर्भूयः सहस्राम्रवणं वनम्। मालूरतरुमूले चावतस्थे प्रतिमाधरः ॥ ६४ ॥
आरूढक्षपकश्रेणेरपूर्वकरणक्रमात्। ऊर्जशुक्लतृतीयायां[5] मूलेऽभूत् केवलं प्रभोः ॥ ६५ ॥
ततः समवसरणं व्यधीयत सुरासुरैः। पूर्वद्वारेण तत्राथ प्रविवेश जगद्गुरुः ॥ ६६ ॥
तत्र द्वादशकोदंडशतोच्चं चैत्यपादपम्। प्रभुः प्रदक्षिणीचक्रे सर्वातिशयशोभितः ॥ ६७ ॥
"तीर्थाय नम" इत्युक्त्वाध्यास्त सिंहासनं प्रभुः। प्राङ्मुखो दिक्षु चान्यासु तद्रूपाणि व्यधुः सुराः॥६८॥
यथास्थानमथान्येऽपि निषेदुरमरादयः। प्रणम्याथ प्रभुं शक्रः स्तोतुमेवं प्रचक्रमे ॥ ६९ ॥

---

१ ऐच्छत्। २ प्रियवादिनः। ३ इच्छारहितः। ४ ममतारहितः। ५ कार्तिकशुक्लतृतीयायाम्।

वीतरागोऽसि चेद्[1]रागः पाणिपादे कथं तव । कौटिल्यं च त्वया मुक्तं किं केशाः कुटिलास्तव ॥ ७० ॥
प्रजानां यदि गोप[2]स्त्वं दंडहस्तोऽसि किं न हि । निःसंगो यदि वासि त्वं तत्किं त्रैलोक्यनाथता ॥ ७१ ॥
यदि त्वं निर्ममस्तत्किं सर्वत्र करुणापरः । त्यक्तालंकरणश्चेत्त्वं तत्किं रत्नत्रये[3]प्रियः ॥ ७२ ॥
विश्वस्याप्यनुकूलश्चेत्तत्किं मिथ्यादृशां द्विपन् । स्वभावसरलश्चेत्त्वं छद्मस्थोऽस्थाः कथं पुरा ॥ ७३ ॥
दयावान्यदि वासि त्वं न्यग्रहीर्मन्मथं कथम् । यदि च त्वं गतभयो भवाद्भीतोऽसि तत्कथम् ॥ ७४ ॥
यद्युपेक्षापरोऽसि त्वं तत्किं विश्वोपकारकः । अदीप्तो यदि वासि त्वं दीप्तभामंडलः कथम् ॥ ७५ ॥
यदि शांतस्वभावस्त्वं तत्कुतस्तप्तवांश्चिरम् । अरोषणोऽसि यदि च रुषितः कर्मणां कथम् ॥ ७६ ॥
अविज्ञेयस्वरूपाय महद्भ्योऽपि महीय[4]से । सिद्धानंतचतुष्का[5]य तुभ्यं भगवते नमः ॥ ७७ ॥
विरचय्य स्तुतिमिति तूष्णीके सति वासवे । भगवान् सुविधिस्वामी विदधे देशनामिति ॥ ७८ ॥
अनंतदुःखसंभारनिधानं खल्वयं भवः । प्रभवश्चास्रवस्तस्य विषस्येव महोरगः ॥ ७९ ॥
मनोवाक्कायकर्माणि योगाः कर्म शुभाशुभम् । यदाश्रवंति जंतूनामाश्रवास्तेन कीर्तिताः ॥ ८० ॥
मैत्र्यादिवासितं चेतः कर्म सूते शुभात्मकम् । कषायविषयाक्रांतं वितनोत्यशुभं पुनः ॥ ८१ ॥
शुभार्जनाय निर्मि[6]थ्यं श्रुतज्ञानाश्रितं वचः । विपरीतं पुनर्ज्ञेयमशुभार्जनहेतवे ॥ ८२ ॥
शरीरेण सुगुप्तेन शरीरी चिनुते शुभम् । सततारंभिणा जंतुघातकेनाशुभं पुनः ॥ ८३ ॥

---

१ विरोधपरिहारे रागः अरुणिमा । २ गोपालः पालकश्च । ३ ज्ञानदर्शनचारित्राख्यं रत्नत्रयम् । ४ महते पूज्याय । ५ ज्ञानदर्शनचारित्रवीर्याख्यं चतुष्टयम् । ६ सत्यम् ।

कषाया विषया योगाः प्रमादाविरती तथा । मिथ्यात्वमार्त्तरौद्रे चेत्यशुभं प्रति हेतवः ॥ ८४ ॥
यः कर्म[1]पुद्गलादानहेतुः प्रोक्तः स आश्रवः । कर्माणि चाष्टधा ज्ञानावरणीयादिभेदतः ॥ ८५ ॥
ज्ञानदर्शनयोस्तद्वत्तद्धेतूनां च ये किल । विघ्ननिह्नवपैशून्याशातनाघातमत्सराः[2] ॥ ८६ ॥
ते ज्ञानदर्शनावारकर्महेतव आस्रवाः । देवपूजा गुरूपास्तिः पात्रदानं दया क्षमा ॥ ८७ ॥
सरागसंयमो देशसंयमोऽकामनिर्जरा । शौचं बाल[3]तपश्चेति सद्वेद्य[4]स्य स्युराश्रवाः ॥ ८८ ॥
दुःखशोकवधास्तापाक्रंदने परिदे[5]वनम् । स्वान्यो[6]भयस्थाः स्युरसद्वेद्यस्यामी इहाश्रवाः ॥ ८९ ॥
वीतरागे श्रुते संघे धर्मे संघगु[7]णेषु च । अ[8]वर्णवादिता तीव्रमिथ्यात्वपरिणामता ॥ ९० ॥
सर्वज्ञसिद्धिदेवापह्नवो धार्मिकदूषणम् । उन्मार्गदेशनानर्थाग्रहोऽसंयतपूजनम् ॥ ९१ ॥
अ[9]समीक्षितकारित्वं गुर्वादिष्ववमानता[10] । इत्यादयो दृष्टिमोहस्याश्रवाः परिकीर्तिताः ॥ ९२ ॥
कषायोदयतस्तीव्रपरिणामोऽयमात्मनः । चारित्रमोहनीयस्य स आश्रव उदीरितः ॥ ९३ ॥
उत्प्रा[11]सनं सकंदर्पोपहासो हासशीलता । बहुप्रलापो दैन्योक्तिर्हास्यस्यामी स्युराश्रवाः ॥ ९४ ॥
देशादिदर्शनोत्सुक्यं चित्रे रमणखेलने । परचि[12]त्तावर्जनं चेत्याश्रवाः कीर्त्तिता रतेः ॥ ९५ ॥
असूया पापशीलत्वं परेषां रतिना[13]शनम् । अ[14]कुशलप्रोत्साहनं चारतेराश्रवा अमी ॥ ९६ ॥

१ कर्मणः पुद्गलानां ग्रहणे हेतुः । २ "पाय" इति पाठांतरं । ३ अज्ञानतपः । ४ सातावेदनीयस्य । ५ शोकः । ६ स्वस्मिन्नन्यस्मिन्नुभयस्मिन् वा स्थिताः । ७ "सर्वसुरेषु" इति वा पाठः । ८ अपवादवादित्वम् । ९ अविचारकारित्वम् । १० अवज्ञा । ११ अधिकं हास्यम् । १२ परचित्तस्याकर्षणम् । १३ आनंदध्वंसः । १४ परस्याकुशले उत्साहः ।

स्वयं ज्ञयपरीणामः परेषामथ ज्ञापनम् । त्रासनं निर्दयत्वं च ज्ञयं प्रत्याश्रवा अमी ॥ ९७ ॥
परशोकाविष्करणं स्वशोकोत्पादशोचने । रोदनादिप्रसक्तिश्च शोकस्यैते स्युराश्रवाः ॥ ९८ ॥
चतुर्वर्णस्य संघस्य परि[1]वादजुगुप्सने । सदाचारजुगुप्सा च जुगुप्सायाः स्युराश्रवाः ॥ ९९ ॥
ई[2]र्ष्याविषयगार्द्ध्ये च मृषावादोऽतिवक्रता । परदाररतासक्तिः स्त्रीवेदस्याश्रवा इमे ॥ १०० ॥
स्वदारमात्रसंतोषोऽनीर्ष्या मंदकषायता । अवक्राचारशीलत्वं पुंवेदस्याश्रवा इति ॥ १०१ ॥
स्त्रीपुंसानंगसेवोग्राः कषायास्तीव्रकामता । पाखंडस्त्रीव्रतभ्रंशः षंढवेदाश्रवा अमी ॥ १०२ ॥
साधूनां गर्हणा धर्मोन्मुखानां विघ्नकारिता । मधुमांसाविरतानामविरत्य[3]न्निवर्णनम् ॥ १०३ ॥
विरता[4]विरतानां चान्तरायकरणं मुहुः । अचारित्र[5]गुणाख्यानं तथा चारित्रदूषणम् ॥ १०४ ॥
कषायनोकषायाणामन्यस्थानामुदीरणम् । चारित्रमोहनीयस्य सामान्येनाश्रवा अमी ॥ १०५ ॥
पंचेंद्रियप्राणिवधो बह्वारंभपरिग्रहौ । निरनु[6]ग्रहता मांसभोजनं स्थिरवैरता ॥ १०६ ॥
रौद्रध्यानं मिथ्यात्वानंतानुबंधिकषायते । कृष्णनीलकपोताश्च लेश्या अनृतभाषणम् ॥ १०७ ॥
परद्रव्यापहरणं मुहुर्मैथुनसेवनम् । अवशेंद्रियता चेति नरकायुष आश्रवाः ॥ १०८ ॥
उन्मार्गदेशना मार्गप्रणाशो गूढचित्तता । आर्त्तध्यानं सशल्यत्वं मायारंभपरिग्रहौ ॥ १०९ ॥
शीलव्रते सातिचारे नीलकापोतलेश्यता । अप्रत्याख्यानकषायास्तिर्यगायुष आश्रवाः ॥ ११० ॥

---

१ अपवादनिंदे । २ ईर्ष्याविषयलुब्धते । ३ अविरतेः प्रशंसा । ४ देशविरतानाम् । ५ अचारित्रगुणकथनम् । ६ अनुग्रहरहितत्वम् ।

अल्पौ परिग्रहारंभौ सहजे मार्दवार्जवे । कापोतपीतलेश्यत्वं धर्मध्यानानुरागिता ॥ १११ ॥
प्रत्याख्यानकषायत्वं परिणामश्च मध्यमः । संविभागविधायित्वं देवतागुरुपूजनम् ॥ ११२ ॥
पूर्वालापप्रियालापौ सुखप्रज्ञापनीयता । लोकयात्रासु माध्यस्थ्यं मानुषायुष आश्रवाः ॥ ११३ ॥
सरागसंयमो देशसंयमोऽकामनिर्जरा । कल्याणमित्रसंपर्को धर्मश्रवणशीलता ॥ ११४ ॥
पात्रे दानं तपः श्रद्धा रत्नत्रयाविराधना । मृत्युकाले परीणामो लेश्ययोः पद्मपीतयोः ॥ ११५ ॥
बालतपोऽग्नितोयादिसाधनोल्लंबनानि च । अव्यक्तसामायिकता दैवस्यायुष आश्रवाः ॥ ११६ ॥
मनोवाक्कायवक्रत्वं परेषां विप्रतारणम् । मायाप्रयोगो मिथ्यात्वं पैशून्यं चलचित्तता ॥ ११७ ॥
सुवर्णादिप्रतिच्छंदकरणं कूटसाक्षिता । वर्णगंधरसस्पर्शाद्यन्यथापादनानि च ॥ ११८ ॥
अंगोपांगच्यावनानि यंत्रपंजरकर्म च । कूटमानतुलाकर्मान्यनिंदात्मप्रशंसनम् ॥ ११९ ॥
हिंसानृतस्तेयाब्रह्ममहारंभपरिग्रहाः । परुषासभ्यवचनं शुचिवेषादिना मदः ॥ १२० ॥
मौखर्याक्रोशौ सौभाग्योपघातः कार्मणक्रिया । परकौतूहलोत्पादः परिहासविडंबनैः ॥ १२१ ॥
वेश्यादीनामलंकारदानं दावाग्निदीपनम् । देवादिव्याजाद्गंधादिचौर्यं तीव्रकषायता ॥ १२२ ॥
चैत्यप्रतिश्रयारामप्रतिमानां विनाशनम् । अंगारादिक्रिया चैवाशुभस्य नाम्न आश्रवाः ॥ १२३ ॥

---

१ मृदुता ऋजुता च । २ पूर्वालापः प्रथमतः स्वागतकथनम् । ३ सुखपृच्छाकथनम् । ४ सन्मित्रसंगतिः । ५ अग्निजलादिना मरणं तथा रज्ज्वादिना मरणम् । ६ अस्पष्टसामायिकता । ७ वस्तुसंयोगेन कूटस्वर्णादिकरणं । ८ अंगोपांगच्छेदनानि । ९ मौखर्यं वाचाटत्वम् । १० मंत्रादिना वशीकरणादिक्रिया । ११ प्रतिश्रयः उपाश्रयो धर्मशाला च ।

एत एवान्यथारूपास्तथा संसारभीरुता । प्रमादहानं सद्भावार्पणं क्षांत्यादयोऽपि च ॥ १२४ ॥
दर्शने धार्मिकाणां च संभ्रमः स्वागतक्रिया । आश्रवाः शुभनाम्नोऽथ तीर्थकृन्नाम्न आश्रवाः ॥ १२५ ॥
भक्तिरर्हत्सु सिद्धेषु गुरुषु स्थविरेषु च । बहुश्रुतेषु गच्छे च श्रुतज्ञाने तपस्विषु ॥ १२६ ॥
आवश्यके व्रतशीलेष्वप्रमादो विनीतता । ज्ञानाभ्यासस्तपस्त्यागौ मुहुर्ध्यानं प्रभावना ॥ १२७ ॥
संघे समाधिजननं वैयावृत्त्यं च साधुषु । अपूर्वज्ञानग्रहणं विशुद्धिर्दर्शनस्य च ॥ १२८ ॥
आद्यंततीर्थनाथाभ्यामेते विंशतिराश्रवाः । एको द्वौ वा त्रयः सर्वे वान्यैः पृष्टा जिनेश्वरैः ॥ १२९ ॥
परस्य निंदावज्ञोपहासाः सद्गुणलोपनम् । सदसद्दोषकथनमात्मनस्तु प्रशंसनम् ॥ १३० ॥
सदसद्गुणशंसा च स्वदोषाच्छादनं तथा । जात्यादिभिर्मदश्चेति नीचैर्गोत्राश्रवा अमी ॥ १३१ ॥
नीचैर्गोत्राश्रवविपर्यासो विगतगर्वता । वाक्कायचित्तैर्विनय उच्चैर्गोत्राश्रवा अमी ॥ १३२ ॥
दाने लाभे च वीर्ये च तथा भोगोपभोगयोः । सव्याजाव्याजविघ्नोऽतरायकर्मण आश्रवाः ॥ १३३ ॥
तदित्याश्रवजन्मायमपारो भवसागरः । प्रव्रज्यायानपात्रेण तरणीयो मनीषिणा ॥ १३४ ॥
कुमुदानीङ्गासेवाबुध्यंत बहवस्तदा । धर्मदेशनया भर्तुः प्राव्रजंश्च सहस्रशः ॥ १३५ ॥
अष्टाशीतिर्वराहाद्या आसन् गणभृतः प्रभोः । देशनांते च विदधे वराहो धर्मदेशनाम् ॥ १३६ ॥
गणभृद्देशनांतेऽगुः स्वं स्वं स्थानं सुरासुराः । नंदीश्वरस्य मध्येन कुर्वंतोऽष्टाह्निकोत्सवम् ॥ १३७ ॥

---

१ प्रतिक्रमणक्रियायाम् ।

तत्तीर्थजन्मा त्वजितः श्वेतांगः कूर्मवाहनः । बिभ्राणो दक्षिणौ बाहू मातुलिंगाक्षसूत्रिणौ ॥ १३८ ॥
वामौ तु नकुलकुंतधारिणौ धारयन् भुजौ । नित्यमासन्नवर्त्त्यासीद्भर्तुः शासनदेवता ॥ १३९ ॥
तथोत्पन्ना सुताराख्या गौरांगी वृषवाहना । वरदं साक्षसूत्रं च बिभ्राणा दक्षिणौ भुजौ ॥ १४० ॥
कलशांकुशिनौ बाहू दधाना दक्षिणेतरौ । पारिपार्श्विक्यभून्नित्यं भर्तुः शासनदेवता ॥ १४१ ॥
ताभ्यामधिष्ठिता[1]भ्यर्णः कृपारसमहार्णवः । विजहार जगन्नाथो जगतीं बोधयञ्जनान् ॥ १४२ ॥
साधुद्विलक्षी साध्वीनां लक्षं विंशसहस्रयुक् । अवधिज्ञानिनामष्टौ सहस्राः सचतुःशताः ॥ १४३ ॥
सहस्रं पूर्विणां सार्धं मनःपर्ययिणां पुनः । पंचसप्ततिशत्येषा केवलज्ञानिनामपि ॥ १४४ ॥
जातवैक्रियलब्धीनां सहस्राणि त्रयोदश । संजातवादलब्धीनां सहस्राणि षडेव हि ॥ १४५ ॥
सैकोनत्रिंशत्सहस्रा श्रावकाणां द्विलक्ष्यथ । श्राविकाणां चतुर्लक्षी द्वासप्ततिसहस्रयुक् ॥ १४६ ॥
ऊनमष्टाविंशत्यंग्या चतुर्मास्या च केवलात् । पूर्वलक्षं विहरतः परिवारोऽभवत्प्रभोः ॥ १४७ ॥

॥ पंचभिः कुलकम् ॥

समेताद्रिं ततो गत्वा ऋषीणां दशभिः शतैः । प्रपेदेऽनशनं स्वामी मासं चास्थात्तथास्थितः ॥ १४८ ॥
[2]नभस्यकृष्णनवम्यां मूले [3]भे तैः सहर्षिभिः । शैलेशीध्यानलीनः सन् स्वाम्यगादव्ययं पदम् ॥ १४९ ॥
कौमारे लक्षपूर्वार्धमथ राज्यस्य पालने । युक्तमष्टाविंशत्यांगैः पूर्वलक्षार्धमेव हि ॥ १५० ॥

---

१ आश्रितमभ्यर्णं सामीप्यं यस्य सः । २ नभस्यः भाद्रपदः । ३ नक्षत्रे ।

अष्टाविंशत्यंगहीनं पूर्वलक्षं पुनर्व्रते । इत्यायुः पूर्वलक्षे द्वे सुविधिस्वामिनोऽभवत् ॥ १५१ ॥
श्रीचंद्रप्रभनिर्वाणात् सुविधिस्वामिनिर्वृतिः । सागरोपमकोटीनां गतायां नवतावभूत् ॥ १५२ ॥

विधिवदमरनाथाः कायसंस्कारपूर्वम् मुनिदशशतयुक्तस्यार्हतोऽष्टाधिकस्य ।
शिवगतिमहिमानं चक्रिरे निःसमानं तदनु सपरिवाराः स्वं स्वमीयुर्विमानम् ॥ १५३ ॥

सुविधिस्वामिनिर्वाणाद्गते काले कियत्यपि । हुंडावसर्पिणीदोषात् साधूच्छित्तिरजायत ॥ १५४ ॥
स्थविरश्रावकान् धर्ममथापृच्छन्नतद्विदः । पंथानं पथिसंमूढाः पथिकान् पथिका इव ॥ १५५ ॥
कंचित्कथयतां तेषां धर्ममात्मानुसारतः । अर्थपूजां विदधिरे ते जनाः श्रावकोचिताम् ॥ १५६ ॥
पूजया जातगर्द्धास्ते शास्त्राण्यासूत्र्य तत्क्षणम् । महाफलानि दानानि विविधान्याचचक्षिरे ॥ १५७ ॥
कन्यादानं महीदानं प्रदानमयसामपि[3] । तिलदानं च कार्पासदानं[4] दानं गवामपि ॥ १५८ ॥
स्वर्णदानं रूप्यदानं प्रदानं सद्मनामपि । अश्वदानं गजदानं शय्यादानमथापरम् ॥ १५९ ॥
दानं महाफलं सर्वमत्रामुत्र सुनिश्चितम् । एवं व्याचख्युराचार्यीभूय ते गृध्नवोऽन्वहम् ॥ १६० ॥
दानस्य चोचितं पात्रमात्मानं व्याचचक्षिरे । अपात्रं चापरं सर्वमखर्वेहाकुराशयाः[5] ॥ १६१ ॥
अप्येवं वंचकास्तेऽयुर्लोकानां गुरुतां तदा । निर्वृक्षे देशे क्रियते ह्येरंडस्यापि वेदिका ॥ १६२ ॥

---

१ स्थानम् । २ द्रव्यादिषु लुब्धाः । ३ लोहानाम् । ४ तूलदानम् । ५ उत्कटेच्छया दुष्टाशयाः ।

जज्ञे तीर्थोच्छेद एवं समंतात् क्षेत्रेऽस्मिन्नाशीतलस्वामितीर्थम् ।
एकच्छत्रं विप्रखेटैस्तदानीं चक्रे राज्यं निश्युलूकैरिवोच्चैः ॥ १६३ ॥
मिथ्यात्वमाशांतिजिनेशमित्थमन्येष्वभूत् षट्सु जिनांतरेषु ।
तीर्थप्रणाशादभवच्च तेषु मिथ्यादृशामस्खलितः प्रचारः ॥ १६४ ॥

इत्याचार्य श्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये
तृतीये पर्वणि सुविधिस्वामिचरितवर्णनो नाम
सप्तमः सर्गः संपूर्णः ।

# अष्टमः सर्गः ।

## श्रीशीतलनाथचरित्रम् ।

ॐ ॥ श्रीशीतलजिनेंद्रस्य पादाः शीतरुचेरिव । बोधयंतः कुवलयं[1] संतु वः शिवतातयः[2] ॥ १ ॥
इदं जगत्त्रयश्रोत्रशीतलीकारकारणम् । शीतलस्य भगवतश्चरितं कीर्तयिष्यते ॥ २ ॥
पुष्करवरद्वीपार्धे प्राग्विदेहविभूषणे । विजये वत्ससंज्ञेऽस्ति सुसीमा नाम पूर्वरा ॥ ३ ॥
तस्यां पद्मोत्तराख्योऽभून्नृपः सर्वनृपोत्तरः । अनुत्तरविमानिभ्य इवैकः कश्चिदागतः ॥ ४ ॥
अलंघ्यशासने सर्वप्राणिनां करुणापरे । सोदराविव तत्रास्तां वीरशांताभिधौ रसौ ॥ ५ ॥
उपायैर्वर्धयंस्तैस्तैः सोऽनपायैरनेकशः[3] । नित्यं धर्मं जजागार भांडागार[4] इवेश्वरः ॥ ६ ॥
अद्य श्वो वा भृशममुं त्यजामीति स चिंतयन् । संसारवासे विदेशस्थायीवास्थादनास्थया ॥ ७ ॥
अन्यदा राज्यमुत्सृज्य प्राज्यमप्यश्मखंरुवत्[5] । सस्ताघसूरिपादांते स प्रव्रज्यामुपाददे ॥ ८ ॥
व्रतानि निरतीचाराण्याचरन्नार्जयत् सुधीः । स तीर्थकृन्नाम कर्म स्थानकैरागमोदितैः ॥ ९ ॥
विविधाभिग्रहैस्तीव्रैस्तपोभिर्विविधैरपि । जन्मातिवाह्य सकलं सोऽभवत्प्राणतेश्वरः ॥ १० ॥
इतश्च जंबूद्वीपेऽस्मिन् क्षेत्रे चात्रैव भारते । श्रीभद्रं भद्दिलपुरं नामास्ति प्रवरं पुरम् ॥ ११ ॥

१ पृथ्वीमंडलम्—पक्षे कुमुदम् । २ मोक्षजनकाः । ३ अविघ्नैः । ४ द्रव्यकोशे । ५ पाषाणवत् ।

परिखावलयेनोच्चैः प्राकारस्तत्र कांचनः । जंबूद्वीपजगत्यब्धिवलयेनेव शोभते ॥ १२ ॥
सायमापणवीथीषु प्रदीप्ता दीपधोरणी[1] । तत्र संलक्ष्यते स्वर्णकंठिकेव पुरश्रियः ॥ १३ ॥
ऋद्ध्या महत्या भुजंगवृंदारकविलासभूः[2] । भोगावत्यमरावत्योरिव[3] सारेण तत्क्षणम् ॥ १४ ॥
तस्मिंश्च सत्रशालासु[4] महेभ्यैर्भोजनार्थिनः । भोज्यंते विविधैर्भोज्यैरुत्सवे स्वजना इव ॥ १५ ॥
तस्मिन् दृढरथो नाम नामितारातिमंडलः । अभूद्भूमंडलं व्याप्य स्थितोऽब्धिरिव भूपतिः ॥ १६ ॥
स महर्षिगणेनापि वर्ण्यमानैर्निरंतरम् । अधिकाधिकमभ्राजद्गुणैरप्यगुणैरिव ॥ १७ ॥
प्रत्यर्थिभ्यो[5] बलादात्ताम्[6] अर्थिभ्यः स श्रियं ददौ । अदत्तादानदोषस्य प्रायश्चित्तमिवाचरन् ॥ १८ ॥
तस्याग्रतो भूपतयः कृतभूलुठना मुहुः । सर्वांगालिंगितभुवो भूपतित्वं चिराद्ययुः ॥ १९ ॥
ज्ञानोपदेशलेशोऽपि तस्मिन् गुरुजनैः कृतः । वितस्तार महाप्राज्ञे सलिले तैलबिंदुवत् ॥ २० ॥
मंदाकिनीव[7] सरितां सतीनामग्रतः सती । तस्याभूद् हृदयानंदा पत्नी नंदेति नामतः ॥ २१ ॥
मंदमंदपदन्यासैर्विचरंत्या मनोरमम् । गतौ शिष्या इवैतस्या राजहंस्योऽपि लक्षिताः ॥ २२ ॥
सुगंधिमुखनिःश्वासं यद्यत् किंचिदुवाच सा । प्रपेदे वचनं तत्तद्भ्रमराकृष्टिमंत्रताम्[8] ॥ २३ ॥
रूपवत्या अभूत्तस्याः स्वस्मिन्नेवोपमानता । विहायसो महत्त्वे हि नोपमानं भवेत्परम् ॥ २४ ॥
स्यूते च स्वगुणैः स्वांते दृढं दृढरथस्य सा । अभूद्दृढरथोऽप्यस्या उत्कीर्ण[9] इव चेतसि ॥ २५ ॥

---

१ दीपश्रेणिः । २ भुजंगाः नागकुमारदेवाः पक्षे रसिकाः वृंदारका वैमानिकदेवाः पक्षे प्रधानपुरुषाश्च तेषां विलासस्थानम् । ३ नागपुरीदेवपुर्योः । ४ दानशालासु । ५ शत्रुभ्यः । ६ गृहीताम् । ७ गंगा । ८ भ्रमराणामाकर्षणे मंत्रोपमत्वम् । ९ आलिखितः ।

इतश्च प्राणते कल्पे पद्मोत्तरमहीपतेः । जीवः स्वायुरपूरिष्ट विंशतिसागरोपमान् ॥ २६ ॥
च्युत्वा राधकृष्णषष्ठ्यां पूर्वाषाढास्थिते विधौ । पद्मोत्तरनृपजीवो नंदाकुक्षाववातरत् ॥ २७ ॥
नंदास्वामिन्यपि तदा सुखसुप्ता व्यलोकयत् । चतुर्दश महास्वप्नांस्तीर्थकृज्जन्मसूचकान् ॥ २८ ॥
माघस्य कृष्णद्वादश्यां पूर्वाषाढागते विधौ । श्रीवत्सांकं स्वर्णवर्णं श्रीनंदासूत नंदनम् ॥ २९ ॥
अष्टाधोलोकवास्तव्या ऊर्ध्वलोकजुषोऽष्ट च । अष्टाष्टौ रुचकदिशां चतस्रो विदिशां पुनः ॥ ३० ॥
रुचकद्वीपमध्यस्थाश्चतस्रश्चलितासनाः । षट्पंचाशद्दिक्कुमार्यः सूतिकर्मैत्य चक्रिरे ॥ ३१ ॥
शक्रोऽप्युपेत्य तत्राशु गृहीत्वा स्वामिनं स्वयम् । सुमेरुपर्वतशिरस्युपेयाय वृतोऽमरैः ॥ ३२ ॥
अतिपांडुकंबलायां रत्नसिंहासनोपरि । अंकाधिरोपितपतिर्दिवस्पतिरुपाविशत् ॥ ३३ ॥
ह्रदिनीनाथह्रदिनीह्रदादिभ्यः समाहृतैः । अभ्यषिंचन् जलैर्नाथमथेंद्रा अच्युतादयः ॥ ३४ ॥
ईशानांके प्रभुं न्यस्य शक्रोप्यस्नपयत्ततः । विकृतस्फाटिकवृषविषाणाग्रोज्झतैर्जलैः ॥ ३५ ॥
दिव्यांगरागैश्चर्चित्वार्चित्वा चाभरणादिभिः । जगत्पतिमिति स्तोतुं समारेभे दिवस्पतिः ॥ ३६ ॥
जयेक्ष्वाकुकुलक्षीररत्नाकरनिशाकर । जगन्मोहमहानिद्राविद्रावणदिवाकर ॥ ३७ ॥
त्वामालोकयितुं त्वां च स्तोतुं त्वामर्चितुं तथा । आशंसाम्यात्मनोऽनंता दृशो जिह्वा भुजा अपि॥३८॥
स्वामिन् दशमतीर्थेश तव पादारविंदयोः । न्यस्तान्यमूनि पुष्पाणि संपन्नं तु फलं मयि ॥ ३९ ॥
अमंदं ददानंदं दुःखतापार्दितात्मनाम् । मर्त्यलोकेऽवातरस्त्वं जीमूत इव नूतनः ॥ ४० ॥

१ वैशाखकृष्णषष्ठ्याम् । २ इंद्रः । ३ ह्रदिनीनाथः समुद्रः ह्रदिनी नदी । ४ मेघ इव ।

वसंतसमयेनेव दर्शनेन तव प्रभो । स्युरद्य नूतनश्रीकाः प्राणिनः पादपा इव ॥ ४१ ॥

त्वद्दर्शनपवित्राणि यानि तानि दिनानि मे । दिनानि शेषाणि पुनः कृष्णपक्षतमस्विनी[1] ॥ ४२ ॥

स्यूतानी[2]वात्मना नित्यं कुकर्माणि शरीरिणाम् । त्वयाद्य विघटंतां द्रागयस्कांतेन लोहवत् ॥ ४३ ॥

अत्र वा दिवि वा तिष्ठंस्तिष्ठन्नन्यत्र वा क्वचित् । त्वद्वाहनमहं भूयां त्वामेव हृदये वहन् ॥ ४४ ॥

एवं दशममर्हंतं स्तुत्वा दशशतेक्षणः[3] । आदायानीय चामुंचन्नंदापार्श्वे यथास्थिति ॥ ४५ ॥

चक्रे दृढरथेनापि कारामोक्षादिनोत्सवः । जगतोऽपि हि मोक्षाय तादृशां जन्म पावनम् ॥ ४६ ॥

राज्ञः संतप्तमप्यंगं नंदास्पर्शेन शीत्यभूत् । गर्भस्थेऽस्मिन्निति तस्य नाम शीतल इत्यभूत् ॥ ४७ ॥

द्युसत्कुमारकै[4]र्वेलाधारींद्रैरिव[5] सेवितः । ववृधेऽम्भोधिवेलावज्जगन्नाथो दिने दिने ॥ ४८ ॥

शैशवं व्यत्यलंघिष्ट क्रमेण परमेश्वरः । शैशवाद्यौवनं चाप ग्रामात्पुरमिवाध्वगः ॥ ४९ ॥

प्रभुर्नवतिधन्वोच्चो रराजाजानुबाहुकः । पार्श्वतो लंबमानोरुवल्लीक इव पादपः ॥ ५० ॥

विषयेषु निरीहोऽपि पितृभ्यां प्रार्थितः प्रभुः । चकार पाणिग्रहणं पिंडादानमिव द्विपः ॥ ५१ ॥

अथ पूर्वसहस्राणां गतायां पंचविंशतौ । जग्राह पितृदाक्षिण्याद्राज्यं श्रीशीतलप्रभुः ॥ ५२ ॥

पंचाशत्पूर्वसहस्रीमपूर्व[6]भुजविक्रमः । पूर्वक्रमागतं राज्यं शशास विधिवत्प्रभुः ॥ ५३ ॥

अथ संसारसंवासाद्विरज्यतँ[7] प्रभोर्मनः । आसनानि प्रचेलुश्च लौकांतिकदिवौकसाम् ॥ ५४ ॥

---

१ कृष्णपक्षरात्रिसदृशानि । २ प्रोतानि । ३ इंद्रः । ४ देवकुमारैः । ५ यथा वेलाधारी लवणसमुद्रः देवकुमारैः सेवितः ववृधे तद्वत् । ६ अपूर्वः भुजयोः विक्रमो यस्य सः । ७ विरक्तमभूत् ।

अबुध्यंतावधिज्ञानादेवं ते त्रिदिवौकसः । जंबूद्वीपाभिधे द्वीपे भरतार्धे च दक्षिणे ॥ ५५ ॥
दशमो भगवानर्हन् व्रतेच्छुर्वर्तते ततः । तं वयं प्रेरयामोऽद्य सदाकृत्यमिदं हि नः ॥ ५६ ॥ युग्मम् ॥
विमृश्यैवं ब्रह्मलोकात्सुराः सारस्वतादयः । एत्य विज्ञापयामासुरिति स्वामिनमानताः ॥ ५७ ॥
अरण्यस्रोतसीवास्मिंस्तीर्थाभावेन दुस्तरे । संसारे विश्वकृपया तीर्थं नाथ प्रवर्तय ॥ ५८ ॥
इत्युदित्वा ययुर्ब्रह्मलोकं लौकांतिकामराः । शीतलस्वाम्यपि ददौ दानं संवत्सरावधि ॥ ५९ ॥
अंते च तस्य दानस्य सुरेंद्रैश्चलितासनैः । दीक्षाकल्याणकस्नात्रं विदधे शीतलप्रभोः ॥ ६० ॥
कृतांगरागो भगवानामुक्तांशुकभूषणः । त्रिजगद्भूषणं नाथो दत्तबाहुर्विडौजसा ॥ ६१ ॥
अन्यैरपि धृतछत्रचामरादिः सुरेश्वरैः । अध्यारुरोह शिबिकारत्नं चंद्रप्रभाभिधम् ॥ ६२ ॥
॥ युग्मम् ॥
सुरासुरसहस्राणां सहस्रैः परिवारितः । सहस्राम्रवणं नाम स्वपुरोपवनं ययौ ॥ ६३ ॥
ततस्तितीर्षुः संसारं भारवद्भूषणादिकम् । उज्झांचकार झगिति प्रभुः शिवगतिप्रियः ॥ ६४ ॥
शक्रन्यस्तं देवदूष्यांशुकमंसस्थले दधत् । पंचभिर्मुष्टिभिः केशानुच्चखान जगत्पतिः ॥ ६५ ॥
क्षीरोदे न्यस्य तान् केशान् शक्रे पुनरुपेयुषि । निषिद्धतुमुले बद्धांजलौ द्वाःस्थ इव स्थिते ॥ ६६ ॥
सुरासुरनरेंद्राणां प्रत्यक्षमपरेऽहनि । माघस्य कृष्णद्वादश्यां पूर्वाषाढास्थिते विधौ ॥ ६७ ॥

---

१ पक्षे जलावताराभावेन । २ आमुक्तानि स्वीकृतानि अंशुकभूषणानि येन सः । ३ मोक्षगतिप्रियः । ४ स्कंधदेशे ।

समं नृपसहस्रेण कृतषष्ठतपाः प्रभुः । सावद्ययोगविरति[1]प्रतिज्ञां प्रत्यपद्यत ॥ ६८ ॥

॥ त्रिभिर्विशेषकम् ॥

तुर्यं ज्ञानं प्रभोर्जज्ञे मनःपर्ययसंज्ञकम् । कृत्वा प्रणामं च ययुः स्वं स्वं स्थानं सुरादयः ॥ ६९ ॥

द्वितीयेऽह्नि रिष्टपुरे पुनर्वसुनृपौकसि । पारणं परमान्नेन विदधे शीतलप्रभुः ॥ ७० ॥

चक्रे च वसुधारादिपंचकं विबुधैस्ततः । स्वर्णपीठं पुनस्तत्र पुनर्वसुनृपो व्यधात् ॥ ७१ ॥

विविधाभिग्रहधरः सहमानः परीषहान् । छद्मस्थतया त्रीन् मासान् व्यहार्षीच्छीतलप्रभुः ॥ ७२ ॥

सहस्राम्रवणं भूयोऽप्याजगाम जगद्गुरुः । तत्र प्रतिमया तस्थावधस्तात्प्लक्षशाखिनः ॥ ७३ ॥

[2]भटो वप्रमिवारुह्य शुक्लध्यानं द्वितीयकम् । जघान घातिकर्माणि रिपूनिव जगद्गुरुः ॥ ७४ ॥

पौषकृष्णचतुर्दश्यां पूर्वाषाढागते विधौ । केवलज्ञानमुत्पेदे शीतलस्वामिनस्ततः ॥ ७५ ॥

वप्रैस्त्रिभिश्चतुर्द्वारै [3]रत्नसौवर्णराजतैः । ततः समवसरणं चक्रुर्देवासुरेश्वराः ॥ ७६ ॥

तत्र प्रविश्य प्राग्द्वारा प्रदक्षिणयकरोत्प्रभुः । चैत्यवृक्षमशीत्यग्रदशधन्वशतोन्नतम् ॥ ७७ ॥

"नमस्तीर्थाये"ति वदन् पूर्वसिंहासने प्रभुः । न्यषददिक्षु चान्यासु तद्रूपाण्यमरा व्यधुः ॥ ७८ ॥

तत्र तस्थुर्यथास्थानमथान्येऽप्यमरादयः । स्वामिवाचं प्रतीक्षंतः [4]स्तनितं बर्हिणा इव ॥ ७९ ॥

स्वामिनं शीतलमथ शिरःसंस्पृष्टभूतलः । नमस्कृत्यांजलिधर इति वज्रधरोऽस्तवीत् ॥ ८० ॥

त्वत्पादपंकजनखद्युतिजालजलाप्लवैः । [5]स्नायं स्नायं पुनंति स्वं धन्यास्त्रिभुवनेश्वर ॥ ८१ ॥

१ प्रतिज्ञां प्रत्याख्यानम् । २ योधः । ३ रत्नसुवर्णरूप्यमयैः । ४ मेघगार्जितम् । ५ स्नात्वा स्नात्वा ।

भास्करेणेव गगनं हंसेनेव महासरः । पार्थिवेनेव नगरं शोभते भारतं त्वया ॥ ८२ ॥
आलोकस्तिमिरेणेव सूर्यास्तें[1]दूदयांतरे । मिथ्यात्वेन पराभूतो धर्मस्तीर्थद्व्यांतरे ॥ ८३ ॥
जगदंधमिदं जज्ञे निर्विवेक[2]विलोचनम् । अपथेषु प्रववृते दिङ्मूढमिव सर्वतः ॥ ८४ ॥
अधर्मो धर्मबुध्या चादेवता देवताधिया । गुरुबुध्या चागुरवो भ्रांतैर्जगृहिरे जनैः ॥ ८५ ॥
नरका[3]वटपाताय जगत्यस्मिन्नुपस्थिते । निसर्गकरुणांभोधिस्तत्पुण्यैस्त्वमवातरः ॥ ८६ ॥
मिथ्यात्वाशी[4]विषो लोके प्रभविष्णुरसौ चिरम् । तावदेव न यावत्ते प्रसरेद्वचनामृतम् ॥ ८७ ॥
तन्मिथ्यात्वापसारेण सम्यक्त्वं जगतोऽधुना । भावि प्रभो केवलं ते घातिकर्मक्षयादिव ॥ ८८ ॥
इत्थं स्तुत्वा स्थिते शक्रे भगवान् शीतलप्रभुः । गिरा सुधामधुरया विदधे देशनामिति ॥ ८९ ॥
संसारे क्षणिकं सर्वं नानादुःखनिबंधनम् । मोक्षाय यतितव्यं तद्भवेन्मोक्षस्तु संवरात् ॥ ९० ॥
सर्वेषामाश्रवाणां तु निरोधः संवरः स्मृतः । स पुनर्भिद्यते द्वेधा द्रव्यभावविभेदतः ॥ ९१ ॥
यः कर्मपुद्गलादानछेदः स द्रव्यसंवरः । भवहेतुक्रियात्यागः स पुनर्भावसंवरः ॥ ९२ ॥
येन येन ह्युपायेन रुध्यते यो य आश्रवः । तस्य तस्य निरोधाय स स योज्यो मनीषिभिः ॥ ९३ ॥
क्षमया मृदुभावेन ऋजुत्वेनाप्यनीह[5]या । क्रोधं मानं तथा मायां लोभं रुंध्याद्यथाक्रमम् ॥ ९४ ॥
असंयम[6]कृतोत्सेकान् विषयान् विषसंनिभान् । निराकुर्यादखंडेन संयमेन महामतिः ॥ ९५ ॥

---

१ सूर्यास्तादनंतरं चंद्रोदयात्पूर्वं च । २ विवेक एव विलोचनं नेत्रं तेन रहितम् । ३ नरकगर्तायां पतनाय । ४ आशीविपः सर्पः । ५ अनिच्छयालोभमित्यनुक्रमेण । ६ असंयमेन कृत उत्सेको गर्वो यैस्तान् ।

तिसृभिर्गुप्तिभिर्योगान् प्रमादं चाप्रमादतः । सावद्ययोगहानेन विरतिं चापि साधयेत् ॥ ९६ ॥
सद्दर्शनेन मिथ्यात्वं शुभस्थैर्येण चेतसः । विजयेतार्त्तरौद्रे च संवरार्थं कृतोद्यमः ॥ ९७ ॥
यथा चतुष्पथस्थस्य बहुद्वारस्य वेश्मनः । अनावृतेषु द्वारेषु रजः प्रविशति ध्रुवम् ॥ ९८ ॥
प्रविष्टं स्नेहयोगाच्च[1] तन्मयत्वेन बध्यते । न विशेन्न च बध्येत द्वारेषु स्थगितेषु[2] च ॥ ९९ ॥
यथा वा सरसि क्वापि सर्वैर्द्वारैर्विशेज्जलम् । तेषु तु प्रतिरुद्धेषु प्रविशेन्न मनागपि ॥ १०० ॥
यथा वा यानपात्रस्य मध्ये रंध्रैर्विशेज्जलम् । कृते रंध्रपिधाने तु न स्तोकमपि तद्विशेत् ॥ १०१ ॥
योगादिष्वाश्रवद्वारेष्वेवं रुद्धेषु सर्वतः । कर्मद्रव्यप्रवेशो न जीवे संवरशालिनि[3] ॥ १०२ ॥
संवरादाश्रवद्वारनिरोधः संवरः पुनः । क्षांत्यादिभेदाद्बहुधा तथैव प्रतिपादितः ॥ १०३ ॥
गुणस्थानेषु यो यः स्यात्संवरः स स उच्यते । मिथ्यात्वानुदयात्परस्थेषु मिथ्यात्वसंवरः ॥ १०४ ॥
तथा देशविरत्यादौ स्यादविरतिसंवरः । अप्रमत्तसंयतादौ प्रमादसंवरो मतः ॥ १०५ ॥
प्रशांतक्षीणमोहादौ भवेत् कषायसंवरः । अयोग्याख्यकेवलिनि संपूर्णो योगसंवरः ॥ १०६ ॥
संवृतः संवरेणैवं भवस्यांतं व्रजेत्सुधीः । निश्छिद्रयानपात्रेण सांयात्रिक इवांबुधेः ॥ १०७ ॥
प्रभोस्तया देशनया प्रबुद्धा बहवो जनाः । प्रव्रज्यां जगृहुः केऽपि केऽपि श्रावकतां पुनः ॥ १०८ ॥
आनंदाद्या एकाशीतिः प्रभोर्गणभृतोऽभवन् । देशनांते प्रभोश्चक्रेऽथानंदो धर्मदेशनाम् ॥ १०९ ॥
आनंददेशनांते च नमस्कृत्य जगद्गुरुम् । स्थानं निजनिजं जग्मुः सुरासुरनरेश्वराः ॥ ११० ॥

---

१ रागयोगात् । २ पिहितेषु । ३ संवरेण शालते शोभते तस्मिन् ।

तत्तीर्थभूर्ब्रह्मनामा यक्षस्त्र्यक्षश्चतुर्मुखः । पद्मासनः श्वेतवर्णश्चतुर्भिर्दक्षिणैर्भुजैः ॥ १११ ॥
मातुलिंगमुद्गरभृत्सपाशाभयदायिभिः । वामैस्तु नकुलगदांकुशाक्षसूत्रधारिभिः ॥ ११२ ॥
तथोत्पन्ना त्वशोकेति मुद्गवर्णाब्दवाहना[1] । बिभ्राणा दक्षिणौ बाहुदंडौ वरदपाशिनौ ॥ ११३ ॥
फलांकुशधरौ बाहू वहंती दक्षिणेतरौ । उभे अभूतां दशमार्हतः शासनदेवते ॥ ११४ ॥
उपास्यमानस्ताभ्यां च विजह्रे शीतलप्रभुः । ततः पूर्वसहस्रांस्त्रिमासोनां पंचविंशतिम् ॥ ११५ ॥
लक्षं मुनीनां साध्वीनां लक्षमेकं षडुत्तरम् । चतुर्दशपूर्वभृतां चतुर्दशशतानि तु ॥ ११६ ॥
अवधिज्ञानधराणां द्वासप्ततिशती पुनः । सार्धाः सप्तसहस्रास्तु मनःपर्ययधारिणाम् ॥ ११७ ॥
शतानि सप्ततिरथ केवलज्ञानधारिणाम् । जातवैक्रियलब्धीनां सहस्रा द्वादशैव तु ॥ ११८ ॥
शतानि चाष्टपंचाशद्वादलब्धिमतां पुनः । श्रावकाणामुभे लक्षे नवाशीतिसहस्र्यपि ॥ ११९ ॥
श्राविकाणां चतुर्लक्ष्यष्टपंचाशत्सहस्रयुक् । इति जज्ञे परीवारः प्रभोर्विहरतः सतः ॥ १२० ॥
मोक्षकालेऽथ संप्राप्ते संमेताद्रिं ययौ प्रभुः । प्रपेदेऽनशनं तत्र सहस्रेणर्षिभिः सह ॥ १२१ ॥
मासांते वैशाखकृष्णद्वितीयायां निशाकरे । पूर्वाषाढागते स्वामी मोक्षेऽगात्तैः सहर्षिभिः ॥ १२२ ॥
कुमारभावे पूर्वाणां सहस्राः पंचविंशतिः । पंचाशत्पूर्वसहस्राः पृथिवीपरिपालने ॥ १२३ ॥
प्रव्रज्यापालने पूर्वसहस्राः पंचविंशतिः । एवमायुः पूर्वलक्षमभूच्छ्रीशीतलप्रभोः ॥ १२४ ॥

---

१ मेघवाहना ।

सुविधिस्वामिनिर्वाणान्निर्वाणं शीतलप्रभोः । सागरोपमकोटीषु व्यतीतासु नवस्वभूत् ॥ १२५ ॥

श्रीशीतलस्य मुनिभिः सह तैर्विमुक्तिमासेदुषो दिविषदां पतयो यथावत् ।
निर्वाणयानमहिमानमुदारशोभं चक्रुर्ययुर्निजनिजं पुनरेव लोकम् ॥ १२६ ॥

श्रीसंभवप्रभृतितीर्थकृतां तृतीयेऽष्टानां चरित्रमिह पर्ववरेऽष्टसर्गे ।
ध्येयं पदस्थमिव वारिरुहेऽष्टपत्रेऽनुध्यायतो भवति सिद्धिरवश्यमेव ॥ १२७ ॥

इत्याचार्यश्रीहेमचंद्राविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये तृतीये पर्वणि
श्रीशीतलस्वामिचरितवर्णनो नामाष्टमः सर्गः ।

॥ तृतीयं पर्व समाप्तम् ॥

॥ श्रीः ॥

# ॥ त्रिषष्टिशलाका पुरुषचरित्रम् ॥

## ॥ चतुर्थं पर्व ॥

## प्रथमः सर्गः ।

### श्री श्रेयांसनाथचरित्रम् ।

श्रीश्रेयांसप्रभोः पादाः श्रेयो विश्राणयंतु[1] वः । निःश्रेयसपथालोकदीपायित[2]नखांशवः ॥ १ ॥
श्रीश्रेयांसजिनेंद्रस्य पवित्रितजगत्त्रयम् । दात्रं[3] कर्मवल्लीनां चरित्रमिदमुच्यते ॥ २ ॥
पुष्करवरद्वीपार्धे प्राग्विदेहेषु सुंदरे । विजये कच्छसंज्ञेऽस्ति नाम्ना क्षेमेति पूर्वरा ॥ ३ ॥
महीभृन्मौलिमुकुटघृष्टांघ्रिनलिनद्वयः । राजा नलिनगुल्मोऽभूद्गुणैरमलिनः सदा ॥ ४ ॥
स स्वामी मंत्रिणो मंत्रबलाकृष्टरिपुश्रियः । सुरराष्ट्रोपमं राष्ट्रं सर्वारिष्टविवर्जितम् ॥ ५ ॥
दुर्गाणि जितवैताढ्यविद्याधरपुराणि तु । कोशांश्च श्रीद[4]सर्वस्वाधरीकारपरायणान् ॥ ६ ॥
बलं हस्त्यश्वपादातरथव्याप्तभूतलम् । असुहृद्धृदयक्षेत्रकर्षकान् सुहृदोऽपि च ॥ ७ ॥

---

१ यच्छंतु । २ मोक्षमार्गालोके दीप इवाचरिता नखांशवो येषां ते । ३ दात्रम् । ४ श्रीदः कुबेरः ।

राज्यस्य विकलांगत्वं मा भूदितिधिया व्यधात् । जगदेकमहाबाहुर्बाहुदंतेयविक्रमः ॥ ८ ॥

॥ चतुर्भिः कलापकम् ॥

वपुर्यौवनलक्ष्मीणां साराणामप्यसारताम् । सोऽमन्यत महाप्राज्ञो विवेकामलमानसः ॥ ९ ॥

कुत्रोजनेनाहरिव निशामिव कुशय्यया । कियंतमपि सोऽनैषीत् कालं राज्येन शुद्धधीः ॥ १० ॥

राज्यरोगं समुत्सृज्य तत्त्वबोधौषधेन सः । वज्रदत्तर्षिणा दत्तां दीक्षामादत्त धर्मधीः ॥ ११ ॥

तप्यमानस्तपस्तीव्रं सहमानः परीषहान् । कर्मेव कृशयन्नंगं विजहार स निर्ममः ॥ १२ ॥

अर्हद्भक्त्यादिभिस्तैस्तैः स्थानैः प्रवचनोदितैः । उपार्जयामास दृढं तीर्थकृन्नामकर्म सः ॥ १३ ॥

महातपाः शुक्लध्यानश्चतुःशरणतत्परः । काले प्राप्तावसानः स महाशुक्रदिवं ययौ ॥ १४ ॥

ततश्च जंबूद्वीपेऽस्मिन् भरतक्षेत्रभूषणम् । रत्ननूपुरवद्भूमेरस्ति सिंहपुरं पुरम् ॥ १५ ॥

संक्रांततारका रत्नवलभ्यस्तत्र वेश्मनाम् । श्रियं सदक्षशारस्य शारपट्टस्य बिभ्रति ॥ १६ ॥

तद्वप्रमेखलासूच्चैर्विश्रांता भांति वारिदाः । चंद्ररक्षाकृते दत्ताः कज्जलस्थासकाइव ॥ १७ ॥

तत्रेभ्यवेश्मसु स्त्रीणां मंजुमंजीरशिंजितैः । वितन्यते श्रियो देव्या नित्यं संगीतकोत्सवः ॥ १८ ॥

रत्नावकरवाहीनि स्रोतांस्यपि तदौकसाम् । यांति रत्नाकरस्रोतस्तुलां वर्षति वारिदे ॥ १९ ॥

---

१ बाहुदंतेय इंद्रस्तस्य विक्रम इव विक्रमो यस्य सः । २ सारभूतानाम् । ३ दिनमिव । ४ ममतारहितः । ५ शास्त्रोदितैः । ६ तीर्थ-करसिद्धसाधुधर्माश्चतुःशरणम् । ७ सन्तश्च तेऽक्षाश्च पाशास्तैः शारस्य, कर्बूरस्य तारकपाशयोर्वलभीपट्टयोश्च सादृश्यम् । ८ लोकेऽपि दृष्टिदोषनिरासार्थं कज्जलतिलकं क्रियत इति प्रसिद्धिः । ९ अवकरः समूहः ।

आद्यंभविष्णुर्यशसा प्रभविष्णुर्भुजौजसा । विष्णुराज इति क्ष्मापस्तत्राभूद्विष्णुविक्रमः ॥ २० ॥
तत्रेंद्रियजयो नाम गुणो बीजमिवावनौ । सस्यराशिमिवासूत गुणराशिं समुज्ज्वलम् ॥ २१ ॥
प्रणते च विपक्षे च तुष्टा रुष्टाश्च तद्दृशः ॥ ययुः स्वयंवरस्रक्त्वं श्रियोऽपि च नियोऽपि च ॥ २२ ॥
दानधर्मइवौचित्यात् सूनृतेनेव भारती । अवदातेन यशसा शुशुभे तस्य विक्रमः ॥ २३ ॥
गुणानां शौर्यगांभीर्यधैर्यादीनां स भूयसाम् । नित्यं क्रीडनसंगीतनिकेतनमिवाभवत् ॥ २४ ॥
जिष्णोरिव शची रूपभ्राजिष्णुर्विष्णुरित्यभूत् । द्वितीयेव मही स्थैर्यात् पत्नी तस्य महीपतेः ॥ २५ ॥
शिरीषसुकुमारस्य सा निजांगस्य भूषणम् । निशातं खड्गधारावत् सतीव्रतमधारयत् ॥ २६ ॥
यथाभूदप्रतिछंदो विक्रमेण स भूपतिः । तथा साप्यप्रतिछंदा रूपलावण्यसंपदा ॥ २७ ॥
अलसा सा गतावेव न पुनर्धर्मकर्मणि । मध्यप्रदेश एवाभूत्तुछा न पुनराशये ॥ २८ ॥
तस्या राज्ञोऽपि च मिथोऽनुस्यूतमनसोरिव । अछ्या प्रीतिरभवदविघ्नं रममाणयोः ॥ २९ ॥
इतश्च शुक्रे नलिनगुल्मस्य पृथिवीपतेः । जीवः प्रकृष्टसंख्यं स निजमायुरपूरयत् ॥ ३० ॥
ज्येष्ठस्य षष्ठ्यां कृष्णायां श्रवणस्थे निशाकरे । च्युत्वा ततस्तस्य जीवो विष्णुकुक्षाववातरत् ॥ ३१ ॥
नारकाणामपि सुखमुद्योतश्च जगत्त्रये । जज्ञे तदा क्षणं स्याद्धि कल्याणेष्वर्हतामिदम् ॥ ३२ ॥
संक्षिप्त इव वैताढ्यः श्वेतवर्णो महागजः । समत्स्यः शरदंभोदइवोत्तुंगः सितो वृषः ॥ ३३ ॥

१ शत्रौ । २ इंद्रस्य । ३ तीक्ष्णम् । ४ असमानः । ५ कटिप्रदेशे तुच्छा कृशा न पुनस्तुच्छान्तःकरणे ।

उत्पुच्छो विधूतछत्र इव केसरिपुंगवः । साभिषेका महालक्ष्मीर्मूर्त्त्यंतरमिवात्मनः ॥ ३४ ॥
सुगंधि सुमनोदाम मूर्त्तमिव यशः स्वकम् । सुधाकुंडमिव ज्योत्स्नाप्लुतः पर्वनिशाकरः ॥ ३५ ॥
मार्तंडमंडलं दीप्रं दिवः सीमंतरत्नवत् । ध्वजश्चलपताकश्च सशाख इव पादपः ॥ ३६ ॥
पूर्णकुंभो गरीयांश्च निधानं श्रेयसामिव । महापद्मं पद्मसरः पद्महृदइवापरः ॥ ३७ ॥
आरुरुक्षुरिव दिवमुत्कल्लोलो महार्णवः । अनुजं पालकस्येव विमानवरमायतम् ॥ ३८ ॥
रत्नपुंजश्च सर्वस्वमिव रत्नाकरोद्धृतम् । निर्धूमश्चानलो भौमंमंडलस्यानुहारकः ॥ ३९ ॥
एते तदा विष्णुदेव्या महास्वप्नाश्चतुर्दश । मुखे विशंतोऽदृश्यंत तीर्थकृज्जन्मसूचकाः ॥ ४० ॥
तपस्यकृष्णद्वादश्यां श्रवणे खड्गिलांछनम् । स्वर्णवर्णं विष्णुदेवी सुखेन सुषुवे सुतम् ॥ ४१ ॥
अथाधोलोकवास्तव्या अष्टौ भोगंकरादयः । दिक्कुमार्यः समाजग्मुर्विज्ञायासनकंपतः ॥ ४२ ॥
तीर्थकृन्मातरं नत्वा मा भैषीर्वादपूर्वकम् । आत्मानं ज्ञापयित्वा च कृत्वा संवर्तकानिलम् ॥ ४३ ॥
परितः सूतिकागारमायोजनमथासृजन् । स्वामिमातुरदूरे ता गायंत्यश्चावतस्थिरे ॥ ४४ ॥

॥ युग्मम् ॥

नंदनोद्यानकूटस्था ऊर्ध्वलोकजुषोऽष्ट च । एत्य मेघंकराद्या दिक्कन्या देवीं प्रणम्य च ॥ ४५ ॥
स्वं ज्ञापयित्वा कृत्वा च दुर्दिनं गंधवारिभिः । सिषिचुः क्ष्मां सूतिवेश्म परितो योजनावधिम् ॥ ४६ ॥

१ पूर्णिमाचंद्रः । २ शाखासहितो वृक्षइव । ३ तन्नाम्नो विमानस्य । ४ मंगलग्रहमंडलस्य । ५ फाल्गुनकृष्णद्वादश्याम् । ६ योजनपर्यंतम् । ७ ऊर्ध्वलोकवास्तव्याः । ८ मेघाडंबरम् ।

विदधुः पुष्पवृष्टिं चाधांक्षुर्धूपं च सुंदरम् । गायंत्योऽर्हद्गुणांस्तस्थुर्विष्णुदेव्या अदूरतः ॥ ४७ ॥

॥ त्रिभिर्विशेषकम् ॥

रुचकस्य च पौरस्त्या[2] देव्यो नंदोत्तरादयः । अपाच्याः समाहाराद्याः प्रतीचीनास्त्विलादयः ॥ ४८ ॥

अलंबुसाद्यास्तूदीच्या अष्ट प्रत्येकमेत्य ताः । नत्वार्हंतं तदंबां च ज्ञापयित्वा स्वमुच्चकैः ॥ ४९ ॥

धृत्वा दर्पणभृंगारव्यजनश्वेतचामरान् । पूर्वादिदिक्क्रमेणास्थुर्गायंत्यः स्वामिनो गुणान् ॥ ५० ॥

॥ त्रिभिर्विशेषकम् ॥

चतस्र एत्य चित्राद्या रुचकस्य विदिग्भवाः । तद्वन्नत्वा विदिक्ष्वस्थुर्गायंत्यो दीपपाणयः ॥ ५१ ॥

चतस्रो रुचकांतस्था रूपाद्या दिक्कुमारिकाः । अर्हंतमर्हदंबां च नत्वा स्वज्ञप्तिपूर्वकम् ॥ ५२ ॥

चतुरंगुल[3]कोत्कर्षं स्वामिनालमखंडयन् । खनित्वा विवरं तत्र निचिक्षुस्तच्च[4] तत्क्षणात् ॥ ५३ ॥

॥ युग्मम् ॥

विवरं वज्ररत्नैस्तदापूर्योपरि तस्य च । बबंधुर्निबिडं[5] पीठं दूर्वया ज्ञागपूर्वया ॥ ५४ ॥

सूतिकावेश्मनस्तस्य चक्रुस्तिसृषु दिक्षु ताः । सिंहासनचतुःशालवंति रंभागृहाणि[6] च ॥ ५५ ॥

हस्तेऽर्हंतं गृहीत्वार्हन्मातरं च भुजे तथा । आपार्श्वरंभागृहचतुःशालसिंहासने न्यधुः ॥ ५६ ॥

शतपाकादिभिस्तैलैरुभावभ्यज्य तत्र ताः । गंधद्रव्यैः सूक्ष्मपिष्टैः सुखस्पर्श[7]मुदवर्तयन् ॥ ५७ ॥

---

१ अदहन् । २ पूर्वदिग्वास्तव्याः पुरोभवाः पौरस्त्या वा । ३ अंगुलचतुष्ट्यादधिकम् । ४ चिक्षिपुः । ५ दृढम् । ६ कदलीगृहाणि । ७ सुखस्पर्शं यथा स्यात्तथा ।

प्राच्यरंभागृहचतुःशालसिंहासने ततः । तौ न्यस्यास्नपयन् गंधपुष्पशुभ्रोदकैश्च ताः ॥ ५८ ॥
ततस्ताः परिधाप्योभौ वस्त्रालंकरणादिकम् । उदग्रंभागृहचतुःशालसिंहासने न्यधुः ॥ ५९ ॥
गोशीर्षचंदनं दग्ध्वा सद्योऽरणि[1]कृताग्निना । तद्भस्मना बबंधुस्ता रक्षाग्रंथिं द्वयोरपि ॥ ६० ॥
पर्वतायुर्भवेत्याशीःपूर्वकं स्वामिकर्णयोः । ताः समास्फालयामासू रत्नपाषाणगोलकौ ॥ ६१ ॥
अर्हदर्हज्जनन्यौ तास्ततः सूतिगृहेऽनयन् । तयोरनतिदूरेऽस्थुर्गायंत्यो मंगलान्यथ ॥ ६२ ॥
अथ शक्रः समागत्य स्वामिनः सूतिकागृहम् । पालकेन विमानेन प्रदक्षिण्यकृत द्रुतम् ॥ ६३ ॥
ऐशान्यां पालकं मुक्त्वा सूतिवेश्म प्रविश्य सः । अर्हंतमर्हदंबां च नमश्चक्रे पुरंदरः ॥ ६४ ॥
दत्त्वावस्वापिनीं देव्याः पार्श्वेऽर्हत्प्रतिरूपकम्[2] । विन्यस्याथ विचक्रे च पंचरूपमथात्मनः ॥ ६५ ॥
एकेन प्रभुमुद्धृत्य छत्रमन्येन चामरे । अन्याभ्यां वज्रं चान्येन पुरो रूपेण सोऽचलत् ॥ ६६ ॥
क्षणान्मेरावतिपांडुकंबलामासदच्छिलाम् । शक्रः सिंहासने तत्रासांचक्रेऽकस्थितप्रभुः ॥ ६७ ॥
अथाच्युतप्रभृतयः कल्पेंद्रा नव ते तथा । इंद्रा भवनपतयो विंशतिश्चमरादयः ॥ ६८ ॥
द्वात्रिंशद्व्यंतराधीशाः कालप्रभृतयोऽपि च । सूर्याचंद्रमसाविंद्रौ ज्योतिष्काणामुभौ पुनः ॥ ६९ ॥
इति त्रिषष्टिस्तत्रेयुर्जन्मस्नात्रकृते प्रभोः । विचक्रुः पूर्णकुंभादींद्राज्ञयाथाभियोगिकाः ॥ ७० ॥
अथाच्युतप्रभृतयः सर्वेऽपींद्रा यथाक्रमम् । स्वामिनः स्नपनं चक्रुः पवित्रैस्तीर्थवारिभिः ॥ ७१ ॥
अथेशानपतेरंके शक्रो न्यस्य जगत्पतिम् । विचक्रे दिक्चतुष्केऽपि चतुरः स्फाटिकान्वृषान् ॥ ७२ ॥

१ अरणिः काष्ठविशेषः । २ अर्हतः प्रतिकृतिम् ।

तेषां शृंगोद्गतैरंते मिलित्वा विनिपातिभिः[१] । स्वामिनं स्नपयामास शक्रः शुचिभिरंबुभिः ॥ ७३ ॥
संहृत्य स्फाटिकानुक्ष्णः[२] कृत्वा चर्चादिकं प्रभोः । उत्तार्यारात्रिकं चेति स्तोतुं शक्रः प्रचक्रमे ॥ ७४ ॥
सर्वकल्याणकश्रेष्ठं जन्मकल्याणकं तव । विश्राणयतु कल्याणं कल्याणीभक्तिके[३] मयि ॥ ७५ ॥
स्नपयाम्यथ चर्चामि किमर्चामि स्तवीमि किम् । त्वामितीश न तृप्तिर्मे त्वदाराधनकर्मणि ॥ ७६ ॥
वृषः[४] कुतीर्थिकव्याघ्रत्रासितस्त्वयि रक्षके । अमुष्मिन् भरतक्षेत्रे स्वैरं चरतु संप्रति ॥ ७७ ॥
अद्य स्वयमधिष्ठाय हृदयायतनं मम । दिष्ट्या देवाधिदेव त्वं सनाथीकुरुषेतराम् ॥ ७८ ॥
न तथा भूषणं नाथ ममैभिर्मुकुटादिभिः । यथा शिरोऽग्रलुठितैस्त्वत्पादनखरश्मिभिः ॥ ७९ ॥
न तथा त्रिजगन्नाथ स्तूयमानस्य मागधैः । मम प्रमोदो[५] भवति त्वद्गुणान् स्तुवतो यथा ॥ ८० ॥
रत्नसिंहासनस्थस्य न हि मध्येसभं[६] तथा । उच्चैस्त्वं[७] त्वत्पुरो भूमिनिषण्णस्य यथा मम ॥ ८१ ॥
स्वराज्यसंभवामेतां न कांक्षामि स्वतंत्रताम् । परतंत्रश्चिरं भूयां नाथेन भवता प्रभो ॥ ८२ ॥
इति स्तुत्वा गृहीत्वेशं गत्वार्हन्मातुरंतिके । संहृत्यार्हत्प्रतिछंदावस्वापिन्यौ न्यधाद्धरिः ॥ ८३ ॥
स्वामिसूतिगृहाच्छक्रो मेरुशैलादथापरे । इंद्रा जग्मुर्यथास्थानं विसृष्टा इव सेवकाः ॥ ८४ ॥
महांतमुत्सवं चक्रे विष्णुराजोऽप्यथ प्रगे[८] । तदा प्रमोदो मेदिन्यामेकछत्र इवाभवत् ॥ ८५ ॥
जिनस्य मातापितरावुत्सवेन महीयसा । अभिधां श्रेयसि[९] दिने श्रेयांस इति चक्रतुः ॥ ८६ ॥

१ पतद्भिः । २ वृषान् । ३ कल्याणी भक्तिर्यस्य तस्मिन् प्रियादित्वान्नपुंवद्भावः । ४ धर्मः पक्षे वृषः गौः । ५ हर्षः । ६ सभायाम् । ७ महत्त्वम् । ८ प्रातःकाले । ९ शुभे ।

धात्रीभिः शक्रादिष्टाभिर्लाल्यमानोऽथ पंचभिः । पिबन् शक्राहितसुधं[1] स्वांगुष्ठं स्वाम्यवर्धत ॥ ८७ ॥
ज्ञानत्रयधरोऽपीशो मौग्ध्यं बाल्योचितं दधौ । चंद्रांशुरपि[2] न प्रातश्चंडतामवलंबते ॥ ८८ ॥
सुरासुरनृकुमारैः क्रीडन् कालेन शैशवात् । आरोहद्यौवनं स्वामी स्यंदनादिव कुंजरम् ॥ ८९ ॥
अशीतिधनुरुत्तुंगः स्वामी पितुरुपरोधतः[3] । पर्यणैषीद्राजकन्या भववैराग्यभागपि ॥ ९० ॥
जन्मतो वर्षलक्षाणां गतायामेकविंशतौ । पितुः प्रार्थनया नाथः पृथ्वीभारमुपाददे ॥ ९१ ॥
द्विचत्वारिंशतं वर्षलक्षाणि क्षोणिमंफलम् । ररक्षाक्षीणमहिमा श्रेयांसः श्रेयसां निधिः ॥ ९२ ॥
स्वामी भवविरक्तोऽथ दीक्षामादित्सुरुत्सुकः[4] । प्रैर्थतोपेत्य शकुनैरिव लोकांतिकामरैः ॥ ९३ ॥
शक्रादेशात् कुवेरेण प्रेरितैर्जृंभकामरैः । अर्थेन पूर्यमाणेन स्वाम्यदाद्दानमाब्दिकम्[5] ॥ ९४ ॥
वत्सरांते समेत्यैर्जिनेंद्रस्य व्यधीयत । दीक्षाभिषेकः कर्मारिविजयायेव सत्वरम् ॥ ९५ ॥
दिव्यांगरागलिप्तांगो रत्नभूषणभूषितः । मंगल्यदिव्यवसनो मूर्त्तिं[6]स्थमिव मंगलम् ॥ ९६ ॥
विनीतेनेव भृत्येन दत्तबाहुर्बिडौजसा[7] । अपरैरपि छत्रचामरादिधरैर्वृतः ॥ ९७ ॥
आरुह्य रत्नैर्विमलां शिविकां विमलप्रभाम् । समावृतः सुरनरैः सहस्राम्रवणं ययौ ॥ ९८ ॥

॥ त्रिभिर्विशेषकम् ॥

शिविकातः समुत्तीर्य तत्रौज्झद्[8]भूषणादिकम् । देवदूष्यं देवराजन्यस्तं स्कंधे दधार च ॥ ९९ ॥

---

१ इंद्रेणाहिता संक्रांता सुधा यस्मिन् तम् । २ सूर्यः । ३ पितुराग्रहात् । ४ आदातुं ग्रहीतुमिच्छुः । ५ सांवत्सरिकम् । ६ मूर्त्ति-
मान् । ७ इंद्रेण । ८ तत्याज ।

फाल्गुनस्य त्रयोदश्यां कृष्णायां श्रवणे प्रभुः । षष्ठेनोदखनत्[1] केशान् पूर्वाह्णे पंचमुष्टिना ॥ १०० ॥
केशान्शक्रः समादाय स्वोत्तरीयांचलेन तान् । चिक्षेप च क्षीरनिधौ समीरणइव[2] क्षणात् ॥ १०१ ॥
निषिद्धे वज्रिणा मुष्टिसंज्ञया तुमुले ततः । प्रभुश्चारित्रमारोहद्वि[3]श्वाभयविभावनम् ॥ १०२ ॥
विश्वनाथेन सह च सहस्रमवनीभुजः । राज्यं तृणवदुत्सृज्य समुपाददिरे व्रतम् ॥ १०३ ॥
शाश्वतार्हत्प्रतिमानां कुर्वतोऽष्टाह्निकोत्सवम् । सुरासुराधिपतयः स्वं स्वं स्थानं ततो ययुः ॥ १०४ ॥
द्वितीयेऽहनि सिद्धार्थपुरे नंदनृपौकसि । पारणं परमान्नेन चकार परमेश्वरः ॥ १०५ ॥
अमरैर्वसुधारादिपंचकं विदधे ततः । रत्नपीठं स्वामिपादस्थाने नंदनृपेण तु ॥ १०६ ॥
ततः स्थानादथ स्वामी ग्रामाकरपुरादिषु । अप्रतिबद्धो विहर्तुं प्रावर्तत समीरवत् ॥ १०७ ॥
इतश्च पुंडरीकिण्यां प्राग्विदेहशिरोमणौ । पुर्यभूत् सुबलो राजा स महीं चिरमन्वशात् ॥ १०८ ॥
पार्श्वे मुनिवृषभर्षेः प्रव्रज्य समये च सः । तपस्तप्त्वा च मृत्वा च विमानेऽनुत्तरे ययौ ॥ १०९ ॥
इतः पुरे राजगृहे विश्वनंदिमहीपतेः । पत्न्यां प्रियंगौ विशाखनंदी नाम सुतोऽभवत् ॥ ११० ॥
विश्वनंदिनरेंद्रस्यावरजो[4] युवराडभूत् । विशाखभूतिर्मतिमान् वीर्यवान् विनयी नयी ॥ १११ ॥
विशाखभूतेर्भार्यायां धारिण्या तनयोऽभवत् । मरीचि[5]जीवः सुकृतैरनंतरभवार्जितैः ॥ ११२ ॥
विश्वभूतिरिति नाम पितरौ तस्य चक्रतुः । धात्रीजनैर्लाल्यमानो व्यवर्धिष्ट क्रमाच्च सः ॥ ११३ ॥

---

१ अकृषत् । २ वायुरिव । ३ विश्वस्याभयदायि । ४ लघुभ्राता । ५ भरतपुत्रस्य मरीचेः कथा प्रथमपर्वणि कथिता ।

कलाकलापं सोऽध्यैष्ट प्रपेदे सकलान् गुणान् । अंगस्य मूर्त्तनेपथ्यं क्रमात् प्राप च यौवनम् ॥ ११४ ॥
सांतःपुरः स चिक्रीडोद्याने पुष्पकरंडके । मनोज्ञतरभूयिष्ठे भूमिष्ठ इव नंदने ॥ ११५ ॥
विशाखनंदी क्रीडेच्छुस्तत्र राजसुतोऽप्यभूत् । तत्तूद्यानं न जैत्वासीदहितं विश्वभूतिना ॥ ११६ ॥
विशाखनंदिजननीदास्यः पुष्पार्थमागताः । तत्रापश्यन् विश्वभूतिं क्रीडंतं सप्रियाजनम् ॥ ११७ ॥
सेर्ष्याः प्रियंगुदेवीं ताः समुपेत्येदमूचिरे । यौवराजिर्विश्वभूतिरेव राजेह नापरः ॥ ११८ ॥
सांतःपुरोऽपि हि सदोद्याने पुष्पकरंडके । स क्रीडति बहिस्ते तु सुतस्तिष्ठति वारितः ॥ ११९ ॥
तच्छ्रुत्वा कुपिता देवी प्राविशत् कोपवेश्मनि । किमेतदिति सा सद्यो राज्ञा पृष्टाब्रवीदिदम् ॥ १२० ॥
राजेव रमते विश्वभूतिः पुष्पकरंडके । त्वयि सत्यपि मे सूनुर्बहिस्तिष्ठति रंकवत् ॥ १२१ ॥
राज्ञाप्यूचे व्यवस्थेयं कुलेऽस्माकं हि मानिनि । क्रीडत्येकस्मिन् कुमारे द्वितीयः प्रविशेन्न हि ॥ १२२ ॥
इत्याख्यातेऽपि भूपेन सा नाबुद्ध मनस्विनी । उपायज्ञस्ततो राजा यात्राभेरीमवादयत् ॥ १२३ ॥
आज्ञां पुरुषसिंहाख्यः सामंतो न करोति नः । इति तस्मै प्रस्थिताः स्म इत्युक्तिं च नृपोऽकरोत् ॥१२४॥
तच्छ्रुत्वा संभ्रमाद्विश्वभूतिरेत्याब्रवीदिदम् । मयि सत्यपि किं तातः स्वयं युद्धाय यास्यति ॥ १२५ ॥
इत्याद्युक्त्वा सनिर्बंधं निवार्य पृथिवीपतिम् । विश्वभूतिर्बलयुतस्तत्सामंतभुवं ययौ ॥ १२६ ॥
श्रुत्वा कुमारमायांतं स सामन्तः ससंभ्रमम् । अभ्येत्य भृत्यवद्भक्त्या निनाय निजवेश्मनि ॥ १२७ ॥
स्वामिन् किं करवाणीति वदन्नग्रे कृतांजलिः । हस्त्यश्वाद्युपदादानाद्विश्वभूतिमरंजयत् ॥ १२८ ॥

१ मूर्तिमद्भूषणरूपम् । २ कदाचित् । ३ युवराजस्य पुत्रः । ४ तव । ५ आग्रहेन सहितं यथा स्यात्तथा । ६ हस्त्यश्वादीनां प्राभृतदानात् ।

विरुद्धादर्शनाद्[1]विश्वभूतिर्निववृते ततः । पथा यथागतेनैव को हि कुप्येदनागसे[2] ॥ १२९ ॥
इतश्च विशाखनंदी राज्ञोद्याने प्रवेशितः । देशं भ्रांत्वा विश्वभूतिरप्यागात्तत्र पूर्ववत् ॥ १३० ॥
विशाखनंदी मध्येऽस्तीत्युदित्वा वेत्रपाणिना । वारितः स तथैवास्थान्मर्यादास्थामवारिधिः[3] ॥ १३१ ॥
दध्यौ चैवं विश्वभूतिस्तदाहममुतो वनात् । वनद्विपश्च कृष्टश्छद्मना ही करोमि किम् ॥ १३२ ॥
एवं कुमारः कुपितः कपित्थं फलमालिनम् । मुष्टिना ताडयामास दंतेनेव मतंगजः ॥ १३३ ॥
कपित्थैः पातितैश्छन्नां परितस्तदधोभुवम् । प्रदर्शयन् विश्वभूतिस्तमूचे वेत्रधारिणम् ॥ १३४ ॥
इत्थंकारं पातयामि सर्वेषां वः शिरांस्यपि । यदि ज्यायसि मे ताते भक्तिर्न ह्यंतरा[4] भवेत् ॥ १३५ ॥
यदर्थं वंचनोपाय एवं हंत प्रवर्तते । पर्याप्तं मम तैर्भोगैर्भोगि[5]पर्णैर्भोगिभोगवत्[6] ॥ १३६ ॥
एवमुक्त्वा विश्वभूतिर्विभूतिं तृणवज्जहौ । संभूतमुनिपादांते गत्वा च व्रतमाददे ॥ १३७ ॥
तच्च श्रुत्वा विश्वनंदी सांतःपुरपरिच्छदः । सहितो युवराजेन स्वयं तत्र समाययौ ॥१३८॥
सूरिपादान्नमस्कृत्य विश्वभूतिमुपेत्य च । विश्वनंदी निरानंदः सगद्गदमदोऽवदत् ॥ १३९ ॥
अस्मानापृच्छ्य सर्वं त्वमकार्षीर्वत्स सर्वदा । सहसा कृतवानेतत् किमस्मद्भाग्यसंक्षयात् ॥ १४० ॥
त्वय्याशा राज्यधरणे तातास्माकं सदैव हि । अकांडे किमभांक्षीस्तां त्वं त्राता व्यसने पुनः ॥ १४१ ॥
मुंचाद्यापि व्रतं वत्स भुंक्ष्व भोगान् यदृच्छया । रमस्व स्वैरमुद्याने प्राग्वत् पुष्पकरंडके ॥ १४२ ॥

१ विरोधादर्शनात् । २ निरपराधिने । ३ मर्यादायाः स्थाम्नश्च पराक्रमस्य वारिधिः । ४ विघ्नकारिणी । ५ भोगार्थम् । ६ । सर्पदेहवत् ।

विश्वभूतिरथावोचदलं मे भोगसंपदा । सुखं वैषयिकमिदं वस्तुतो दुःखमेव हि ॥ १४३ ॥
पाशंति[1] भवकारायां स्वजनस्नेहतंतवः । जंतवस्तैर्हि मुह्यंति लालाभिरिव मर्कटाः ॥ १४४ ॥
किंचिन्नातः परं वाच्यश्चरिष्यामि तपः परम् । परलोके सह याति सहायीभूय तत् खलु ॥ १४५ ॥
इति तेनोदिते राजा सानुतापो ययौ गृहम् । विश्वभूतिर्मुनिरपि व्यहार्षीद्गुरुणा सह ॥ १४६ ॥
षष्ठाष्टमादिनिरतो गुरुशुश्रूषणोद्यतः । क्रमात् सोऽधीतसूत्रार्थो[2] भूयांसं कालमत्यगात् ॥ १४७ ॥
गुरोरनुज्ञयैकाकिविहारप्रतिमाधरः । स विहर्तुं प्रववृते ग्रामाकरपुरादिषु ॥ १४८ ॥
विविधाभिग्रहपरो विहरन्नेकदा च सः । विश्वभूतिर्महासाधुर्जगाम मथुरां पुरीम् ॥ १४९ ॥
पैतृष्वसेयीमुद्वोढुं[3] मथुराराजकन्यकाम् । विशाखनंदी तत्रागात्तदा च सपरिच्छदः ॥ १५० ॥
विश्वभूतिश्च मासांतपारणाय परिभ्रमन् । विशाखनंदिशिबिरं[4] निकषा[5] समुपाययौ ॥ १५१ ॥
विशाखनंदिनो यांतं पुरुषास्तमदर्शयन् । विश्वभूतिकुमारोऽसाविति व्याहारिणो मुहुः ॥ १५२ ॥
विशाखनंदिनो रोषः सद्यस्तद्दर्शनादभूत् । गवैकया च पर्यस्तो[6] विश्वभूतिस्तदापतत् ॥ १५३ ॥
विशाखनंदी हसित्वा विश्वभूतिमदोऽवदत् । कपित्थपातनं स्थाम[7] तत् क्वेदानीमहो गतम् ॥ १५४ ॥
विशाखनंदिनं दृष्ट्वा विश्वभूतिरमर्षणः । गृहीत्वा शृंगयोस्तां गां भ्रमयामास पूलवत् ॥ १५५ ॥
ततो निवृत्तो दध्यौ च विश्वभूतिरिदं हृदि । मय्यद्यापि सरोषोऽयं निःसंगेऽपि हि दुर्मनाः ॥ १५६ ॥

---

१ भव एव कारा कारागृहं तस्यां स्वजनस्य स्नेह एव तंतवः पाशसदृशाः भवन्ति । २ पठितः सूत्रस्यार्थो येन । ३ पितृष्वसुः पुत्रीम् । ४ शिबिरं सैन्यस्थानम् । ५ निकषा समीपे । ६ आहतः । ७ पराक्रमः ।

अनेन तपसात्युग्रप्रभावेण भवांतरे । भूयासं भूरिवीर्योऽहं निदानं चेति सोऽकरोत् ॥ १५७ ॥
संपूर्णकोटिवर्षायुरनालोच्य च तन्मृतः । महाशुक्रे विश्वभूतिरुत्कृष्टायुः सुरोऽभवत् ॥ १५८ ॥
इतश्च पोतनपुरं पुरमस्त्युच्चगोपुरम्[1] । अपाग्भरतवर्षार्धभुवो मुकुटसंनिभम् ॥ १५९ ॥
अभूत् पुरे तत्र रिपुप्रतिशत्रुर्महीपतिः । शोभमानो गुणैस्तैस्तैरहर्पतिरिवांशुभिः[2] ॥ १६० ॥
षाड्गुण्येन[3] स षट्खंडभरतक्षेत्रवद्बभौ । उपायैरपि[4] चतुर्भिर्दंतैरिव सुरद्विपः[5] ॥ १६१ ॥
स सिंहइव शौर्येण स्तंबेरमइवौजसा । कंदर्पइव रूपेण धिया गुरुरिवाभवत्[6] ॥ १६२ ॥
अवनीसाधनविधावतिप्रकटपाटवौ । मिथो धीविक्रमौ तस्य व्यभूष्येतां भुजाविव ॥ १६३ ॥
भद्रेति नाम्ना महिषी भद्राणां भद्रमास्पदम् । बभूव भूपतेस्तस्य भूरिवात्तशरीरिका[7] ॥ १६४ ॥
पतिभक्त्या कवचिता[8] यामिकीव[9] ररक्ष सा । अनारतं जागरूका शीलं रत्ननिधानवत् ॥ १६५ ॥
अक्ष्णोः सुधावर्तिरिव राज्यलक्ष्मीरिवांगिनी । मूर्त्ता कुलव्यवस्थेव चकासामास सानिशम् ॥ १६६ ॥
च्युत्वा सबलजीवोऽपि स विमानादनुत्तरात् । अन्यदा तु महादेव्यास्तस्याः कुक्षाववातरत् ॥ १६७ ॥
ददर्श सुखसुप्ता च यामिन्याः[10] पश्चिमे क्षणे । चतुरः सा महास्वप्नान् सूचकान् बलजन्मनः ॥ १६८ ॥
तदैव परमानंदजनिताभिभवादिव[11] । दूरं गतायां निद्रायां राज्ञी राज्ञे व्यजिज्ञपत् ॥ १६९ ॥

---

१ गोपुरं पुरस्य द्वारम् । २ सूर्य इव । ३ "संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः" इत्यमरः । ४ "भेदो दंडः साम दानमित्युपायचतुष्टयम्" इत्यमरः । ५ गज इव । ६ बृहस्पतिरिव । ७ आत्तं गृहीतं शरीरं यया सा । ८ वर्मिता । ९ प्रतिहारीव । १० रात्रेः । ११ परमानंदेन कारितोऽभिभवः पराभवस्तस्मात् ।

दंतावलश्चतुर्दतः स्फटिकाद्रिनिभो मया । दृष्टो विशन् स्ववक्त्रांतरभ्रांतरिव चंद्रमाः ॥ १७० ॥
शरदभ्रमिवावर्त्य निर्मितो निर्मलद्युतिः । ककुद्मानुच्चककुदोऽथ गर्जन्नृजुबालधिः ॥ १७१ ॥
निशाकरः करांकूरैर्दूरदूरं प्रसारिभिः । कर्णावतंसरचनां चिन्वन्निव दिशामथ ॥ १७२ ॥
ततश्च पद्मैरुन्निद्रैर्मंजुगुंजन्मधुव्रतैः । पूर्णं सरः शतमुखीभूय गायदिवोच्चकैः ॥ १७३ ॥
स्वामिन्नमीषां स्वप्नानां फलं किमिति शंस मे । प्रष्टुमर्हो न सामान्यजनो हि स्वप्नमुत्तमम् ॥ १७४ ॥
राजापि व्याजहाराथ देवि देवइव श्रिया । लोकोत्तरबलो भावी बलभद्रस्तवात्मजः ॥ १७५ ॥
श्वेतरश्मिमिव प्राची श्वेतवर्णं महाभुजम् । अशीतिधनुरुत्तुंगं कालेनासूत सा सुतम् ॥ १७६ ॥
पुत्ररत्ने समुत्पन्ने स तत्र पृथिवीपतिः । चक्ररत्ने चक्रवर्तीवोत्सवं व्यधितोच्चकैः ॥ १७७ ॥
शुभेऽहनि शुभे चंद्रे विच्छर्देन महीयसा । चकाराचल इत्याख्यां तस्य सूनोर्महीपतिः ॥ १७८ ॥
दिने दिने वपुश्छायां वितन्वन्नधिकाधिकाम् । अवर्धत स धात्रीभिः सारणीभिरिवांघ्रिपः ॥ १७९ ॥
अचलस्य तु जातस्य गते काले कियत्यपि । भद्रा देवी दधौ गर्भं प्रसूनमिव केतकी ॥ १८० ॥
सर्वलक्षणसंपूर्णां पूर्णे काले नृपप्रिया । असूत सा दुहितरं जाह्नवीव सरोजिनीम् ॥ १८१ ॥
तस्या मृगांकवक्त्राया मृगशावकचक्षुषः । मृगावतीति विदधे नामधेयं महीभुजा ॥ १८२ ॥
अंकादंके संचरन्ती तापसानां मृगीव सा । वृद्धिमासादयामास निष्प्रत्यूहं मृगेक्षणा ॥ १८३ ॥

१ गजः । २ मेघांतरितः । ३ ऋजुः सरलः बालधिः पुच्छं यस्य सः । ४ चंद्रम् । ५ उत्सवेन । ६ शरीरशोभाम् । ७ जलनिर्झरैर्वृक्षइव । ८ गंगा । ९ मृगांकः चंद्र इव वक्त्रं मुखं यस्याः सा । १० मृगबालदृशः । ११ निर्विघ्नम् ।

तया कटिस्थया धात्र्यो विचरंत्यो गृहांगणे । गृहस्थूणा[1]इव रत्नशालिभंज्या चकाशिरे ॥ १८४ ॥
बाल्यं क्रमेण लंघित्वा प्रपेदे साथ यौवनम् । स्मरोज्जीवनजीवातु[2] वपुर्लक्ष्मीविशेषकम् ॥ १८५ ॥
तस्या वक्त्रं दंतपत्रमिवेंदोर्भ्रूलताञ्चलात् । नेत्रे च कृष्णधवले सभृंगे[3] इव कैरवे ॥ १८६ ॥
कंठश्च लटभो[4] नालमिववक्त्रसरोरुहः । पंचेषोरिव तूणीरौ[5] पाणी च सरलांगुली ॥ १८७ ॥
वपुर्लावण्यसरितश्चक्रवाकाविव स्तनौ । मध्यं कृशतरं भूरि स्तनभारश्रमादिव ॥ १८८ ॥
क्रीडावापी स्मरस्येव नाभिर्गांभीर्यशालिनी । तटी रत्नाचलस्येव श्रोणि[6]र्भित्तिर्गरीयसी ॥ १८९ ॥
ऊरू च कदलीस्तंभविभ्रमौ[7] क्रमवर्तुलौ । पादौ सरलजंघाकावुन्नालनलिने इव ॥ १९० ॥
एवं विभक्तावयवा नव्यया यौवनश्रिया । अपि विद्याधरस्त्रीणामधिदेवीव साशुभत् ॥ १९१ ॥
यौवनश्रीरवर्धिष्ट मृगावत्या यथा यथा । भद्राया ववृधे चिंता तद्वरार्थे तथा तथा ॥ १९२ ॥
चिंता ममेव राज्ञोऽपि वरार्थेऽस्यां भवत्विति । तां प्रास्थापयदन्येद्युर्भद्रादेवी तदंतिके ॥ १९३ ॥
मारेषुजातवैधुर्यात्[8]तां पुत्रीत्यविदन्निव[9] । विचिंतयामास रिपुप्रतिशत्रुरिदं हृदि ॥ १९४ ॥
अहो किमपि सौंदर्यं जैत्र[10]मस्त्रं मनोभुवः । जगत्त्रयस्त्रैण[11]जयलीलादुर्ललितं तनोः ॥ १९५ ॥
सुलभं भूमिसाम्राज्यं स्वर्गसाम्राज्यमप्यहो । इयं तु दुर्लभा मन्ये बाला हृदयवल्लभा ॥ १९६ ॥

१ रत्नपुत्तलिकया गृहस्तंभा इव । २ कामस्य उज्जीवने जीवनौषधम् । ३ भ्रमरसहिते । ४ सुंदरः । ५ कामस्य शरासनाविव । ६ श्रोणिः कटिरेव भित्तिः । ७ कदलीस्तंभसदृशौ । ८ कामबाणाज्जातं यद् वैधुर्यं तस्मात् । ९ अजानन्निव । १० जयनशीलम् । ११ स्त्रीसमूहः स्त्रैणम् दुर्ललितम् चपलम् ।

सुरासुरनरेन्द्राणां पुण्येभ्योऽप्यतिशायिभिः । उपस्थितेयं मे पुण्यैर्जन्मांतरशतार्जितैः ॥ १९७ ॥
एवं विचिंत्य नृपतिः प्रियालापपुरःसरम् । अंकमारोपयामास तां सद्यः प्राणवल्लभाम् ॥ १९८ ॥
अनुरागे स आरोप्य स्पर्शालिंगनचुंबनैः । तां जरत्कंचुकिवरैरन्तःपुरमनाययत् ॥ १९९ ॥
पौरलोकान् समाहूय सह प्रकृतिभिस्ततः । लोकापवादरक्षार्थमपृच्छत् पृथिवीपतिः ॥ २०० ॥
मदीयभूमौ ग्रामेषु पुरेष्वन्यत्र वा क्वचित् । यत्समुत्पद्यते रत्नं तत् कस्येति निवेद्यताम् ॥ २०१ ॥
लोकोऽप्यूचे भवद्भूमौ यद्रत्नं जायते क्वचित् । तस्य स्वामी भवानेव नान्यो भवितुमर्हति ॥ २०२ ॥
इति तं निर्णयं स त्रिर्गृहीत्वा पृथिवीपतिः । तेषां प्राग्दर्शयामास निजकन्यां मृगावतीम् ॥ २०३ ॥
इत्युवाच च तान् भूयः कन्यारत्नमिदं हि मे । इदानीं परिणेष्यामि स्वयं युष्मदनुज्ञया ॥ २०४ ॥
इत्युक्ते लज्जिताः पौरा ययुर्निजनिजं गृहम् । गांधर्वेण विवाहेन पर्यणैषीच्च तां नृपः ॥ २०५ ॥
स्वसुतायाः पतिरभूत्तेन तस्य महीपतेः । नाम प्रजापतिरिति पप्रथे पृथिवीतले ॥ २०६ ॥
नवं कुलकलंकं तं हसनीयं जनेऽखिले । महालज्जाकरं पत्युः श्रुत्वा भद्रात्यलज्जत ॥ २०७ ॥
सहाचलेन पुत्रेण साचालीद्दक्षिणापथे । श्रेयान् स देशो नो यत्र श्रूयंते दुर्जनोक्तयः ॥ २०८ ॥
मातुः कृते दक्षिणस्यां विश्वकर्मेव नूतनः । माहेश्वरीति नगरीमस्थापयदथाचलः ॥ २०९ ॥
तां च श्रीद इवायोध्यामाहृत्याहृत्य सर्वतः । हिरण्यैः पूरयामास बलदेवोऽचलाभिधः ॥ २१० ॥
कुलीनैः सचिवैरात्मरक्षैर्दासजनैर्वृताम् । मूर्त्तामिव पुरीदेवीं मातरं तत्र सोऽमुचत् ॥ २११ ॥

१ प्रधानैः ।

भद्रापि स्त्रीशिरोरत्नं शीलालंकरणा सती । देवपूजादिषट्कर्मरता तस्यामवास्थित ॥ २१२ ॥
भक्तिमान् बलदेवोऽपि तत् पोतनपुरं ययौ । यादृशस्तादृशो वापि पूजनीयः पिता सताम् ॥ २१३ ॥
शुश्रूषमाणः पितरं पूर्ववत्तत्र चाचलः । तस्थौ न पूज्यचरितं चर्चयंति मनीषिणः ॥ २१४ ॥
राजापि स्थापयामास तामग्रमहिषीपदे । मृगावतीं मृगदृशं मृगलक्ष्मेव रोहिणीम् ॥ २१५ ॥
कियत्यपि गते काले महाशुक्रात् परिच्युतः । विश्वभूतिमुनेर्जीवस्तस्याः कुक्षाववातरत् ॥ २१६ ॥
यामिन्याः पश्चिमे यामे सूचका वि[२]ष्णुजन्मनः । देव्या ददृशिरे स्वप्नाः सप्तैते सुखसुप्तया ॥ २१७ ॥
तत्रादौ केसरियुवा कुंकुमारुणकेसरः । इं[३]दुलेखाभिनख[४]श्चमरोपमवालधिः ॥ २१८ ॥
कुंजराभ्यां पूर्णकुंभ[५]हस्ताभ्यां क्षीरवारिभिः । क्रियमाणाभिषेका च पद्मा[६] पद्मासनस्थिता ॥ २१९ ॥
ध्वंसमानो महाध्वांतं दोषापि जनयन्नहः । उद्दंडतेजःप्रसरस्त्विषामधिपतिस्ततः ॥ २२० ॥
स्वच्छस्वादुपयःपूर्णः पुंडरीका[७]र्चिताननः । सौवर्णघंटिकः पुष्पमाली कुंभस्ततोऽपि च ॥ २२१ ॥
नानाजलचराकीर्णो रत्नसंभारभासुरः । गगनोदंचिकल्लोलस्ततः कल्लोलिनीपतिः ॥ २२२ ॥
पंचवर्णमणिज्योतिःप्रसरैर्गगनांगणे । विपंचितें[८]द्रचापश्री रत्नानां संचयस्ततः ॥ २२३ ॥
धूमध्वजश्च निर्धूमो ज्वालापल्लवितांबरः । दृशोः सुखकरालोकः सप्तमश्चेति सप्त ते ॥ २२४ ॥
उद्बुध्वया तया ख्यातान् स्वप्नान् व्याख्यन्महीपतिः । अर्धचक्री तव सूनुर्नूनं देवि भविष्यति ॥ २२५ ॥

१ चंद्रइव । २ वासुदेवजन्मनः । ३ चंद्ररेखासदृशनखः । ४ चमरसमानपुच्छः । ५ पूर्णकुंभो हस्ते शुंडादंडे ययोस्ताभ्याम् । ६ लक्ष्मीः । ७ कमलार्चितमुखः । ८ विपंचिता विस्तारितेंद्रचापस्य शोभा येन सः ।

राज्ञा सद्यः समाहूय पृष्टा नैमित्तिका अपि । स्वप्नांस्तथैव चाचख्युर्विसंवादो[1] न धीमताम् ॥ २२६ ॥
पूर्णे काले च सा देवी सर्वलक्षणलक्षितम् । अशीतिधनुरुत्तुंगं कृष्णांगं सुषुवे सुतम् ॥ २२७ ॥
प्रससाद ककुप्चक्रम्[2]उल्ललास वसुंधरा । जहर्ष च जनः सर्वस्तस्येव नृपतेर्मनः ॥ २२८ ॥
कारागारात् पुरा बद्धान् गोपा गा इव वाटकात्[3] । हृष्टो रिपूनपि रिपुप्रतिशत्रुरथामुचत् ॥ २२९ ॥
यथाकामं ददौ सोऽर्थानर्थिभ्यः कामधेनुवत् । कर्तुं स्थानमिवैष्यंत्या[4] अर्धचक्रधरश्रियः ॥ २३० ॥
तथाऽभूदुत्सवः प्राज्यो जने तस्मिन्निरंतरः । यथा सपुत्रजन्मेव[5] सोद्वाह इव सोऽभवत् ॥ २३१ ॥
मंगल्यपाणयो नार्यो न ममू राजवेश्मनि । मिथः संघर्षतो ग्रामागमाश्लेषपराः पुरः ॥ २३२ ॥
स्थाने स्थाने तोरणानि संगीतानि पदे पदे । अजायंत पुरे तस्मिन्नजितो राजवेश्मवत् ॥ २३३ ॥
दृष्ट्वा वंशत्रयं पृष्टे त्रिपृष्ट इति भूपतिः । नाम तस्याकरोत् सूनोरुत्सवेन महीयसा ॥ २३४ ॥
लाल्यमानः स धात्रीभी रम्यमाणोऽचलेन च । वासुदेवस्त्रिपृष्टाख्यो व्यवर्धत शनैः शनैः ॥ २३५ ॥
स बालो बलभद्रेण प्रक्वणत्पादघर्घरिः । अग्रेसरेण चिक्रीड प्रतिकारेण[6] हस्तिवत् ॥ २३६ ॥
लीलयैव महाप्राज्ञः स उपाध्यायसाक्षिकम् । प्रतिबिंबमिवादर्शो जग्राह सकलाः कलाः ॥ २३७ ॥
क्रमेण कवचहरो दृढोरस्को महाभुजः । बभूव बलभद्रस्य सवयाश्व[7] सोऽनुजः ॥ २३८ ॥
असंजातांतरौ नित्यं क्रीडंतौ भ्रातरावुभौ । बभ्राजाते मूर्तिमंतौ पक्षाविव सितासितौ[8] ॥ २३९ ॥

---

१ विरोधः । २ दिक्चक्रम् । ३ गोष्ठात् । ४ आगमिष्यंत्याः । ५ पुत्रजन्मना सहित इवेत्युत्सवविशेषणम् । ६ हस्तिपकेन । ७ सुहृदिव । ८ शुक्लकृष्णपक्षाविव ।

नीलपीतांबरधरौ तौ तालगरुडध्वजौ । अशोभेतां स्वर्णशैलांजनाद्रीइव जंगमौ ॥ २४० ॥
क्रीडयापि प्रचलतोस्तयोरचलकृष्णयोः । पादन्यासैर्वज्रपातैरिवाकंपत मेदिनी ॥ २४१ ॥
तयोरारूढयोः प्रौढदंतिनोऽपि नृदंतिनोः । कुंभस्थले करतलास्फाललीलां न सेहिरे ॥ २४२ ॥
ताभ्यां पर्यस्यमानानि क्रीडया दोर्भिरूर्जितैः । वल्मीकंति स्म शृंगाणि महाशिखरिणामपि ॥ २४३ ॥
दैत्यादिभ्योऽपि निर्भीकावितरेभ्यस्तु का कथा । तौ कुमारावजायेतां शरण्यौ शरणार्थिनाम् ॥ २४४ ॥
विनाचलं न त्रिपृष्टो न त्रिपृष्टं विनाचलः । एकात्मानौ द्विशरीराविव तौ सह चेरतुः ॥ २४५ ॥
इतश्चासीत् पुरे रत्नपुरे नीलांजनाप्रसूः । प्रतिविष्णुरश्वग्रीवो मयूरग्रीवनंदनः ॥ २४६ ॥
सोऽशीतिधनुरुत्तुंगो नवनीरधरच्छविः । चतुरशीत्यब्दलक्षप्रमितायुर्महाभुजः ॥ २४७ ॥
तस्य दोर्दंडयोः कंडूर्नाशाम्यद्वैरिकुट्टनैः । सिंहस्येव महाकुंभिकुंभस्थलविपाटनैः ॥ २४८ ॥
महौजाः स महाबाहुर्महाहवकुतूहली । पिप्रिये न तथा नम्रैर्युध्यमानैर्यथारिभिः ॥ २४९ ॥
नित्यं नेत्रारविंदानामश्रुवृष्टिं प्रवर्तयन् । तत्प्रतापोऽरिनारीषु वारुणास्त्रमिवाभवत् ॥ २५० ॥
तस्य चाक्रांतदिक्चक्रं करे चक्रमलक्ष्यत । उत्पातभूतो द्विषतां द्वितीय इव भास्करः ॥ २५१ ॥
हृदयस्थो विदित्वास्मान् विरुद्धान्मा वधीदिति । नाभक्तिं मनसाप्यस्य विदधुर्वसुधाधिपाः ॥ २५२ ॥
योगिनः परमात्मानमिव तं हृदयान्निजात् । न जातूत्तारयामासुः सर्वेऽपि पृथिवीभुजः ॥ २५३ ॥

---

१ नरौ दंतिनाविव तयोः । २ आक्षिप्यमाणानि । ३ वल्मीकवदाचरंति । ४ नीलांजनायाः पुत्रः । ५ नूतनमेघतुल्यकांतिः ।
६ यथा युध्यमानैः शत्रुभिः प्रसन्नोऽभवत्तथा नम्रैर्न ।

रथिभिः सादिभिः सारैः ससार कतिभिर्दिनैः । दूतः स पोतनपुरं स्वामितेजइवांगवत् ॥ २०० ॥

तत्र प्रजापतिनृपः सर्वालंकारभूषितः । सहाचलत्रिपृष्ठाभ्यां सामंतैरप्यनेकशः ॥ २०१ ॥

सेनापतिमहामात्यपुरोधःप्रमुखैरपि । वृतः प्रधानपुरुषैर्यादोभिरिव पाशभृत् ॥ २०२ ॥

विचित्रचारीकरणांगहारोद्धृत्तनर्तकम् । ध्वनन्मृदंगनिर्घोषघोषितव्योमकंदरम् ॥ २०३ ॥

सुव्यक्तगीतोच्चारेण संजीवापितवेणुकम् । विपंचितग्रामरागविपंचीरचितश्रुति ॥ २०४ ॥

तालानुसारिप्रक्रांतगीतसंगीतकं तदा । निःशंकं कारयन्नासीन्महर्द्धिक इवामरः ॥ २०५ ॥

॥ पंचभिः कुलकम् ॥

अनिषिद्धगतिर्द्वाःस्थैर्विद्युद्दंडइवोच्चकैः । तत्रास्थाने प्रविवेश चंडवेगो झटित्यपि ॥ २०६ ॥

अकस्मादागतं दृष्ट्वा ससामंतः प्रजापतिः । स्वामिवत् स्वामिदूतं तमभ्युदस्थात्ससंभ्रमः ॥ २०७ ॥

महत्या प्रतिपत्त्या तमुपावेशयदासने । स्वामिनो वाचिकं सर्वमपृच्छच्च स भूपतिः ॥ २०८ ॥

संगीतकस्य संजज्ञे भंगोऽकांडे तदागमात् । आगमाध्ययनस्येव विद्युदालोकमात्रतः ॥ २०९ ॥

गृहं निजनिजं जग्मुः सर्वे संगीतकारिणः । स्वामिनि व्यग्रचित्ते हि नावकाशः कलावताम् ॥ २१० ॥

तं रंगभंगकर्तारं दृष्ट्वा भृशममर्षणः । पार्श्वस्थं पुरुषं कंचित् त्रिपृष्ठः पृष्टवानिति ॥ २११ ॥

---

१ अश्ववारैः । २ सृगतौ इत्यस्य लिटि रूपम् । ३ वरुणः । ४ चारीकरणं चलनेनाभिनयः, अंगहारोऽङ्गुल्यादिभिरभिनयः, उद्वृत्तम् प्लुतेन गमनम् । ५ संजीवमापितः प्रापितो वेणुर्वाद्यविशेषो यस्मिन् तत् । ६ विपंचितो विस्तृतो ग्रामरागो यस्यामेवंविधा या विपंची वीणा तया रचिता श्रुतिर्यस्मिन् तत् । ७ सभायाम् । ८ गौरवेण । ९ क्रुद्धः ।

अये कोऽसमयज्ञोऽयं पशुः पुरुषरूपभृत् । अज्ञापितस्वागमनः प्राविशत्तातपर्षदि ॥ २९२ ॥
अभ्युत्तस्थौ कथं दृष्ट्वा तात एनं ससंभ्रमः । निषिद्धश्च कथं नैष प्रविशन् वेत्रपाणिना ॥ २९३ ॥
अथेत्थं कथयामास त्रिपृष्ठाय स पूरुषः । दूतो राजाधिराजस्य हयग्रीवस्य नन्वयम् ॥ २९४ ॥
त्रिखंडे भरते ह्यस्मिन् राजानस्तस्य किंकराः । ततस्तस्यैव दूतस्याप्यभ्युत्तस्थौ पिता तव ॥ २९५ ॥
द्वाःस्थेनापि निषिद्धस्तन्नायमौचित्यवेदिना । न श्वाप्यास्कंद्यते यस्मात् स्वामिनः किं पुनः पुमान् ॥ २९६
अस्मिन् प्रसादिते राजा हयग्रीवः प्रसीदति । तत्प्रसादेन राज्यानि राज्ञां नंदंति संप्रति ॥ २९७ ॥
खलीकृतेऽवज्ञयास्मिन् हयग्रीवः खलीभवेत् । दूतदृष्ट्यनुसारेण प्रवर्तते हि भूभुजः ॥ २९८ ॥
खलीभूते स्वामिनि हि कृतांतइव दुःसहे । नेष्यते जीवितुमपि नृपै राज्ये तु का कथा ॥ २९९ ॥
अभाषिष्ट त्रिपृष्ठोऽपि न जात्या कोऽपि कस्यचित् । स्वामी वा सेवको वापि शक्त्यधीनमिदं खलु ॥ ३००
वाग्मात्रेण न तं तावत् पर्यस्यामोऽधुना वयम् । स्वप्रशंसेवान्यनिंदा सतां लज्जाकरी खलु ॥ ३०१ ॥
तात न्यक्कारकारं[2] तमुत्तानशयमोजसा छिन्नग्रीवं हयग्रीवं करिष्ये समये त्वहम् ॥ ३०२ ॥
प्राप्तकालमिदं तावत्तातेनैष विसृज्यते । यदा तदा निवेद्यं मे करोम्यस्योचितं यथा ॥ ३०३ ॥
सोऽनुमेने पुमान् राजविरुद्धमपि तद्वचः । राजवद्राजपुत्रोऽपि मान्यो राजानुजीविनाम् ॥ ३०४ ॥
निजाधिकारिणमिव समुद्दिश्य प्रजापतिम् । राजप्रयोजनान्यूचे चंडवेगोऽपि कानिचित् ॥ ३०५ ॥
तथेति प्रतिपद्यार्थमावर्ज्य[3] प्राभृतादिना । प्रजापतिनरेंद्रेण चंडवेगो व्यसृज्यत ॥ ३०६ ॥

१ अपकृते । २ तिरस्कारकर्तारम् । ३ सत्कृत्य ।

स प्रीतः सपरीवारः प्रतस्थे स्वपुरीं प्रति । जगाम पोतनपुराद्बहिः स्यंदनमास्थितः ॥ ३०७ ॥
ज्ञात्वा त्रिपृष्टस्तं यांतं पुरोभूय सहाचलः । दवानलइवाध्वन्यं[1] सानिलो रुरुधेतराम् ॥ ३०८ ॥
त्रिपृष्ट इत्यभापिष्ट धृष्ट पापिष्ट दुष्ट रे । दूतमात्रत्वमप्याप्य राजवद्वर्तसे पशो ॥ ३०९ ॥
संगीतरंगभंगं त्वं मूर्खाकार्षीर्यथा तथा । अमुमूर्षुः पशुरपि कोऽन्यः कुर्यात् सचेतनः ॥ ३१० ॥
गृहे गृहस्थमात्रस्याप्यायातो भूपतिः स्वयम् । ज्ञापयित्वा प्रविशति नीतिरेषा मनीषिणाम् ॥ ३११ ॥
त्वं भुवं स्फोटयित्वेवाज्ञातोऽकांडे समागमः । तातेनर्जुस्वभावेन सत्कृतः स्वामिवन्मुधा ॥ ३१२ ॥
दुर्विनीतो यया शक्त्या तां प्रकाशय संप्रति । इदं ते दुर्नयतरोः फलं प्राग्दर्शयाम्यहम् ॥ ३१३ ॥
इत्युक्त्वा मुष्टिमुद्यम्य त्रिपृष्टो न पिनष्टि तम् । यावत्तावत् पुरःस्थायेत्यूचे मुशलपाणिना ॥ ३१४ ॥
अलमत्र प्रहारेण कुमार नरकीटके । न चपेटा[3] शृगालेषु क्रोशत्स्वपि मृगद्विपः ॥ ३१५ ॥
दूत इत्येष नो वध्यः प्रतीपान्या[4]चरन्नपि । ब्राह्मण्येन द्विजन्मेव विरूपमपि हि ब्रुवन् ॥ ३१६ ॥
तदत्र संहर रुषं पुरुषे परुषेऽपि हि । दंतिनां दंतघातस्य स्थानं नैरंभ्रपादपः ॥ ३१७ ॥
इत्युक्तो बलभद्रेण त्रिपृष्टो मुष्टिमुद्यताम् । करपाशं करीवाशु संहृत्येत्यादिशद्भटान् ॥ ३१८ ॥
जीवितव्यं विमुच्यैकं रंगभंगविधायिनः । अस्यापहरताशेषमपरं दूतपाप्मनः ॥ ३१९ ॥
तमाज्ञया कुमारस्य यष्टिभिर्मुष्टिभिर्भटाः । अताडयन् सारमेयं प्रविष्टमिव वेश्मनि ॥ ३२० ॥
अपजह्रुरशेषं तत्तस्यालंकरणादिकम् । प्रापितस्य वधस्थानं वध्यस्यारक्षकाइव ॥ ३२१ ॥

---

१ पथिकम् । २ अचलेन बलदेवेन । ३ कराघातः । ४ प्रातिकूलानि ।

प्रहारान् वंचयमानः प्राणत्राणकृते चिरम् । कीनाकारश्वेनस्य सोऽलुठत् पृथिवीतले ॥ ३२२ ॥
परितस्तत्परीवारो मुक्त्वा प्रहरणादिकम् । जीवग्राहं[1] पलायिष्ट नष्टयं संत्यज्य काकवत् ॥ ३२३ ॥
कुट्टयित्वा रासभवल्लुंचित्वा कलविंकवत्[2] । विनर्ध्य विटवत्तं[3] तु कुमारावीयतुर्गृहम् ॥ ३२४ ॥
विदांचकार तत् सर्वं जनश्रुत्या प्रजापतिः । एवं विचिंतयामास सशल्यइव चेतसि ॥ ३२५ ॥
अहो मम कुमाराभ्यां युक्तं नाचरितं ह्यदः । कस्याग्रे कथयाम्येतत् स्वेनाश्वेनेव पातितः ॥ ३२६ ॥
न धर्षितश्चंडवेगोऽश्वग्रीवः किं तु धर्षितः । दूता हि प्रतिरूपाणि नृपानां संचरंत्यमी ॥ ३२७ ॥
न यावद्यात्यसौ तावदनुनेयः प्रयत्नतः । यत उत्तिष्ठति शिखी[4] निर्वाप्यस्तत एव हि ॥ ३२८ ॥
एवं विचिंत्य पुरुषैः प्रधानैस्तं महीपतिः । आनानयदनुनीय वचोभिः प्रेमपेशलैः[5] ॥ ३२९ ॥
चकार सविशेषां च प्रतिपत्तिं[6] कृतांजलिः । कुमारकृतकालुष्यप्रक्षालनजलप्लुतिम् ॥ ३३० ॥
चतुर्गुणं महामूल्यं तस्य च प्राभृतं ददौ । प्रकोपशांतये शीतोपचारमिव दंतिनः ॥ ३३१ ॥
ऊचे च राजा यद्वेत्सि यौवनेऽभिनवे सति । कुमारका दुर्ललिताः सामान्यश्रीमतामपि ॥ ३३२ ॥
विशेषतो मम स्वामिप्रसादोद्भूतसंपदा । निरर्गलौ कुमारौ तावदांतौ वृषभाविव ॥ ३३३ ॥
बहेताभ्यामपराद्धं त्वयि यद्यपि मानद । दुःस्वप्नमिव विस्मार्यं तथाप्येतत् त्वया सखे ॥ ३३४ ॥
आवयोरक्षता प्रीतिः सदा सोदरयोरिव । त्याज्या नैकपदे सद्यो मन्मनोवृत्तिकोविद ॥ ३३५ ॥

१ जीवं गृहीत्वा । २ चटकवत् । ३ जारवत् । ४ अग्निः । ५ प्रेम्णा सुंदरैः । ६ गौरवम् ।

कुमारदोषेणात्मानं स गर्हति चिरं नृपः । त्वद्भासनमुपादत्तादत्त चेदमुपायनम् ॥ ३५१ ॥
इत्युक्त्वावस्थिते दूते हयग्रीवो व्यचिंतयत् । दृष्टैकप्रत्यया जज्ञे तस्य नैमित्तिकस्य वाक् ॥ ३५२ ॥
प्रत्ययश्चेद् द्वितीयोऽपि स सिंहवधलक्षणः । भविष्यति तदा मन्ये शंकास्थानमुपस्थितम् ॥ ३५३ ॥
विमृश्यैवं तदा दूतांतरेणाथ प्रजापतिम् । त्रायस्व शालिक्षेत्राणि सिंहादिति समादिशत् ॥ ३५४ ॥
प्रजापतिः समाहूय कुमारावित्यभाषत । फलितं वां दुर्ललितमकांडे सिंहरक्षया ॥ ३५५ ॥
आज्ञा चेत् खंड्यतेऽकांडे हयग्रीवोऽन्तकायते । तदाज्ञा खंड्यते नो चेत्तदा सिंहोऽन्तकायते ॥ ३५६ ॥
असावुभयथास्माकमपमृत्युरुपस्थितः । तथापि सिंहरक्षार्थं वत्सौ गच्छामि संप्रति ॥ ३५७ ॥
कुमारावूचतुर्ज्ञातमश्वग्रीवस्य पौरुषम् । ज्ञातो भयंकर इति स येन पैशुना पशुः ॥ ३५८ ॥
तिष्ठ तात व्रजिष्यावो हनिष्यावोऽचिरेण तम् । सिंहं नृसिंह का तत्र स्वयं यात्रा तव प्रभो ॥ ३५९ ॥
सविषादं जगादैवं प्रजापतिनृपोऽप्यथ । क्षीरकंठावनभिज्ञौ कृत्याकृत्येषु कर्मसु ॥ ३६० ॥
एकं तावत् कृतं कर्म तिष्ठद्भ्यां गोचरेऽपि मे । व्यालेभदुर्ललिताभ्यां भो भवद्भ्यां कुमारकौ ॥३६१॥
तस्यापि कर्मणः सद्यः फलमेतदुपस्थितम् । दूरस्थौ यत् करिष्येथे तत्फलं किं भविष्यति ॥ ३६२ ॥
अथ त्रिपृष्ठः प्रत्यूचे केयं सिंहबिभीषिका । दर्श्यते तेन बालेन बालानामिव भूभुजाम् ॥ ३६३ ॥
कृत्वा तात प्रसादं नौ तिष्ठ त्वत्रैव संप्रति । गत्वा सिंहं हनिष्यावः सहाश्वग्रीववांछितैः ॥ ३६४ ॥

---

१ दुराचरणम् । २ पशुतुल्येनाश्वग्रीवेणेत्यर्थः । ३ व्याल उन्मत्तः । ४ विभीषिका भयम् ।

इत्थं कथमपि क्ष्मापं तौ प्रतीक्ष्य प्रजग्मतुः । सारस्वद्रथपरीवारौ तां सिंहाध्युषितां[1] भुवम् ॥ ३६५ ॥
सिंहेन निहतानेकजटास्थीनि गिरेरधः । कुमारौ तद्यशोराशिमिव मूर्त्तमपश्यताम् ॥ ३६६ ॥
तुंगवृक्षाधिरूढांस्तौ शालिक्षेत्रकृषीवलान् । पप्रच्छतुरिति क्ष्मापैः सिंहोऽयं रक्षितः कथम् ॥ ३६७ ॥
आचख्युः क्षेत्रिणोऽप्येवं हे वीराविह भूभुजः । संनद्धैः कुंजरवरैस्तुरंगैः स्यंदनैर्भटैः ॥ ३६८ ॥
विरचय्य महाव्यूहं सिंहस्याकार्षुरंतरे । संवरं श्रोतस इव दीर्घिकामिव दंतिनः ॥ ३६९ ॥
हन्यमानैर्दार्यमाणैः सैनिकैस्तैर्महीभुजः । सिंहादस्माद्रक्षुर्नः प्राप्तजीवितसंशयाः ॥ ३७० ॥
त्रिभिर्विशेषकम् ॥

इति तेषां वचः श्रुत्वा स्मित्वा च बलकेशवौ । सैन्यं निधाय तत्रैवायातां सिंहगुहामभि ॥ ३७१ ॥
तयोश्च रथनिर्घोषान्मेघनिर्घोषसोदरात् । बंदिघोषादिव नृपः सिंहः सद्यो व्यबुध्द सः ॥ ३७२ ॥
किंचिदुन्मीलयन्नेत्रे कृतांतस्येव[2] दीपिके । तस्येव चामरं धुन्वन्नुदारां केसरछटाम् ॥ ३७३ ॥
रसातलद्वारमिव जृंभया स्फाटयन् मुखम् । किंचिदाकुंचितग्रीवः[3] प्रेक्षां चक्रे स केसरी ॥ ३७४ ॥
युग्मम् ।

रथमात्रपरीवारौ तौ नरौ वीक्ष्य केवलौ । अवज्ञया प्रसुष्वाप सोऽथ कृत्रिमनिद्रया ॥ ३७५ ॥
सर्वाभिसारिभिर्भूपैर्दत्वा हस्त्यादिभिर्बलिम् । शालिक्षेत्राणि रक्षद्भिर्गर्वमारोपितो ह्यसौ ॥ ३७६ ॥
एवमुक्तोऽचलेनाथ पुरोऽभ्येत्य च किंचन । मल्लो मल्लमिवाह्वास्त नृसिंहः[4] सिंहपुंगवम् ॥ ३७७ ॥

---

१ सिंहेनाधिष्ठिताम् । २ यमराजस्य । ३ संकुचिता ग्रीवा यस्य सः । ४ त्रिपृष्ठः ।

विष्णोस्तमूर्जितं शब्दमाकर्ण्योत्कर्णितानन[1]ः । विसिष्मिये सोऽपि सिंहो वीरः कोऽपीति चिंतयन् ॥३७८॥
कर्णौ शिरसि सुस्तब्धौ स्थलस्थाविव कीलकौ । अतीव पिंगले नेत्रे दीप्ते इव विज्ञीपिके ॥ ३७९ ॥
अस्त्रागारं यमस्येव वक्रं दंष्ट्रारदाकुलम् । वक्राद्बहिः स्थितां जिह्वां पातालादिव तक्षकम् ॥ ३८० ॥
यमौकस्तोरण[2]मिव मुखस्योपरि दंष्ट्रिकाम् । अंतर्ज्वलन्महाकोपानलस्येव शिखाः सटाः ॥ ३८१ ॥
नखांश्च प्राणिनां प्राणाकर्षणांकुटका[3]निव । लुलंतं पुच्छदंडं च बुभुक्षितमिवोरगम् ॥ ३८२ ॥
विवृतव्यात्ताननः पंचानन[4]ो बूत्कारदारुण[5]ः । साक्षादिव रसो रौद्रो निर्जगाम गुहागृहात् ॥ ३८३ ॥
पंचभिः कुलकम् ।
अतुच्छपुच्छदंडेन प्रचंडेन स केसरी । भूतलं ताडयामास वज्रेणेन्द्र इवाचलम् ॥ ३८४ ॥
पुच्छाच्छोटननादेन तेन नेशुः समंततः । सत्वानि तूर्यनादेन यादांसीवांतरंबुधेः ॥ ३८५ ॥
आर्य तिष्ठ मयि सति योद्धुं तेऽवसरो न हि । इति त्रिपृष्टस्तत्रैवावस्थि[6]तिष्ठिपदश्वाचलम् ॥ ३८६ ॥
पदातिना रथस्थस्य युध्यमानस्य मेऽधुना । क्षत्रधर्मोचितं नैतदिति विष्णुर्जहौ रथम् ॥ ३८७ ॥
अशस्त्रिणो[7] मे निरस्त्रेण युद्धमित्यपि नोचितम् । इत्यस्त्राण्यपि तत्याज वीरव्रतधनो हरिः ॥ ३८८ ॥
एह्येहि भो समित्कंडूं[8] हरे[9] तव हराम्यहम् । इति त्रिपृष्टोऽभाषिष्ट स्थामतो[10]ऽतिपुरंदरः ॥ ३८९ ॥
तदेव वचनं सोऽपि कोपाटोपसमुत्कटः । अद्रिप्रतिरव[11]व्याजाद्व्याजहारेव केसरी ॥ ३९० ॥

---

१ ऊर्ध्वकर्णमुखः । २ यमगृहतोरणम् । ३ अंकुटकः शस्त्रविशेषः । ४ सिंहः । ५ गर्जनया भयंकरः । ६ स्थापयामास । ७ शस्त्रसहितस्य । ८ युद्धकंडूम् । ९ हे सिंह । १० पराक्रमेणेन्द्रमतिक्रांतः । ११ पर्वतप्रतिध्वानमिषात् ।

स केसरियुवा चेत्थं चिंतयामास चेतसि । अहो अमुष्य बालस्य भृशं रभसकारिता ॥ ॥ ३९१ ॥
विना सैन्यं यदायातः स्यंदनाद्यदवातरत् । यच्च तत्याज शस्त्राणि यन्मामाह्वास्त चोच्चकैः ॥ ३९२ ॥
उच्चंपेटः प्रति सर्पं मंडूकइव दुर्मतिः । धृष्टतायाः फलमसौ प्राप्नोत्विति विमृश्य सः ॥ ३९३ ॥
खे खेचररथस्रस्तकेसरिभ्रमदः क्षणम् । तत उत्पुप्लुयमानो ददौ फालं स केसरी ॥ ३९४ ॥
तस्य चापततोऽप्योष्ठौ पाणिभ्यां स पृथक् पृथक् । संदंशाभ्यां दंदशूकस्येव जग्राह केशवः ॥ ३९५ ॥
एकेनौष्ठेन चाकर्षन्नेकतोऽन्येन चान्यतः । चटच्चटिति तं विष्णुः पटपाटमपाटयत् ॥ ३९६ ॥
अत्रांतरे जनैः सभ्यैरिव वैतालिकैरिव । रोदःकुक्षिंभरिर्भूरिश्चक्रे जयजयारवः ॥ ३९७ ॥
कौतुकान्मिलिता व्योम्नि विद्याधरसुरासुराः । मलयानिलवत्तत्र पुष्पवृष्टिं वितेनिरे ॥ ३९८ ॥
ते च सिंहशरीरस्य दले क्षिप्ते क्षणात् क्षितौ । परिपुस्फुरतुः काममर्मर्षामुक्तचेतने ॥ ३९९ ॥
महता सोऽपमानेन परतंत्रशरीरकः । द्विधाकृतोऽपि हि हरिः स्फुरन्नेवमचिंतयत् ॥ ४०० ॥
अहो प्रौढैरपि नृपैः सन्नद्धसुभटावृतैः । सास्त्रैरपि न सोढोऽस्मि योऽहं पविरिवापतन् ॥ ४०१ ॥
बालेनैकाकिनाऽनस्त्रेणामुना मृदुपाणिना । हा हतोऽस्मीति खेदो मे न पुनर्वधमात्रतः ॥ ४०२ ॥
एवं च चिंतया तस्य वेल्लतो दंदशूकवत् । ज्ञात्वाभिप्रायमित्यूचे मधुरं विष्णुसारथिः ॥ ॥ ४०३ ॥
लीलानिर्भिन्नमत्तेभापराभूत चमूशतैः । मृगराज किमेवं त्वमभिमानेन ताम्यसि ॥ ४०४ ॥

---

१ उत्प्लुत्यागतः । २ आकाशे देवरथाद्भ्रष्टस्य केसरिणो भ्रमं ददातीति । ३ कंकमुखः संदंशः सर्पग्रहणे शस्त्रविशेषः । ४ सर्पस्य । ५ अमर्षेण क्रोधेनामुक्तं चेतनं ययोस्ते । ६ शस्त्ररहितेन । ७ लुठ्यतः ।

अयं खलु भट[1]प्रष्ठस्त्रिपृष्ठो नाम भारते । प्रथमः शार्ङ्गिणां[2] बालो वयसा न तु तेजसा ॥ ४०५ ॥
नरेषु सिंहः खल्वेष पशुषु त्वं तु तत्तव । हतस्यानेन का व्रीडा श्लाघा प्रत्युत तद्रणे ॥ ४०६ ॥
तस्येति वचसा शांतः सुधावृष्ट्येव केसरी । मृत्वा बध्वायुरुत्पेदे नारको नरकावनौ ॥ ४०७ ॥
हयग्रीवाज्ञया तत्र तद्वृत्तं ज्ञातुमेयुषाम्[3] । विद्याधराणां तच्चर्मार्पयन्नूचेऽचलानुजः ॥ ४०८ ॥
तस्य घोटककंठस्य[4] चकितस्य पशोरपि । अस्य सिंहस्य चर्मेदमर्प्यतां वधसूचकम् ॥ ४०९ ॥
वाच्यश्च वाचिकमिदं स्वादुभोजनलंपटः । निश्चिंतो भव विश्रब्धं भुंजीथाः शालिभोजनम् ॥ ४१० ॥
तथेति प्रत्यपद्यंत ते विद्याधरदारकाः । बलभद्रत्रिपृष्ठौ तु जग्मतुर्नगरं निजम् ॥ ४११ ॥
प्रणेमतुः पितुः पादौ तत्र तौ भ्रातरावुभौ । बलस्तु कथयामास तमुदंतं[5]मशेषतः ॥ ४१२ ॥
पुनर्जाताविव सुतौ मेने राजा प्रजापतिः । तेन सूनृतसंधेन[6] सूनुना चात्यमोदत ॥ ४१३ ॥
ते च विद्याधरा वाजिग्रीवस्य तमशेषतः । त्रिपृष्ठोदंतमाचख्युर्वज्रपातसहोदरम् ॥ ४१४ ॥
इतश्च वैताढ्यगिरौ दक्षिणश्रेणिभूषणम् । नगरं रथनूपुरचक्रवालाख्यमस्ति तत् ॥ ४१५ ॥
तत्र च ज्वलनजटी तेजसा ज्वलनोपमः । आसीदसामान्यऋद्धिर्विद्याधरनरेश्वरः ॥ ४१६ ॥
बभूव तस्य महिषी प्रीतेः परममास्पदम् । नाम्नैव वायुवेगेति हंसीव त्वलसा गतौ ॥ ४१७ ॥
तस्यां राज्ञ्यां तस्य राज्ञः सूनुः समुदपद्यत । स्वप्नेऽर्कालोकनादर्ककीर्तिरित्यभिधानतः ॥ ४१८ ॥

---

१ भटेषु श्रेष्ठः । २ वासुदेवानाम् । ३ आगतानाम् । ४ अश्वग्रीवस्य । ५ वृत्तांतम् । ६ सत्यप्रतिज्ञेन ।

स विद्याधरभूपालः सद्यः प्रमदमेदुरः[1] । शीर्षेऽध्यारोपयल्लेखामुत्संगे च स्वयंप्रभाम् ॥ ४३३ ॥
तां दृष्ट्वोद्यौवनां राजा वरान्वेषणकर्मणि । चिंताप्रपन्नः समभूदृणमग्नः पुमानिव ॥ ४३४ ॥
विसृज्य सप्रसादं तां वरं तदुचितं नृपः । सुश्रुतादीन् समाहूय परिपप्रच्छ मंत्रिणः ॥ ४३५ ॥
अथादौ सुश्रुतोऽवादीदस्ति रत्नपुरे पुरे । राजा नीलांजनादेवीमयूरग्रीवयोः सुतः ॥ ४३६ ॥
स साधितानेकविद्यस्त्रिखंडभरतेश्वरः । विद्याधरेन्द्रोऽश्वग्रीवाभिधानः प्रवरो वरः ॥ ४३७ ॥
मंत्री बहुश्रुतोऽप्यूचे समतिक्रांतयौवनः । स्वयंप्रभायाः स्वामिन्या न योग्यः खल्वयं वरः ॥ ४३८ ॥
तिष्ठंति चोत्तरश्रेण्यां बहवो बाहुशालिनः । रूपयौवनलावण्यवंतो विद्याधरोत्तमाः ॥ ४३९ ॥
तेषां च मध्यादेकस्य कस्याप्येषा मृगेक्षणा । विचार्य दीयतां देवानुरूपं योगमिच्छता ॥ ४४० ॥
अथाबभाषे सुमतिर्नाम मंत्री महीपतिम् । युक्तमुक्तमनेनेदमायुक्तेन[2] तव प्रभो ॥ ४४१ ॥
अत्रास्त्युत्तरश्रेणिहारनायकतां गता । प्रभंकरा नाम नगर्यनेकाद्भुत[3]तैकभूः ॥ ४४२ ॥
ओजो दधन् माघवनं[4] तत्र मेघवनाभिधः । प्रातर्मेघ इवामोघः[5] समस्ति पृथिवीपतिः ॥ ४४३ ॥
सधर्मचारिणी तस्य नामतो मेघमालिनी । मालतीपुष्पमालेव शीलसौरभशालिनी ॥ ४४४ ॥
अस्ति विद्युत्प्रभो नाम नामिताशेषभूपतिः । कंदर्प इव रूपेणाप्रतिरूपेण तत्सुतः ॥ ४४५ ॥
तयोरस्ति च दुहिता ज्योतिर्मालेति नामतः । देवकन्येव निःसीमरूपलावण्यसंपदा ॥ ४४६ ॥

---

१ सहर्षः । २ सेवकेन । ३ अनेकाद्भुतस्थानम् । ४ माघवनं ऐंद्रं इंद्रसंबंधीत्यर्थः। ५ सफलः।

विद्युत्प्रभकुमारस्योचिता देवी स्वयंप्रभा । विद्युद्वारिधरस्येव द्युतिद्योतितदिङ्मुखा ॥ ४४७ ॥
अर्ककीर्तिकुमारस्य ज्योतिर्मालोचिता पुनः । कन्याविनिमयेनास्तु द्वयोरपि महोत्सवः ॥ ४४८ ॥
श्रुतसागरनामाथ व्याजहारेति भूपतिम् । कन्येयं रत्नभूता ते केन श्रीरिव नार्थ्यते ॥ ४४९ ॥
विद्याधरकुमाराणां सर्वेषामेतदर्थिनाम् । निर्विशेषत्वजनको युज्यतेऽस्याः स्वयंवरः ॥ ४५० ॥
कस्मैचिदन्यथैकस्मै ददतः कन्यकां तव । भावी विद्याधरैः सार्धं विरोधस्तेन किं मुधा ॥ ४५१ ॥
सर्वेषां मंत्रिणां मंत्रं श्रुत्वैवं तान् विसृज्य च । संभिन्नश्रोतसं नामापृच्छन्नैमित्तिकं पुनः ॥ ४५२ ॥
अश्वग्रीवस्य वान्यस्य विद्याधरवरस्य वा । निजकन्यां प्रयच्छामि यद्वास्त्वस्याः स्वयंवरः ॥ ४५३ ॥
स नैमित्तिक इत्यूचे साधुभ्योऽश्रौषमित्यहम् । यत्पृष्टो भरतेनाख्यद्भगवान्वृषभध्वजः[2] ॥ ४५४ ॥
त्रयोविंशतिरर्हंतोऽवसर्पिण्यां हि मत्समाः । एकादश भविष्यंति राजानस्त्वत्समाः पुनः ॥ ४५५ ॥
बला नव वासुदेवा नवार्धभरतेश्वराः । नव प्रत्यर्थिनस्तेषां[3] तेऽप्यर्धभरतेश्वराः ॥ ४५६ ॥
तत्र हत्वा हयग्रीवं त्रिपृष्ठो भोक्ष्यते हरिः । सविद्याधरनगरां त्रिखंडां भरतावनिम् ॥ ४५७ ॥
सर्वविद्याधरैश्वर्यं तुभ्यमेष प्रदास्यति । कन्येयं दीयतामस्मै पृथिव्यां नेदृशोऽपरः ॥ ४५८ ॥
हृष्टो नैमित्तिकं राजा सत्कृत्य विससर्ज तम् । दूतं तदर्थं मारीचिं प्रैषीच्चोपप्रजापति ॥ ४५९ ॥
सोऽथ विद्याधरो गत्वा प्रजापतिमहीपतिम् । नत्वा स्वं ज्ञापयित्वा च विनयेनेत्यभाषत ॥ ४६० ॥
अस्ति ज्वलनजटिनो विद्याधरमहीपतेः । कन्या स्वयंप्रभा नाम ललामाशेषयोषिताम् ॥ ४६१ ॥

---

१ यथा मेघस्य विद्युदुचिता तथा । २ आदीश्वरः । ३ प्रतिवासुदेवा इत्यर्थः ।

अनुरूपवरार्थेऽस्याश्चिरं चिंतापरायणः । अरोचकी कविरिव तस्थौ वह्निजटी नृपः ॥ ४६२ ॥
मंत्रिभिर्मंत्रयमाणोऽप्युपलेभे न कंचन । अनुरूपं वरं राजाऽपृच्छन्नैमित्तिकं ततः ॥ ४६३ ॥
नैमित्तिकेनसंभिन्नश्रोतसाख्यायि यत् सुता । अनुरूपा त्रिपृष्टाय प्राजापत्याय दीयताम् ॥ ४६४ ॥
प्रथमो वासुदेवोऽयं भोक्ष्यते चार्धभारतम् । श्रेणिद्वयाधिपत्यं च प्रसन्नस्ते प्रदास्यति ॥ ४६५ ॥
एवं नैमित्तिकगिरा प्रीतो मां प्राहिणोत् प्रभुः । तामोदातुं त्रिपृष्टार्थे स्वामिंस्तदनुमन्यताम् ॥ ४६६ ॥
प्रीतः प्रजापतिनृपस्तथेति प्रतिपद्य ताम् । विससर्ज यथौचित्यदानपूर्वमखर्वधीः ॥ ४६७ ॥
अश्वग्रीवाशंकया च नृपो ज्वलनजट्यपि । तामुद्वाहयितुं कन्यां प्रजापतिपुरं ययौ ॥ ४६८ ॥
सविद्याधरसामंतः सामात्यबलवाहनः । तस्थौ तन्नगरोपांते मर्यादायामिवार्णवः ॥ ४६९ ॥
सप्रधानपरीवारः प्रजापतिरथ स्वयम् । तस्याभिमुखमागच्छत् सर्वस्याभ्यागतो गुरुः ॥ ४७० ॥
द्वयोरपि महासैन्ये मिलिते प्रीतियोगतः । चकासामासतुर्गंगायमुनाश्रोतसी इव ॥ ४७१ ॥
उभावपि गजारूढौ सामान्यप्रतिपत्तितः । अन्योऽन्यं परिरेभाते सामानिकसुराविव ॥ ४७२ ॥
तयोर्द्वयोः क्षितिभुजोः सूर्याचंद्रमसोरिव । प्राक् संगमेन दिवसः स पर्वदिवसोऽभवत् ॥ ४७३ ॥
आर्पयच्चावासभुवं विद्याधरमहीभुजे । मैनाकायेव पाथोधिः प्रजापतिमहीपतिः ॥ ४७४ ॥
तत्र विद्याधरा विद्याबलाद्व्यरचयन् पुरम् । विचित्रहर्म्यरुचिरं द्वितीयमिव पोतनम् ॥ ४७५ ॥

---

१ प्रजापतेरपत्याय । २ तां कन्यां ग्रहीतुम् । ३ अखर्वा महती धीर्यस्य सः । ४ सामान्यगौरवात् । ५ पूर्णिमादिवस उत्सवदिवसश्च । ६ मैनाकपर्वताय ।

पुरस्य तस्य मूर्धन्ये प्रासादे दिव्यतोरणे । उवास ज्वलनजटी मेराविव दिवाकरः ॥ ४७६ ॥
सामंतामात्यसेनानीप्रमुखा अपरेऽपि हि । ऊषुर्यथार्हहर्म्येषु विमानेष्विव नाकिनः ॥ ४७७ ॥
विद्याधरेंद्रमापृच्छ्य प्रजापतिनृपोऽपि हि । जगाम स्वाश्रयं वेलानिवृत्त इव वारिधिः ॥ ४७८ ॥
भोज्यांगरागनेपथ्यप्रभृति प्राभृतं ततः । विद्याधरनरेंद्राय प्रजिघाय[1] प्रजापतिः ॥ ४७९ ॥
विवाहार्थमकार्येतामुभाभ्यां रत्नशालिनौ । मंडपौ चमरबल्योः सद्म इव शुभाकृती ॥ ४८० ॥
द्वयोरपि गृहेऽभूवन् धवलमंगलानि च । जरत्कुलस्त्रीरचितशिक्षाचार्यकलीलया ॥ ४८१ ॥
चांदनेनांगरागेण भ्राजमानः सुगंधिना । नीलरत्नप्रतिमेव करींद्रमधिरूढवान् ॥ ४८२ ॥
आवृतोऽनुचरीभूय सवयोभिर्नृपात्मजैः । ययौ त्रिपृष्ठो ज्वलनजटिवेश्म स्ववेश्मतः ॥ ४८३ ॥
वेश्माग्रे तोरणस्याधस्तस्थावथ बलानुजः । पौरस्त्य[2] इव मार्तंडः प्रतीच्छन्नर्घमंडलम् ॥ ४८४ ॥
मंगलानि कुलस्त्रीषु गायंतीषु ततो हरिः । भग्नाग्निसंपुटः सानुचरो मातृगृहं[3] ययौ ॥ ४८५ ॥
सदशश्वेतवसनां नयनानंदिनीं हरिः । शशिप्रभामिव मूर्तां तत्रापश्यत् स्वयंप्रभाम् ॥ ४८६ ॥
उभावथासांचक्राते एकस्मिन्नासने शुभे । स्वयंप्रभा त्रिपृष्ठश्च चित्राचंद्रमसाविव ॥ ४८७ ॥
झल्लरीवाद्यनादेन लग्ने संसूचिते तयोः । योजयामास हस्ताब्जे पुरोधाः संपुटाविव ॥ ४८८ ॥
[4]हक्कारामेलकस्ताभ्यामुभाभ्यां च व्यधीयत । नवोद्गमप्रेमतरोः सेचनोदयसंनिभः ॥ ४८९ ॥
स्वयंप्रभा त्रिपृष्ठश्च तथैव मिलितौ ततः । उपेयतुर्वेदिमध्यं वल्लीविटपिनाविव[5] ॥ ४९० ॥

---

१ प्राहिणोत् । २ पूर्वस्यां दिशि भवः । ३ परिणयनस्थानम् । ४ तारामैत्रकम् । ५ लतावृक्षौ ।

समिद्भिः पिप्पलादीनामंतर्वेदि[1] द्विजातयः । ज्वलनं ज्वालयामासुर्हविराहुतिपूर्वकम् ॥ ४९१ ॥
प्रदक्षिणीचक्रतुस्तौ प्रदक्षिणशिखोत्क्रमम् । वेदिवह्निं वेदमंत्राध्यापकेषु द्विजन्मसु ॥ ४९२ ॥
इत्थं स्वयंप्रभां देवीं परिणीय बलानुजः । तया सहारुह्य वशां प्रतस्थे स्वगृहं प्रति ॥ ४९३ ॥
उच्चलद्ध्वनिना तूर्यनादेन च महीयसा । उत्कर्णितार्यमहरिर्जगाम[2] स्वगृहं हरिः ॥ ४९४ ॥
तदाज्ञासीद्धयग्रीवस्तद्वृत्तं चरचक्षुषा । अग्रेऽपि सिंहकथया क्रुद्धश्चुक्रोध चाधिकम् ॥ ४९५ ॥
एवं च दध्यौ ज्वलनजटिना मयि सत्यपि । स्त्रीरत्नं दीयतेऽन्यस्मै रत्नं रत्नाकरे हि यत् ॥ ४९६ ॥
तस्य दातुरुपादातुस्तस्य चांते व्रजत्वसौ । तां कन्यां याचितुं दूतो दूतो हि प्रथमो नये[3] ॥ ४९७ ॥
एवं विमृश्य मनसानुशिष्य च रहः स्वयम् । व्यसृजन्नूतनं दूतं स पोतनपुरे पुरे ॥ ४९८ ॥
स दूतः सत्वरं गत्वा समीरणकुमारवत्[4] । वेश्म ज्वलनजटिनः प्रविवेशोत्युवाच च ॥ ४९९ ॥
दक्षिणभरतक्ष्मार्धं लोकार्धमिव वज्रिणः । प्रशासितुर्हयग्रीवस्याज्ञया त्वां वदाम्यदः ॥ ५०० ॥
तव स्वयंप्रभा नाम कन्यारत्नं गृहेऽस्ति भोः । तां गत्वा स्वामिने देहि रत्नं नान्यस्य भारते ॥ ५०१ ॥
स्वामी वः सकुटुंबानामश्वग्रीवः सुतापि तत्[5] । तस्यास्तु दीप्यते हंत न शिरो नयने विना ॥ ५०२ ॥
अश्वग्रीवं पुरा राज्ञः पुत्र्यदानात् प्रकोपयन् । किं हारयसि फूत्कृत्य त्वमहो ध्मातकांचनम् ॥ ५०३ ॥
इत्युक्तस्तेन दूतेनोवाच ज्वलनजट्यपि । दत्ता कन्या त्रिपृष्ठाय कन्यादानं सकृत् खलु ॥ ५०४ ॥

---

१ वेदिमध्ये । २ उत्कर्णिताः अर्यम्णः सूर्यस्य हरयोऽश्वा येन सः । ३ नीतिशास्त्रे । ४ वायुकुमारवत् । ५ तत् तस्मात् सुतापि तस्य हयग्रीवस्यास्तु ।

अन्यस्यापि प्रदत्तस्य वस्तुनः स्वामिता न हि । किं पुनः कुलकन्याया विचारयतु स स्वयम् ॥ ५०५ ॥
इत्युक्तः सोऽग्निजटिना दूतोऽन्तःकलुषः खलु । उपत्रिपृष्ठमगमन्निसृष्टार्थो हि स प्रभोः ॥ ५०६ ॥
त्रिपृष्ठं चेत्यभाषिष्ट समादिशति मद्गिरा । क्ष्मामंडलाखंडलस्त्वामश्वग्रीवो जगज्जयी ॥ ५०७ ॥
असमदर्हा कन्यकेयमज्ञानाददे त्वया । विमुग्धपथिकेनेव राजोद्यानतरोः फलम् ॥ ५०८ ॥
ईशोऽहं वः सबंधूनां रक्षिताः स्थ चिरं मया । तत् कन्यां मुंच भृत्यानां प्रमाणं स्वामिशासनम् ॥ ५०९ ॥
विकटभ्रकुटीभंगभीमभालस्थलस्ततः । रक्तेक्षणकपोलश्रीस्त्रिपृष्ठः प्रत्युवाच तम् ॥ ५१० ॥
स एवं जगति न्यायं प्रवर्तयति ते प्रभुः । अग्रेगूरिव लोकानामहो तस्य कुलीनता ॥ ५११ ॥
तेन स्वविषये मन्ये विध्वस्ताः कुलयोषितः । मार्जारयूनः पुरतः किं दुग्धमवशिष्यते ॥ ५१२ ॥
अस्मासु स्वामिता तस्य कुतो हंतामुना पथा । अन्यत्रापि स्वामितास्य गत्वैर्यैवाचिरादपि ॥ ५१३ ॥
स शालिभोजनस्येव तृप्तवान् जीवितस्य चेत् । स्वयंप्रभामुपादातुं तदत्रागच्छतु स्वयम् ॥ ५१४ ॥
दूतत्वेन न वध्योऽसि गच्छ मा तिष्ठ संप्रति । तमेव हि हनिष्यामो हयग्रीवमिहागतम् ॥ ५१५ ॥
इत्युक्तो विष्णुना दूतः प्रतोदेनेव ताडितः । गत्वा शीघ्रं सर्वमाख्यदश्वग्रीवाय भूभुजे ॥ ५१६ ॥
तदाकर्ण्य हयग्रीवो लोहितायितलोचनः । प्रस्फुरद्दंष्ट्रिकाकेशो दंशनैरधरं दशन् ॥ ५१७ ॥
वेपमानवपुर्भीमभ्रकुटीविकटालिकः । विद्याधरवरानेवं सावज्ञाकोपमादिशत् ॥ ५१८ ॥ ॥ युग्मम् ॥

---

१ उभयपक्षयोर्भावं ज्ञात्वा स्वयमुत्तरं ददाति, संदिष्टः कुरुते कार्यं स निसृष्टार्थः । २ पृथ्वीमंडलस्येंद्रः । ३ गृहीता । ४ अग्रेसरः । ५ गमनशीला । ६ तोत्त्रेण प्रहरणविशेषेणेत्यर्थः । ७ दंतैः । ८ अलिकं भालम् ।

अहो दैवेन दुर्बुद्धिर्दत्ताग्निजटिनः खलु । कृकलासइवार्कस्य यः स्यादभिमुखो मम ॥ ५१९ ॥
आभिजात्यमहो तस्य कीदृशं यो विहाय माम् । स्वसुतापतिपुत्रेणात्मकन्यां पर्यणाययत् ॥ ५२० ॥
मूर्खो मुमूर्षुरेकः स तावज्ज्वलनजस्त्वहो । प्रजापतिर्द्वितीयोऽन्यः सापत्नभगिनीसुतः ॥ ५२१ ॥
अपरश्च पितुः शालः स्वज्ञातेयेन निस्त्रपाः । मां प्रत्यारंभमिच्छंति शृगालाइव जागरम् ॥ ५२२ ॥
॥ युग्मम् ॥
विद्रावयत तान् गत्वा पवनास्तोयदानिव । शार्दूला इव हरिणान् हरयः कुंजरानिव ॥ ५२३ ॥
अथ विद्याधराः सर्वे रणकंडूलबाहवः । तया स्वाम्याज्ञया हृष्टास्तृषिताइव वारिणा ॥ ५२४ ॥
पृथक् पृथक् युत्प्रतिज्ञां कुर्वाणा भुजशालिनः । स्फोटयंत इव दिवं भुजास्फोटोद्भवै रवैः ॥ ५२५ ॥
उक्त्वा मित्रेष्विवामित्रेष्वपि संग्रामकौतुकात् । मम प्राग्मा परो जैषीदित्यन्योऽन्यमतित्वराः ॥ ५२६ ॥
कशाभिस्ताडयंतोऽश्वान् प्रेरयंतो धृतैर्गजान् । प्राजंतः प्राजनैर्धुर्यान्निघ्नंतो यष्टिभिर्मृगान् ॥ ५२७ ॥
नर्तयंतो निशातासीन् स्फारयंतः स्फुरान्मुहुः । सज्जयंतश्च तूणीरान् वादयंतो धनुर्गुणान् ॥ ५२८ ॥
भ्रामयंतो मुद्गरांश्च चालयंतो महागदाः । स्फाटयंतस्त्रिंशद्यांश्च दधानाः परिघानपि ॥ ५२९ ॥
केऽपि खेन समापेतुर्भुवा केऽपि च कौतुकात् । प्रापुश्च पोतनपुरमश्वग्रीवस्य ते भटाः ॥ ५३० ॥
॥ षड्भिः कुलकम् ॥

१ कृकलासः सरटः प्रतिसूर्यः । २ त्रिपृष्ठः । ३ स्वसंबंधेन । ४ युद्धम् । ५ सिंहम् । ६ सिंहाः । ७ युद्धप्रतिज्ञाम् । ८ अंकुशैः । ९ वृषान् प्राजनैर्वंशखंडैर्नोदयंतः । १० उग्रान् । ११ तीक्ष्णखड्गान् । १२ शस्त्रविशेषान् । १३ शस्त्रविशेषान् ।

सत्रिपृष्ठाचलं साग्निजटिनं तं प्रजापतिम् । संहराम्येष समरे द्राग्धूमो मशकानिव ॥ ५४५ ॥
इत्युक्तवंतं सामर्षमश्वकंधरमुद्धुरम् । धीगुणग्रामधामोचे सचिवग्रामणीरिदम् ॥ ५४६ ॥
त्रिखंडं भरतं स्वामी लीलयैवाजयत्पुरा । कीर्त्यै लक्ष्म्यै च तज्जज्ञे धुरि जातोऽसि दोष्मताम् ॥५४७॥
इदानीमेकसामंतविजयायोद्यतः स्वयम् । कां कीर्तिमथ कां लक्ष्मीमर्जयिष्यति नः प्रभुः ॥ ५४८ ॥
न्यूनस्य विजयेऽपि स्यान्नोत्कर्षः कोऽपि दोष्मताम् । का श्लाघा हरिणवधे हरेः करिविदारिणः॥५४९॥
न्यूनेन विजये दैवात् सर्वोऽप्येकपदे व्रजेत् । पूर्वार्जितो यशोराशिर्विचित्रा हि रणे गतिः ॥ ५५० ॥
सिंहवधचंडसिंहधर्षणप्रत्ययादपि । सत्यनैमित्तिकगिरा तत्र शंकास्पदं महत् ॥ ५५१ ॥
षाड्गुण्यादासनगुणो धर्तुमत्रोचितः प्रभोः । महागजोऽपि ह्यज्ञात्वा धावन् पंके निमज्जति ॥ ५५२ ॥
सोऽभ्रस्तु रभसाकारी क्वचिच्छरभवद्द्रुतम् । उत्पत्य भंक्ष्यते सेत्स्यत्यासीनस्यापि ते हितम् ॥ ५५३ ॥
तितिक्षितुमथेदृक्षं न क्षमोऽसि क्षमापते । आदिश्यतां तर्हि सैन्यं त्वत्सैन्यं हि सहेत कः ॥ ५५४ ॥
तथ्यां पथ्यां च तद्वाचमवामन्यत भूपतिः । मन्यावंतर्मधुनीव चेतनास्तु कुतो नृणाम् ॥ ५५५ ॥
कातरोऽसीति सचिवं तं निर्भर्त्स्य सरोषणः । क्षणेन वादयामासायुच्चैः प्रस्थानदुंदुभिम् ॥ ५५६ ॥
तेन दुंदुभिशब्देन सद्यः सर्वेऽपि सैनिकाः । एयुः सर्वाभिसारेण दूरात् पार्श्वस्थिताइव ॥ ५५७ ॥
स्नानागारं हयग्रीवो गत्वा भृंगारवारिभिः । गंगातरंगैरुत्तुंगैः सस्नौ हंसइवामलैः ॥ ५५८ ॥

---

१ उग्रम् । २ त्रिपृष्ठः ३ । सोंढुम् । ४ यथान्तर्मदिरायां सत्यां नृणां चेतना नश्यति तथान्तः हृदये मन्यौ क्रोधे सति कुतश्चेतना । नास्तीत्यर्थः । ५ दूरस्था अपि पार्श्वे स्थिता इव ।

उन्मृष्टांगो दुकूलेन दिव्यधूपैश्च धूपितः । शुभ्रीकृतांगो गोशीर्षचंदनैर्नंदनाहृतैः ॥ ५५९ ॥
संवीत[1]सदशश्वेतवस्त्रो बद्धासिधेनुकः[2] । पुरोधःकृततिलकः स राजतिलकस्ततः ॥ ५६० ॥
बैतालिकैः स्तूयमानो विशदछत्रचामरः । मदसिक्ताव[3]नितलमारुरोह महागजम् ॥ ५६१ ॥
॥ त्रिभिर्विशेषकम् ॥

दुर्वारैर्वारणैरश्वै रथैश्च परिवारितः । प्रचचाल हयग्रीवश्चलयन्नचलानपि ॥ ५६२ ॥
गच्छतस्तस्य सहसोद्धूतचंडानिलेन तु । छत्रस्यांदोल्यमानस्य दंडोऽभज्यत वृक्षवत् ॥ ५६३ ॥
अनोकहात्[4] पुष्पमिव तारकेव नभस्तलात् । हयग्रीवशिरसस्तत् पपातातपवारणम् ॥ ५६४ ॥
मदस्तदानीं करिणस्तस्य चाशुष्यदञ्जसा । सरसी ज्येष्ठमासीव शरदीव च कर्दमः ॥ ५६५ ॥
मोमूत्रते स्म तत्कालं कालजीत इव द्विपः । ररास विरसं चापि नोद्धुरं[5] च शिरो दधौ ॥ ५६६ ॥
रजोवृष्टिरसृग्वृष्टि[6]र्दिवा नक्षत्रवीक्षणम् । उल्कापातस्तडित्पात इत्युत्पाताश्च जज्ञिरे ॥ ५६७ ॥
दीनस्वरं प्ररुदितं सारमेयैरुदाननैः । आविर्भूतं शशकैश्च चिल्ली[7]भिर्भ्रांतमंबरे ॥ ५६८ ॥
काकोलै[8]श्चक्रिरे रोला[9] गृध्रैरुपरि जृंभितम् । स्थितं ध्वजे कपोतेनेत्यासन्नशकुनान्यपि ॥ ५६९ ॥
नाश्वग्रीवो दुर्निमित्ताशकुनान्यप्यजीगणत् । यमपाशैरिवाकृष्टः किं तु प्रायादनर्गलः[10] ॥ ५७० ॥
विद्याधरैर्गतोत्साहैर्नृपैरप्यरणोत्सुकैः । आकृष्टैर्विष्टिभिरिव स्वाधीनैरप्यवेष्ट्यत ॥ ५७१ ॥

---

१ संवीतं आवृतं सदशश्वेतवस्त्रं येन सः । २ बद्धच्छुरिकः । ३ मदेन दानवारिणा सिक्तमवनितलं येन तम् । ४ वृक्षात् । ५ ऊर्ध्वम् । ६ रुधिरवृष्टिः । ७ पक्षिविशेषैः । ८ काकविशेषैः । ९ शब्दाः । १० नाग्रुल्येनोद्धतः ।

संपूर्णसैन्यः कतिभिः प्रयाणैराससाद सः । परिष्कृतरथावर्तं तं रथावर्तपर्वतम् ॥ ५७२ ॥
उपत्यकायां तस्याद्रेर्विजयाढ्यगिरेरिव । विद्याधरबलान्यूषुरश्वग्रीवस्य शासनात् ॥ ५७३ ॥
इतश्च पोतनपुरे स विद्याधरपुंगवः । उवाच ज्वलनजटी बलभद्रबलानुजौ ॥ ५७४ ॥
नैसर्गिक्यापि वः शक्त्या प्रतिमल्लो न कश्चन । प्रेमभीरुर्वदामीदं प्रेमास्थानेऽपि[1] भीप्रदम् ॥ ५७५ ॥
स विद्यादुर्मदो[2] दोष्मानूष्मलोऽनेकयुज्जयी । हयग्रीवः खलूदग्रीवः शंकनीयो न कस्य हि ॥ ५७६ ॥
विद्या विना हयग्रीवान्न न्यूनं युवयोरपि । तथापि तं युवां हंतुं समर्थौ परमर्थये[3] ॥ ५७७ ॥
युवाभ्यामत्र कर्तव्यो विद्यासिद्ध्यै श्रमो मनाक् । यथा विद्याकृतं मायायुद्धं तस्य वृथा भवेत् ॥५७८॥
तथेति [4]प्रतिपेदानौ शुचिवस्त्रौ समाहितौ । विद्याः सोऽन्वशिषत् प्रीतमना ज्वलनजट्यथ ॥ ५७९ ॥
मंत्रबीजाक्षराण्यतः स्मरंतौ भ्रातरावुभौ । अत्यवाहयतां सप्तरात्रमेकाग्रमानसौ ॥ ५८० ॥
सप्तमे दिवसे जातकंपे फणिपतौ सति । ध्यानारूढौ बलोपेंद्रौ विद्याः समुपतस्थिरे ॥ ५८१ ॥
गारुडी रोहिणी चैव भुवनक्षोभणी तथा । कृपाणस्तंभनी स्थामशुंभनी व्योमचारिणी ॥ ५८२ ॥
तमिस्रकारिणी सिंहत्रासिनी वैरिमोहिनी । वेगाभिगामिनी दिव्यकामिनी रंध्रवासिनी ॥ ५८३ ॥
कृशानुवर्षिणी नागवासिनी वारिशोषिणी । धरित्रीवारिणी चक्रमारणी बंधमोचनी ॥ ५८४ ॥
विमुक्तकुंतला नानारूपिणी लोहशृंखला । कालराक्षसिका छन्नदशदिक् तीक्ष्णशूलिनी ॥ ५८५ ॥
चंद्रमौलिश्च विजयमंगला शतमालिनी । सिद्धताडनिका पिंगनेत्रा वचनपेशला ॥ ५८६ ॥

---

१ भयरहितेऽपि स्थाने प्रीतिर्भयप्रदा भवति । २ उग्रः । ३ प्रार्थये । ४ अंगीकृतवन्तौ ।

ध्वनिताहिफणा घोरघोषिणी भीरुभीषिणी । विद्या इत्यादयः प्रोचुर्वशे स्मो युवयोरिति ॥ ५८७ ॥
पारयामासतुर्ध्यानं सिद्धविद्यावुभावपि । पुण्याकृष्टं स्वयं सर्वं किं किं न स्यान्महात्मनाम् ॥ ५८८ ॥
अथ त्रिपृष्ठः सज्येष्ठः श्रेष्ठेऽह्नि विपुलैर्बलैः । प्रजापतिज्वलनजट्यादिभिः प्रास्थितोच्चकैः ॥ ५८९ ॥
तुंगैस्तुरंगै रंगद्भिर्वेगिभिर्गरुडैरिव । जयश्रीवेश्मभिर्वैर्यास्कंदनैः स्यंदनैरपि ॥ ५९० ॥
मदोद्धुरैः कुंजरैरभ्यैतिनिर्जरकुंजरैः । शार्दूलैरिव चोत्फालगामिभिर्वरपत्तिभिः ॥ ५९१ ॥
नभश्चरैर्भूचरैश्च द्यां क्ष्मां च छादयन् भृशम् । शकुनैरनुकूलैः प्रेर्यमाणः स्वजनैरिव ॥ ५९२ ॥
तूर्यनादैर्दिशो भिंदन् हेषाबृंहितबृंहितैः । सैन्यप्राग्भारभारेण कंपयंश्च वसुंधराम् ॥ ५९३ ॥
हरिः स्वदेशसीमांतशिलास्तंभमिवोच्चकैः । भूक्षोदकरथावर्तो रथावर्ताद्रिमासदत् ॥ ५९४ ॥

चतुर्भिः कलापकम् ।

रणतूर्याण्यवाद्यंत सैन्ययोरुभयोरपि । दिवोकस इवाह्वातुं युद्धसभ्या भवन्त्विति ॥ ५९५ ॥
रणसोत्कंठयोरुच्चैस्त्रिपृष्ठहयकंठयोः । समापन्नान्यनीकानि देवदैत्येंद्रयोरिव ॥ ५९६ ॥
तेषां संनह्यतामुच्चैः सैन्यानां तुमुलो दिशः । तुरंगमचमूक्षुण्णक्षोणिरेणुरिवारुणत् ॥ ५९७ ॥
सैन्यकेतुस्थितैः सिंहैः शरभैर्द्वीपिभिर्गजैः । प्लवंगैश्च रराज द्यौररण्यानीव भीषणा ॥ ५९८ ॥

---

१ चचाल । २ वैरीणामास्कंदनैः । ३ देवगजमैरावतमतिक्रांतैः । ४ सिंहैः । ५ हेषाऽश्वशब्दः बृंहितं गजशब्दस्ताभ्यां वृद्धिं प्राप्तैः । ६ भुवं क्षोदयति चूर्णयतीत्येतादृशो रथावर्तो यस्य । ७ सभायां साधवः सभ्याः । ८ वर्मधारिणाम् । ९ चित्रकैः । १० महद्-रण्यमरण्यानी ।

बंधवो नारदस्येव कलिकेलिकुतूहलाः । संशसकाश्च संचेरुर्भटोत्साहनकर्मठाः ॥ ५९९ ॥
अथोपचक्रमेऽनीकैमग्रानीकैर्द्वयोरपि । द्यां कुर्वद्भिः शरश्रेण्या प्रोत्पतत्पतगामिव ॥ ६०० ॥
अग्रानीकैस्तयोर्युद्धे शस्त्राग्निरुदजून्महान् । दवाग्निरिव शाखाग्रैः संघर्षेऽरण्यवृक्षयोः ॥ ६०१ ॥
शस्त्राशस्त्रि प्रवृत्तानां भटानाममितौजसाम् । संफेटोऽजूजणमुखे जलधौ यादसामिव ॥ ६०२ ॥
अश्वग्रीवस्याग्रसैन्यं त्रिपृष्ठस्याग्रसेनया । चक्रे पराङ्मुखं वार्द्धिवेलयेव नदीजलम् ॥ ६०३ ॥
अग्रसैन्यस्य भंगेनांगुह्ययग्रस्येव तत्क्षणात् । विद्याधरवरा वाजिग्रीवगृह्याः प्रचुक्रुधुः ॥ ६०४ ॥
तेऽभवन्नाहवोत्ताला वेतालाश्चंडबाहवः । पिशाचा यमसाचिव्यलब्धमुद्रा इवोच्चकैः ६०५ ॥
विकटोत्कटदंतानि पृथुवक्षस्तटानि च । श्यामभीमानि रक्षांसि शृंगाणीवांजनागिरेः ॥ ६०६ ॥
लांगूललांगलापातस्फाटितक्षोणिमंडलाः । मंडलाग्रक्रियाकारिनखाः केसरिणोऽपि च ॥ ६०७ ॥
शुंडादंडैस्तृणपूलवल्लीलोल्लासितदंतिनः । उत्पादकाश्च शरभा उत्तुंगा इव पर्वताः ॥ ६०८ ॥
पुच्छैराछोटयंतः क्ष्मां मोटयंतो रदैर्द्रुमान् । सिंहस्तंबेरमाकारकरालाश्च वरालकाः ॥ ६०९ ॥
अन्येऽपि द्वीपिशार्दूलवृषदंशवृकादयः । क्रव्यादाः श्वापदास्तिर्यग्भूता इव निशाचराः ॥ ६१० ॥
॥ षड्भिः कुलकम् ॥

---

१ ये युद्धान्न निवर्तंते ते संशसकाः । २ युद्धम् । ३ प्रोत्पतंतः उड्डीयमानाः पक्षिणो यस्यां ताम् । ४ अश्वग्रीवपक्षीयाः । ५ युद्धे उत्कटाः । ६ लांगूलमेव लांगलं हलं तस्य पातनेन स्फाटितं पृथ्वीमंडलं यैस्ते । ७ मंडलाग्रस्य क्रियाकारिणो नखा येषां । ८ तृणपूलवल्लीलयोल्लालिता गजा यैस्ते । ९ ऊर्ध्वचरणाः शरभा अष्टापदाः । १० चूर्णयंतः । ११ सिंहगजयोरिवाकारो येषां ते च ते कराला भयंकराश्चैतादृशा वरालकाः पशुविशेषाः ।

ददुश्च बलभद्राय हलं संवर्तकाभिधम् । सौनंदं नाम मुसलं चंद्रिकानामिकां गदाम् ॥ ६२६ ॥
तांश्च दृष्ट्वा परे वीराः सर्वे सर्वात्मनाधिकम् । संभूय समयुध्यंत युध्यंतकसुता[1] इव ॥ ६२७ ॥
शंखरत्नं पांचजन्यं जन्यनाटकनांदिकाम्[2] । त्रिपृष्ठो वादयामास रवापूरितदिङ्मुखम्[3] ॥ ६२८ ॥
संवर्तपुष्करावर्तगर्जितेनेव तस्य तु । क्षुभ्यंति स्म प्रणादेन हयकंधरसैनिकाः ॥ ६२९ ॥
केषांचित् पेतुरस्त्राणि पत्राणीव महीरुहाम् । सापस्माराइवान्ये तु स्वयं पेतुर्महीतले ॥ ६३० ॥
भीरवः फेरवइव[4] प्रणेशुः केऽपि च द्रुतम् । नेत्रे पिधाय लीत्वा च केऽप्यस्थुः शशकाइव ॥ ६३१ ॥
उलूकवत् प्रविविशुः कंदरासु च केचन । केचिदाराटिषुः शंखाइव वारिबहिष्कृताः ॥ ६३२ ॥
अभूतपूर्वमंभोधिसंशोषणमिवात्मनः । सैन्यभंगं समाकर्ण्य हयग्रीवोऽब्रवीन्निजान् ॥ ६३३ ॥
क्व रे विद्याधरा याश्च त्रस्ताः शंखध्वनेरपि । वृषभध्वनितस्येव मृगप्रभृतयो वने ॥ ६३४ ॥
को दृष्टो विक्रमस्तस्य त्रिपृष्ठस्याचलस्य वा । यत्त्रस्ताः पशुवद्यूयं चंचापुरुषदर्शनात्[5] ॥ ६३५ ॥
नानारणजयोद्भूतं युष्माभिर्हारितं यशः । श्रीछिदेऽञ्जनलेशोऽपि धौतस्य श्वेतवाससः ॥ ६३६ ॥
व्यावर्तध्वमिदं वो हि दैवात् स्खलितमागतम् । नभश्चराणां भवतां केऽपरे भूमिचारिणः ॥ ६३७ ॥
युध्यध्वं माथवा यूयं सभ्यीभवत केवलम् । अहं खलु हयग्रीवः साहाय्यार्थी रणे न हि ॥ ६३८ ॥
इत्युक्ता हयकंठेन नमत्कंठास्त्रपावशात् । विद्याधरा ववलिरे शैलस्खलितसिंधुवत्[6] ॥ ६३९ ॥

---

१ यमपुत्रा इव । २ युद्धमेव नाटकं तस्य प्रस्तावनाम् । ३ शब्देन पूरितं दिशां मुखं येन । ४ शृगालाः । ५ वस्त्रमयो दंडस्थापितः पुरुषाकृतिरूपं 'चाडिया' इति लोके प्रसिद्धः । ६ सिंधुः समुद्रः ।

सद्यश्छित्वा करोपात्तैः[1] केऽपि प्रत्यर्थिमौलिभिः । अलक्ष्यंत रणक्षेत्रे क्षेत्रपाला इवोद्भटाः ॥ ६५३ ॥
हेरंबाइव[2] नागास्यैरश्वास्यैः किन्नराइव । सद्यः कबंधोपरिष्टात्[3] पतितैः केऽपि रेजिरे ॥ ६५४ ॥
सद्यश्छिन्नैः परिकरे[4] पतित्वावस्थितैः क्षणम् । नाभ्यास्यानीव[5] भूतानि स्वशीर्षैः केऽपि चाबभुः ॥ ६५५ ॥
कबंधास्तांडवं चक्रुः केषांचिदपि दोष्मताम् । सुरीस्वयंवरोद्भूतसम्मदेनेव भूयसा ॥ ६५६ ॥
शिरांस्यमुञ्चन् हुंकारान् केषांचित् पतितान्यपि । कबंधारोहणे मंत्रानुभृणंतीव सादरम् ॥ ६५७ ॥
एवं प्रवृत्ते समरे कल्पांतइव दारुणे । प्रत्यश्वकंधररथं त्रिपृष्ठः प्रैरयद्रथम् ॥ ६५८ ॥
रामोऽपि प्रेरयन् रथ्यान्[6] रथिनामग्रणीरथ । ययौ स्नेहगुणाकृष्टस्त्रिपृष्ठरथसन्निधिम् ॥ ६५९ ॥
हयग्रीवोऽपि संपश्यन्नारक्ताभ्यामतिक्रुधा । प्रसारिताभ्यां नेत्राभ्यां तौ पिपासन्निवाब्रवीत् ॥ ६६० ॥
प्रधर्षितश्चंडसिंहो युवयोः कतरेण रे । कतरः पश्चिमांतस्थसिंहघातेन दुर्मदः ॥ ६६१ ॥
कतरः स्ववधायैव विषकन्यामिवोच्चकैः । कन्यां ज्वलनजटिनः पर्यणैषीत् स्वयंप्रभाम् ॥ ६६२ ॥
कतरः स्वामिनमपि मूढधीर्मन्यते न माम् । कतरो दत्तफालो मय्यादित्यइव वानरैः ॥ ६६३ ॥
कुतो हेतोरियत्कालं सैन्यकश्च उपेक्षितः । कस्येदानीमवष्टंभाद्युवां मां समुपस्थितौ ॥ ६६४ ॥
प्रतिब्रूतमरे बालौ युध्येथां च मया सह । क्रमेण युगपद्वापि सिंहेन कलभाविव ॥ ६६५ ॥
अथाचलकनिष्ठस्तमभाषिष्ट कृतस्मितः । अहमेष त्रिपृष्ठोऽस्मि कर्ता त्वद्दूतधर्षणम् ॥ ६६६ ॥

---

१ करगृहीतैः । २ गणेशाः । ३ मस्तकरहितं नृत्यक्रियायुक्तं कलेवरं कबंधः स्यात् । ४ कटिभागे । ५ नाभ्यासास्यं येषां तानि । ६ अश्वान् ।

पश्चिमांतहरिं हंता परिणेता स्वयंप्रभाम् । [1]अमंता स्वामिनं त्वां च चिरं च त्वामुपेक्षिता ॥ ६६७ ॥
बलो नामाग्रजोऽयं मे बलेन [2]बलसूदनः । प्रतिमल्लो न यस्यास्ति त्रैलोक्ये कीदृशो भवान् ॥ ६६८ ॥
अलं सैन्यक्षयेणेति तवाप्यभिमतं यदि । गृहाणास्त्रं महाबाहो ममैवासि रणातिथिः ॥ ६६९ ॥
अस्त्वावयोर्द्वन्द्वयुद्धं पूर्यतां भुजकौतुकम् । सभ्यीभूयावतिष्ठंतु सैनिका उभयोरपि ॥ ६७० ॥
तथेति [3]प्रतिपेदानौ हयग्रीवबलानुजौ । वारयामासतुः सैन्यान्याहवाद्वेत्रपाणिभिः ॥ ६७१ ॥
न्यस्यैकं [4]लस्तके हस्तमपरं [5]त्वटनीतटे । चक्रेऽधिज्यं हयग्रीवो यमभ्रूभीषणं धनुः ॥ ६७२ ॥
रणश्रीकेलिसंगीततंत्रीमिव धनुर्गुणम् । पाणिना वादयामास मयूरग्रीवनंदनः ॥ ६७३ ॥
शार्ङ्गमारोपयामास [6]शार्ङ्गपाणिरपि क्षणात् । द्विषां विनाशपिशुनं निशामत्स्यमिवोद्धतम् ॥ ६७४ ॥
वज्रनिर्घोषवद्घोरं मृत्योश्चाह्वानमंत्रकम् । द्विषां बलहरं विष्णुर्धन्वघोषमका[7]रयत् ॥ ६७५ ॥
[8]बाणधेर्बाणमाकृष्य करंडादिव पन्नगम् । चापे संधाय चाकर्णं चकर्ष हयकंधरः ॥ ६७६ ॥
कटाक्षमिव कालस्य कल्पांताग्नेः शिखामिव । भाभिर्ज्वलंतं तं बाणमुल्बणं प्रमुमोच सः ॥ ६७७ ॥
तमापतंतं बाणेन सद्यो मुक्तेन केशवः । चिच्छेदाब्जलताच्छेदमविच्छेदपराक्रमः ॥ ६७८ ॥
प्रथमेनैव बाणेन लाघवादपरेण तु । हयग्रीवस्य धन्वापि निचकर्ताचलानुजः ॥ ६७९ ॥
भूयो भूयो हयग्रीवो धनुर्यद्यदुपाददे । तत्तत्त्रिपृष्ठश्चिच्छेद तन्मनोरथवच्छरैः ॥ ६८० ॥

---

१ अवगणयिता । २ इन्द्रः । ३ अंगीकृतवन्तौ । ४ धनुषो मध्यभागे । ५ धनुषोऽग्रभागे । ६ त्रिपृष्ठः । ७ स्वार्थे णिप्रत्ययः । ८ तूणीरात् ।

पत्रिणाच्छिददेकेन ध्वजं प्रतिहरेर्हरिः । दूरं पर्यास चान्येन रथमेरंरुखंडवत् ॥ ६८१ ॥
कुपितोऽथ हयग्रीवः समारुह्य रथांतरम् । दूरादागाच्छरैर्वर्षन् धारासारैरिवांबुदः ॥ ६८२ ॥
न रथः सारथिर्नापि न त्रिपृष्ठो न चापरम् । अदृश्यत हयग्रीवशरदुर्दिनमंबरे ॥ ६८३ ॥
निरास शरवृष्टिं तां त्रिपृष्ठः शरवृष्टिभिः । रश्मिच्छटाभिर्जगवानंधकारमिवार्यमा ॥ ६८४ ॥
अथ क्रुद्धो हयग्रीवः सोदरामिव विद्युतः । वयस्यां कुलिशस्येव मारेरिव च मातरम् ॥ ६८५ ॥
जिह्वामिवाहिराजस्य शक्तिं शक्तिमतां वरः । समुच्चिक्षेप शैलेयीं शैलसारो महाभुजः ॥ ६८६ ॥
क्वणद्घर्घरिकाश्रेणिं कीनाशस्येव नर्तकीम् । राधाचक्रमिव स्तंभेऽभ्रमयत्तां स मूर्धनि ॥ ६८७ ॥
विमानिभिर्दत्तमार्गा विमानभ्रंशभीरुभिः । अधित्रिपृष्ठं तामाशु सर्वस्थाम्ना मुमोच सः ॥ ६८८ ॥
दण्डं तृतीयं दोर्दण्डं द्वितीयं समवर्तिनः । त्रिपृष्ठोऽप्याददे दोष्णा रथात् कौमोदकीं गदाम् ॥ ६८९ ॥
तया जघान तां शक्तिमापतंतीं बलानुजः । हस्तीव हस्तदंडेन क्रीडाकारकभस्त्रिकाम् ॥ ६९० ॥
स्फुलिंगैरुल्बणैः सोल्काशतपातं वितन्वती । क्षणेन कणशो भूत्वा पपात भुवि लोष्टवत् ॥ ६९१ ॥
दंतमैरावणस्येवोद्धृतमेकं भयानकम् । परिघं परिघेनाथ मुमोच हयकंधरः ॥ ६९२ ॥
समापतंतं तमपि गदयाखंडयद्धरिः । महोरगमिव त्रोटिकोट्या पत्ररथेश्वरः ॥ ६९३ ॥
वज्राकरशिलासारं दंष्ट्रां पितृपतेरिव । स्वसारं तक्षकस्येव हयग्रीवोऽमुचद्गदाम् ॥ ६९४ ॥
अभांक्षीदंतरिक्षेऽपि मंक्षु तामप्यधोक्षजः । वालुकामोदकमिव कौमोदक्या महाभुजः ॥ ६९५ ॥

१ बाणेन । २ चिक्षेप । ३ पर्वतसंबंधिनीम् । ४ यमस्य । ५ अग्निकणैः । ६ चंचुअग्रेण । ७ गरुडः । ८ यमस्य । ९ त्रिपृष्ठः ।

एवं भग्नेषु शस्त्रेषु विलक्षो वाजिकंधरः । विधुरे बंधुवद्धीरः पन्नगास्त्रमथास्मरत् ॥ ६९६ ॥
चापे संधाय नागास्त्रं मुमोचोद्भ्रवन्नथ । अनेकशः प्रस्फुटतो वल्मीकादिव पन्नगाः ॥ ६९७ ॥
धावन्तः स्फारफुत्कारा भूमौ नभसि चाहयः । पातालकल्पं विदधुस्तिर्यग्लोकं क्षणादपि ॥ ६९८ ॥
प्रलंबा दारुणाः कृष्णाः स्फुरन्तस्ते महाहयः । सद्यः सहस्रधोद्भूतकेतुशंकां वितेनिरे ॥ ६९९ ॥
मृत्योरिवावसर्पैस्तैः[1] सर्पैः सर्पद्भिरंबरे[2] । अपासर्पन् दूरदूरं चकिताः खेचरस्त्रियः ॥ ७०० ॥
जज्ञे त्रिपृष्ठसैन्यानामप्याशंका महीयसी । स्वामिप्रभावाज्ञत्वेन भक्त्या च भवतीदृशम् ॥ ७०१ ॥
गारुडास्त्रमथो धन्वन्यारोप्य गरुडध्वजः । मुमोच मोचा[3]दलवत्तस्य ह्यस्त्रस्य पन्नगाः ॥ ७०२ ॥
प्रादुरासन् गरुत्मंतो विदधानाः प्रसारिभिः । स्वर्णछत्रशताकीर्णामिव द्यां पक्षकंबरैः ॥ ७०३ ॥ युग्मं ॥
तेषां च पक्षसूत्कारादपि नेशुः समंततः । महाहयस्तमांसीव सहस्रकिरणोद्गमात् ॥ ७०४ ॥
वीक्षापन्नः[4] पन्नगास्त्रमपि वीक्ष्य निरर्थकम् । प्रदध्यावस्त्रमाग्नेयं दुर्धरं हयकंधरः ॥ ७०५ ॥
आग्नेयबाणं धनुषि संधाय व्यसृजच्च सः । ज्वालाभिरभितन्वानमुल्काशतमयीं दिवम् ॥ ७०६ ॥
मग्नं प्रदीपन[5] इव त्रिपृष्ठस्याखिलं बलम् । औव[6]भीताब्धियादोवत्तदाकुलमजायत ॥ ७०७ ॥
जहृषुर्जहसुर्नेमुरुत्पेतुर्ननृतुर्जगुः[7] । तालाश्च ददुरुत्ताला हयग्रीवस्य सैनिकाः ॥ ७०८ ॥
ततो धनुषि संधाय वारुणास्त्रमवारणम्[8] । क्रोधारुणेक्षणस्तूर्णममुंचदचलानुजः ॥ ७०९ ॥
उत्तेमुर्जलदाः सद्यो हरेरिव मनोरथाः । हयग्रीवाननमिव श्यामयंतो नभस्तलम् ॥ ७१० ॥

---

१ चरैः । २ प्रसरद्भिः । ३ कदलीपत्रवत् । ४ विस्मयापन्नः । ५ अग्नौ । ६ औवों वडवानलः । ७ अगायन् । ८ अनिवार्यम् ।

वपुः प्रावृषीवाब्दा धारासारैर्निरंतरैः । दवाग्निमिवशस्त्राग्निं शमयंतः समंततः ॥ ७११ ॥
एवं तृणवदस्त्राणि प्रेक्ष्य भग्नानि शार्ङ्गिणा । प्रतिविष्णुरमोघं स्वं चक्रं सस्मार मारिकृत् ॥ ७१२ ॥
ज्वालाशतैर्दीप्यमानमरांतरशतैरिव । समाकृष्य समानीतं मार्त्तंडस्यन्दनादिव ॥ ७१३ ॥
प्रसह्यापहृतमेकमंतकस्येव कुंडलम् । परितः कुण्डलीभूय तक्षकाहिमिव स्थितम् ॥ ७१४ ॥
प्रक्वणत्किंकिणीजालं त्रासयत् खेचरानपि । स्मृतमात्रोपस्थितं तत्स जग्राहेत्युवाच च ॥ ७१५ ॥
क्षीरकंठोऽस्यरे बाल भ्रूणहत्येव[1] ते वधात् । इदानीमप्यपेहि त्वं हृणीयेऽद्याप्यहं[2] त्वयि ॥ ७१६ ॥
न परिस्खल्यते क्वापि कुण्ठीभवति न क्वचित् । पविः पविधरस्येव[3] चक्रमस्त्रमिदं हि मे ॥ ७१७ ॥
मुक्तं चेन्मुच्यसे प्राणैर्विकल्पो न हि कश्चन । क्षत्राभिमानं मा धेहि विधेहि मम शासनम् ॥ ७१८ ॥
बालोऽसि तन्मया क्षांतं पूर्वदुर्ललितं तव । बालत्वचापलेनैव याहि जीव यदृच्छया ॥ ७१९ ॥
स्मित्वोवाच त्रिपृष्ठोऽपि वृद्धोऽसि हयकंधर । कोऽन्यथा प्रलपेदेवमुन्मत्तइव दुर्वचः ॥ ७२० ॥
बालोऽपि केसरी नेभान् महतोऽपि पलायते । महतोऽपि हि किं सर्पात्तार्क्ष्यबालोऽपसर्पति ॥ ७२१ ॥
बालोऽपि संध्यारक्तोऽन्यः किं क्षुभ्यति दिवाकरः । बालोऽपि किमहं त्वत्तोऽपसर्पामि रणांगणे ॥७२२॥
शस्त्राणां प्राक् प्रयुक्तानां दृष्टं तावद्बलं त्वया । विमुच्यास्यापि वीक्षस्व किमवीक्ष्यैव गर्जसि ॥ ७२३ ॥
इत्याकर्ण्य हयग्रीवो व्योमाब्धेरौर्ववह्निवत्[4] । शिरसि भ्रमयामास तच्चक्रमतिभीषणम् ॥ ७२४ ॥
भ्रमयित्वा चिरतरं सर्वस्थाम्ना मुमोच सः । चक्रं तच्च्यवमानार्कमंडलभ्रांतिदं क्षणम् ॥ ७२५ ॥

१ बालहत्या । २ हृणी लज्जायाम् कण्ड्वादिः । ३ इंद्रस्य । ४ व्योमैवाब्धिस्तस्य ।

प्रायश्चित्तमिवादित्सु प्रहाँरकृतपाप्मनः । ईक्षांचक्रे समीपस्थं तच्च चक्रमधोक्षजः ॥ ७४० ॥
तेजोभीमं तदादाय दायादमिव भास्वतः । बलभद्रकनिष्ठोऽपि ससौष्ठवमदोऽवदत् ॥ ७४१ ॥
ऊर्जितं गर्जितं तादृक् कृत्वा यन्मुमुचे मयि । दृष्टं त्वयौजश्चक्रस्यामुष्याजाविव दंतिनः ॥ ७४२ ॥
गच्छ गच्छाधुनापि त्वं स्थविरं पापवृत्तिकम् । मार्जारमिव को नाम त्वां हनिष्यति दुर्मते ॥ ७४३ ॥
इति श्रुत्वा हयग्रीवो दशनैरधरं दशन् । प्रकोपात् कंपमानांगः सभ्रूभंगोऽब्रवीदिति ॥ ७४४ ॥
अमुना लोहखंडेन मत्तः प्राशेन रे शिशो । किं नु मत्तस्तरोः स्रस्तफलेनाशेन पंगुवत् ॥ ७४५ ॥
मुंच मुंच त्वमप्येतत् सारं पश्य ममापि च । चक्रमापतदप्येतद्दलयिष्यामि मुष्टिना ॥ ७४६ ॥
ततः प्रकुपितश्चक्रं भ्रमयित्वा नभस्तले । मुमोच हयकंठाय वैकुंठोऽकुंठशक्तिकः ॥ ७४७ ॥
तच्चकर्ताश्वकंठस्य कंठं कदलीकांडवत् । निजेनैव हि चक्रेण हन्यंते प्रतिचक्रिणः ॥ ७४८ ॥
मुदितैः खेचरैः पुष्पवृष्टिः शिरसि शार्ङ्गिणः । निदधे विदधे चोच्चैर्मुदा जयजयारवः ॥ ७४९ ॥
हयग्रीवस्य सैन्येऽपि सदैन्ये रुदितध्वनिः । समुत्तस्थौ प्रतिरवै रोदसी अपि रोदयन् ॥ ७५० ॥
हयग्रीवांगसंस्कारमग्निना स्वजना व्यधुः । निँवापमिव कुर्वंतः पतद्भिर्नयनाश्रुभिः ॥ ७५१ ॥
विपद्य च हयग्रीवः सप्तम्यां नरकावनौ । नारकोऽभूत्त्रयस्त्रिंशत्सागरोपमजीवितः ७५२ ॥
अत्रांतरे नभस्युच्चैरूचेऽमरवैरिति । भो भो नृपतयः सर्वे सर्वतो मानमुज्झत ॥ ७५३ ॥
विमुंचत हयग्रीवपक्षपातं चिरादृतम् । त्रिपृष्ठं शरणं श्रेष्ठमुपाध्वं किं तु भक्तितः ॥ ७५४ ॥

१ प्रहारेण कृतस्य पापस्य । २ वान्धवम् । ३ त्रिपृष्ठः । ४ मृतमुद्दिश्य यो जलांजलिर्दीयते स निवापः ।

प्रथमो वासुदेवोऽयमुदपद्यत खल्विह । त्रिखंडभरतक्षेत्रावनेर्भर्ता महाभुजः ॥ ७५५ ॥
इति दिव्यां गिरं श्रुत्वा हयग्रीवस्य भूभुजः । सर्वेऽप्युपेत्य शिरसा प्रणेमुरचलानुजम् ॥ ७५६ ॥
रचितांजलयश्चैवमूचुरस्माभिरत्र यत् । अज्ञानात् परतंत्रत्वाच्चापराद्धं सहस्व तत् ॥ ७५७ ॥
अतः परं च यन्नाथ त्वदीयाः किंकरा इव । करिष्यामस्तवैवाज्ञां तदाज्ञापय नः प्रभो ॥ ७५८ ॥
प्रत्युवाच त्रिपृष्ठोऽपि नापराधोऽस्ति कोऽपि वः । क्षत्रियाणां क्रमो ह्येष युद्धं स्वाम्याज्ञया खलु ॥७५९॥
विमुंचत प्रतिभयमयं स्वाम्यस्मि वोऽधुना । मदीयीभूय वर्तध्वं स्वस्वराज्येष्वतः परम् ॥ ७६० ॥
एवमाश्वास्य तान् राज्ञस्त्रिपृष्ठः सपरिच्छदः । जगाम पोतनपुरं पुरंदर इवापरः ॥ ७६१ ॥
पुनश्च पोतनपुराद्दिग्जयाय जनार्दनः । साग्रजो निर्ययौ रत्नैश्चक्राद्यैः सप्तभिर्वृतः ॥ ७६२ ॥
जिगाय मागधं पूर्वं पूर्वाशामुखमंडनम् । दक्षिणाशाशिरोदाम वरदामानमप्यथ ॥ ७६३ ॥
पश्चिमाशाकृतोल्लासं प्रभासं च सुरोत्तमम् । विद्याधरेन्द्रानुभयवैताढ्यश्रेणिगानपि ॥ ७६४ ॥ युग्मम् ।
श्रेणिद्वयाधिपत्यं चादत्ताग्निजटिने हरिः । फलंति हि महात्मानः सेविताः कल्पवृक्षवत् ॥ ७६५ ॥
दक्षिणं भरतस्यार्धं साधयित्वैवमुच्चकैः । दिग्यात्राया न्यवर्तिष्ट त्रिपृष्ठः स्वपुरोन्मुखः ॥ ७६६ ॥
चक्रधरस्यार्द्ध ऋद्ध्यार्धेनाभाद्दोर्बलेन च । प्रयाणैः कतिभिः प्राप मगधान् माधवस्ततः ॥ ७६७ ॥
ददर्श कोटिपुरुषोत्पाट्यां तत्र महाशिलाम् । इलाया इव तिलकमिलेशतिलकोऽथ सः ॥ ७६८ ॥
वामेन भुजदण्डेन लीलया तां शिलां हरिः । छत्रायमाणामुदध्रे मूर्ध्नि ऊर्ध्वं नभस्तले ॥ ७६९ ॥

१ शार्ङ्गं, कौमोदिकी, पांचजन्यः, कौस्तुभमणिः, नंदकं खड्गं, वनमाला, चक्रं च । २ पृथ्वीशतिलकः ।

नृपैर्लोकैश्च तद्बाहुस्थामालोकनविस्मितैः । त्रिपृष्ठस्तुष्टुवे सुष्ठु सौष्ठवी[1] मागधैरिव ॥ ७७० ॥
तां विमुच्य यथास्थानं प्रस्थितः कतिभिर्दिनैः । नगरं पोतनपुरं श्रियो धाम जगाम सः ॥ ७७१ ॥
मौक्तिकस्वस्तिकाकीर्णं सतारकमिवांबरम् । सेन्द्रचापशतमिव तोरणश्रेणिशोभितम् ॥ ७७२ ॥
आवृष्टवारिदमिव वारिसिक्तमहीतलम् । उद्विमानमिवोत्तुंगैर्मंचै रुचिरभाजनैः ॥ ७७३ ॥
प्रत्योकः[2] प्रकृतोद्वाहमिव मंगलगीतिभिः । पिंडीभूतजीवलोकमिव संमर्दसंपदा[3] ॥ ७७४ ॥
प्रविवेश द्विपारूढः संपन्नः प्रौढसंपदा । श्रीपतिः पोतनपुरं पुरं नवमिव श्रियः ॥ ७७५ ॥

॥ चतुर्भिः कलापकम् ॥

प्रजापतिर्ज्वलनजट्यचलोऽन्येऽपि भूभुजः । त्रिपृष्ठस्यार्धचक्रित्वाभिषेकं विदधुस्ततः ॥ ७७६ ॥
इतश्च छद्मस्थतया द्वौ मासौ विहरन् विभुः । श्रेयांसो भगवान् प्राप सहस्राम्रवणं वनम् ॥ ७७७ ॥
तत्राशोकतरोर्मूले स्वामिनः प्रतिमाजुषः । द्वितीयशुक्लध्यानांते वर्तमानस्य निश्चले ॥ ७७८ ॥
ज्ञानदृष्ट्यावरणीये[4] मोहनीयांतरायके । प्रणेशुर्घातिकर्माणि तापे मदनपिंडवत्[5] ॥ ७७९ ॥ युग्मम् ।
माघकृष्णपंचदश्यां श्रवणस्थे निशाकरे । षष्ठेन तपसा भर्तुरुदपद्यत केवलम् ॥ ७८० ॥
देवैः समवसरणे रचिते तत्र देशनाम् । एकादशो जिनपतिर्विदधेऽतिशयान्वितः ॥ ७८१ ॥
तया देशनया भर्तुः प्रबुद्धा भूरिजंतवः । विरतिं सर्वतः केऽपि जगृहुर्देशतोऽपरे[6] ॥ ७८२ ॥

---

१ सुष्ठु भावः सौष्ठवम् तदस्यास्तीति । २ प्रतिगृहम् । ३ जनसमूहसंपदा । ४ ज्ञानावरणीयं दर्शनावरणीयं च । ५ मदनः वस्तुविशेषः "मीण" इति ख्यातः । ६ देशविरतिम् ।

गोशुभ्राद्या गणभृतः षट्सप्ततिरथाभवन् । स्वामिनस्त्रिपदीं श्रुत्वा द्वादशांगीमसूत्रयन् ॥ ७८३ ॥
तत्तीर्थभूरीश्वराख्यो यक्षस्त्र्यक्षो वलक्षरुक् । वृषयानो मातुलिंगगदिदक्षिणदोर्द्वयः ॥ ७८४ ॥
नकुलाक्षसूत्रयुक्तदक्षिणेतरबाहुकः । श्रेयांसस्वामिनो जज्ञे तदा शासनदेवता ॥ ७८५ ॥
तथैव मानवी देवी गौरांगी सिंहवाहना । वरदं मुद्गरिणं च दधती दक्षिणौ करौ ॥ ७८६ ॥
वामौ च बिभ्रती पाणी कुलिशांकुशधारिणौ । पारिपार्श्विक्यभूत्तुस्तदा शासनदेवता ॥ ७८७ ॥
ताभ्यामसुक्तसान्निध्यो विहरन् परमेश्वरः । अन्येद्युः पोतनपुरं पुरप्रवरमाययौ ॥ ७८८ ॥
तत्र च स्वामिसमवसरणायैकयोजनाम् । मरुत्कुमारा ममृजुर्मेघाश्च सिषिचुः क्षितिम् ॥ ७८९ ॥
स्वर्णरत्नोपलैस्तां च बबंधुर्व्यंतरामराः । जानुदघ्नीः सुमनसः पंचवर्णाश्च चिक्षिपुः ॥ ७९० ॥
तोरणानि प्रतिदिशं भूजंगानिव तद्दिशाम् । ते चक्रुस्तद्भुवो मध्ये मणिपीठं च पावनम् ॥ ७९१ ॥
तत्राधो राजतं वप्रं सस्वर्णकपिशीर्षकम् । शीर्षोत्तंसमिव क्षोणेर्विदधुर्भवनाधिपाः ॥ ७९२ ॥
सरत्नकपिशीर्षं च तापनीयमथापरम् । स्वज्योतिषेव ज्योतिष्काः प्राकारं विदधुः सुराः॥ ७९३ ॥
माणिक्यकपिशीर्षं च दिव्यरत्नशिलामयम् । विमानपतयो वप्रं तार्तीयीकं विचक्रिरे ॥ ७९४ ॥
सतोरणा चतुर्द्वारी प्रतिवप्रमजायत । देवच्छंदक ऐशान्यां मध्यवप्रस्य मध्यतः ॥ ७९५ ॥
मध्यप्राकारगर्भोर्व्यां विचक्रे व्यंतरामरैः । षष्ठ्युत्तरनवधनुःशतोच्चश्चैत्यपादपः ॥ ७९६ ॥

१ श्वेतकांतिः । २ मातुलिंगं च गदा चास्यास्तीत्येतादृशं दक्षिणहस्तद्वयं यस्य सः । ३ मेघकुमाराः । ४ शिरसोऽलंकारम् । ५ सौवर्णम् । ६ स्वतेजसा । ७ तृतीयम् । ८ चतुर्णां द्वाराणां समाहारः ।

तस्याधो मणिपीठोर्व्यां विदधुश्छंदकं च ते । रत्नसिंहासनं सांघ्रिपीठं प्राच्यां तदंतरे ॥ ७९७ ॥
तत्रान्यदपि यत् कृत्यं तच्चक्रुर्व्यंतरामराः । भक्तिमन्तोऽ[1]प्रमादेनायुक्तेभ्योऽप्यतिशेरते ॥ ७९८ ॥
श्रेयांसोऽथ प्रभुर्व्योमस्थितैश्छत्रैस्त्रिभिर्विभान् । वीज्यमानश्चामराभ्यां यक्षाभ्यां पार्श्वयोर्द्वयोः ॥७९९॥
इन्द्रध्वजेन च पुरोगामिना परिशोभितः । स्वयं ध्वनद्दुंदुभिना बंदिनेवोक्तमंगलः ॥ ८०० ॥
भामंडलेन भ्राजिष्णुः सूर्येणेवोदयाचलः । सुरासुरनरैः कोटिसंख्यातैः परिवारितः ॥ ८०१ ॥
देवैः संचार्यमाणेषु क्रमेण च पुरः पुरः । नवसु स्वर्णपद्मेषु विन्यस्यन् पादपंकजे ॥ ८०२ ॥
अधिष्ठितः पुरोदेशं धर्मचक्रेण भास्वता । ततः समवसरणं पूर्वद्वाराविशद्विभुः ॥ ८०३ ॥
तत्र स्वागतिकमिव [2]रणत्षट्चरणारवैः । त्रिः प्रदक्षिणयामास चैत्यवृक्षं जगद्गुरुः ॥ ८०४ ॥
वदन्नमस्तीर्थायेति [3]छंदकांभोजकर्णिकम् । सिंहासनमलंचक्रे पूर्वाशाभिमुखः प्रभुः ॥ ८०५ ॥
रत्नसिंहासनासीनान्यपरास्वपि दिक्ष्वथ । स्वामिनः प्रतिबिंबानि विचक्रुर्व्यंतरामराः ॥ ८०६ ॥
प्रविश्य पूर्वद्वारेण निषेदुः साधवः क्रमात् । वैमानिकस्त्रियः साध्व्यश्चोर्ध्वा एवावतस्थिरे ॥ ८०७ ॥
प्रविश्या[4]पाच्यद्वारेण नत्वार्हतं च नैर्ऋते । अतिष्ठन् भवनपतिज्योतिष्कव्यंतरस्त्रियः ॥ ८०८ ॥
प्रविश्य पश्चिमद्वारार्हन्तं नत्वावतस्थिरे । भवनाधिपतिज्योतिर्व्यंतराश्च [5]मरुद्दिशि ॥ ८०९ ॥
प्रविश्य चोत्तरद्वारा भगवंतं प्रणम्य च । क्रमेण तस्थुरैशान्यां वैमानिकनरस्त्रियः ॥ ८१० ॥

---

१ प्रमादराहित्येन सेवकेभ्योऽप्यधिकाः । २ शब्दायमानानां भ्रमराणां रवैः । ३ छंदकं देवच्छंदकं तदेव कमलं तस्मिन् कर्णिकासमानम् । ४ दक्षिणद्वारेण । ५ वायव्याम् ।

इत्थं तृतीये वप्रेऽस्थाच्छ्रीमान् संघश्चतुर्विधः । तिर्यञ्चो मध्यमे वप्रेऽधस्तने वाहनानि तु ॥ ८११ ॥
तदा च राजपुरुषास्त्रिपृष्ठायार्धचक्रिणे । स्वामिनं समवसृतं संमदादाचचक्षिरे ॥ ८१२ ॥
सद्यः सिंहासनं हित्वा पादुके परिमुच्य च । स्वामिदिक्सन्मुखं स्थित्वा ववंदे स्वामिनं हरिः ॥ ८१३ ॥
स्थित्वा सिंहासने रूप्यकोटीरर्धत्रयोदश । स्वाम्यागमनशंसिभ्यः प्रददावचलानुजः ॥ ८१४ ॥
ऋद्ध्या महत्या सहितो बलभद्रेण शार्ङ्गभृत् । जगाम समवसरणं शरणं सर्वदेहिनाम् ॥ ८१५ ॥
तत्प्रविश्योत्तरद्वारा नत्वार्हन्तं यथाविधि । सोऽनुशक्रं निषसाद समं मुसलपाणिना ॥ ८१६ ॥
प्रणम्य स्वामिनं भूयो भक्तिभावितया गिरा । इन्द्रोपेन्द्रबलाः स्तोतुमेवमारेभिरे ततः ॥ ८१७ ॥
अमंदानंदनिःस्यंददायिने परमेश्वर । मोक्षकारणभूताय मोक्षायैव नमोऽस्तु ते ॥ ८१८ ॥
तव दर्शनमात्रेऽपि कर्माण्यन्यानि विस्मरन् । आत्मारामी भवेद्देही किं पुनः श्रुतदेशनः ॥ ८१९ ॥
क्षीरोदः किमुदीर्णोऽसि कल्पवृक्षः किमुद्गतः । वर्षुकाब्दोऽवतीर्णो वा स्वामिन् संसारधन्वनि ॥ ८२० ॥
पीड्यमानस्य विश्वस्यासद्ग्रहैः क्रूरकर्मभिः । एकादशो जिनेन्द्रस्त्वं त्राता ज्योतिष्मतां पतिः ॥ ८२१ ॥
त्वयेक्ष्वाकुकुलं नाथ निसर्गेणापि निर्मलम् । निर्मलीक्रियतेऽत्यन्तं स्फटिकाश्मेव वारिणा ॥ ८२२ ॥
जगत्त्रयस्य निःशेषसंतापहरणात् प्रभो । पादमूलं तवाशेषच्छायाभ्योऽप्यतिरिच्यते ॥ ८२३ ॥
त्वत्पादपद्मयोर्भृंगीभूय संप्राप्तसंमदः । नाहं भुक्त्यै न वा मुक्त्यै स्पृहयालुर्जिनेश्वर ॥ ८२४ ॥

---

१ हर्षात् । २ उपेन्द्रास्त्रिपृष्ठः । ३ मोक्षार्थमेव । ४ श्रुता देशना येन सः । ५ वर्षणशीलो मेघः । ६ संसार एवाधन्वा मरुदेशस्तस्मिन् । ७ ज्योतिष्मतां पतिश्चंद्रस्तद्रूपः । ८ प्राप्तहर्षः ।

भवे भवे भवदीयौ चरणौ शरणं मम । अभ्यर्थये जगन्नाथ त्वत्सेवा किं न साधयेत् ॥ ८२५ ॥
इति स्तुत्वा विरतेषु वासवोपेन्द्रसीरिषु[1] । श्रेयांसः श्रेयसां हेतुं प्रारेभे देशनामिति ॥ ८२६ ॥
असावपारः संसारः स्वयंभूरमणाब्धिवत् । कर्मोर्मिभिर्भ्रम्यतेऽस्मिंस्तिर्यगूर्ध्वमधो जनः ॥ ८२७ ॥
घर्माम्भांस्यनिलेनेव[2] भेषजेन रसाइव । कर्माण्यष्टापि जीर्यंति ध्रुवं निर्जरयैव हि ॥ ८२८ ॥
संसारबीजभूतानां कर्मणां जरणादिह । निर्जरा सा स्मृता द्वेधा सकामा कामवर्जिता ॥ ८२९ ॥
ज्ञेया सकामा यमिनाम[3]कामा त्वन्यदेहिनाम् । कर्मणां फलवत् पाको[4] यदुपायात् स्वतोऽपि च ॥८३०॥
सदोषमपि दीप्तेन सुवर्णं वह्निना यथा । तपोऽग्निना तप्यमानस्तथा जीवो विशुध्यति ॥ ८३१ ॥
अनशनमौनोदर्यं[5] वृत्तेः संक्षेपणं तथा । रसत्यागस्तनुक्लेशो लीनतेति बहिस्तपः ॥ ८३२ ॥
प्रायश्चित्तं वैयावृत्यं स्वाध्यायो विनयोऽपि च । व्युत्सर्गोऽथ शुभध्यानं षोढेत्याभ्यंतरं तपः ॥ ८३३ ॥
दीप्यमाने तपोवह्नौ बाह्ये चाभ्यंतरेऽपि च । यमी[6] जरति कर्माणि दुर्जराण्यपि तत्क्षणात् ॥ ८३४ ॥
यथा हि पिहित[7]द्वारमुपायैः सर्वतः सरः । नवैर्नवैर्जलापूरैः पूर्यते नैव सर्वथा ॥ ८३५ ॥
तथैवाश्रवरोधेन कर्मद्रव्यैर्नवैर्नवैः । अयं न पूर्यते जीवः संवरेण समावृतः ॥ ८३६ ॥
यथैव सरसस्तोयं संशुष्यति पुराचितम् । दिवाकरकरालांशुपातसंतापितं मुहुः ॥ ८३७ ॥

---

१ सीरी वलदेवः । २ घर्मस्य जलानि यथा वायुना जीर्यंति तथा । ३ नियमवताम् । ४ यथा फलानां पाक उपायेन स्वतः स्वयमेव च तथा । ५ औनोदर्यमाहारसंक्षेप इत्यर्थः । ६ नियमधारी । ७ पिहितानि रुद्धानि द्वाराणि यस्य तत् ।

तथैव पूर्वसंबद्धं सर्वं कर्म शरीरिणाम् । तपसा ताप्यमानं सत्क्षयमायाति तत्क्षणात् ॥ ८३८ ॥
निर्जराकरणे बाह्याच्छ्रेष्ठमाभ्यंतरं तपः । [1]तत्राप्येकातपत्रत्वं ध्यानस्य मुनयो जगुः ॥ ८३९ ॥
चिरार्जितानि भूयांसि प्रबलान्यपि तत्क्षणात् । कर्माणि निर्जरन्त्येव योगिनो ध्यानशालिनः ॥ ८४० ॥
यथैवोपचितो दोषैः[2] शोषमायाति लंघनात् । तथैव तपसा कर्म क्षीयते पूर्वसंचितम् ॥ ८४१ ॥
यथा वा मेघसंघाताः प्रचंडपवनैर्हताः । इतस्ततो विशीर्यन्ते कर्माणि तपसा तथा ॥ ८४२ ॥
प्रतिक्षणं प्रभवंत्यावपि संवरनिर्जरे । प्रकृष्येते यदा मोक्षं प्रसुवाते तदा ध्रुवम् ॥ ८४३ ॥
निर्जरां निर्जरां[3] कुर्वंस्तपोभिर्विविधैरपि । सर्वकर्मविनिर्मोक्षं मोक्षमाप्नोति शुद्धधीः ॥ ८४४ ॥
एवं देशनया भर्तुर्बहवः प्राव्रजन् जनाः । सम्यक्त्वं प्रतिपेदाते बलभद्रहरी पुनः ॥ ८४५ ॥
पूर्णायामादिपौरुष्यां व्यसृजद्देशनां विभुः । त्रिपृष्ठपुंभिश्चानिन्ये चतुःप्रस्थमितो बलिः ॥ ८४६ ॥
स्वाम्यग्रे तत्र चोत्क्षिप्तः सोऽग्राह्यर्धं सुरैः पतन् । शेषस्य पतितस्यार्धं राज्ञान्यदितरैर्जनैः ॥ ८४७ ॥
निर्गत्य चोत्तरद्वारा मध्यवप्रनिवेशिते । देवछंदे रत्नमये निषसाद ततः प्रभुः ॥ ८४८ ॥
षट्सप्ततिगणधरग्रामणीर्गोशुभस्ततः । स्वाम्यंघ्रिपीठाध्यासीनो विदधे धर्मदेशनाम् ॥ ८४९ ॥
[4]सोऽपि द्वितीयपौरुष्यां व्यसृजद्धर्मदेशनाम् । स्वं स्वं स्थानं ययुः सर्वेऽपींद्रोपेंद्रबलादयः ॥ ८५० ॥
ततः स्थानात् प्रभुरपि प्रभाकरइवापरः । [5]ज्ञानालोकं वितन्वानो विजहार महीतलम् ॥ ८५१ ॥

---

१ आभ्यंतरेऽपि ध्यानस्य श्रेष्ठत्वम् । २ शरीरस्य रोगः । ३ निर्गता जरा यस्यास्ताम् । ४ "गोशुभेन विसृष्टायां देशनायां क्षणेन च" इति पाठः क्वचित् । ५ ज्ञानप्रकाशम् ।

साधूनां चतुरशीतिसहस्राणि महात्मनाम् । लक्षमेकं च साध्वीनां सहस्रत्रयसंयुतम् ॥ ८५२ ॥
चतुर्दशपूर्वभृतां त्रयोदश शतानि तु । षट्सहस्र्यवधिमतां मनःपर्ययिणामपि ॥ ८५३ ॥
सार्धानि षट्सहस्राणि केवलज्ञानशालिनाम् । जातवैक्रियलब्धीनामेकादशसहस्र्यथ ॥ ८५४ ॥
पंचैव च सहस्राणि वादलब्धिमतां पुनः । लक्षद्वयं श्रावकाणां सहस्रा नवसप्ततिः ॥ ८५५ ॥
अष्टाचत्वारिंशता च सहस्रैरधिकानि तु । चत्वारि लक्षाणि तथा श्राविकाणां शुभात्मनाम् ॥ ८५६ ॥
आकेवलाद् द्विमासोनवर्षलक्षैकविंशतिम् । महीं विहरतो जज्ञे परिवारः प्रभोरयम् ॥ ८५७ ॥
मोक्षकालं विदित्वा स्वं प्रभुः संमेतमेत्य च । समं मुनिसहस्रेणानशनं प्रत्यपद्यत ॥ ८५८ ॥
मासमेकं तथा स्थित्वा शैलेशीध्यानमास्थितः । नभःकृष्णतृतीयायां[1] धनिष्ठास्थे निशाकरे ॥ ८५९ ॥
अनंतदर्शनज्ञानवीर्यानंदमयात्मकः । समं तैर्मुनिभिः प्राप भगवान् परमं पदम् ॥ ८६० ॥
कौमारे स्वामिनो वर्षलक्षाणामेकविंशतिः । द्विचत्वारिंशदब्दानां लक्षाण्यवनिपालने ॥ ८६१ ॥
प्रव्रज्यापालने वर्षलक्षाणामेकविंशतिः । इत्यायुश्चतुरशीतिवर्षलक्षाण्यजायत ॥ ८६२ ॥
षड्विंशतिसहस्राग्रवर्षषट्षष्टिलक्षकैः । अब्धिशतेन चोनाया अब्धिकोटेर्व्यतिक्रमे ॥ ८६३ ॥
श्रीमच्छीतलनाथस्य मोक्षकालादनन्तरम् । श्रेयांसस्वामिनो जज्ञे निर्वाणगमनोत्सवः ॥ ८६४ ॥
॥ युग्मम् ॥
चक्रे निर्वाणकल्याणं सगीर्वाणैः[2] पुरंदरैः । महतामन्तकालोऽपि पर्वणि[3] न पुनः शुचे[4] ॥ ८६५ ॥

१ श्रावणस्य कृष्णतृतीयायाम् । २ सदेवैः । ३ उत्सवाय । ४ शोकाय ।

द्वात्रिंशतान्तःपुरस्त्रीसहस्रैर्विलसन् सुखम् । त्रिपृष्ठोऽपि ततः स्वायुः कियदप्यत्यवाहयत् ॥ ८६६ ॥
स्वयंप्रभायां जज्ञाते शार्ङ्गपाणेरुभौ सुतौ । ज्येष्ठः श्रीविजयो नाम कनिष्ठो विजयाह्वयः ॥ ८६७ ॥
रतिसागरमग्नस्य त्रिपृष्ठस्यान्यदान्तिके । आजग्मुर्गायना[1]: केऽपि सौस्वर्याद[2]तिकिन्नराः ॥ ८६८ ॥
गायन्तस्तेऽतिमधुररागवैविध्यबंधुरम् । हृषीकेशस्य हृदयं जह्रुः सर्वकलानिधेः ॥ ८६९ ॥
सदा त्रिपृष्ठः पार्श्वस्थांश्चक्रे गीतगुणेन तान् । रज्यंत्यन्येऽपि गीतेन किं पुनस्तद्विदग्रणीः ॥ ८७० ॥
अन्यदा तु विभावर्यां विष्णोस्तल्पे निषेदुषः । तैस्तारं गातुमारेभे गंधर्वैरिव वज्रिणः ॥ ८७१ ॥
तद्गीताक्षिप्तहृदयः करीवाथ जनार्दनः । एकं वारस्थितं[3] शय्यापालमेवं समादिशत् ॥ ८७२ ॥
निद्रायमाणेष्वस्मासु गायतो गायनानमून् । विसृजेस्त्वं वृथायासः स्वामिन्यनवधायके ॥ ८७३ ॥
तथेति प्रतिपेदे स शय्यापालः प्रभोर्वचः । शार्ङ्गिणोऽपि क्षणान्निद्रा मुद्रयामास लोचने ॥ ८७४ ॥
शय्यापालोऽपि तान् गीतलोभाद्विसृजति स्म न । विषयाक्षिप्तमनसां गलेद्[4]धि स्वामिशासनम् ॥८७५॥
यामिन्याः पश्चिमे यामे प्रबुद्धोऽधोक्षजस्ततः । तथैव गायतोऽश्रौषीत्तानक्षीणकलस्वरान्[5] ॥ ८७६ ॥
किं विसृष्टास्त्वया नामी स्पष्टकष्टास्तपस्विनः । इति पृष्टस्त्रिपृष्ठेन शय्यापालोऽब्रवीदिदम् ॥ ८७७ ॥
अमीषामेव गीतेन व्याक्षिप्तहृदयः प्रभो । व्यस्राक्षं गायनान्नैतान् व्यस्मार्षं स्वामिशासनम् ॥८७८॥
ततः प्रकुपितः सद्यः कृत्वा चाकारसंवरम्[6] । प्रातरर्क इव प्राचीं सभामध्यास्त केशवः ॥ ८७९ ॥

---

१ गायकाः । २ सुस्वरत्वेन । ३ स्ववारेण स्थितस्तम् । ४ नश्येत् । ५ अक्षीणः कलो मधुरः स्वरो येषां तान् ।
६ आकारगोपनम् ।

तत्र स्मृत्वा निशावृत्तं शय्यापालं प्रदर्श्य तम् । आरक्षपुरुषानेवं समादिक्षदधोक्षजः ॥ ८८० ॥
अमुष्य प्रियगीतस्य कर्णयोः क्षिप्यतां ध्रुवम् । तप्तं त्रपु च ताम्रं च दोषः कर्णकृतो ह्ययम् ॥ ८८१ ॥
शय्यापालं तमेकान्ते तेऽपि नीत्वा तथा व्यधुः । दुर्लंघ्यं शासनं ह्युग्रशासनानां महीभुजाम् ॥ ८८२ ॥
शय्यापालोऽपि पंचत्वं प्राप वेदनया तया । दुर्विपाकं वेदनीयकर्माबभ्राच्च शार्ङ्गभृत् ॥ ८८३ ॥
नित्यं विषयसंसक्तो राज्यमूर्छापरायणः । स्वदोर्बलावलेपेन तृणाय गणयञ्जगत् ॥ ८८४ ॥
प्राणातिपाते निःशंको महारंभपरिग्रहः । क्रूरेणाध्यवसायेन शीर्णसम्यक्त्वभूषणः ॥ ८८५ ॥
नारकायुर्निबध्याब्दलक्षाशीतिं चतुर्युताम् । अतीत्यायुस्त्रिपृष्ठोऽगात्सप्तमीं नरकावनिम् ॥ ८८६ ॥
तत्रावासे प्रतिष्ठाने पंचधन्वशतोन्नतः । त्रयस्त्रिंशत्सागरायुः सोऽपश्यत् कर्मणां फलम् ॥ ८८७ ॥
त्रिपृष्ठस्याब्दसहस्राः कौमारे पंचविंशतिः । तावन्तो मण्डलीकत्वेऽब्दसहस्रं च दिग्जये ॥ ८८८ ॥
त्र्यशीतिवर्षलक्ष्येकोनपंचाशत्सहस्रयुक् । राज्ये चेति चतुरशीत्यब्दलक्षायुषो मितिः ॥ ८८९ ॥
अथाचलोऽपि शोकेन भ्रातृपंचत्वजन्मना । पराबभूवे सद्यः स्वर्भानुना भानुमानिव ॥ ८९० ॥
विवेक्यप्यविवेकीव भ्रातृस्नेहवशादथ । करुणस्वरमित्युच्चैर्विललाप हलायुधः ॥ ८९१ ॥
उत्तिष्ठ बंधो निर्बंधः कोऽयं शयनकर्मणि । अदृष्टपूर्वमालस्यं किं नृसिंहस्य तेऽधुना ॥ ८९२ ॥
द्वारि भूपतयः सर्वे त्वत्पादान् द्रष्टुमुत्सुकाः । अदर्शनान्नाप्रसादस्तेषु युक्तस्तपस्विषु ॥ ८९३ ॥
क्रीरुयापि न ते मौनमियद्बांधव युज्यते । भृज्यते हृदयं त्वद्वाक्सुधासारं विना मम ॥ ८९४ ॥

१ मानम् । २ राहुणा । ३ आग्रहः । ४ दह्यते ।

महोत्साहस्य सततं गुरुभक्तस्य वत्स ते । निद्रा च मदवशा च न संभवति सर्वथा ॥ ८९५ ॥
हा हतोऽस्म्युग्रविधिना किमापतितमस्य मे । इति क्रंदन् महीपृष्ठे मुशली मूर्छितोऽपतत् ॥ ८९६ ॥
लब्धसंज्ञः क्षणेनापि समुत्थाय च लांगली । हा भ्रातर्भ्रातरित्युच्चैः क्रंदन्नंकेऽग्रहीद्धरिम् ॥ ८९७ ॥
वृद्धैः प्रबोधितः सोऽथ धैर्यमालंब्य च क्षणम् । अनुजस्यांगसंस्कारादिकं कर्म समापयत् ॥ ८९८ ॥
कृतौर्ध्वदेहिको भ्रातुः स्मरणेन मुहुर्मुहुः । मुमोच लोचनैर्वारि श्रावणांभोदवद्बलः ॥ ८९९ ॥
महाटव्यामिवोद्याने श्मशानइव वेश्मनि । गृहस्रोतःस्विव क्रीडासरःस्रोतस्विनीष्वपि ॥ ९०० ॥
अपि बंधुसमाजेषु वैरिवृंदेष्विवानिशम् । न रतिं बलभद्रोऽगादल्पवारिणि मत्स्यवत् ॥ ९०१ ॥
युग्मम् ।

श्रेयांसस्वामिपादानां स्मरन् श्रेयस्करीं गिरम् । संसारासारतां ध्यायन् विषयेभ्यः पराङ्मुखः ॥ ९०२ ॥
स्वजनानामुपरोधात् स्थित्वाहानि च कानिचित् । ययौ बलो धर्मघोषाचार्यपादांतमन्यदा ॥ ९०३ ॥
॥ युग्मम् ॥

शुश्राव देशनां तस्मादर्हद्वागनुवादिनीम् । विशेषाद्भवनिर्वेदमाससाद तया बलः ॥ ९०४ ॥
सद्यो जग्राह दीक्षां च तत्पादान्ते स शुद्धधीः । अनुष्ठाने प्रवर्तंते ज्ञात्वा खलु महाशयाः ॥ ९०५ ॥
स सम्यक् पालयन्मूलगुणोत्तरगुणान् गुणी । सर्वत्र समतां बिभ्रत् सहमानः परीषहान् ॥ ९०६ ॥

---

१ गृहस्य जलनिर्गमार्गेष्विव । २ आग्रहात् । ३ संसारे वैराग्यम् ।

वायुरिवाप्रतिबद्धो भुजंगमइवैकदृक् । कंचित् कालं विजहार ग्रामाकरपुरादिषु ॥ ए०७ ॥

अथाब्दलक्षाण्यतिवाह्य पंचाशीतिं निसर्गामलचित्तवृत्तिः ।

कर्माणि सर्वाण्यपि घातयित्वा प्रापाचलः सिद्धिपदे निवासम् ॥ ए०८ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये

चतुर्थे पर्वणि श्रीश्रेयांसजिनत्रिपृष्ठाचलाश्वग्रीववर्णनो नाम

प्रथमः सर्गः संपूर्णः ।

---

## द्वितीयः सर्गः ।

### श्रीवासुपूज्यचरित्रम् ।

नमः श्रीवासुपूज्याय विश्वपूज्याय तायिने[1] । इन्द्रोपेन्द्रकिरीटाग्रघृष्टांघ्रिनखपंक्तये ॥ १ ॥
अर्हंतमिव रूपस्थध्यानस्थो विश्वपावनम् । वक्ष्यामि तस्य चरितं चंद्रादप्यतिनिर्मलम् ॥ २ ॥
पुष्करवरद्वीपार्धे प्राग्विदेहविभूषणे । विजये मंगलावत्यामस्ति पू रत्नसंचया ॥ ३ ॥
तस्यां पद्मोत्तरो नाम विश्वपद्मोत्तरः[2] सदा । बभूव राजा रजनीराजराजेव वल्लभः[3] ॥ ४ ॥
अधारयन्मनसि स जैनं शासनमुज्ज्वलम् । तदीयमिव[4] राजानो नित्यं शिरसि भक्तितः ॥ ५ ॥
तस्य लक्ष्मीश्च कीर्तिश्च गुणानामेकवेश्मनः । युग्मजाताविव भृशं ववृधाते सदैव हि ॥ ६ ॥
पृथ्वीं समुद्रसंव्यानां[5] पृथ्वीपतिशिरोमणिः । परिखामेखलामेकपुरीमिव शशास सः ॥ ७ ॥
चपलाचपला[6] लक्ष्मीर्वयोवज्रत्वरं वपुः । पद्मदलाग्रोदबिंदुवच्च[7] पुण्यं[8] विनश्वरम् ॥ ८ ॥
विश्लेषिणो[9] बंधवोऽपि मार्गसंपृक्तपांथवत् । इत्यजस्रं भावयन् स भववैराग्यमासदत् ॥ ९ ॥
॥ युग्मम् ॥

वज्रनाभगुरोः पादमूले गत्वा महामनाः । अन्येद्युराददे दीक्षां मुक्तिश्रीप्राप्तिदूतिकाम् ॥ १० ॥

---

१ रक्षकाय । २ समग्रलक्ष्म्याऽधिकः । ३ "जानिवज्जनवल्लभः" इति पाठांतरम् । ४ तस्य राज्ञः शासनमन्ये राजानो यथातथा स जैनं शासनम् । ५ समुद्र एव संव्यानं वस्त्रं यस्यास्ताम् । ६ चपलेव विद्युदिव चपला चंचला । ७ पद्मपत्राग्रे जलबिंदुवत् । ८ सौन्दर्यम् । ९ वियोगिनः ।

अर्हद्भक्त्यादिभिस्तैस्तैः स्थानकैः कैश्चिदुज्ज्वलैः । सुधीरुपार्जयामास तीर्थकृन्नाम कर्म सः ॥ ११ ॥
खड्गधारातिनिशितं पालयित्वा चिरं व्रतम् । विपद्याभूत् सुरः कल्पे प्राणताख्ये महर्द्धिकः ॥ १२ ॥
इतश्च जंबूद्वीपस्य भरतार्धेऽत्र दक्षिणे । पुर्यस्ति नाम्ना चंपेति चंपकोत्तंसवद्भुवः ॥ १३ ॥
तत्र चैत्येषु रत्नाश्मभित्तिषु प्रतिबिंबितः । वैक्रियाणीव रूपाणि धारयन् लक्ष्यते जनः ॥ १४ ॥
चंद्राश्मबद्धैः सोपानैर्निशि निस्यंदिवारिभिः । तत्र [१]स्वयंजलाः क्रीडादीर्घिकाः प्रतिमंदिरम् ॥ १५ ॥
सद्धूपधूमवल्लीभिर्वासागाराणि तत्र च । पातालभवनानीवोरगीभिर्भान्त्यनेकशः ॥ १६ ॥
क्रीडत्पुरवधूकानि तत्र क्रीडासरांसि च । निर्यदप्सरसः क्षीरोदधेर्दधति विभ्रमम् ॥ १७ ॥
लीलया [२]षड्जबहला गायन्त्यः षड्ज[३]कैशिकीम् । भवन्ति केकिकेकानां तत्र सं[४]वादिकाः स्त्रियः॥ १८ ॥
तांबूलीवीटकभृतो भांति तत्रेभ्यवेश्मसु । नार्योऽध्यापयितुं हस्तन्यस्तक्रीडाशुका इव ॥ १९ ॥
तत्रासीद्वासवस्यौजसा [५]वसुरिव त्विषा । वसुपूज्य इतीक्ष्वाकुवंश्यो वसुमतीपतिः ॥ २० ॥
स कुर्वन् गर्जितमिव याचकाह्वानडिंडिमैः । पृथिवीं प्रीणयामास धनैर्वार्भिरिवांबुदः ॥ २१ ॥
विचेरुः क्रीडया पृथ्व्यां तस्यानीकान्यनेकशः । न पुनर्दिग्जयकृते प्रतापाक्रान्तविद्विषः ॥ २२ ॥
दुष्टानां शासके तस्मिन्नाज्ञासारे महीभुजि । दस्युनाम [६]नामकोशेष्वदृश्यत जनेषु न ॥ २३ ॥

---

१ स्वयं जलं यासु ताः स्वतःसिद्धजला इत्यर्थः । २ षड्जः संगीतशास्त्रोक्तस्वरविशेषस्तेन बहलाः । ३ तन्नाम्नीं गीतिम् । ४ स्पर्धाकारिण्यः । ५ सूर्यः । ६ शब्दकोशेषु ।

सुमेरावमराधीशोऽतिपांडुकंबलां शिलाम् । गत्वा सिंहासन उपाविशदंकाहितप्रभुः ॥ ३८ ॥
अथाच्युतप्रभृतयस्त्रिषष्टिरपि वासवाः । स्वामिनं स्नपयामासुः कुंभैस्तीर्थपयोभृतैः ॥ ३९ ॥
ईशानकल्पाधिपतेरंके जिनपतिं ततः । शक्रो निवेशयामास स्वकीय इव चेतसि ॥ ४० ॥
जिनेन्द्रस्य चतसृषु ककुप्सु स्फाटिकान् वृषान् । चतुरो भक्तिचतुरो विचकार पुरंदरः ॥ ४१ ॥
तद्विषाणोत्थितैस्तोयैः स्नपयामास स प्रभुम् । अन्येन्द्रस्नपनविधिवैलक्षण्यविचक्षणः ॥ ४२ ॥
उक्षणस्तानुपसंहृत्य स्वामिनोऽङ्गं प्रमृज्य च । विलिंपति स्म गोशीर्षचंदनेन दिवस्पतिः ॥ ४३ ॥
दिव्यैर्विभूषणैर्वस्त्रैरभ्यर्च्य कुसुमैरपि । रचितारात्रिको नाथमस्तवीदिति वासवः ॥ ४४ ॥
चक्रिणां नैव चक्रेण न चक्रेणार्धचक्रिणाम् । न चेशानस्य शूलेन न वज्रेण ममापि वा ॥ ४५ ॥
न चास्त्रैरपरेन्द्राणां यानि भेद्यानि जातुचित् । तानि कर्माणि भिद्यंते दर्शनेनापि नाथ ते ॥ ४६ ॥
नैव क्षीरोदवेलाभिर्न प्रभाभिः क्षपापतेः[2] । नैव वारिधरासारैर्न च गोशीर्षचंदनैः ॥ ४७ ॥
न वा निरंतरै रंभारामैः[3] शाम्यंति ये खलु । सर्वे ते दुःखसंतापाः शीर्यन्ते दर्शनेन ते ॥ ४८ ॥
न ये नानाविधैः क्वाथैश्चूर्णैश्च विविधैर्न ये । न च प्राज्यैः प्रलेपैर्ये न च ये शस्त्रकर्मभिः ॥ ४९ ॥
न च मंत्रप्रयोगैर्ये छिद्यंते जातु देहिनाम् । आमयास्ते[4] प्रलीयन्ते दर्शनेनापि ते प्रभो ॥ ५० ॥
खलूक्त्वा[5] यदि वानल्पमल्पमेतद्ब्रवीम्यहम् । यत्किंचिदप्यसाध्यं तत् साध्यते दर्शनेन ते ॥ ५१ ॥
त्वद्दर्शनस्यास्य फलमिच्छाम्येतज्जगत्पते । भूयो भूयः संप्रतीव भवद्दर्शनमस्तु मे ॥ ५२ ॥

---

१ वृषान् । २ चन्द्रस । ३ कदलीनामुद्यानैः । ४ रोगाः । ५ खलु अलमर्थे ।

एवं जिनपतिं स्तुत्वा गृहीत्वा च दिवस्पतिः । गत्वा पार्श्वे जयादेव्या मुमोच प्रणनाम च ॥ ५३ ॥
हृत्वापस्वापनीं देव्यास्तच्चार्हत्प्रतिरूपकम् । ततो द्यां प्रययौ शक्रो मेरुतोऽन्ये तु वासवाः ॥ ५४ ॥
उत्सवं वसुपूज्योऽपि चक्रे सूर्य इवोदयम् । चेतांसि कमलानीव जगतोऽपि विकासयन् ॥ ५५ ॥
वसुपूज्यजयादेव्यौ वासुपूज्य इति स्वयम् । यथार्थं नाम चक्राते शुभेऽहनि जगत्पतेः ॥ ५६ ॥
शक्रसंक्रमितांगुष्ठसुधया स्वाम्यवर्धत । धात्र्योऽन्यकर्मभिर्धात्र्योऽर्हतां न स्तन्यदा यतः ॥ ५७ ॥
पंचभिर्वासवादिष्टधात्रीभिः परमेश्वरः । छायावत् सहयात्रीभिर्[1]लाल्यमानो व्यवर्धत ॥ ५८ ॥
रत्नस्वर्णमयैर्दिव्यैः कदाचिदपि गेन्दुकैः । शंकुलाभिर्वज्ररत्नसंकुलाभिः[2] कदाचन ॥ ५९ ॥
कदाचिच्च भ्रमरकैर्भ्रामिभिर्[3]भ्रमरैरिव । कदाप्यामलकीवृक्षारोहणैः सपणं मिथः ॥ ६० ॥
कदाचिद्वेगयानेनाऽन्तर्धानेन कदाचन । कदाचित् फालदानेन कदाप्युत्पतनेन च ॥ ६१ ॥
कदाचिद्वारितरणैः सिंहनादैः कदाचन । कदाचिन्मुष्टियुद्धेन निर्युद्धेन[4] कदाचन ॥ ६२ ॥
आगतैः सवयोभूय देवासुरकुमारकैः । बाल्योचितं प्रभुः क्रीडन् व्यत्यलंघिष्ट शैशवम् ॥ ६३ ॥
पंचभिः कुलकम् ।

स सप्ततिधनुस्तुंगः सर्वलक्षणलक्षितः । मृगीदृशां संवननं[5] प्रपेदे यौवनं प्रभुः ॥ ६४ ॥
वसुपूज्यजयादेव्यौ वात्सल्यादपरेऽहनि । इत्यूचाते वासुपूज्यं भवसौख्यपराङ्मुखम् ॥ ६५ ॥
जातेनापि त्वयास्माकं जगतश्च मनोरथाः । पूर्णास्तथापि वक्ष्यामः कस्तृप्येदमृतस्य हि ॥ ६६ ॥

१ सहचारिणीभिः । २ वज्ररत्नखचिताभिः । ३ भ्रामिभिर्भ्रमणशीलैः भ्रमरकैः क्रीडासाधनविशेषैः । ४ बाहुयुद्धेन । ५ वशीकरणम् ।

मध्यदेशे वत्सदेशे गौडेषु मगधेषु च । कोसलेषु तोसलेषु तथा प्राग्ज्योतिषेष्वपि ॥ ६७ ॥
नेपालेषु विदेहेषु कलिंगेषूत्कलेषु च । पुण्ड्रेषु तामलिप्तेषु मूलेषु मलयेष्वपि ॥ ६८ ॥
मुग्गरेषु मल्लवर्तेषु च ब्रह्मोत्तरेषु च । अपरेष्वपि देशेषु पूर्वाशाभूषणेष्वपि ॥ ६९ ॥
डाहलेषु दशार्णेषु विदर्भेष्वश्मकेषु च । कुंतलेषु महाराष्ट्रेष्वंध्रेषु मुरलेषु च ॥ ७० ॥
क्रथकैशिकसूर्पारकेरलद्रमिलेषु च । पांड्यदण्डकचोलेषु नाशिक्य कौंकणेषु च ॥ ७१ ॥
कौवेरवानवासेषु कोल्लाग्रौ सिंहलेषु च । अपरेष्वपि देशेषु दक्षिणाशाविवर्तिषु ॥ ७२ ॥
अपरेष्वपि राष्ट्रेषु सुराष्ट्रत्रिवणेषु च । दशेरकेष्वर्बुदेषु कच्छेष्वावर्तकेषु च ॥ ७३ ॥
तथा ब्राह्मणवाहेषु यवनेष्वथ सिंधुषु । अपरेष्वपि राष्ट्रेषु पश्चिमामध्यवर्तिषु ॥ ७४ ॥
शककेकयवोक्काणहूणवानायुजेषु च । पंचालेषु कुलूतेषु तथा कश्मीरकेष्वपि ॥ ७५ ॥
कंबोजेषु वाह्लीकेषु जांगलेषु कुरुष्वथ । कौबेरीवर्तिषु तथा मंडलेष्वपरेष्वपि ॥ ७६ ॥
याम्यार्धभरतक्षेत्रसीमसेतुनिभे गिरौ । वैताढ्येऽप्युभयश्रेण्योर्नानाजनपदेषु च ॥ ७७ ॥
कुलीनाः कृतिनः शूरा महाकोशा यशस्विनः । चतुरंगबलोपेताः प्रजापालनविश्रुताः ॥ ७८ ॥
निःकलंकाः सत्यसंधा नित्यं धर्मेऽनुरागिणः । नरेन्द्राः खेचरेन्द्राश्च ये केचिदिह तेऽधुना ॥ ७९ ॥
तुभ्यं दातुं निजाः कन्या महाप्राभृतपाणिभिः । अश्रांतं प्रेषितैर्दूतैः प्रार्थयन्ते कुमार नः ॥ ८० ॥
॥ चतुर्दशभिः कुलकम् ॥
तेषामस्माकमप्युच्चैः पूर्यतां तन्मनोरथः । तव तत्कन्यकानां च विवाहोत्सवदर्शनात् ॥ ८१ ॥

वार्द्धकेऽस्माकमुचितं व्रतादानमतः परम् ॥ ८२ ॥
गृह्यतां राज्यमप्येतत्कुलक्रमसमागतम् । भवतां युक्तमेवैतत् पुत्रप्रेमोचितं वचः ॥ ८३ ॥
वासुपूज्यकुमारोऽपि व्याजहारेति सस्मितम् । सार्थवाहबलीवर्दइव खिन्नोऽस्मि संप्रति ॥ ८४ ॥
परं संसारकांतारे भ्रामंभ्राममसावहम् । कुत्र कुत्र न वा ग्रामे कुत्र कुत्राकरे न वा ॥ ८५ ॥
कुत्र कुत्र न वा देशे कुत्र कुत्र पुरे न वा । कुत्र कुत्र न वा नद्यां कुत्र कुत्र नदे न वा ॥ ८६ ॥
कुत्र कुत्र न वाटव्यां कुत्र कुत्र गिरौ न वा । नानारूपपरावर्तैरनंतकालमभ्रमम् ॥ ८७ ॥
कुत्र कुत्र न वा द्वीपे कुत्र कुत्रार्णवे न वा । अलं कन्योद्वाहराज्यैः संसारतरुदोहदैः ॥ ८८ ॥
एष भेत्स्यामि संसारं नानायोनिभ्रमास्पदम् । जन्मनेवोत्सवो भावी तातस्य जगतोऽपि च ॥ ८९ ॥
प्रव्रज्याकेवलज्ञाननिर्वाणगमनैरपि । भवन्तं हंत जानामि संसारतरणोत्सुकम् ॥ ९० ॥
वसुपूज्यनृपोऽप्येवमभ्यधात्सास्रलोचनः । ज्ञातं तैस्तैर्महास्वप्नैस्तीर्थकृज्जन्मसूचकैः ॥ ९१ ॥
इदं जन्म पारमिव भवांभोधेस्त्वमासदः । दीक्षाकेवलनिर्वाणोत्सवाश्च खलु भाविनः ॥ ९२ ॥
असंशयं त्वया तीर्ण एवैष भवसागरः । अप्यस्मत्पूर्वपुरुषैर्मुमुक्षुभिरनुष्ठितम् ॥ ९३ ॥
अवान्तरोत्सवमिमं किं तु वाञ्छामि तावकम् । सुमंगलां सुनंदां चोपयेमे पितृशासनात् ॥ ९४ ॥
तथा हीक्ष्वाकुवंशादिर्भगवानृषभध्वजः । भोगांश्च भुक्त्वा समये प्रव्रज्यां समुपाददे ॥ ९५ ॥
पितुरेवाज्ञया राज्यं ससर्जापालयच्च सः । मोक्षो ग्रामइवासन्नः सुप्रापस्त्वादृशां खलु ॥ ९६ ॥
पश्चादप्यात्तया मोक्षं दीक्षया प्राप स प्रभुः ।

---

१ गृहीतया ।

अन्येऽप्यजितनाथाद्याः श्रेयांसान्ताः पितुर्गिरा । ऊदूढुरूढुश्च मही ततो मोक्षमसाधयन् ॥ ९७ ॥
भवानपि करोत्वेवं पूर्वाननुकरोतु च । विवाहराज्यवहनदीक्षानिर्वाणसाधनैः ॥ ९८ ॥
वासुपूज्यकुमारोऽपि सप्रश्रयमभाषत । तात ज्ञातास्मि पूर्वेषां सर्वेषां चरितान्यहम् ॥ ९९ ॥
किं त्वत्र संसारपथे न हि केनापि कस्यचित् । स्वकुलेऽन्यकुले वापि कर्मसादृश्यमीक्ष्यते ॥ १०० ॥
सावशेषाणि कर्माणि तेषां भोगफलानि हि । तत्तानि चिच्छिदुर्भोगैस्ते ज्ञानत्रयधारिणः ॥ १०१ ॥
न मे भोगफलं कर्म किंचिदप्यवशिष्यते । मोक्षप्रत्यूहभूतं तन्नैवमादेष्टुमर्हथ ॥ १०२ ॥
मल्लिर्नेमिः पार्श्व इति भाविनोऽपि त्रयो जिनाः । अकृतोद्वाहसाम्राज्याः प्रव्रजिष्यंति मुक्तये ॥ १०३ ॥
श्रीवीरश्चरमश्चार्हन्नीषद्भोग्येन कर्मणा । कृतोद्वाहोऽकृतराज्यः प्रव्रजिष्यति सेत्स्यति ॥ १०४ ॥
ततश्च कर्मवैचित्र्यात् पन्था नैकोऽर्हतामपि । विचार्येत्यनुजानीथ मा भूत प्रेमकातराः ॥ १०५ ॥
एवं प्रबोध्य पितरौ वर्षलक्षेषु जन्मतः । गतेष्वष्टादशस्वीशो जज्ञे दीक्षार्थमुत्सुकः ॥ १०६ ॥
ज्ञात्वा चासनकंपेन स्वामिदीक्षाक्षणं क्षणात् । ब्रह्मलोकादुपाजग्मुस्तत्र लौकांतिकामराः ॥ १०७ ॥
ते त्रिः प्रदक्षिणीकृत्य प्रणम्य च जगद्गुरुम् । इति विज्ञपयामासुः स्वामिंस्तीर्थं प्रवर्तय ॥ १०८ ॥
एवं विज्ञप्य यातेषु तेषु कल्पं निजं पुनः । अदत्त वार्षिकं दानमवदानपरः प्रभुः ॥ १०९ ॥
तद्दानांतेऽभ्येत्य दीक्षाभिषेकोत्सवमीशितुः । इन्द्राश्चक्रुः प्रावृडंत इन्द्रोत्सवमिव प्रजाः ॥ ११० ॥
ततश्च पृथिवीं नाम सुरासुरनरैः कृताम् । समारुरोह शिबिकां सिंहासनविभूषिताम् ॥ १११ ॥

१ परिणयन्ति स्म । २ वहन्ति स्म । ३ मोक्षे विघ्नभूतम् । ४ सिद्धिं गमिष्यति । ५ गतेषु । ६ अनुग्रहतत्परः ।

तत्रांघ्रि[1]पीठन्यस्तांघ्रिर्मणिसिंहासनस्थितः । राजहंसइव स्वर्णाम्भोरुहोत्संगमास्थितः ॥ ११२ ॥
कैश्चिदग्रस्थितैः स्वस्वशस्त्रोल्लालनलालसैः । दिव्यछत्रकरैः कैश्चित् कैश्चिच्चामरधारिभिः ॥ ११३ ॥
तालवृन्तधरैः कैश्चित् कैश्चिच्चामरधारिभिः । पुष्पदामधरैः कैश्चिद्वासवैः परिवारितः ॥ ११४ ॥
अमरैरसुरैर्मर्त्यैः सेव्यमानो जगत्पतिः । विहारगृहमित्युच्चैर्ययावथ वनोत्तमम् ॥ ११५ ॥
॥ चतुर्भिः कलापकम् ॥

चूतांकुरास्वादहृष्टैः पर[2]पुष्टैः कलस्वनैः । प्रस्तूयमानस्तवनइव भक्तिप्रकर्षतः ॥ ११६ ॥
अनिलांदोलनस्रस्तकुसुमस्तबकच्छलात् । प्रदीयमानार्घइव प्र[3]त्यग्राशोकपादपैः ॥ ११७ ॥
उज्ज्वलच्चंपकाशोकमकरंदापदेशतः । पादार्च्यैर्ढौक्यमानपाद्योदकइवामरैः ॥ ११८ ॥
अमंदलवलीपुष्पमधुपानोन्मदिष्णुभिः । रोलं[4]बललनावृन्दैः कृ[5]तोलूलुरिवोच्चकैः ॥ ११९ ॥
उत्फुल्लसुमनोभूरिभारानमितमूर्धभिः । कर्णिकारैरुपक्रान्तनमस्कार इवाधिकम् ॥ १२० ॥
पुष्पाभरणरम्याभिर्लोलपल्लवपाणिभिः । वासन्तीभिः प्रमोदेनारब्धनृत्यइवाग्रतः ॥ १२१ ॥
शोभाविशेषं जनयँल्लतापादपवीरुधाम् । प्रविवेश तदुद्यानं स्वामी म[6]धुरिवापरः ॥ १२२ ॥
॥ सप्तभिः कुलकम् ॥
शिबिकातस्तदोत्तीर्य स्वामीस्रग्भूषणादिकम् । मुमोच फाल्गुने मासि पत्राणीव महीरुहः ॥ १२३ ॥

---

१ पादपीठे न्यस्तः पादो येन सः । २ कोकिलैः । ३ नवीनाशोकवृक्षैः । ४ भ्रमरीसमूहैः । ५ कृतं मंगलगीतं यस्मै सः । ६ वसन्तः ।

इन्द्रन्यस्तं देवदूष्यं स्कंधदेशे समुद्वहन् । चतुर्थेन पंचमुष्टिकेशोत्पाटनपूर्वकम् ॥ १२४ ॥
फाल्गुनस्यामावास्यायां वारुणे भेऽपरेऽहनि । राज्ञां षड्भिः शतैः सार्धं प्राव्राजीत् परमेश्वरः ॥ १२५ ॥
सुरासुरनराधीशा नमस्कृत्य जगद्गुरुम् । स्थानं निजनिजं जग्मुर्दानान्ते याचकाइव ॥ १२६ ॥
महापुरे द्वितीयेऽह्नि सुनंदनृपसद्मनि । चकार परमान्नेन पारणं परमेश्वरः ॥ १२७ ॥
देवैश्च विदधे दिव्यवसुधारादिपंचकम् । रत्नपीठं सुनंदेन चांघ्रिस्थाने जगद्गुरोः ॥ १२८ ॥
ततः स्थानादथान्येषु ग्रामाकरपुरादिषु । प्रावर्तिष्ट विहाराय समीरणइव प्रभुः ॥ १२९ ॥
इतश्च नगरे पृथ्वीपुरे नृपशिरोमणिः । नाम्ना पवनवेगोऽभूद्भुवं सोऽन्वशिषच्चिरम् ॥ १३० ॥
पार्श्वे श्रवणसिंहर्षेरादाय समये व्रतम् । दुस्तपं स तपस्तप्त्वा विपद्यागादनुत्तरे ॥ १३१ ॥
इतश्च जंबूद्वीपेऽस्मिन् भरतार्धेऽत्र दक्षिणे । पुरं विन्ध्यपुरं नामास्त्यवन्ध्यं सर्वसंपदाम् ॥ १३२ ॥
तत्र नाम्ना विन्ध्यशक्तिर्विन्ध्याद्रिरिव सारतः[1] । आसीन्नृपतिशार्दूलः शत्रुतूलमहानिलः[2] ॥ १३३ ॥
मिथः संसृजतोस्तस्य[3] कोदण्डभुजदण्डयोः । प्रचुकुपुर्भूमिभुजो ग्रहयोः क्रूरयोरिव ॥ १३४ ॥
नितांतारक्तया क्रूरभ्रकुटीभंगभीमया । गिलन्निव स दृष्टापि नश्यद्भिर्ददृशेऽरिभिः ॥ १३५ ॥
शिश्रिये सोऽरिभिरपि निजजीवितकाम्यया । तेऽदुश्च[4] दंडे सर्वस्वं प्राणान् रक्षद्भिरपि ॥ १३६ ॥
एकदा सर्वसामन्तामात्याद्यैः परिवारितः । स आस्थान्यामुपाविक्षत् सुधर्मायामिवाद्रिभित्[6] ॥ १३७ ॥
आजगाम चरश्चैको वेत्रिणा च प्रवेशितः । नमस्कृत्योपविश्याग्रे व्यजिज्ञपदिदं शनैः ॥ १३८ ॥

१ पराक्रमात् । २ शत्रव एव तूलं तस्मिन् वायुसमानः । ३ संगच्छमानयोः । ४ अयच्छन् । ५ सभायाम् । ६ इन्द्रः ।

जानासि देव यदिह भरतार्धेऽस्ति दक्षिणे । लक्ष्मीनिधानं साकेतमिति नाम्ना महापुरम् ॥ १३९ ॥
आर्षभेरिव[1] सेनानीः प्रभूतबलसंपदा । पर्वतो नाम तत्रास्ति महाबाहुर्महीपतिः ॥ १४० ॥
स्वरूपेणोर्वशीरंभापराभवनिबंधनम् । धनं रतिपतेस्तस्य[2] वेश्यास्ति गुणमंजरी ॥ १४१ ॥
तस्या वदननिर्माणावशिष्टैः परमाणुभिः । विदधे वेधसा मन्ये पूर्णिमारजनीकरः ॥ १४२ ॥
किमस्मदधिकं हंत लावण्यं क्वापि शुश्रुवे । इति प्रष्टुमिव दृशौ तस्याः कर्णावुपेयतुः ॥ १४३ ॥
तस्या वक्षसि वक्षोजौ[3] तथा वैशाद्यशालिनौ । यथा तयोरुपमानं तावेव हि न चापरम् ॥ १४४ ॥
मध्यं चातिकृशं तस्याः सहवासोत्थसौहृदात् । समर्पितपरीणाहमिवोच्चैः[4] स्तनकुंभयोः ॥ १४५ ॥
पाणी पादौ च रेजाते तस्या राजीवकोमलौ । कंकेल्लिपल्लवायासकारिणौ[5] रागसंपदा ॥ १४६ ॥
सा गीते कलकंठीव[6] नृत्ते स्वयमिवोर्वशी । वीणावाद्ये च मधुरे तुंबुरोरिव[7] सोदरा ॥ १४७ ॥
नारीषु रत्नभूता सा देवस्यैव हि युज्यते । युवयोरुचितो योगः स्वर्णमण्योरिवास्तु तत् ॥ १४८ ॥
भोज्येनालवणेनेव मुखेनेवापचक्षुषा । अचंद्रया रजन्येव किं ते राज्येन तां विना ॥ १४९ ॥
इत्याकर्ण्य वचो राजा याचितुं गुणमंजरीम् । उपपर्वतकं प्रैषीन्मंत्रिणं दूतकर्मणा ॥ १५० ॥
जंघालैर्वाहनैर्व्योम[8] तरद्भिरिव रंहसा । गत्वा स साकेतपुरं नृपं पर्वतमभ्यधात् ॥ १५१ ॥
नान्यस्त्वत्तो विन्ध्यशक्तिस्तस्मात्त्वमपि नापरः । द्वयोरभेद एवेह वार्धिकल्लोलजालवत् ॥ १५२ ॥

१ ऋषभस्यापत्यमार्षभिस्तस्य भरतस्येत्यर्थः । २ कामदेवस्य । ३ स्तनौ । ४ समर्पितः परीणाहः स्वविस्तारो येन तत् ।
५ कंकेलिपल्लवानुकारिणौ । ६ कोकिलेव । ७ तन्नाम्नः किन्नरस्य । ८ धावकैः ।

द्वयोरप्येक एवात्मा विभिन्ने वपुषी परम् । त्वदीयं यत्तदीयं तत्तदीयमपि तावकम् ॥ १५३ ॥
तव च स्तूयते वेश्या[1] नामतो गुणमंजरी । स्वान्तिकं विन्ध्यशक्तिस्तामानाययति कौतुकात् ॥ १५४ ॥
सा स्वबंधोः स्वतुल्यस्य याचमानस्य दीयताम् । दाने साधारणस्त्रीणां ग्रहणे च न गर्हणा[2] ॥१५५॥
इत्युक्तो मंत्रिणा तेन यष्टिस्पृष्ट इवोरगः । कोपकंप्राधरदलोऽवदत्पर्वतकोऽप्यदः ॥ १५६ ॥
उच्यते स कथं बंधुर्विन्ध्यशक्तिर्दुराशयः । प्राणेभ्योऽपि प्रियां यो मे याचते गुणमञ्जरीम् ॥ १५७ ॥
मुहूर्तमपि न स्थातुं विना यामलमस्म्यहम् । तां तेनादित्सुना[3] प्राणा अप्युपादित्सिता मम ॥ १५८ ॥
दासीमपि न दास्यामि किं पुनर्गुणमंजरीम् । अस्तु मित्रममित्रो वा विन्ध्यशक्तिः स्वशक्तितः ॥ १५९ ॥
उत्तिष्ठ गच्छ त्वं तस्मै गत्वाख्याहि यथातथम् । राज्ञां भवन्ति दूता हि यथावस्थितवादिनः[4] ॥ १६० ॥
उत्थाय सोऽपि सचिवः साचिविक्षिप्तलोचनः[5] । आरुह्य वाहनान्यागाद्विन्ध्यशक्तेरथान्तिकम् ॥१६१॥
पर्वतकव्यतिकरं तं व्याचख्यावशेषतः । हुताहुतिरिवार्चिष्मान्[6] क्रुधा जज्वाल तत्प्रभुः ॥ १६२ ॥
मैत्रीं चिरभवां लुत्वा मर्यादामिव सागरः । विन्ध्यशक्तिश्चचालाभिपर्वतं गर्वपर्वतः ॥ १६३ ॥
पर्वतोऽप्याजगामाभिमुखं स्वबलवाहनः । शूराणां ह्यभिगमनं सुहृदीवासुहृद्यपि ॥ १६४ ॥
द्वयोरप्यग्रसैन्यानां युद्धं प्रववृते ततः । चिराद्दोर्दंडकंडूतिरुजापनयनौषधम् ॥ १६५ ॥
अभ्यसर्पन्[7] न्नवासर्पन्[8] सैन्ययोरुभयोरपि । भटाः परस्परं वेदियोधिनो[9] द्विरदाइव ॥ १६६ ॥

---

१ वेश्यादीनाम् । २ निन्दा । ३ आदातुं ग्रहीतुमिच्छुना । ४ यथार्थवादिनः । ५ वक्रन्यस्तलोचनः । ६ हुता आहुतयो यस्मिन् सः अग्निरिव । ७ अभ्यगच्छन् । ८ परागच्छन् । ९ वेदिनः स्वपरयोधज्ञातारस्ते च ते योधिनश्च ।

कुन्तप्रोतोऽपि हुं कुर्वन् कश्चिदस्खलितं भटः । तंतुप्रोतो मणिरिव संचचाराभिवैरिणम् ॥ १६७ ॥
धनुर्धरवरोन्मुक्तनिरन्तरशरैरभूत् । अग्निलूनशरवणारण्यभूरिव युद्धभूः ॥ १६८ ॥
पतद्भिः परिघैः शल्यैर्गदाभिर्मुद्गरैरपि । सर्पैरिव परप्राणहरैर्व्यानशिरे दिशः ॥ १६९ ॥
इतः क्षणं क्षणमितः सैन्ययोरुभयोरपि । जयः समोऽभवज्ज्योत्स्नाप्रसरः पक्षयोरिव ॥ १७० ॥
अथ सर्वाभिसारेण धनुरास्फालयन् स्वयम् । रथारूढः पर्वतकः समरायोदतिष्ठत ॥ १७१ ॥
युगपद्बाणवर्षेण परसैन्यं तिरोदधे । अन्तरिक्षमिवानीकप्रोत्खातावनिपांसुभिः ॥ १७२ ॥
केसरीवेभयूथेषु परसैन्येषु स क्षणात् । महान्तं प्रलयं चक्रे कृतान्तस्येव भोजनम् ॥ १७३ ॥
अरुध्यमानप्रसरो विन्ध्यशक्तेर्बलानि सः । मंक्षु प्रभंजनो वृक्षानिवाभांक्षीन्महाबलः ॥ १७४ ॥
क्रुद्धः स्वसैन्यभंगेन विन्ध्यशक्तिर्महाभुजः । परान् संहर्तुमुत्तस्थे कालरात्रेरिवानुजः ॥ १७५ ॥
न सेहे पर्वतानीकैर्विन्ध्यशक्तिः समापतन् । कुरंगैरिव शार्दूलः सुपर्णः पन्नगैरिव ॥ १७६ ॥
सोऽथ विद्रुतसैन्यं तं स्थितं पर्वतकं पुरः । रणायाह्वास्त कोदंडदोर्दंडबलगर्वितः ॥ १७७ ॥
नाराचैस्तद्दलैरर्धचंद्रैर्यमरदैरिव । भूभुजौ युयुधाते तावन्योऽन्ययुद्धकांक्षिणौ ॥ १७८ ॥
ततोऽपररथारूढावभ्यटतुरुभावपि । विन्ध्यशक्तिपर्वतकौ कल्पान्ते पर्वताविव ॥ १७९ ॥
रथं रथ्यान् सारथिं च रथिनौ तावथो मिथः । ममन्थतुः परिभवापमित्यकधराविव ॥ १८० ॥

---

१ शुक्लकृष्णपक्षयोः । २ युद्धाय । ३ शत्रून् । ४ गरुडः । ५ नष्टसैन्यम् । ६ बाणविशेषैः । ७ गजदन्तैः । ८ परिभवः पराजय एवापमित्यकमृणं तस्य धरौ । ९ अभिजग्मतुः ।

सर्वशक्त्या विन्ध्यशक्तिनृपः पर्वतकं नृपम् । चक्रे निरस्त्रं निर्वीर्यं द्विजिह्वमिव निर्विषम् ॥ १८१ ॥
महेभेनेव कलभोऽभिभूतो विन्ध्यशक्तिना । पलायिष्ट पर्वतकः पश्चादनवलोकयन् ॥ १८२ ॥
अथाग्रहीद्विंध्यशक्तिर्वेश्यां तां गुणमंजरीम् । हस्त्याद्यन्यच्च सर्वस्वं तस्य श्रीर्यस्य विक्रमः ॥ १८३ ॥
आपूर्ण इव पाथोदो[1] निवृत्य रणसागरात् । कृतकृत्यो विन्ध्यशक्तिर्ययौ विन्ध्यपुरं ततः ॥ १८४ ॥
फालाच्च्युत इव द्वीपी प्रालंबा[2]दिव वानरः । रणभ्रष्टः पर्वतकः कष्टं तस्थौ तदादि[3] सः ॥ १८५ ॥
पराभूत्या तया ह्रीणो[4] नृपः पर्वतकोऽपि हि । संभवाचार्यपादान्ते परिव्रज्यामुपाददे ॥ १८६ ॥
स तपो दुस्तपं तेपे निदानं चाकरोदिति । विन्ध्यशक्तेर्वधायाहं भूयासमपरे भवे ॥ १८७ ॥
तुषैरिव स माणिक्यं विक्रीयेत्थं महत्तपः । कृत्वान्तेऽनशनं मृत्वा चाभवत् प्राणते सुरः ॥ १८८ ॥
विन्ध्यशक्तिर्भवे भ्रांत्वा चिरमेकत्र जन्मनि । जिनलिंगमुपादाय मृत्वा कल्पामरोऽभवत् ॥ १८९ ॥
च्युत्वा च विजयपुरे पत्न्यां श्रीधरभूपतेः । श्रीमत्यामजनि श्रीमांस्तारको नाम दारकः ॥ १९० ॥
स सप्ततिधनुस्तुंगः कज्जलश्यामलाकृतिः । द्विसप्तत्यब्दलक्षायुर्बभूवामितदोर्बलः[5] ॥ १९१ ॥
सोऽन्ते पितुः प्राप चक्रं भरतार्धमसाधयत् । भवन्ति ह्यर्धभरतस्वामिनः प्रतिविष्णवः ॥ १९२ ॥
इतश्च द्वारका नाम सुराष्ट्रमुखमंडनम् । पश्चिमांभोधिकल्लोलधौतवप्रतलास्ति पूः ॥ १९३ ॥
अजिह्मविक्रमस्तस्यां विश्वाक्रमनिवारणः । जि[6]ष्णोः सब्रह्मचारीव ब्रह्मेत्यासीन्महीपतिः ॥ १९४ ॥
अन्तःपुरप्रधाने च तस्याभूतामुभे प्रिये । सुभद्रोमे गंगासिन्धू लवणांभोनिधेरिव ॥ १९५ ॥

---

१ मेघः । २ शाखायाः । ३ ततः प्रभृति । ४ लज्जितः । ५ अतुलपराक्रमः । ६ इन्द्रस्य विष्णोर्वा सदृशः ।

प्रेयसीभ्यां समं ताभ्यां चिरं वैषयिकं सुखम् । ब्रह्मान्वभूत् सुष्ठु रतिप्रीतिभ्यामिव मन्मथः ॥ १९६ ॥
इतश्च पवनवेगजीवोऽनुत्तरतश्च्युतः । महादेव्याः सुभद्राया उदरे समवासरत्[1] ॥ १९७ ॥
सुखसुप्ता तदानीं च सुभद्रा देव्युदैक्षत । हलभृज्जन्मशंसित्रीं[2] महास्वप्नचतुष्टयीम् ॥ १९८ ॥
पुण्डरीकमिव गंगा प्राचीव तुहिनद्युतिम्[3] । समयेऽसूत सा सूनुं स्फटिकोपलनिर्मलम् ॥ १९९ ॥
कारामोक्षादिना यच्छञ्जगतोऽपि परां मुदम् । सूनोर्विजय इत्याख्यामकार्षीद्ब्रह्मभूपतिः ॥ २०० ॥
विभिन्नकर्मायुक्ताभिर्धात्रीभिः[4] सोऽथ पंचभिः । लाल्यमानो ययौ वृद्धिं सहैव स्ववपुःश्रिया ॥ २०१ ॥
चलत्कांचनताडंको[5] लोलदरललंतिकः[6] । हेमासिधेनुरुचिरसौवर्णकटिसूत्रकः[7] ॥ २०२ ॥
पादबद्धरणद्रत्नघर्घरमालिकः । काकपक्षधरः क्रीडन् स कस्य न ददौ मुदम् ॥ २०३ ॥
॥ युग्मम् ॥

प्रच्युत्य प्राणतात् सोऽपि जीवः पर्वतभूपतेः । सरस्यां हंसवदुमादेव्याः कुक्षाववातरत् ॥ २०४॥
सुप्ता सप्त महास्वप्नान् शार्ङ्गभृज्जन्मसूचकान् । मुखे प्रविशतोऽद्राक्षीदुमादेवी तदैव हि ॥ २०५ ॥
ततो नवसु मासेषु दिनेष्वर्धाष्टमेषु च । पूर्णाम्भोदमिव प्रावृट् सा श्यामं सुषुवे सुतम् ॥ २०६ ॥
ब्रह्माथ परमब्रह्मनिमग्न इव संमदात् । अर्थिनः प्रीणयंश्चक्रे सूनोर्जन्ममहोत्सवम् ॥ २०७ ॥
शुभेषु ग्रहनक्षत्रतिथिवारेषु सोत्सवम् । सूनोर्द्विपृष्ठ इत्याख्यां यथार्थामकरोन्नृपः ॥ २०८ ॥

---

१ अवातरत् । २ शंसिनीं । ३ चन्द्रम् । ४ भिन्नभिन्नकर्मणि नियुक्ताभिः । ५ ताडंकः कर्णभूषणम् । ६ लंबमानं कंठभूषण ललंतिका । ७ असिधेनुश्छुरिका ।

अंगणोद्भूतकंकेल्लिमिव तापसयोषितः । पंचभिः कर्मभिः पंच धात्र्यस्तं पर्यलालयन् ॥ २०९ ॥
धावन्तमुच्छलंतं वा धात्र्यस्तं स्वैरचारिणम् । परिप्लवं पारदवन्नादातुं पाणिनाशकन् ॥ २१० ॥
पितुर्मातुर्ज्यायसश्च भ्रातुः सह मुदान्वहम् । दर्शयन्ननन्तरं स्वस्य द्वितीयो ववृधे हरिः ॥ २११ ॥
कट्यां हृदि च पृष्ठे च स्कंधदेशे च तं मुहुः । विजयो धारयामास धात्री षष्ठीव सौहृदात् ॥ २१२ ॥
अवतस्थौ ययौ शिश्ये न्यषीदद्बुभुजे पपौ । द्विपृष्ठोऽप्यनुविजयं स्नेहकार्मणयंत्रितः ॥ २१३ ॥
निमित्तीकृत्य चाचार्यमलंघ्यात् पितृशासनात् । काले कला जगृहतुर्लीलया सीरिशार्ङ्गिणौ ॥२१४॥
अलब्धमध्यौ धवलश्यामलौ तौ सहोदरौ । क्षीरोदलवणांभोधीइवाभातां वपुर्भृतौ ॥ २१५ ॥
नीलपीतांबरधरौ तौ तालगरुध्वजौ । मेनाते तारकस्याज्ञां बालावपि च न क्वचित् ॥ २१६ ॥
आज्ञातिक्रमदोर्वीर्याधृष्यत्वादिकमेतयोः । दृष्ट्वा गत्वा तारकाय स्पशः स्पष्टमदोऽवदत् ॥ २१७ ॥
देव द्वारवतीभर्तुस्तनयावतिदुर्मदौ । आज्ञां तव न मन्येते वाय्वग्नीइव तौ युतौ ॥ २१८॥
कौशलं सर्वशास्त्रेषु विद्यानामपि सिद्धयः । उदपद्यंत दोर्दंडस्थामालंकरणं तयोः ॥ २१९ ॥
न चैतौ प्रतिभासेते देव त्वां प्रति शोभनौ । अतः परं यदुचितं तदाचर चरोऽस्म्यहम् ॥ २२० ॥
तारकः कोपतरलः प्रस्फुरन्नेत्रतारकः । आदिक्षदिति सेनान्यमसामान्यपराक्रमम् ॥ २२१ ॥
सर्वात्मनापि सज्जित्वा पुरस्ताढ्ढट वादय । प्रयाणभंभामद्यैव सामन्ताह्वानदूतिकाम् ॥ २२२ ॥

---

१ अंगणे प्ररूढां कंकेलिमिव । २ उच्चलन्तम् । ३ चंचलम् । ४ सुसवान् । ५ मन्येते । ६ दूताः । ७ दोर्दंडयोः स्थाम बलं तत्सालंकारः । ८ शुभकारिणौ ।

संजायते व्याधिरिव द्विषन् विषमुपेक्षितः ॥ २२३ ॥

निहन्तव्यः सपुत्रोऽपि जिह्मधीर्ब्रह्मनृपतिः । अद्य यावत् स सामन्तः पत्तिर्वा ब्रह्मनृपतिः ॥ २२४ ॥

अथैवं सचिवोऽवोचत् सम्यग्देवावधारय । एवं ह्यन्यप्रकृतीनामपि शंकास्पदं भवेत् ॥ २२५ ॥

विना मिषमकांडेऽपि यात्रा तं प्रति नोचिता । मंत्रादेशादिकं नैव तद्विना स्वामितापि का ॥ २२६ ॥

साशंके न हि विश्वासो विश्वासेन विना पुनः । सुलभः स हि दृप्तस्य तस्य पुत्रद्वयौजसा ॥ २२७ ॥

कश्चिदुद्भाव्यतां तस्यापराधो व्यपदेशतः । याच्योऽन्यानि च रत्नानि प्रेष्य संदेशहारकम् ॥ २२८ ॥

प्राणेभ्यो वल्लभीभूतान् करिणस्तुरगांश्च सः । नापवादो भवेल्लोके सापराधं निगृह्णताम् ॥ २२९ ॥

न चेत् प्रदास्यते तद्वः स वध्योऽनेन मन्तुना । सर्वोऽपि सापराधो हि छलमन्विष्यते यदा ॥ २३० ॥

याचितं दास्यते वाथ तदान्वेष्यं छलांतरम् । ब्रह्मणे प्राहिणोद्दूतं रहः संदिश्य तारकः ॥ २३१ ॥

साधु साध्वित्यमात्यं तमभिधाय तदैव हि । विजयेन द्विपृष्ठेन चान्वितं स उपास्थितः ॥ २३२ ॥

आशु गत्वा द्वारवत्यां ब्रह्माणं सदसि स्थितम् । चिरं सप्रेम चालप्य पप्रच्छागमकारणम् ॥ २३३ ॥

प्रतिपत्त्या महत्या तमुपवेश्य स भूपतिः । स्वामी नस्तारको वैरिबाहुदर्पापहारकः ॥ २३४ ॥

सोऽप्यूचे द्वारकानाथ त्वां संप्रत्यादिशत्यदः । यानि चान्यानि रत्नानि प्रेष्यंतां तानि नः कृते ॥२३५॥

राज्ये त्वदीये ये केऽपि प्रवराः करिणो हयाः । भरतार्धाधीश्वरस्य तन्ममैव परस्य न ॥ २३६ ॥

दक्षिणे भरतार्धे हि वस्तु यत् किंचिदुत्तमम् ।

---

१ वक्रबुद्धिः । २ विचारय । ३ प्रकटीक्रियताम् । ४ गर्वितस्य । ५ दूतम् । ६ अपराधेन । ७ दंडयतां युष्माकम् । ८ सत्कारेण । ९ प्रेम्णा सह यथा तथा । १० श्रेष्ठाः ।

इत्युक्त्या कुपितः सद्यो मृगेन्द्रश्च हक्कया । अन्वापिष्ट त्रिपृष्ठस्तं जिंघत्सुरिव चक्षुषा ॥ २३७ ॥
ज्यायान् वंश्यो न सोऽस्माकं त्राता दाता न चापि सः।राज्यं निजं शासतां नः कथं स्वामी बभूव सः॥
अथो मृगयतेऽस्मत्तो हस्त्यश्वादि भुजौजसा । भुजौजसा वयं तर्हि ततोऽपि मृगयामहे ॥ २३९ ॥
गच्छ दूताधुनैवास्मान् विद्धि तत्र समागतान् । हस्त्यश्वादि गृहीतुं त्वत्स्वामिनः शिरसा समम् ॥२४०॥
इत्युत्कटकटुं वाचं त्रिपृष्ठस्य निशम्य सः । रुपितस्त्वरितं गत्वा तारकाय न्यवेदयत् ॥ २४१ ॥
इभगंधेन गंधेभश्च विष्णुगिरा तया । श्रुतया तारकः क्रुद्धो यात्राभंभामवादयत् ॥ २४२ ॥
सद्यः सैन्यानि सेनान्यः सामन्ता मंत्रिणोऽपि च । राजानो बद्धमुकुटाः सुभटाश्च महारथाः ॥ २४३ ॥
वीर्यकंडूलदोर्दण्डाश्चिराय समरार्थिनः । सनाभयोऽन्तकस्येव राजानमुपतस्थिरे ॥ २४४ ॥
महीकंपतरूत्पातकाकरोलादिभिर्भृशम् । सूच्यमानाशुभोदर्कोऽप्यचालीत्तारकस्ततः ॥ २४५ ॥
स प्रयाणैरविच्छिन्नैः क्रोधाध्मातोऽर्धचक्रभृत् । अर्धमार्गमलंघिष्ट द्राघिष्टमपि हि द्रुतम् ॥ २४६ ॥
सब्रह्मविजयानीकस्तत्र तस्याग्रतोऽपि हि । त्रिपृष्ठोऽप्याहवोत्कंठी कंठीरव इवाययौ ॥ २४७ ॥
अंगोच्छ्वासासकृत्त्रुट्यत्सर्वसन्नाहजालिकाः । द्वयोः संवर्मयामासुः सैनिकाः कथमप्यथ ॥ २४८ ॥
तयोरभूत् संप्रहारो महासंहारकारणम् । मृत्योरभ्यवहाराय महानसगृहोपमः॥ २४९ ॥
निपेतुरुभयत्रापि लक्षशश्छत्रमौलयः । न संख्याप्यन्ययोभृणां पतितानामबुध्यत ॥ २५० ॥

---

१ अत्तुमिच्छुः । २ रक्षिता । ३ तस्मात्तव स्वामिनः । ४ क्रुद्धः । ५ युद्धार्थिनः । ६ बन्धवः । ७ काकरोलः काकशब्दः । ८ उदर्कः परिणामः।९दीर्घतमम् ।१०सिंहः।११ अंगानामुच्छ्वासेनपुन : पुनस्त्रुट्यन्त्यः सर्वेषां कवचानां जालिका येषां ते । १२ भोजनाय ।

पुंडरीकवती छत्रैः पूरिता रक्तवारिभिः । रणभूरभवत् क्रीडावापी पितृपतेरिव ॥ २५१ ॥
जैत्रं रथमथारुह्य द्विपृष्ठः पर्यपूरयत् । पांचजन्यं जन्यजयाह्वानमंत्रोपमध्वनिम् ॥ २५२ ॥
सिंहनादादिव मृगा हंसाइव घनस्वनात् । पांचजन्यध्वनेस्तारात्रेसुस्तारकसैनिकाः ॥ २५३ ॥
त्रस्तान् स्वसैनिकान् दृष्ट्वा ह्रेपयित्वा निवर्त्य च । द्विपृष्ठं स्वयमभ्याट रथमारुह्य तारकः ॥ २५४ ॥
विजयेनान्वीयमानो लांगलायोग्रधारिणा । शार्ङ्गमारोपयच्छार्ङ्गी सुत्रामेवर्जुरोहितम् ॥ २५५ ॥
अधिज्यधन्वा तदनु तारकोऽपीषुधेरिषुम् । आकृष्य संदधे मृत्योरूर्जितामिव तर्जनीम् ॥ २५६ ॥
मुमोच तारकोऽपीषुं हरिश्चिच्छेद चेषुणा । मोक्षच्छेदावितीषूणामभूतामसकृत्तयोः ॥ २५७ ॥
गदामुद्गरदंभादीन्यायुधान्यपराण्यपि । तारको यानि चिक्षेप प्रत्यस्त्रैस्तान्यहन् हरिः ॥ २५८ ॥
तारकोऽथाग्रहीच्चक्रं क्रूरनक्रं रणोदधेः । द्विपृष्ठं चेत्यभाषिष्ट कोपस्मितचलाधरः ॥ २५९ ॥
दुर्विनीतो यद्यपि त्वं त्वां न हन्मि तथापि हि । चिरसेवकपुत्रोऽसि बालोऽसीत्यनुकंपया ॥ २६० ॥
विजयावरजोऽप्यूचे स्मितस्तबकिताधरः । अनुकंपां शार्ङ्गपाणौ मयि कुर्वन्न लज्जसे ॥ २६१ ॥
यद्यपि त्वं विपक्षोऽसि तथाप्यसि तितिक्षितः । जरसासन्नमृत्योस्ते कः कर्ता मृतमारणम् ॥ २६२ ॥
अस्य चक्रस्य यद्याशा तदेतदपि मुंच भोः । व्यर्थीकृतेऽत्रापि गच्छेर्मुक्तस्तथाप्यसि ॥ २६३ ॥
इति द्विपृष्ठवचसा तिलाग्निरिव वारिणा । प्रदीप्तस्तारकश्चक्रं भ्रमयामास मूर्धनि ॥ २६४ ॥

---

१ जन्ये युद्धे जयाह्वानस्य मंत्रोपमो ध्वनिर्यस्य सः । २ दीर्घात् । ३ लज्जयित्वा । ४ अभ्यगच्छत् । ५ ऋजुरोहितं तन्नामकं धनुः । ६ कोपस्मिताभ्यां चलोऽधरो यस्य । ७ विजयस्यानुजः । ८ क्षान्तः । ९ मृतस्य मारणम् । १० व्यर्थीकृते ।

नभसि भ्रमयित्वा तद् द्विपृष्ठाय मुमोच सः । जाज्वल्यमानं क[1]ल्पांतविद्युत्वानिव विद्युतम् ॥ २६५ ॥
तत्तु तुंबाग्रघातेन पपात हृदये हरेः । रूपान्तरपरावृत्तकौस्तुभश्रीविडंबकम् ॥ २६६ ॥
क्षणं तेन प्रहारेण मूर्छितः पतितो रथे । वीज्यते स्म विजयेनांचलव्यजनपाणिना ॥ २६७ ॥
लब्धसंज्ञः क्षणाच्छार्ङ्गी रिपोश्चक्रं समीपगम् । जातखेदमिवामात्यं तदादायाब्रवीदिदम् ॥ २६८ ॥
चक्रं तवास्त्रसर्वस्वं दृष्टा तच्छक्तिरीदृशी । जीवं[2]ग्राहं याहि जीवन्नरो भद्राणि पश्यति ॥ २६९ ॥
प्रत्यूचे तारकोऽप्येवं चक्रमेतन्मयोज्झितम् । [3]लेष्टुं श्वेव परिक्षिप्तं गृहीत्वा किं त्रपस्यहो ॥ २७० ॥
मुंच मुंच त्वमप्येतद्गृहीत्वाप्येष मुष्टिना । यदि वा चूर्णयिष्यामि ताडयित्वाम[4]लोष्टवत् ॥ २७१ ॥
भ्रमयित्वाथ तच्छार्ङ्गी भ्राम्यदर्कभ्रमप्रदम् । खेचरांस्त्रासयच्चक्रं मुमोच प्रतिविष्णवे ॥ २७२ ॥
तारकस्य शिरस्तेन नलिनीनाललीलया । चिच्छेद पुनरापेते शार्ङ्गिणः करकोटरे ॥ २७३ ॥
द्विपृष्ठस्योपरिष्टाच्च पुष्पवृष्टिः पपात खात् । तारकस्योपरि त्वन्तःपुरस्त्रीवर्ग[5]दृग्जलम् ॥ २७४ ॥
नृपास्तारकगृह्यास्तु वृ[6]त्तिमाश्रित्य वैतसीम् । अत्रायन्त द्विपृष्ठात् स्वं शक्तेष्वौपयिकं ह्यदः ॥ २७५ ॥
यात्रारंभेण तेनैव भरतार्धं स दक्षिणम् । अशेषं साधयामास साधीयँ[7]ःसाधनावृतः ॥ २७६ ॥
स मागधवरदामप्रभासाधिपतीनपि । लीलयैवाजयद्देवानेकसामन्तमात्रवत् ॥ २७७ ॥
दिग्यात्रायानिवृत्तोऽथ माधवो मागधान् ययौ । तत्र कोटिनरोत्पाट्यां ददर्श च महाशिलाम् ॥ २७८ ॥

---

१ कल्पान्तमेघः । २ जीवं गृहीत्वा । ३ लोष्टम् । ४ अपक्वलोष्टवत् । ५ ग्रासम् । ६ नमनरूपाम् । ७ दृढतरसाधनान्वितः ।

वैरिवामः[1] स वामेन दोष्णा तामुदपाटयत् । आललाटं कमलिनीं करीन्द्रइव लीलया ॥ १९९ ॥
तां निधाय यथास्थानमग्रणीः सर्वदोष्मताम् । प्रपेदे द्वारकां विष्णुर्दिनैः कतिपयैरपि ॥ २०० ॥
सिंहासनेऽध्यासितस्य ब्रह्मणा विजयेन च । विष्णोश्चक्रेऽर्धचक्रित्वाभिषेकोऽथाखिलैर्नृपैः ॥ २०१ ॥
इतश्च मासं छद्मस्थो विहृत्य त्रिजगत्पतिः । दीक्षोद्यानं वासुपूज्यो विहारगृहमागमत् ॥ २०२ ॥
पाटलाया अधो भर्तुर्घातिकर्माणि तुत्रुटुः । द्वितीयशुक्लध्यानान्ते तमांसीव निशात्यये ॥ २०३ ॥
माघशुक्लद्वितीयायां चंद्रे शतभिषग्जुषि । केवलज्ञानमुत्पेदे चतुर्थेन जिनेशितुः ॥ २०४ ॥
स्वामी दिव्ये च समवसरणे देशनां व्यधात् । सूक्ष्मादीनां गणभृतां षष्टिं षडधिकां तथा ॥ २०५ ॥
तत्तीर्थभूः कुमाराख्यो यक्षो हंसरथः सितः । मातुलिंगशरधरौ धारयन् दक्षिणौ करौ ॥ २०६ ॥
वामौ च नकुलधनुर्धारिणौ धारयन् भुजौ । वासुपूज्यजिनेन्द्रस्याभवच्छासनदेवता ॥ २०७ ॥
तथोत्पन्ना श्यामवर्णा चंडा नामाश्ववाहना । दक्षिणौ वरदशक्तिधारिणौ दधती भुजौ ॥ २०८ ॥
पाणी पुष्पगदायुक्तौ बिभ्रती दक्षिणेतरौ । भर्तुः शासनदेव्यासीत् सदा सन्निधिवर्तिनी ॥ २०९ ॥
ताभ्यामधिष्ठिताभ्यर्णो[2] भगवान् विहरन् भुवम् । द्वारकायाः परिसरभुवमन्येद्युराययौ ॥ २१० ॥
शक्राद्यैस्तत्र समवसरणं निर्ममेऽमरैः । चत्वारिंशद्धनुरष्टशतोच्चाशोकपादपम् ॥ २११ ॥
तत्र प्रदक्षिणीकृत्याशोकं तीर्थानतिं[3] वदन् । सिंहासने निषसाद प्राङ्मुखः परमेश्वरः ॥ २१२ ॥

१ शत्रुषु वामः कुटिलः । २ अधिष्ठितमभ्यर्णं सामीप्यं यस्य । ३ तीर्थस्यानतिं नमस्कृतिम् ।

प्रत्नोश्च प्रतिरूपाणि देवा दिक्षवपरास्वपि । विचक्रुस्त्रीणि तादृक्षाण्येवोच्चैस्तत्प्रभावतः ॥ २९३ ॥
न्यषीदच्च यथास्थानं श्रीमान् संघश्चतुर्विधः । मध्यवप्रे तु तिर्यञ्चोऽधोवप्रे वाहनानि तु ॥ २९४ ॥
तदा च राजपुरुषा द्रुतमभ्येत्य शार्ङ्गिणे । स्वामिनं समवसृतमाचख्युः फुल्लचक्षुषः ॥ २९५ ॥
सार्धा द्वादश रूप्यस्य कोटीस्तेभ्यो ददौ हरिः । ययौ समवसरणं विजयेनान्वितस्ततः ॥ २९६ ॥
तत्र प्रदक्षिणीकृत्य प्रणम्य च जगद्गुरुम् । आसांचक्रेऽनुशक्रं स समं लाङ्गलपाणिना ॥ २९७ ॥
भूयो नत्वा जगन्नाथं गिरा भक्तिसनाथया । स्तोतुमारेभिरे शक्रद्विपृष्ठविजयास्ततः ॥ २९८ ॥
नितान्तभीषणमितः प्रसृतं मोहदुर्दिनम् । प्रतिक्षणमितश्चाशा वेलाइव नवा नवाः ॥ २९९ ॥
महायाद[3] इवेतश्च दुर्वारो मकरध्वजः । इतश्च विषया: पापाः प्रौढा दुःपवना इव ॥ ३०० ॥
इतः कषायाः क्रोधाद्या महावर्ता इवोल्बणाः । रागद्वेषादयश्चेतो नगदंता[4]इवोत्कटाः ॥ ३०१ ॥
महोर्मयइवेतश्च नानादुःखपरंपराः । इतश्चार्त्तरौद्रध्यानमौर्वानलइवोच्चकैः ॥ ३०२ ॥
इतश्च ममता वेत्रवल्लीव स्खलनास्पदम् । इतश्च व्याधयोऽनल्पा नक्रस्तोमाइवोद्धताः ॥ ३०३ ॥
अस्मिन्नपारे संसारे पारावारेऽतिदारुणे । पतितानुद्धर चिरात् प्राणिनः परमेश्वर ॥ ३०४ ॥
परेषामुपकाराय केवलज्ञानदर्शने । तवेमे त्रिजगन्नाथ तरोः पुष्पफलेइव ॥ ३०५ ॥
कृतार्थमद्य मे जन्म कृतार्थो विभवोऽद्य मे । कर्तुं लेभे मयायं यत् त्वत्सपर्यामहोत्सवः ॥ ३०६ ॥
स्तुत्वेति तूष्णीं प्राप्तेषु सुरेन्द्रोपेन्द्रसीरिषु । श्रीवासुपूज्यो भगवानारेभे देशनामिति ॥ ३०७ ॥

१ स्वामिप्रभावतः । २ भक्तिसहितया । ३ जलजन्तुः । ४ पर्वतदन्ताः ।

कथंचित् प्राप्य मानुष्यं ज्ञान्यं धर्मपरैर्नरैः ॥ ३०८ ॥
संसारसागरेऽमुष्मिन् शमिलायुगयोगवत् । यं समालंब्यमानो हि न मज्जेन्नवसागरे ॥ ३०९ ॥
स्वाख्यातः खलु धर्मोऽयं सर्वैरपि जिनोत्तमैः । क्षांतिर्मार्दवमृजुता मुक्तिश्च दशधा स तु ॥ ३१० ॥
संयमः सूनृतं शौचं ब्रह्माकिंचनता तपः । गोचरेऽपि न ते यत्स्युरधर्माधिष्ठितात्मनाम् ॥ ३११ ॥
धर्मप्रभावतः कल्पद्रुमाद्या ददतीप्सितम् । सदा संविधवर्त्यैकबन्धुर्धर्मोऽतिवत्सलः ॥ ३१२ ॥
अपारे व्यसनांभोधौ पतंतं पाति देहिनम् । यन्मर्हीं स प्रभावोऽयं ध्रुवं धर्मस्य केवलम् ॥ ३१३ ॥
आप्लावयति नांभोधिराश्वासयति चांबुदः । अचिन्त्यमहिमा तत्र धर्म एव निबन्धनम् ॥ ३१४ ॥
न ज्वलत्यनलस्तिर्यग् यदूर्ध्वं वाति नानिलः । यच्चावतिष्ठते तत्र धर्मादन्यन्न कारणम् ॥ ३१५ ॥
निरालंबा निराधारा विश्वाधारा वसुन्धरा । उदयेते जगत्यस्मिन्नूनं धर्मस्य शासनात् ॥ ३१६ ॥
सूर्याचन्द्रमसावेतौ विश्वोपकृतिहेतवे । अनाथानामसौ नाथो धर्मो विश्वैकवत्सलः ॥ ३१७ ॥
अबन्धूनामसौ बन्धुरसखीनामसौ सखा । धर्मो निरुपमं यच्छत्यपि सर्वज्ञवैभवम् ॥ ३१८ ॥
धर्मो नरकपातालपातादवति देहिनः । योऽपि कश्चित् क्वचित् प्रोचे सोऽपि वाङ्मात्रनर्तनम् ॥
अयं दशविधो धर्मो मिथ्यादृग्भिर्न वीक्षितः । क्रियायामपि नर्नर्ति नित्यं जिनमतस्पृशाम् ॥ ३२० ॥
तत्त्वार्थो वाचि सर्वेषां केषांचन मनस्यपि । न लेशमपि जानंति धर्मरत्नस्य तत्त्वतः ॥ ३२१ ॥
वेदशास्त्रपराधीनबुद्धयः सूत्रकंठकाः । याज्ञिकानां कुतो धर्मः प्राणिघातविधायिनाम् ॥ ३२२ ॥
गोमेधनरमेधाश्वमेधाद्यध्वरकारिणाम् ।

१ समीपवर्ती । २ उपवीतधारिणः ।

अश्रद्धेयमसद्भूतं परस्परविरोधि च । वस्तु प्रलपतां धर्मः कः पुराणविधायिनाम् ॥ ३२३ ॥
असद्भूतव्यवस्थाभिः परद्रव्यं जिघृक्षताम् । मृत्पानीयादिभिः शौचं स्मार्तादीनां कुतो ननु ॥ ३२४ ॥
ऋतुकालव्यतिक्रान्तौ भ्रूणहत्याविधायिनाम् । ब्राह्मणानां कुतो धर्मो ब्रह्मचर्यापलापिनाम् ॥ ३२५ ॥
अदित्सतोऽपि सर्वस्वं यजमानाज्जिघृक्षताम् । अर्थार्थे त्यजतां प्राणान् क्वाकिञ्चन्यं द्विजन्मनाम् ॥३२६॥
स्वल्पेष्वप्यपराधेषु क्षणाच्छापं प्रयच्छताम् । लौकिकानामृषीणां न क्षमालेशोऽपि दृश्यते ॥ ३२७ ॥
जात्यादिमदडुर्वृत्तपरिनर्तितचेतसाम् । क्व मार्दवं द्विजातीनां चतुराश्रमवर्तिनाम् ॥ ३२८ ॥
दंभसंरम्भगर्भाणां बकवृत्तिजुषां बहिः । भवेदार्जवलेशोऽपि पाखंडव्रतिनां कथम् ॥ ३२९ ॥
गृहिणीगृहपुत्रादिपरिग्रहवतां सदा । द्विजन्मनां कथं मुक्तिर्लोभैककुलवेश्मनाम् ॥ ३३० ॥
अरक्तद्विष्टमूढानां केवलज्ञानशालिनाम् । अनवद्या तत इयं धर्मस्वाख्या ततोऽर्हताम् ॥ ३३१ ॥
रागाद्द्वेषात्तथा मोहाद्भवेद्वितथवादिता । तदभावे कथं नामार्हतां वितथवादिता ॥ ३३२ ॥
ये तु रागादिभिर्दोषैः कलुषीकृतचेतसः । न तेषां सूनृता वाचः प्रसरंति कदाचन ॥ ३३३ ॥
तथा हि यागहोमादिकर्माणीष्टानि कुर्वताम् । वापीकूपतडागादीन्यपि पूर्तान्यनेकशः ॥ ३३४ ॥
पशूपघाततः स्वर्गिलोकसौख्यं विमार्गताम् । द्विजेभ्यो भोजनैर्दत्तैः पितृतृप्तिं चिकीर्षताम् ॥ ३३५ ॥
घृतयोन्यादिकरणैः प्रायश्चित्तविधायिनाम् । पंचस्वापत्सु नारीणां पुनरुद्वाहकारिणाम् ॥ ३३६ ॥

---

१ असत्यम् । २ गृहीतुमिच्छताम् । ३ मृत्तिकाजलादिभिः । ४ बालहत्याविधायिनाम् । ५ ब्रह्मचर्यमपलपन्तीत्येवंशीलानाम् । ६ रागद्वेषमोहरहितानाम् । ७ असत्यवादित्वम् ।

पूर्णायामादिपौरुष्यां व्यसृजद्देशनां प्रभुः । द्वितीयां पौरुषीं यावत् सूक्ष्मो गणधरो व्यधात् ॥ ३५१ ॥
ततः स्थानादथान्यत्र विजहार जगद्गुरुः । स्थानं निजनिजं जग्मुरिन्द्रोपेन्द्रबलादयः ॥ ३५२ ॥
द्वासप्ततिः सहस्राणि श्रमणानां महात्मनाम् । साध्वीनां लक्षमेकं तु संयमश्रीजुषां खलु ॥ ३५३ ॥
चतुर्दशपूर्वभृतां सहस्रं द्वे शते तथा । अवधिज्ञानिनां पंच सहस्राः सचतुःशताः ॥ ३५४ ॥
मनःपर्ययुक्तानामेकषष्टिः शतानि तु । षष्टिः शतानि विमलकेवलज्ञानशालिनाम् ॥ ३५५ ॥
जाता वैक्रियलब्धीनां सहस्राणि दशैव हि । वादलब्धिमतां सप्तचत्वारिंशच्छतानि तु ॥ ३५६ ॥
श्रावकाणामुभे लक्षे सहस्रा दश पंच च । श्राविकाणां चतुर्लक्षी सषट्त्रिंशत्सहस्रिका ॥ ३५७ ॥
चतुःपंचाशतं वर्षलक्षाणां मासवर्जितम् । आकेवलाद्विहरतः परिवारः प्रभोरभूत् ॥ ३५८ ॥
ज्ञात्वा च मोक्षमासन्नं ययौ चंपां जगत्पतिः । प्रपेदेऽनशनं तत्र षड्भिर्मुनिशतैः समम् ॥ ३५९ ॥
मासांते चाषाढशुक्लचतुर्दश्यां निशाकरे । उत्तरभद्रपदास्थे सशिष्योऽगाच्छिवं विभुः ॥ ३६० ॥
अष्टादशाब्दलक्षाणि कुमारत्वे व्रते पुनः । चतुःपंचाशदित्यायुर्लक्षा द्वासप्ततिः प्रभोः ॥ ३६१ ॥
श्रेयांसप्रभुनिर्वाणाद्वासुपूज्यस्य निर्वृतिः । सागरेषु चतुःपंचाशत्यतीतेष्वजायत ॥ ३६२ ॥
गीर्वाणेन्द्राः संगीर्वाणा[1] निर्वाणमहिमोत्सवम् । स्वामिनः स्वामिशिष्याणामप्यकार्षुर्यथाविधि ॥ ३६३ ॥
द्विपृष्ठवासुदेवोऽपि महारंभपरिग्रहः । मृगारिरिव निःशंको देववच्च प्रमद्वरः ॥ ३६४ ॥

[1] सदेवाः ।

भोगान् यथेष्टं भुञ्जानः पालयित्वायुरात्मनः । विपद्य षष्ठीमगमन्नरकोर्वीं तमःप्रभाम् ॥ ३६५ ॥
॥ युग्मम् ॥

द्विपृष्ठस्य कौमारेऽब्दलक्षं पादोनवर्जितम् । तदेव मंडलिकत्वे दिग्जयेऽब्दशतं तथा ॥ ३६६ ॥
राज्ये सप्तत्यब्दलक्षी तथा नवशताधिका । वत्सरैकोनपंचाशत्सहस्रीत्यायुरूर्जितम् ॥ ३६७ ॥
बलभद्रोऽपि पादोनकोटिहायनजीवितः । तस्थौ कथंचिदेकाकी स्वभ्रातृस्नेहमोहितः ॥ ३६८ ॥

श्रीवासुपूज्यवचनस्मरणेन बन्धुमृत्या च गाढतरमेव भवाद्विरक्तः ।
आत्तव्रतो विजयसूरिपदाब्जमूले काले विपद्य च शिवं विजयो जगाम ॥ ३६९ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये चतुर्थे पर्वणि
श्रीवासुपूज्यद्विपृष्ठविजयतारकचरितवर्णनो नाम द्वितीयः सर्गः ।

# तृतीयः सर्गः ।

## श्रीविमलनाथचरित्रम् ।

ॐ नमो विमलनाथाय निष्कर्मविमलात्मने[1] । धर्मस्वाख्याततागंगाप्रभवैकहिमाद्रये[2] ॥ १ ॥
त्रयोदशार्हतस्तस्य चरित्रमिदमुच्यते । जगत्पवित्रीकरणं तीर्थोदकमिवामलम् ॥ २ ॥
धातकीखंडद्वीपे प्राग्विदेहे विजये पुनः । भरताख्ये पुरीरत्नं नामतोऽस्ति महापुरी ॥ ३ ॥
तत्र पद्मागृहं[3] पद्मसेनो नाम महीपतिः । अपां पतिरिवाधृष्योऽभिगम्यश्चाभवद्गुणैः ॥ ४ ॥
स्वशासनमिवावन्यां स चित्ते जैनशासनम् । अखंडप्रसरं चक्रे धुर्यो बलिविवेकिनाम्[4] ॥ ५ ॥
दुर्वेश्मनीव संसारे सोऽमुष्मिन्निवसन्नपि । सदैव धारयामास वैराग्यमधिकाधिकम् ॥ ६ ॥
स एवं भवनिर्विण्णः सर्वगुप्ताभिधं गुरुम् । ययौ महीरुहवरं मार्गखिन्न इवाध्वगः ॥ ७ ॥
दीक्षां जग्राह तत्पार्श्वे सम्यक् तां प्रत्यपालयत् । रोरो[5] धनमिव प्राप्तमनात्मज इवात्मजम् ॥ ८ ॥
अर्हद्भक्त्यादिभिः स्थानैर्यथाविधिनिषेवितैः । ऊर्जितैरर्जयामास तीर्थकृन्नाम कर्म सः ॥ ९ ॥
चिरं तीव्रं तपस्तप्त्वा पूरयित्वायुरात्मनः । मृत्वा कल्पे सहस्रारे महर्द्धिः सोऽमरोऽभवत् ॥ १० ॥
इतश्च जंबूद्वीपेऽस्मिन् भरतक्षेत्रभूषणम् । पुरं कांपील्यमित्यस्ति दिवः खंडमिव च्युतम् ॥ ११ ॥

---

१ कर्मराहित्येन निर्मल आत्मा यस्य तस्मै । २ धर्मस्य स्वाख्याततैव गंगा तस्या उत्पत्तावेकहिमाचलस्तस्मै । ३ लक्ष्मीगृहम् । ४ बलवतां विवेकवतां च मध्ये । ५ निर्धनः ।

तत्र चैत्यानि चन्द्राश्मपुत्रिकाक्षरदंबुभिः । कलयन्ति निशीथिन्यां यंत्रधारागृहश्रियम् ॥ १२ ॥
हैमाः कुंभाः प्रभासंते तत्र गेहोर्ध्वभूमिषु । स्वर्णाब्जान्याहितानीव निवासाय सदा श्रियः ॥ १३ ॥
विचित्रहर्म्यप्रासादराजीकं तदराजत । विधातुरालेख्यमिव सृजतो दिविषत्पुरीम् ॥ १४ ॥
दैवेनाप्यभिभूतानां शरणार्थमुपेयुषाम् । वज्रवर्मेव तत्राभूत् कृतवर्मेति भूपतिः ॥ १५ ॥
गंगाजलं तद्यशश्च स्पर्धयेव परस्परम् । परितः प्रीणयत् पृथ्वीं प्रपेदे निधिमंभसाम् ॥ १६ ॥
नाभूत् पराङ्मुखो जातु याचकेष्विव सोऽरिषु । पराङ्मुखः परस्त्रीषु परनिन्दास्विवाभवत् ॥ १७ ॥
महीविवस्वतस्तस्य समरे परिपंथिनः । न सोढुमशकंस्तेजोऽन्धकारादिव निर्गताः ॥ १८ ॥
पादच्छाया सदा तस्य महावटतरोरिव । कुब्जीभूय प्रणामेन सिषेवे वसुधाधवैः ॥ १९ ॥
बभूव तस्य श्यामेति श्यामेव तुहिनद्युतेः । सधर्मचारिणी सर्वशुद्धांतमुखमंडनम् ॥ २० ॥
कुलश्रीरिव सा मूर्त्ता सतीव्रतमिवांगवत् । रूपलावण्यलक्ष्मीणां प्रत्यक्षेवाधिदेवता ॥ २१ ॥
मंदं मंदं मरालीव देवी संचरति स्म सा । नित्यमेव पतिध्यानव्याकुलेनेव चेतसा ॥ २२ ॥
बभूव सा भूचरीषु स्त्रीष्वसाधारणा तथा । यथार्हति स्म तत्सख्यं देवश्रीरथवा शची ॥ २३ ॥
यत्र यत्र स्वामिनी सा चचार पृथिवीतले । तत्र तत्रान्वगाल्लक्ष्मीर्यामिकीव दिवानिशम् ॥ २४ ॥
इतः कल्पे सहस्रारे मज्ञसेनमहीपतेः । स जीवः पूरयामास स्वमायुः परमस्थिति ॥ २५ ॥

---

१. चंद्रकांतमणीनां पुत्तलिकाभ्यः क्षरद्भिरंबुभिः । २ रात्रौ । ३ चित्रम् । ४ वज्रमयकवचसमः । ५ समुद्रगामियशा इत्यर्थः । ६ शत्रवः । ७ नम्रीभूय । ८ नृपैः । ९ राज्ञिः । १० मानुषीषु । ११ प्रतिहारी । १२ परमा उत्कृष्टा स्थितिर्यस्य तत् ।

शुद्धषादश्यां राधस्योत्तरभद्रपदासु भे[2] । सोऽथ च्युत्वा ततः श्यामादेवीकुक्षाववातरत् ॥ २६ ॥
मुखे प्रविशतस्तीर्थंकरजन्माभिसूचकान् । श्यामादेवी महास्वप्नांश्चतुर्दश ददर्श सा ॥ २७ ॥
पूर्णे काले माघशुक्लतृतीयायां निशाकरे । उत्तरभद्रपदास्थे स्वोच्चस्थेषु ग्रहेषु च ॥ २८ ॥
सुतं सूकरलक्ष्माणं तपनीयोपमद्युतिम्[3] । ज्ञानत्रयधरं श्यामास्वामिनी सुषुवे सुखम् ॥ २९ ॥
स्वामिनः स्वामिमातुश्च सूतिकर्मैत्य सर्वतः । षट्पंचाशद्दिक्कुमार्यश्चेटिकाइव चक्रिरे ॥ ३० ॥
एत्य शक्रो मेरुशैले नीत्वांके न्यस्य च प्रभुम् । अतिपांडुकंबलास्थे सिंहासन उपाविशत् ॥ ३१ ॥
त्रयोदशं जिनेन्द्रं तं सुरेन्द्रा अच्युतादयः । त्रिषष्टिः स्नपयामासुः क्रमशस्तीर्थवारिभिः ॥ ३२ ॥
ईशानांके निवेश्येशं शक्रोऽप्यस्नपयज्जलैः । वृषशृंगोत्थितैः शैलशृंगोत्थैरिव निर्झरैः ॥ ३३ ॥
स्वामिनं देवदूष्येण वाससा वासवः स्वयम् । आर्द्रं स्नानीयपानीयैर्माणिक्यवदमार्जयत् ॥ ३४ ॥
गोशीर्षचंदनैः श्यामानंदनं नंदनाहृतैः । स व्यलिंपद्धपुर्लग्नदेवदूष्यभ्रमप्रदैः ॥ ३५ ॥
विचित्रैर्दामभिर्दिव्यैर्वस्त्रालंकरणैरपि । अर्चित्वारात्रिकं कृत्वा प्रभुं शक्रोऽस्तवीदिति ॥ ३६ ॥
मोहेन तिमिरेणेव परितोऽपि प्रसारिणा । नितांतकोपनैर्नक्तंचरैरिव[5] जटाधरैः[4] ॥ ३७ ॥
बुद्धिसर्वस्वहरणैश्चार्वाकैस्तस्करैरिव । अत्यंतमायानिपुणैर्गोमायुभिरिव[6] द्विजैः ॥ ३८ ॥
भ्रमद्भिर्मंडलीभूय कौलाचार्यैर्वृकैरिव । उलूकैरिवपाखंडैर्वंद्दगद्भिरपरैरपि ॥ ३९ ॥

---

१ वैशाखस्य । २ नक्षत्रे । ३ सुवर्णसदृशकान्तिम् । ४ अतिक्रुद्धैः । ५ राक्षसैः । ६ शृगालैः ।

सिद्धेनेव विवेकाढ्यं मिथ्यात्वेन विलुंपता । सद्भूतानां पदार्थानामविज्ञानेन सर्वतः ॥ ४० ॥
अभूच्चिरमयं कालो यामिन्येव जगत्पते । प्रभातं त्वधुना जज्ञे त्वया नाथेन भास्वता ॥ ४१ ॥
त्वत्पादपद्यामासाद्य लंघितालंघिता खलु । निम्नैरपि हि संसारनिम्नगा निम्नगा जनैः ॥ ४२ ॥
भवद्वासननिःश्रेणिमधिरुह्याचिरादपि । मन्येऽध्यासितमेवोच्चैर्लोकाग्रं भव्यजंतुभिः ॥ ४३ ॥
अस्माकमप्यनाथानां चिरान्नाथोऽस्युपस्थितः । निदाघातपतप्तानां पांथानामिव वारिदः ॥ ४४ ॥
इत्थं त्रयोदशं तीर्थंकरं स्तुत्वा पुरंदरः । गत्वा यथागतं श्यामास्वामिनीपार्श्वतोऽमुचत् ॥ ४५ ॥
शक्रः स्वामिगृहान्मेरोस्त्वन्येन्द्राः स्वं स्वमास्पदम् । प्रययुः कृतकल्याणयात्राः सांयात्रिका इव ॥४६॥
नरेन्द्रः कृतवर्मापि शर्मवान् विश्वशर्मदम् । ऋद्ध्या महत्या विदधे सूनोर्जन्ममहोत्सवम् ॥ ४७ ॥
गर्भस्थे जननी तस्मिन् विमला यदजायत । ततो विमल इत्याख्यां तस्य चक्रे पिता स्वयम् ॥ ४८ ॥
धात्रीभूय सुरस्त्रीभिर्लाल्यमानो जगत्पतिः । सुरैश्च सवयोभूय रम्यमाणो व्यवर्धत ॥ ४९ ॥
षष्टिधन्वोन्नतः स्वामी क्रमेण प्राप यौवनम् । अष्टोत्तरसहस्रेण लक्षणानां च लक्षितः ॥ ५० ॥
स पित्रोरुपरोधेन भववैराग्यभागपि । राज्ञां पुत्रीरुपायंस्त भोग्यकर्मरुगौषधीः ॥ ५१ ॥
कौमारे पंचदशाब्दलक्षीमुल्लंघ्य मेदिनीम् । अशात् पितृगिरा मान्या पित्राज्ञा ह्यर्हतामपि ॥ ५२ ॥

---

१ सिद्धाः समाधौ नेत्रनिमीलनं कुर्वन्ति तद्वन्मिथ्यात्वेन विवेकचक्षुर्निमीलितमित्यर्थः । २ निम्नं गच्छतीति निम्नगैतादृशी संसार एव निम्नगा नदी निम्नैर्जनैरलंघिता सा नदी त्वत्पादसेतुं प्राप्य लंघिता । ३ प्राप्तम् । ४ पोतवणिजः ५ सुखवान् । ६ मित्री भूय । ७ भोग्यं कर्मैव व्याधिस्तस्मिन्नौषधीसमाः ।

गतेषु वर्षलक्षेषु त्रिंशत्यवनिपालने । भवाब्धेस्तरणे तरीं दीक्षावेलामचिंतयत् ॥ ५३ ॥
सारस्वतप्रभृतयोऽभ्येत्य लोकांतिकामराः । तीर्थं प्रवर्तय स्वामिन्नित्यूचुश्च जगद्गुरुम् ॥ ५४ ॥
ददौ च वार्षिकं दानं द्रविणैर्जृंभकाहृतैः । याचकेभ्यो यथायाच्ञं कल्पद्रुम इवावनौ ॥ ५५ ॥
दानांते विदधुर्दीक्षाभिषेकं विमलप्रभोः । विमलैर्निजमनोवत् सुमनःपतयोऽम्बुभिः ॥ ५६ ॥
आमुक्तदिव्यालंकारवस्त्रो दिव्यविलेपनः । शिबिकां देवदत्ताख्यामारुरोह ततः प्रभुः ॥ ५७ ॥
सुरासुरनराधीशैः परितोऽपि समावृतः । तया शिबिकया स्वामी सहस्राम्रवणं ययौ ॥ ५८ ॥
उद्यानपालबालाभिस्तदा शिशिरभीरुभिः । वेश्मप्रीत्या सेव्यमानलताकुंजपरंपरम् ॥ ५९ ॥
भविष्यदद्भुतश्रीकैर्माकंदबकुलादिभिः । सह्यमानहिमानीकं तपस्यद्भिरिव द्रुमैः ॥ ६० ॥
प्रत्यग्रैः कूपपानीयैश्छायाभिर्वटभूरुहाम् । रिरंसुपौरद्वंद्वानां निषिद्धशिशिरव्यथम् ॥ ६१ ॥
शीतार्त्तप्लवगैः पुंजीकृतगुंजाफलेक्षणात् । नागरस्त्रीविरचितस्मितज्योत्स्नातरंगितम् ॥ ६२ ॥
कृतस्मितमिव स्मेरलवलीकुन्दकोरकैः । प्रविवेश तदुद्यानं भगवान् विमलप्रभुः ॥ ६३ ॥

॥ पंचभिः कुलकम् ॥

शिबिकातः समुत्तीर्य त्यक्त्वा चाभरणादिकम् । स्कंधे च वासवन्यस्तं देवदूष्यांशुकं दधत् ॥ ६४ ॥

---

१ सुमनसां देवानां पतय इन्द्रा इत्यर्थः । २ आमुक्तानि गृहीतानि दिव्यालंकारवस्त्राणि येन । ३ गृहवत् सेव्यमाना लतामंडपानां परंपरा यस्मिंस्तत् । ४ सह्यमाना हिमानी महद्धिमं यस्मिन् । ५ रन्तुमिच्छूनां नगरस्य दंपतीनाम् । ६ शीतेनार्ताः प्लवगा वानरास्तैः । ७ नागरस्त्रीभिः कृतं स्मितं तदेव ज्योत्स्ना तया तरंगितम् ।

माघस्य शुक्लचतुर्थ्यां जन्मर्क्षे परेऽहनि । समं नृपसहस्रेण षष्ठेन प्राव्रजत् प्रभुः ॥ ६५ ॥
॥ युग्मम् ॥

द्वितीयेऽह्नि धान्यकटपुरे नृपजयौकसि । पारणं परमान्नेन चकार विमलप्रभुः ॥ ६६ ॥
विदधे विबुधैस्तत्र वसुधारादिपंचकम् । रत्नपीठं स्वामिपादस्थाने जयनृपेण तु ॥ ६७ ॥
ततः स्थानादथान्यत्र ग्रामाकरपुरादिषु । प्रावर्तत विहाराय छद्मस्थः परमेश्वरः ॥ ६८ ॥
इतश्च जंबूद्वीपेऽस्मिन् विदेहेष्वपरेषु च । नन्दिसुमित्र आनन्दकर्यां पुर्यामभून्नृपः ॥ ६९ ॥
चक्षुष्मानपि चक्षुष्मान्[1] विवेकेन बभूव सः । ससहायश्च खड्गेन महासैनिकवानपि ॥ ७० ॥
जन्मतोऽपि भवोद्विग्नो जानानः सर्वमस्थिरम् । दधार पैतृकं राज्यमपि पालयितुं क्रमम् ॥ ७१ ॥
मनसा प्रागपि त्यक्तं त्यक्त्वा राज्यमथान्यदा । प्रव्रज्यां सुव्रताचार्यपादान्ते स उपाददे ॥ ७२ ॥
विविधाभिग्रहधरश्चरित्वा दुश्चरं तपः । कृत्वा चानशनं मृत्वानुत्तरे समभूत्सुरः ॥ ७३ ॥
अत्रैव जंबूद्वीपे च पुर्यां भरतभूषणे । श्रावस्त्यां धनमित्राख्यो बभूव पृथिवीपतिः ॥ ७४ ॥
धनमित्रनरेन्द्रस्य स्नेहादतिथितां गतः । पुर्यां तत्रैव चावात्सीद्बलिर्नाम महीपतिः ॥ ७५ ॥
धनमित्रोऽन्यदा रेमेऽक्षद्यूतं बलिना समम् । अक्षीण[2]बुद्धिविभवो गमेन[3] च चरेण च ॥ ७६ ॥
पत्तीनामिव सारीणां[4] वधबन्धपरौ मिथः । विपंचयामासतुस्तौ द्यूतं रणमिवोत्कटम् ॥ ७७ ॥

१ विवेकरूपनेत्रवानित्यर्थः । २ अक्षीणो बुद्धेर्विभवो यस्य । ३ गमचरौ द्यूतकलाक्रीडनभेदौ । ४ द्यूतक्रीडनकवस्तु सारीत्युच्यते ।

सर्वात्मना जेतुकामौ तावन्योऽन्यं नरेश्वरौ । स्वं पणीचक्रतू राज्यं द्यूतान्धानां कुतो मतिः ॥ ७८ ॥
अथ हारितवान् राज्यं धनमित्रनृपो निजम् । रोरपुत्रइवाश्रीक एकांगश्चाभवत् क्षणात् ॥ ७९ ॥
अवस्तूभूय स भ्राम्यन् कश्मलो[1] जीर्णकर्पटः[2] । भूताविष्टइव प्राप सर्वत्राप्यवमाननाम्[3] ॥ ८० ॥
सोऽटन्नितस्ततोऽन्येद्युर्ददर्शापि सुदर्शनम् । पपौ च देशनां तस्माद्यूपं[4] रोगीव लंघितः ॥ ८१ ॥
प्रतिबुद्धः परिव्रज्यां जग्राह च तदन्तिके । चिरं च पालयामासापमानं तमपि स्मरन् ॥ ८२ ॥
फलेन तपसोऽमुष्य वधाय बलिभूपतेः । भवान्तरेऽहं भूयासं निदानमपि स व्यधात् ॥ ८३ ॥
इत्थं कृतनिदानः सन् मृत्वानशनकर्मणा । उदपाद्यच्युते कल्पे प्रकृष्टायुःस्थितिः सुरः ॥ ८४ ॥
यतिलिंगमुपादाय बलिः कालेन गच्छता । विपद्य समभूत् कल्पे महर्द्धिरमरोत्तमः ॥ ८५ ॥
च्युत्वा च भरतक्षेत्रे स नन्दनपुरेऽभवत् । देव्यां सुंदर्यां समरकेसरिक्ष्मापतेः सुतः ॥ ८६ ॥
स्निग्धाञ्जनद्युतिवपुः षष्टिधन्वोन्नताकृतिः । षष्टिवत्सरलक्षायुरभादद्भुतविक्रमः ॥ ८७ ॥
आवैताढ्यं प्रतापाढ्यो भरतार्धमसाधयत् । अभूच्च प्रतिविष्णुः स मेरकाख्योऽर्धचक्रभृत् ॥ ८८ ॥
वायोः पुर इवौजस्वी तेजस्वीव रवेः पुरः । न कोऽपि तस्य पुरतः प्रतिमल्लोऽभवन्नृपः ॥ ८९ ॥
दैवस्येव न तस्याज्ञां व्यत्यलंघिष्ट कश्चन । रक्षाशिखाबन्धमिव मूर्ध्ना सर्वेऽप्यधुः पुनः ॥ ९० ॥
इतश्च भरतक्षेत्रे द्वारकायामभूत् पुरि । समुद्रइव गंभीरो रुद्रो नाम महीपतिः ॥ ९१ ॥
श्रीपृथिव्याविव साक्षात् सुभद्रा पृथिवीति च । तस्याभूतामुभे कांते कांते[5] रूपगुणश्रिया ॥ ९२ ॥

१ मलिनः । २ जीर्णवस्त्रः । ३ अपमानम् । ४ यूषमौषधम् । ५ मनोहरे ।

इदं प्रैष्यत केनेहासुहृदा सुहृदाथवा। इति लांगलिना पृष्टः प्रोवाच सचिवात्मजः ॥ १०७ ॥
भूभुजा शशिसौम्येन मेरकायार्धचक्रिणे। प्रेषितं प्राभृतमिदं दंडे जीवितकाम्यया ॥ १०८ ॥
तच्छ्रुत्वा कुपितः शार्ङ्गपाणिरेवमवोचत। किं नः संपश्यमानानां दंडस्तस्मै भविष्यति ॥ १०९ ॥
वराको मेरकः कोऽयं यः किलास्मासु सत्स्वपि। पार्थिवान् दंडयत्येवं द्रष्टव्यं तस्य पौरुषम् ॥ ११० ॥
गृह्यतां सर्वमप्येतदाच्छिद्य[1] स्वयमोजसा। करमुत्क्षिप्य तानेवं स्वकीयानादिशद्भटान् ॥ १११ ॥
गदामुद्गरदंडाद्यैः शशिसौम्यस्य सैनिकान्। तद्भटास्ताडयामासुः फलितानिव पादपान् ॥ ११२ ॥
अतर्कितद्रोहिभिस्तैः प्रसुप्ताइव सौप्तिकैः[2]। हन्यमानाः प्रणेशुस्ते प्राणानादाय काकवत् ॥ ११३ ॥
हस्त्यश्वाद्याददे पश्चात्तत्सर्वं शार्ङ्गपाणिना। क्षत्रियाणां गुणो ह्येष परश्रीहरणं हठात् ॥ ११४ ॥
तान्यामपहृतं द्रव्यं मेरकायार्धचक्रिणे। शशंसुः शशिसौम्यस्य नराः पूत्कारकारिणः ॥ ११५ ॥
तदाकर्ण्य परिक्रुद्धो निर्मर्याद इवान्तकः। मेरकोऽधिसभं[3] भीमभ्रकुटीकोऽब्रवीदिति ॥ ११६ ॥
पादाहतिः खरेणेव[4] पिंडमत्तेन दन्तिनः। कुटुंबिकसधर्मिण्या हालिकेनेव[5] कुट्टनम् ॥ ११७ ॥
चपेटाघटनमिव मंडूकेन फणाभृतः। स्वमृत्यवे कृतमिदमनात्मज्ञेन रौद्रिणा[6] ॥ ११८ ॥
पक्षोद्गमः पीलिकानामिव[7] पर्यंतकारणम्। विपरीता मतिः पुंसां भवेद्दैवे पराङ्मुखे ॥ ११९ ॥
सपितृभ्रातरं नव्यभ्रातृव्यकमुपस्थितम्। हनिष्याम्येष तं दस्युमिव प्राभृतहारिणम् ॥ १२० ॥

१ लुंटित्वा। २ रात्रियुद्धैः। ३ सभायाम्। ४ गर्दभेन यथा दंतिनः पादघातः कृतः स्वमृत्यवे भवति। ५ यथा कृषीवलेन कुटुंबिकभार्यायाः कृतं कुट्टनं मरणाय तथा। ६ रुद्रपुत्रेण। ७ पिपीलिकानां मरणसमये पक्षोत्पत्तिर्भवति।

अथैकः सचिवोऽवोचद्वाह्याभ्यामिदं कृतम् । रुद्रेण भूभुजा दीर्घं सेवितोऽसीति मा कुपः ॥१२१॥
मन्ये न संमतं राज्ञो रुद्रस्यैतद्भविष्यति । [1]आरिराधयिषैवास्ति तस्य त्वां स्वामिनं प्रति ॥ १२२ ॥
स्वामिनः प्रथमे कोपे नद्याः पूरे च कः पतेत् । एवमाशंकया नूनं रुद्रभूपो विलंबते ॥ १२३ ॥
देव प्रसीदादिश मां [2]तदभीतिं प्रयच्छ च । आनेष्यामि प्राभृतं तत् सविशेषमहं ततः ॥ १२४ ॥
[3]ओमित्युक्तो मेरकेण स द्रुतं द्वारकां ययौ । नन्दस्वयंभूसहितं रुद्रं चैवमभाषत ॥ १२५ ॥
किमेतत्तव पुत्राभ्यामज्ञानान्नृपते कृतम् । हन्यते न खलु श्वापि स्वामिनो मुखलज्जया ॥ १२६ ॥
एवमप्यर्प्यतां सर्वं न ते दोषो भविष्यति । छादयिष्यत्यात्मजयोर्दोषमज्ञानतैव हि ॥ १२७ ॥
अथ स्वयंभूरित्यूचे स्वामिभक्त्या भवानिदम् । तातं [4]प्रत्यार्यभावेन चार्यधीर्वक्ति साधु तत् ॥ १२८ ॥
धीरीभूय निरीक्षध्वं तस्याच्छिन्नमिदं कियत् । आच्छेत्स्यामो महीं सर्वां वीरभोग्या हि भूरियम् ॥१२९॥
आर्यस्य बलभद्रस्य दोष्णोर्मम च को बलम् । सहिष्यते कृतान्तस्य कुपितस्येव संगरे ॥ १३० ॥
एकं तमेव हत्वाहं भोक्ष्येऽर्धभरतं स्वयम् । किमन्यैः कुट्टितैर्भूपैर्बहुभिः कीटकैरिव ॥ १३१ ॥
तेनापि दोर्बलेनात्तं भरतार्धं न पैतृकम् । तन्न्यायेन ममाप्यस्तु बलिनो बलिनामपि ॥ १३२ ॥
इत्युक्त्वा विस्मितो भीतो ह्रीतश्च सचिवोऽथ सः । गत्वा द्रुतं मेरकाय समाचख्यौ यथातथम् ॥१३३॥
मत्तेभइव संक्रुद्धस्तस्य दुःश्रवया गिरा । कंपयन् क्ष्मां सैन्यभारैः प्रतस्थे मेरकस्ततः ॥ १३४ ॥

---

१ आराधयितुमिच्छा । २ तस्य रुद्रस्याभयदानं प्रयच्छ । ३ आमित्यंगीकरणे । ४ पूज्यभावेन ।

इतः स्वयंभू रुद्रेण भद्रेण च समन्वितः । प्रतस्थे द्वारकापुर्याः कंदरादिव केसरी ॥ १३५ ॥
जनयंतौ जनक्षोभं भैरवौ रौद्रमेरकौ । राहुसौरी इवैकत्र क्रमेणाथ समेयतुः ॥ १३६ ॥
अभूच्छस्त्रप्रहाराग्निकरालितदिगंतरः । तत्सैन्ययोः संप्रहारः [3]प्रहाणइव दारुणः ॥ १३७ ॥
स्वयंभूः पूरयामास पांचजन्यमथ स्वयम् । अशेषद्विषदुच्चाटमंत्रोपममहास्वनम् ॥ १३८ ॥
पांचजन्यध्वनेस्तस्मात्रेसुर्मेरकसैनिकाः । न हि केसरिवूत्कारं श्रुत्वा तिष्ठंति वारणाः ॥ १३९ ॥
सैन्यान् संस्थापयामास ताम्रचूडानिव स्वयम् । मेरको रथमारुह्य डुढौकेऽभि स्वयंभुवम् ॥ १४० ॥
किं मुधा सैन्यसंहारेणेति व्याहारिणौ मिथः । आस्फालयामासतुस्तौ धनुरेकधनुर्धरौ ॥ १४१ ॥
उद्वाहमंडपमिव विदधानौ जयश्रियः । मार्तण्डाद्भिर्बाणजालैर्वावप्यवर्षताम् ॥ १४२ ॥
बाणवृष्ट्या बाणवृष्टिं तौ निराचक्रतुर्मिथः । विषं विषेणेव हुताशनेनेव हुताशनम् ॥ १४३ ॥
सहस्रशः शरकैरैः प्रसरद्भिर्विराजिनौ । अर्काविवोद्गतौ द्वौ तौ ददृशाते भयंकरौ ॥ १४४ ॥
पाणिर्गतागतं कुर्वन्निषंगधनुरन्तरे । अलक्ष्योऽलक्ष्यत तयोरूर्मिकातेजसैव हि ॥ १४५ ॥
पाणिस्तदैव तूणीरे तदैव हि धनुर्गुणे । पतन् वैरूप्यभृदिवाभात्तयोर्लघुहस्तयोः ॥ १४६ ॥
बाणैरजय्यं ज्ञात्वारिं मेरकोऽस्त्रैर्गदादिभिः । ववर्ष कल्पांतमरुच्छैलशृंगैरिवोद्धतैः ॥ १४७ ॥
तानि स्वयंभूः प्रत्यस्त्रैर्भस्मसादकरोद्द्रुतम् । दग्ज्वालाभिः करालाभिश्चक्षुर्विष इवोरगः ॥ १४८ ॥

---

१ भयंकरौ । २ सौरिः शनिः । ३ प्रलयकाल इव । ४ सिंहशब्दम् । ५ कुक्कुटान् । ६ बाणकिरणैः । ७ तूणीराद्धनुषि धनुषश्च तूणीरे गमनागमनं कुर्वाणो हस्तोंऽगुलीकतेजसालक्ष्यत । ८ तस्मिन्नेव क्षणे । ९ शीघ्रहस्तयोः ।

रणपारं जिगमिषुश्चक्रं सस्मार मेरकः । व्याधस्य सिञ्चानइव पाणौ तस्यापतच्च तत् ॥ १४९ ॥
उदीरयामास ततो मेरकोऽपि स्वयंभुवम् । क्रीडया युध्यमानेन मयैवासि भटीकृतः[2] ॥ १५० ॥
एष छेत्स्यामि ते शीर्षं गच्छ गच्छाधुनाप्यरे । काकानां तस्कराणां च नश्यतां का ननु त्रपा ॥ १५१ ॥
स्वयंभूरप्युवाचैवं क्रीडायुद्धं यदीदृशम् । प्रेक्ष्यं तत् कोपयुद्धं ते तदर्थं ह्यहमागमम् ॥ १५२ ॥
आछिंदन्तो[3] द्विषां लक्ष्मीं वीराश्चेत्तस्करास्तदा । प्रथमस्तस्करोऽसि त्वं प्रदत्ता तव केन सा ॥ १५३ ॥
मुक्त्वापि चक्रं नष्टव्यं यत्त्वयाद्यापि नश्यताम् । काकानां तस्कराणां च नश्यतां का ननु त्रपा ॥१५४॥
मुंच मुंचाथवा चक्रं बलमस्यापि दृश्यताम् । अपि ते म्रियमाणस्य नानुतापो यथा भवेत् ॥ १५५ ॥
इत्युक्तो मेरकश्चक्रं व्योम्नि भौमं[4]मिवापरम् । ज्वालाजालकरालं तद्भ्रमयित्वामुचद्द्विषि ॥ १५६ ॥
शार्ङ्गपाणेरुरःपीठं तेनाजघ्ने चपेटया । कांस्यतालं[5] कांस्यतालेनेव प्रास्फलता दृढम् ॥ १५७ ॥
चक्रतुंबाग्रघातेन स्वयंभूस्तेन मूर्छितः । पपात स्यंदनोत्संगे क्षीबवत्[6]तरलेक्षणः ॥ १५८ ॥
दधार च तमुत्संगे मुशली प्रियबांधवः । वत्साश्वसिह्याश्वसिहीत्युच्चरन् साश्रुलोचनः ॥ १५९ ॥
तैरेवाश्रुजलैर्भ्रातुः सिक्तो वक्षसि शार्ङ्गभृत् । लब्धसंज्ञः समुत्तस्थौ तिष्ठ तिष्ठेत्यारिं वदन् ॥ १६० ॥
उत्थायादाय तच्चक्रं कालचक्रमिव द्विषाम् । हरिर्मेरकमित्यूचे दृष्टः स्मेरेक्षणै[7]र्निजैः ॥ १६१ ॥
इदं सर्वास्त्रसर्वस्वं जीवितव्यमिदं च ते । तद्गतं पश्यतोऽप्यद्य शिरोरत्नमहेरिव ॥ १६२ ॥

---

१ पक्षी । २ भटसदृशः कृतः । ३ लुंटन्तः । ४ मंगलग्रहम् । ५ वाद्यविशेषः । ६ मत्तइव । ७ विकसितनेत्रैः ।

कस्य तिष्ठस्यवष्टंभा[1]द्गच्छ गच्छाधुना ननु । हंति स्वयंभूर्न परान्[2] समरादपगच्छतः ॥ १६३ ॥

मेरकोऽप्यब्रवीन्मुञ्च पश्यौजोऽस्य त्वमप्यहो । नाभूत् पत्युः कलत्रं या सा स्यादुपपतेः कथम् ॥ १६४ ॥

इत्युक्तः शार्ङ्गभृच्चक्रं भ्रमयित्वा मुमोच तत् । लीलया मौलिकमलं मेरकस्य चकर्त च ॥ १६५ ॥

स्वयंभुवश्चोपरिष्टात् पुष्पवृष्टिर्दिवोऽपतत् । तथैव पृथिवी पृष्ठे कबंधो[3] मेरकस्य च ॥ १६६ ॥

नृपैश्च मेरकायत्तैः[4] स्वयंभूः शिश्रिये क्षणात् । जन्ययात्रा[5] हि सैवाभूत् परमन्यतरो वरः ॥ १६७ ॥

ततश्च साधयामास भरतार्धं सदक्षिणम् । दधद्दक्षिणपाणिस्थं चक्रं दिक्चक्रजित्वरम् ॥ १६८ ॥

दिग्यात्राया न्यवर्तिष्ट स्वयंभूर्भू[6]र्जयश्रियः । भरतार्धश्रिया स्वैरं रममाणो नवोढया ॥ १६९ ॥

गच्छन् मार्गे शार्ङ्गपाणिर्मगधेषु ददर्श च । शिलां कोटिनरोत्पाट्यां कपालपुटवद्भुवः ॥ १७० ॥

वामेनोत्पाटयामास बाहुना तामधोक्षजः । लीलयापि वसुमतीमधिभूः[7] फणिनामिव ॥ १७१ ॥

शिलां तां न्यस्य तत्रैव दोष्मतां चित्रमादधत् । ययौ दिनैः कतिपयैः पुरीं द्वारवतीं हरिः ॥ १७२ ॥

तत्र रुद्रेण भद्रेण पार्थिवैरपरैरपि । स्वयंभुवोऽर्धचक्रित्वाभिषेकोऽकारि सोत्सवैः ॥ १७३ ॥

इतश्च वर्षद्वितयं छद्मस्थो विमलप्रभुः । विहृत्य दीक्षोपवनं सहस्राम्रवणं ययौ ॥ १७४ ॥

तत्र जंबूतले भर्तुरपूर्वकरणक्रमात् । क्षपकश्रेण्यारूढस्य घातिकर्माणि तुत्रुटुः ॥ १७५ ॥

षष्ठ्यां सितायां पौषस्योत्तरभद्रपदासु भे । उदभूत् केवलज्ञानं षष्ठेन तपसा प्रभोः ॥ १७६ ॥

---

१ आधारात् । २ शत्रून् । ३ शिरोरहितं शरीरम् । ४ मेरकाधीनैः । ५ युद्धयात्रा । ६ जयलक्ष्म्याः स्थानम् । ७ सर्पाणां स्वामी शेषनागः ।

दिव्ये समवसरणे विदधे देशनां विभुः । गणेशाः सप्तपंचाशच्चाभूवन् मंदरादयः ॥ १७७ ॥
तत्तीर्थेऽभूत् षण्मुखाख्यो यक्षः शिखिंरथः सितः । दक्षिणैः फलचक्रेषुखड्गपाशाक्षसूत्रिभिः ॥ १७८ ॥
वामैः सनकुलचक्रकोदंडफलकांशुकैः । अभीदेन च दोर्दंडैर्भर्तुः शासनदेवता ॥ १७९ ॥
तथोत्पन्ना विदिताख्या हरितालसमद्युतिः । पद्मारूढा बाणपाशधरदक्षिणपाणिका ॥ १८० ॥
कोदंडनागसंयुक्तदक्षिणेतरबाहुका । श्रीमद्विमलनाथस्य जज्ञे शासनदेवता ॥ १८१ ॥
ताभ्याममुक्त सांनिध्यस्ततः स्थानाज्जगद्गुरुः । विहरन्नन्यदा द्वारवत्याः परिसरं ययौ ॥ १८२ ॥
शक्राद्यैस्तत्र समवसरणं विदधेऽमरैः । विंशत्यग्रधनुःसप्तशतोच्चाशोकपादपम् ॥ १८३ ॥
तत्र प्रविश्य प्राग्द्वारा भगवांश्चैत्यपादपम् । त्रिः प्रदक्षिणयामास पालयन्नार्हतीं स्थितिम् ॥ १८४ ॥
तीर्थाय नम इत्युक्त्वा पूर्वाशाभिमुखं ततः । सिंहासनमलंचक्रे धर्मचक्री त्रयोदशः ॥ १८५ ॥
यथाद्वारं प्रविविशुर्यथास्थानं स्थितिं व्यधुः । साधवोऽथार्यिका देवा देव्यो नार्यो नरा अपि ॥ १८६ ॥
तदा च द्वारकां गत्वा त्वरितं राजपूरुषाः । स्वामिनं समवसृतं शशंसुः शार्ङ्गपाणये ॥ १८७ ॥
स्वाम्यागमनशंसिभ्यः स्वयंभूः पारितोषिके । सार्धा द्वादश रूप्यस्य कोटीः प्रमुदितो ददौ ॥ १८८ ॥
स्वयंभूः सह भद्रेण भद्राणामेककारणम् । शीघ्रं समवसरणं जगाम प्रविवेश च ॥ १८९ ॥
तत्र प्रदक्षिणीकृत्य नत्वा च परमेश्वरम् । अनुशक्रं सभद्रोऽपि स्वयंभूः समुपाविशत् ॥ १९० ॥
नत्वा जिनेन्द्रं भूयोऽपि रचितांजलिसंपुटाः । एवमारेभिरे स्तोतुं वज्रभृच्छार्ङ्गभृद्धलाः ॥ १९१ ॥

---

१ मयूरवाहनः । २ अभयदेन । ३ साध्यः ।

देव त्वद्दर्शनेनाद्य दुःखं सांसारिकं ययौ । शरीरिणां भुवः पंकइव वार्षिक[1]वारिणा ॥ १९२ ॥
पुण्योऽयं दिवसः स्वामिंस्त्वद्दर्शननिबन्धनम् । यत्रामली[2]भविष्यामो दुःकर्ममलिना वयम् ॥ १९३ ॥
अंगावयवराजत्वं प्रत्यपद्यंत नो दृशः । यास्त्वद्दर्शनमासाद्य सद्योऽधुः शुद्धिमात्मनः ॥ १९४ ॥
पूतास्त्वत्पादसंपर्काद्भरतक्षेत्रभूमयः । अपि ताः पापनाशाय किं पुनस्तव दर्शनम् ॥ १९५ ॥
मिथ्यादृशामुलूकानामिव त्वद्दर्शनं प्रभो । केवला[3]लोकमार्त्तंडतिरोभावनिबन्धनम् ॥ १९६ ॥
[4]त्वद्दर्शनसुधापानसमुच्छ्वसितवर्ष्मणाम् । अद्य देव त्रुटिष्यंति कर्मबन्धाः शरीरिणाम् ॥ १९७ ॥
विवेकदर्पणोन्मार्ष्टिसमुत्पादनकर्मठाः । कल्याणतरुबीजाभाः पांतु त्वत्पादपांसवः ॥ १९८ ॥
स्वामिन् पीयूषगंडूषइव ते देशनावचः । संसारमरुमग्नानामस्तु नः स्वास्थ्यहेतवे ॥ १९९ ॥
स्तुत्वेति सत्सु तूष्णीकेष्विन्द्रोपेन्द्रबलेषु तु । विमलां विमलस्वामी प्रारेभे धर्मदेशनाम् ॥ २०० ॥
अकामनिर्जरारूपात् पुण्याज्जान्तोः प्रजायते । स्थावरत्वात्त्रसत्वं वा तिर्यक्त्वं वा कथंचन ॥ २०१ ॥
मानुष्यमार्यदेशश्च जातिः सर्वा[5]क्षपाटवम् । आयुश्च प्राप्यते तत्र कथंचित् कर्मलाघवात् ॥ २०२ ॥
प्राप्तेषु पुण्यतः श्रद्धा[6]कथकश्रवणेष्वपि । तत्त्वनिश्चयरूपं तद्बोधिरत्नं सुदुर्लभम् ॥ २०३ ॥

---

१ वर्षाऋतुजलेन । २ निर्मला भविष्यामः । ३ केवलज्ञानस्य प्रकाश एव मार्तंडस्तस्य तिरोभावेऽदृश्यभावे कारणम् । ४ तव दर्शनमेव सुधापानं तेन समुच्छ्वसितो देहो येषां ते । ५ सर्वेन्द्रियसुंदरत्वम् । ६ श्रद्धा च कथकश्च गुरुः श्रवणं च शास्त्रश्रवणेच्छा तेषु प्राप्तेषु सत्सु ।

राज्यं वा चक्रभृत्त्वं वा शक्रत्वं वा न दुर्लभम् । यथा जिनप्रवचने बोधिरत्यंतदुर्लभा ॥ २०४ ॥
सर्वे भावाः सर्वजीवैः प्राप्तपूर्वा अनन्तशः । बोधिर्न जातुचित् प्राप्ता[1] भवभ्रमणदर्शनात् ॥ २०५ ॥
पुद्गलानां परावर्तेष्वनंतेषु गतेष्विह । उपार्धे पुद्गलावर्ते शेषे सर्वशरीरिणाम् ॥ २०६ ॥
सर्वेषां कर्मणां शेषेऽन्तःकोटीकोट्यवस्थितौ । ग्रंथिभेदात् कश्चिदेव लभते बोधिमुत्तमाम् ॥ २०७ ॥
यथाप्रवृत्तिकरणादन्ये तु ग्रंथिसीमनि । प्राप्ता अप्यवसीदंति भ्रमंति च पुनर्भवम् ॥ २०८ ॥
कुशास्त्रश्रवणं संगो मिथ्यादृग्भिः कुवासना । प्रमादशीलता चेति स्युर्बोधि[2]परिपन्थिनः ॥ २०९ ॥
चारित्रस्यापि संप्राप्तिर्दुर्लभा यद्यपीरिता । तथापि बोधिप्राप्तौ सा सफला निष्फलान्यथा ॥ २१० ॥
अभव्या अपि चारित्रं प्राप्य ग्रैवेयकावधि । उत्पद्यंते विना बोधिं प्राप्नुवंति न निर्वृतिम्[3] ॥ २११ ॥
असंप्राप्ते बोधिरत्ने चक्रवर्त्यपि रंकवत् । संप्राप्तबोधिरत्नस्तु रंकोऽपि स्यात्ततोऽधिकः ॥ २१२ ॥
संप्राप्तबोधयो जीवा न रज्यंते भवे क्वचित् । निर्मम[4]त्वा भजंत्येकं मुक्तिमार्गमनर्गलाः ॥ २१३ ॥
श्रुत्वैवं देशनां भर्तुः प्रायेण प्राव्रजञ्जनाः । भेजे स्वयंभूः सम्यक्त्वं श्रावकत्वं च सीरभृत् ॥ २१४ ॥
पूर्णायामादिपौरुष्यां व्यस्राक्षीद्देशनां प्रभुः । ततस्तथैव तां चक्रे मंदरो गणभृद्वरः ॥ २१५ ॥
पूर्णद्वितीयपौरुष्यां देशनां सोऽप्यपारयत् । स्वं स्वं स्थानं ययुश्चेन्द्रोपेन्द्रभद्रादयोऽपि हि ॥ २१६ ॥
ततः स्थानात् पुरग्रामाकरद्रोणमुखादिषु । व्यहरद्विमलस्वामी लोकानुग्रहकाम्यया ॥ २१७ ॥

---

१ बोधिरत्नस्याप्राप्तौ हेतुः भवभ्रमणदर्शनात् । २ बोधेः परिपंथिनः शत्रवः । ३ मोक्षम् । ४ ममतारहिताः ।

# चतुर्थः सर्गः ।

## श्रीअनंतनाथचरितम्

ॐ ॥ पायादनन्तस्वामी वः सिद्धानन्तचतुष्टयः । इहापि देहिनां मोक्षइवानन्तसुखप्रदः ॥ १ ॥
श्रीमतोऽनंतनाथस्य चरित्रमिदमुच्यते । यानपात्रमिवापारसंसाराम्भोधितारणे ॥ २ ॥
धातकीखंडद्वीपे प्राग्विदेहे विजये पुनः । ऐरावताख्येऽरिष्टेति नगर्यस्ति गरीयसी ॥ ३ ॥
राजा पद्मरथो नाम तस्यामासीन्महारथः । द्विषद्रथिरथव्यूहस्खलनैकमहागिरिः[1] ॥ ४ ॥
स जित्वापि द्विषोऽशेषान् साधयित्वाखिलामिलाम् । न तृणायाप्यमंस्तैनां मोक्षश्रीसाधनोत्सुकः ॥ ५ ॥
विहारलीलामुद्याने जलक्रीडां च वापीषु । गंधर्वाणां च मधुरसंगीतकविलोकनम् ॥ ६ ॥
वारणाश्वादियानानां गतिवैचित्र्यदर्शनम् । वसंतकौमुदीप्रायक्रीडोत्सवनिरीक्षणम् ॥ ७ ॥
नाटकप्रभृतिदशरूपकाभिनयोत्सवम् । स्वर्विमानप्रतिमानवासौकोवसनं[2] तथा ॥ ८ ॥
विचित्रवस्त्रनेपथ्यांगरागाकल्पकल्पनम्[3] । न रागात् सोऽन्वभूत् किं तु लोकयात्रानुवर्तनात्[4] ॥ ९ ॥
॥ चतुर्भिः कलापकम् ॥

---

१ द्विषन्तश्च ते रथिनश्च तेषां रथानां व्यूहस्य रचनायाः स्खलन एकोऽद्वितीयो महागिरिः । २ स्वर्गविमानसदृशानि यानि वासौकांसि हर्म्याणि तेषु वसनम् । ३ आकल्पो भूषणम् । ४ लोकमार्गानुसरणात् ।

किंचिदप्यतिवाह्येवं कालं सोऽथ विवेकवान् । चित्तरक्षगुरोः पादमूले दीक्षामुपाददे ॥ १० ॥
अर्हद्भक्त्यादिभिः स्थानैस्तीर्थकृन्नाम कर्म सः । बद्ध्वा मृत्वा प्राणतस्य पुष्पोत्तरे सुरोऽभवत् ॥ ११ ॥
इतश्च जंबूद्वीपेऽस्मिन् भरतार्धेऽत्र दक्षिणे । इक्ष्वाकुवंशगिरिभूर्[1]अयोध्येत्यस्ति पूर्वरा ॥ १२ ॥
विमलस्वच्छपयसा परिखावलयेन सा । विराजते रतस्रस्तवस्त्रेव वरवर्णिनी[2] ॥ १३ ॥
सुनिष्क्रमप्रवेशानि सत्संधीनि[3] अर्थवंति[4] च । सुभूमिकानि वेश्मानि नाटकानीव तत्र च ॥ १४ ॥
तस्यां गृहोर्ध्वभूमीषु कांचन्यो[5] भांति जालिकाः । प्रत्येकं गृहलक्ष्मीभिरायुक्ता मुकुटा इव ॥ १५ ॥
तत्र चैत्येष्वर्हदर्चापुष्पगंधहरोऽनिलः । तापनाशाय लोकानां भवत्यमृतनस्यवत्[6] ॥ १६ ॥
तस्यामासीत् सिंह इव विक्रमेणातिशायिना । अग्रेसरो नृसिंहानां सिंहसेनो महीपतिः ॥ १७ ॥
उपचारं[7] प्रयच्छंत आत्मकल्याणकाम्यया । तस्याधिदैवतस्येव भक्त्या भूमिभुजोऽभवन् ॥ १८ ॥
अग्रणीर्गुणिनां तैस्तैः सोऽवदातैर्निजैर्गुणैः । जगदाप्रीणयामास करैरिव निशाकरः ॥ १९ ॥
कामसर्थं च धर्मं च स दधौ स्वस्वमात्रया[8] । सेवागतान् राजपुत्रानिवौचित्यविचक्षणः ॥ २० ॥
सधर्मचारिणी तस्याभवद्धर्मस्य वासभूः । सुयशा नाम यशसा स्वशीलेनैव शालिनी ॥ २१ ॥
अंबाजनकश्वशुरान्ववायानां[9] बभूव सा । मंदाकिनीव जगतां त्रयाणामेकपावनी ॥ २२ ॥

---

१ इक्ष्वाकुवंश एव गिरिस्तस्य भूः स्थानम्, अथवा इक्ष्वाकुवंशस्य गिरिभूर्गंगा पवित्रत्वेनेत्यर्थः । २ उत्तमस्त्री । ३ मिलितानि, अन्यत्र संधिर्नाटकस्यांगविशेषः । ४ धनवंति, अन्यत्र सारवंति । ५ सुवर्णविकाराः । ६ अमृतघ्राणवत् । ७ प्राभृतम् । ८ स्वस्वविभागेन । ९ अन्ववायो वंशः ।

अष्टषष्टिः सहस्राणि श्रमणानां महात्मनाम् । आर्यिकाणां लक्षमेकं शतैरष्टभिरन्वितम् ॥ २१८ ॥
चतुर्दशपूर्वभृतामेकादश शतानि तु । अवधिज्ञानिनामष्टचत्वारिंशच्छतानि तु ॥ २१९ ॥
शतानि पंचपंचाशन्मनःपर्ययधारिणाम् । तावंत्येव तु शतानि केवलज्ञानिनामपि ॥ २२० ॥
जातवैक्रियलब्धीनां शतानि नवतिः पुनः । संजातवादलब्धीनां त्रिसहस्री द्विशत्यपि ॥ २२१ ॥
श्रावकाणामुभे लक्षे सहस्राष्टकसंयुते । श्राविकाणां चतुर्लक्षी चतुस्त्रिंशत्सहस्रयुक् ॥ २२२ ॥
द्विवर्षोनां पंचदशाब्दलक्षीं केवलात् परम् । महीं विहरमाणस्य परिवारोऽभवत् प्रभोः ॥ २२३ ॥

॥ षड्भिः कुलकम् ॥

ज्ञात्वा निर्वाणमासन्नं संमेताद्रिं ययुः प्रभुः । षड्भिः साधुसहस्रैश्च सहानशनमाददे ॥ २२४ ॥
मासं स्थित्वा शुचि[1]कृष्णसप्तम्यां पौष्णगे विधौ । मुनिभिस्तैः समं स्वामी जगाम पदमव्ययम् ॥ २२५ ॥
निर्वाणमहिमा भर्तुः संयतानां च सर्वतः । उपेत्य विदधे तत्र पुरुहूतादिभिः सुरैः ॥ २२६ ॥
कौमारे पंचदशाब्दलक्षास्त्रिंशदिला[2]वने । व्रते पंचदशेत्यायुः प्रभोः षष्ट्यब्दलक्ष्यभूत् ॥ २२७ ॥
श्रीवासुपूज्यनिर्वाणाद्विमलस्वामिनिर्वृतिः । सागराणां त्रिंशति तु व्यतीतायामजायत ॥ २२८ ॥
स्वयंभूरपि चैश्वर्यमदेन प्रभविष्णुना । परिलुप्तविवेकः सन् क्रूरकर्माकरोन्न किम् ॥ २२९ ॥
षष्टिं वत्सरलक्षाणि संपूर्यायुर्निजं हरिः । तैस्तैः स्वकर्मभिः षष्ठीं जगाम नरकावनीम् ॥ २३० ॥

---

१ शुचिराषाढः । २ इलायाः पृथ्व्या अवने पालने ।

स्वयंभुवः कुमारत्वे द्वादशाब्दसहस्र्यभूत् । सैव मंडलिकत्वे च नवत्यब्दी तु दिग्जये ॥ २३१ ॥
राज्ये त्वेकोनषष्ट्यब्दलक्षाण्यथ सहस्रकाः । पंचसप्ततिरधिका दशाग्रैर्नवभिः शतैः ॥ २३२ ॥
भद्रोऽपि सोदरविपत्तिशुचा विरक्त आत्तव्रतोऽथ मुनिचंद्रमुनेः समीपे ।
षष्टिं च पंच च निजायुषि वर्षलक्षान् नीत्वा विपद्य च पदं परमं प्रपेदे ॥ २३३ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये चतुर्थे पर्वणि
श्रीविमलनाथस्वयंभूभद्रमेरकचरितवर्णनो
नाम तृतीयः सर्गः ॥ ३ ॥

निश्चिन्वानो हेयं[1]बुद्ध्या मार्गस्थितइवाश्रयम् । पित्राज्ञयानंतनाथश्चक्रे दारपरिग्रहम् ॥ ५० ॥
अर्धाष्टमेषु लक्षेषु गतेषु शरदामथ । स्वामी पित्रनुरोधेन राज्यभारमुपाददे ॥ ५१ ॥
वर्षलक्षाः पंचदश पालयित्वा वसुंधराम् । दधार चिन्तां मनसि दीक्षायै सिंहसेनभूः ॥ ५२ ॥
ब्रह्मलोकात् सुरा लौकांतिकाः सारस्वतादयः । तीर्थं प्रवर्तय स्वामिन्नित्यूचुः परमेश्वरम् ॥ ५३ ॥
जृंभकैर्जृं[2]भभिच्छिष्टकुबेरप्रेरितैः सुरैः । पूर्यमाणेन वित्तेन वर्षदानं ददौ विभुः ॥ ५४ ॥
तस्य दानस्य पर्यन्ते भवपर्यंतकामिनः । दीक्षाभिषेकं विदधुः सुरासुरनृपाः प्रभोः ॥ ५५ ॥
आमुक्तचित्रनेपथ्यवस्त्रमाल्यो जगत्पतिः । ततः सागरदत्ताख्यामारोहच्छिबिकां वराम् ॥ ५६ ॥
शक्रादिभिर्धृतछत्रचामरव्यजनः प्रभुः । तया शिबिकयोद्यानं सहस्राम्रवणं ययौ ॥ ५७ ॥
दोलां[3]दोलनसंसक्तनागरस्त्रीजनैर्मुहुः । तदानीं गच्छदागच्छत्खेचरीभिरिवाकुलम् ॥ ५८ ॥
प्रत्यग्रपल्लवाताम्रैर्विलु[4]लद्भृंगकुन्तलैः । अशोकैर्मधुना मत्तैरिव घूर्णद्भिरा[5]चितम् ॥ ५९ ॥
क्रीडाश्रांतपुरस्त्रीणां श्रमसर्वस्वहारिभिः । चूतैरुत्पल्लवै रम्यं तालवृन्तधरैरिव ॥ ६० ॥
कर्णिकारैः[6] कर्णिकाभिरिवोद्यन्माधवश्रियः । रुचिरं कांचनारैश्च कांचनै[7]स्तिलकैरिव ॥ ६१ ॥

---

१ त्यागबुद्ध्या निश्चयं कुर्वाणः । २ जृंभभिदिन्द्रेण शिष्ट आज्ञप्तो यः कुबेरस्तेन प्रेरितैः । ३ दोलायां प्रेंखायामान्दोलनम् तस्मिन्नासक्तैः पौरस्त्रीजनैः । ४ विलुलंतो व्याप्ता ये भ्रमरास्ते एव कुन्तलास्तैः । ५ व्याप्तम् । ६ पुष्पविशेषैः । ७ पीतपुष्पविशेषैः ।

उदीर्णस्वागतमिव वनं तदवंकोकिलम् । प्रविवेश जगन्नाथो जगन्मनश्वोन्मनाः ॥ ६२ ॥
॥ पंचभिः कुलकम् ॥

ततः सागरदत्तातो दत्तहस्तो विडौजसा । उत्तीर्योज्झांचकारालंकारप्रभृतिकं प्रभुः ॥ ६३ ॥
राधकृष्णचतुर्दश्यां रेवत्यामपरेऽहनि । षष्ठेन प्राव्रजत् स्वामी सहस्रेण समं नृपैः ॥ ६४ ॥
वंदित्वा स्वामिनमथ पुरुहूतादयोऽखिलाः । स्वं स्वं स्थानं ययुः सद्यः कृतकार्याइवामराः ॥ ६५ ॥
द्वितीयेह्नि वर्धमानपुरे विजयवेश्मनि । पारणं परमान्नेन चकारार्हंश्चतुर्दशः ॥ ६६ ॥
तत्र चक्रे सुधांधोभिर्वसुधारादि पंचकम् । रत्नपीठं तु विजयेनांघ्रिन्यासपदे प्रभोः ॥ ६७ ॥
ततः स्थानादपैच्छद्मा छद्मस्थः परमेश्वरः । प्रावर्तिष्ट विहाराय सहमानः परीषहान् ॥ ६८ ॥
इतश्च जंबूद्वीपेऽस्मिन् प्राग्विदेहेषु सुंदरी । पुरी नंदपुरीत्यस्ति परमानंदजन्मभूः ॥ ६९ ॥
नृपो महाबलस्तत्र दत्तशोकोऽरियोषिताम् । अभूदशोकशाखीव स्वकुलोद्यानभूषणम् ॥ ७० ॥
संसारवासवैराग्यं स दधार महामनाः । विदग्धनागरइव ग्रामवासविरक्तताम् ॥ ७१ ॥
स वृषभर्षिपादाब्जमूले गत्वोदमूलयत् । पंचभिर्मुष्टिभिः केशांश्चरित्रं प्रत्यपादि च ॥ ७२ ॥
उद्यानमिव चारित्रं पालयित्वा महाफलम् । स विपद्य समुत्पेदे सहस्रारेऽमरो वरः ॥ ७३ ॥
इतोऽस्य जंबूद्वीपस्य क्षेत्रे भरतनामनि । कौशांबीत्यस्ति नगरी पुरन्दरपुरोपमा ॥ ७४ ॥

---

१ अवकृष्टं कूजितं कोकिलया यत्र । २ देवैः । ३ अपगतं छद्म कपटं यस्य सः । ४ शत्रुस्त्रीणां दत्तो शोको येन सः । ५ यथा चतुरो नगरवासी लघुग्रामे वस्तुं नेच्छति तथा ।

वक्रस्येन्दुः प्रतिनिधिर्दृशोरनुजमंबुजम् । कंठस्य कंबुरालेख्यं[1] दोष्णोर्बिसलता[2] सखी ॥ २३ ॥
कुंभः सनाभिः स्तनयोर्नाभेर्विवरमात्मभूः[3] । प्रतिबिंबं नितंबस्य कूलिनीपुलिनावनिः[4] ॥ २४ ॥
ऊर्वोरवरजा रंभा पादयोः पद्ममंतिषद्[5] । तस्याः सर्वांगरम्यायाः किं किं नह्यतिशाय्यभूत् ॥ २५ ॥
॥ त्रिभिर्विशेषकम् ॥
इतश्च प्राणते कल्पे जीवः पद्मरथस्य सः । प्रकृष्टस्थितिकं स्वायुः सुखमग्नोऽत्यवाहयत् ॥ २६ ॥
श्रावणासितसप्तम्यां रेवतीस्थे निशाकरे । ततश्च्युत्वा सुयशसो देव्याः कुक्षाववातरत् ॥ २७ ॥
ददर्श च महास्वप्नान् कुञ्जरादींश्चतुर्दश । सुखसुप्ता निशाशेषे देव्यर्हज्जन्मसूचकान् ॥ २८ ॥
राधकृष्णत्रयोदश्यां[6] पौष्णे भे श्येनलांछनम् । सुवर्णवर्णं सुयशाः स्वामिनी सुषुवे सुतम् ॥ २९ ॥
अथ ऊर्ध्वं रुचकेभ्योऽभ्येत्य सद्योऽप्यथार्हतः । षट्पंचाशद्दिक्कुमार्यः सूतिकर्माणि चक्रिरे ॥ ३० ॥
सौधर्मकल्पाधिपतिस्तत्रोपेत्य प्रणम्य च । प्रभुमादाय वियता[7] मेरुशैलशिरो ययौ ॥ ३१ ॥
अतिपांडुकंबलायां शिलायां तत्र वासवः । सिंहासन उपाविक्षदुत्संगारोपितप्रभुः ॥ ३२ ॥
इन्द्रास्त्रिषष्टिरभ्येत्याच्युतप्रभृतयस्ततः । क्रमेणास्नपयन्नाथमाहृतैस्तीर्थवारिभिः ॥ ३३ ॥
ईशानाधिपतेरंके महासारं न्यधात् प्रभुम् । शक्रस्तद्भारवहनश्रमेणेव गरीयसा ॥ ३४ ॥
विकृतस्फाटिकमहाचतुर्वृषविषाणजैः । वारिभिः स्नपयामास वासवः परमेश्वरम् ॥ ३५ ॥

---

१ शंखस्तस्याः कंठस्य चित्रमासीत् । २ बिसलता कमलनाललता वाह्वोः सखीभूता आसीत् । ३ गुहा नाभेः पुत्ररूपाभूत् ४ नद्याः सिकतावनिः । ५ पद्मं पादयोः अंतिषद् शिष्यः । ६ वैशाखकृष्णत्रयोदश्याम् । ७ आकाशमार्गेण ।

वाससा देवदूष्येण प्रमृज्येशं विलिप्य च । अर्चित्वारात्रिकं कृत्वा सौधर्मेन्द्रोऽस्तवीदिति ॥ ३६ ॥
तवाग्रे भूमिलुठनैर्यै हि [1]भूरेणुनांचिताः । गोशीर्षचंदनेनांगरागस्तेषां न दुर्लभः ॥ ३७ ॥
भक्त्यैकमपि यैः पुष्पं त्वन्मूर्धन्यधिरोप्यते । ते [2]छत्राशून्यशिरसः संचरंति निरन्तरम् ॥ ३८ ॥
अंगरागस्तवांगे यैरेकदापि विधीयते । देवदूष्यांशुकधरास्ते भवंति न संशयः ॥ ३९ ॥
निधीयते भवत्कंठे पुष्पदामैकदापि यैः । लुठन्ति तेषां कंठेषु दोर्लताः[3] सुरयोषिताम् ॥ ४० ॥
ये वर्णयन्त्येकदापि त्वद्गुणानतिनिर्मलान् । ते गीयंते सुरस्त्रीभिरपि लोकातिशायिनः ॥ ४१ ॥
ये [4]चारुचारीचतुरं भक्त्या [5]वल्गंति ते पुरः । ऐरावणकरिस्कंधासनं तेषां न दुर्लभम् ॥ ४२ ॥
ध्यायंति परमात्मानं ये त्वां देव दिवानिशम् । त्वादृशीभूय ते लोके ध्येयतां यांति सर्वदा ॥ ४३ ॥
स्नात्रांगरागनेपथ्याकल्पप्रभृतिकल्पने । [6]अधित्वन्मेधिकारोऽस्तु सदापि त्वत्प्रसादतः ॥ ४४ ॥
इति स्तुत्वा जिनपतिं गृहीत्वा च दिवस्पतिः । गत्वा च सुयशोदेव्याः पार्श्वेऽमुंचद्यथास्थिति ॥ ४५ ॥
नंदीश्वरे शाश्वतार्हत्प्रतिमाष्टाह्निकोत्सवम् । कृत्वा शक्रोऽपरेऽपीन्द्राः स्वं स्वं स्थानं पुनर्ययुः ॥ ४६ ॥
गर्भस्थेऽस्मिञ्जितं पित्रानन्तं [7]परबलं यतः । ततश्च चक्रेऽनन्तजिदित्याख्या परमेशितुः ॥ ४७ ॥
योगी ध्यानामृतमिव निजांगुष्ठात् सुधां पिबन् । अस्तन्यपोऽप्यवर्धिष्ट क्रमेण परमेश्वरः ॥ ४८ ॥
शैशवं व्यतिचक्राम क्रमादिन्दुरिव प्रभुः । पंचाशद्धनुरुत्तुंगः प्रतिपेदे च यौवनम् ॥ ४९ ॥

---

१ पृथ्वीरजसा व्याप्ताः । २ छत्रेण अशून्यं सहितं शिरो येषां ते । ३ हस्तलताः । ४ चार्या चारी नृत्ये गमनविशेषस्तया चतुरं यथा तथा । ५ नृत्यंति । ६ त्वयि । ७ शत्रुसैन्यं ।

समुद्रदत्त इत्यासीद्दत्तमुद्रोऽरितेजसाम् । समुद्रइव गंभीरस्तस्यां वसुमतीपतिः ॥ ७५ ॥
पत्नी तस्याभवन्नंदा नयनानंदचंद्रिका । रूपेण रूपाहंकारहरणी सुरयोषिताम् ॥ ७६ ॥
नृपस्य तस्य [1]मलयपवमानो मधोरिव । मित्रं मलयभूनाथोऽन्यायया चंद्रशासनः ॥ ७७ ॥
समुद्रदत्तस्तं प्रीत्या महत्या निजसद्मनि । सादरः सोदरमिवाभोजयत् सपरिच्छदम् ॥ ७८ ॥
मृगाक्षीं तत्र सोऽद्राक्षीन्नंदामानंदिनीं दृशोः । पत्नीं समुद्रदत्तस्य समुद्रस्येव जाह्नवीम् ॥ ७९ ॥
स्तब्धांगः कीलितइव स्मरास्त्रैरतिदुःसहैः । जातस्वेदो [2]विप्रलंभानलघर्मादिवोद्दवणात् ॥ ८० ॥
सर्वांगमप्य[3]ंकुरितप्रेमेव पुलकेन च । भिन्नस्वरो ग्रहग्रस्तइव तस्या वपुर्गुणैः ॥ ८१ ॥
प्रकंपमानसर्वांगस्तदाश्लेष इवोत्सुकः । [4]शुचेव वैवर्ण्यधरस्तदसंप्राप्तिजन्मया ॥ ८२ ॥
बाष्पेण लुप्तनयनः कामांध्यमिव धारयन् । [5]तदप्राप्त्या मृत्युमिवानेतुं प्रलयमाश्रयन् ॥ ८३ ॥
नंदामालोक्य तत्कालं सर्वांगोपांगसुंदरीम् । कां कामवस्थां न प्राप [6]मान्मथीं चंद्रशासनः ॥ ८४ ॥
॥ पंचभिः कुलकम् ॥
[7]समुद्रदत्तदत्तौकस्युवासाथ निशास्वपि । लेभे न निद्रां कामार्तो रोगार्त इव सोऽस्तधीः ॥ ८५ ॥
तांस्ताननुदिनं नंदाप्राप्त्युपायान् विचिंतयन् । कंचित् कालं व्यतीयाय मित्रव्याजेन स द्विषन् ॥ ८६ ॥

---

१ मलयाचलवायुः । २ विप्रलंभानलेन विरहाग्निना घर्मस्तस्मात् । ३ अंकुरितः प्रेमा यस्य स एतादृश इव पुलकित इत्यर्थः । ४ तस्या अप्राप्तस्य जातेन शोकेन शरीरस्य विवर्णतां दधदिव । ५ तस्या अप्राप्त्या मर्तुकामइव प्रलयं तस्यामेव लयं तन्मयतामाश्रयदित्यर्थः । ६ कामसंबंधिनीम् । ७ समुद्रदत्तेन दत्तमोको गृहं वासस्थानमिति यावत्तस्मिन् ।

समुद्रदत्ते विश्वस्ते स नंदामपरेऽहनि । हृत्वा जगाम शकुनिरिव रत्नावलीं द्रुतम् ॥ ८७ ॥
रक्षसेव हृतां तेन बलिना छलिना च ताम् । प्रत्याहर्तुं सोऽसमर्थो वैराग्यं परमं ययौ ॥ ८८ ॥
हृदयस्थेन शल्येनेवापमानेन तेन सः । दूयमानोऽग्रहीद्दीक्षां श्रेयांसमुनिसंनिधौ ॥ ८९ ॥
अत्युग्रं स तपस्तेपे तपसोऽस्य फलेन तु । नंदाहर्तुर्वधाय स्यां निदानमिति चाकरोत् ॥ ९० ॥
अमुना स निदानेन मितीकृत्य तपःफलम् । विपद्य कालयोगेन सहस्रारेऽभवत्सुरः ॥ ९१ ॥
मृत्वा कालक्रमाच्चंडशासनोऽपि महीपतिः । भवाब्ध्यावर्तभूतासु बभ्रामानेकयोनिषु ॥ ९२ ॥
स चात्र भरते पृथ्वीपुरे विलासभूपतेः । गुणवत्यां कलत्रेऽभून्मधुरित्याख्यया सुतः ॥ ९३ ॥
स त्रिंशद्वर्षलक्षायुस्तापिच्छकुसुमच्छविः । पंचाशद्धनुरुत्तुंगो जंगमोऽद्रिरिवाबभौ ॥ ९४ ॥
शुशुभे स महाबाहुर्द्विशुंड इव दिग्गजः । पृथुलोरस्तटश्रीकः सानुमानिव जंगमः ॥ ९५ ॥
लीलयापि महास्थाम्नस्तस्य चंक्रमतो मही । भारासहा ननामेव तृणपूर्ण इवावटः ॥ ९६ ॥
शास्त्राशस्त्रिकथां श्रुत्वा पूर्वेषां पृथिवीभुजाम् । स शुशोच स्वदोर्वीर्यं प्रतिमल्लमवाप्नुवन् ॥ ९७ ॥
जित्वा भरतवर्षार्धं त्रिखंडं ग्रामलीलया । स एवमसमस्थामा नामेंदौ स्वमलीलिखत् ॥ ९८ ॥
चक्राक्रान्तद्विषच्चक्रः शक्रतुल्यश्च विक्रमात् । अभूत् प्रत्यर्धचक्री स चतुर्थः पुरुषार्यमा ॥ ९९ ॥

---

१ कपटवता । २ अमितं तपसः फलं मितं परिमाणयुक्तं कृत्वा । ३ संसारसमुद्रस्यावर्तभूतासु । ४ पर्वतः । ५ महाबलवतः । ६ यथावटो गर्तः तृणपूर्णः सन् भारेणावनमति तथा । ७ स्वं नाम चंद्रे लिलेख चंद्रलोकपर्यंतकीर्तिर्जात इत्यर्थः ८ चक्रेणाक्रांतः शत्रुसमूहो येन । ९ पुरुषेषु सूर्यरूपः ।

अभूदुत्कटदोःकूटकुट्टितारिभटोद्भटः । वैरिश्रीभोगलटभः कैटभः सोदरोऽस्य तु ॥ १०० ॥
तदा च द्वारकापुर्यां सोमसूर्यसमो गुणैः । सोम इत्याख्ययाख्यातो बभूव पृथिवीपतिः ॥ १०१ ॥
तस्याभूतामुभे पत्न्यौ तत्रैका स्निग्धदर्शना । सुदर्शनान्या तु सीता शीतद्युतिसमानना ॥ १०२ ॥
इतश्च स सहस्रारान्महाबलवरः सुरः । च्युत्वा सुदर्शनादेव्या उदरे समवातरत् ॥ १०३ ॥
तदा सुदर्शनादेवी सीरभृज्जन्मसूचकान् । चतुरो यामिनीशेषे महास्वप्नानुदैक्षत ॥ १०४ ॥
ततो मासेषु नवसु दिनेष्वर्धाष्टमेषु च । देवी सुदर्शनासूत सुतं सितरुचिप्रभम् ॥ १०५ ॥
कृतार्थयन्नर्थिवर्गानुत्सवेन महीयसा । तस्य सुप्रभ इत्याख्यां विदधे सोमभूपतिः ॥ १०६ ॥
सहस्राराद्दिवश्च्युत्वा पूर्णायुः सोऽपि कालतः । जीवः समुद्रदत्तस्य सीताकुक्षाववातरत् ॥ १०७ ॥
तदा सापि महास्वप्नान्शार्ङ्गभृज्जन्मसूचकान् । सप्त सुप्ता निशाशेषेऽद्राक्षीत्प्रविशतो मुखे ॥ १०८ ॥
संपूर्णे समये सापि नीलरत्नामलत्विषम् । तनयं जनयामास सर्वलक्षणलक्षितम् ॥ १०९ ॥
शार्ङ्गपाणेश्चतुर्थस्य तस्याथ दिवसे शुभे । पुरुषोत्तम इत्याख्यां यथार्थामकरोत् पिता ॥ ११० ॥
नीलपीतांबरौ तालतार्क्ष्यकेतू महाभुजौ । तावभूतां सहचरौ प्रीत्या युग्मभवाविव ॥ १११ ॥
निमित्तीकृत्य चाचार्यं सर्वा जगृहतुः कलाः । पूर्वजन्मप्रभावोऽयं तादृशां हि महात्मनाम् ॥ ११२ ॥
क्रीडायातमपि[1] तयोर्नासहंतापरे भटाः । स्पृशन्नपि[2] गजो हंति जिघ्रन्नपि च पन्नगः ॥ ११३ ॥

---

१ क्रीडया गमनम् । २ स्पृष्टमात्र एव गजः पुरुषं हन्तीत्यर्थः ।

बलेन पवनोपमौ ॥ ११४ ॥

लीलावनमिव श्रीणां तौ क्रमेणांगपावनम् । यौवनं च प्रपेदाते बलेन पवनोपमौ ॥ ११४ ॥

ज्यायसो[1] लांगलादीनि शार्ङ्गादीनि कनीयसः । जैत्राणि[2] ददिरे देवै रत्नानि नररत्नयोः ॥ ११५ ॥

महाबलौ बलहरी तौ दृष्ट्वा कैलिकौतुकी[3] । प्रतिविष्णोर्मधोर्धाम जगामोत्पत्य नारदः ॥ ११६ ॥

तं दत्तार्घो नमस्कृत्य कृत्यज्ञोऽभिदधे मधुः । महामुने स्वागतं ते दिष्ट्या दृष्टिपथेऽसि नः ॥ ११७ ॥

मदीयाः किंकराः सर्वे भरतार्धेऽत्र भूभुजः । ते मागधवरदामप्रभासेशाश्च नाकिनः ॥ ११८ ॥

तदत्र वस्तुना येन येन देशेन वा तव । योऽर्थस्तं ब्रूहि निःशंकं यथा यच्छामि नारद ॥ ११९ ॥

नारदोऽप्यब्रवीदेवं क्रीडयाहमिहागमम् । न मेऽर्थोऽर्थेन केनापि न वा देशेन केनचित् ॥ १२० ॥

भरतार्धेश इति तु त्वं मुधैव विकत्थ्यसे । बंदिभिर्[4]अर्थवादः सर्वोऽपि किं यथार्थो भवेत् क्वचित् ॥ १२१ ॥

अर्थलोभादर्थिजनैः स्तूयमानेन धीमता । लज्जितव्यं प्रत्युतापि प्रत्येतव्यं न जातुचित् ॥ १२२ ॥

बलिभ्योऽपि बलितमा महद्भ्योऽपि महत्तमाः । दृश्यंते ह्यत्र जगति बहुरत्ना वसुंधरा ॥ १२३ ॥

मधुरन्तर्[5]भवत्कोपोऽन्तःशिखीव शमीतरुः । सद्यो दष्टाधररदो नारदं प्रत्यभाषत ॥ १२४ ॥

भरतार्धेऽत्र गंगातः का नाम महती नदी । वैताढ्यात् को महानद्रिः कश्च मत्तो बलाधिकः ॥ १२५ ॥

मन्यसे यं बलीयांसं तमाख्याहि यथा क्षणात् । शरभः कलभस्येव[6] तस्यौजो[7] दर्शयामि ते ॥ १२६ ॥

किं मत्तेन प्रमत्तेनाप्यवज्ञातोऽसि केनचित् । स्तुतिव्याजेन यस्याद्य विधित्ससि[8] वधं द्विज ॥ १२७ ॥

---

१ बलभद्रस्य । २ जयनशीलानि । ३ कलौ कौतुकं अस्यास्तीति । ४ वंदिजनैर्गीयमानोऽर्थवाद इत्यर्थः । ५ अन्तर्मध्ये वह्निर्यस्य सः । ६ गजडिंभस्य । ७ बलम् । ८ विधातुं कर्तुमिच्छसि ।

अथोचे नारदोऽप्येवं नाहं मत्तप्रमत्तयोः । गच्छामि पार्श्वे तन्मे स्यात्तदवज्ञा कथं ननु ॥ १२८ ॥
भरतार्धेश्वरोऽस्मीति निजायामद्य पर्षदि । यदवादीर्मास्म वादीर्भूयस्तद्धिहसाय[1] ते ॥ १२९ ॥
द्वारकायां तु सोमस्य सुप्रभः पुरुषोत्तमः । तनयौ किं त्वया राजन्नश्रुत्यापि न श्रुतौ ॥ १३० ॥
महाबलौ महाबाहू अन्योऽन्यं प्रीतिशालिनौ । मूर्तिमन्तौ पवमानज्वलनाविव दुःसहौ ॥ १३१ ॥
शक्रेशानाविव दिवोऽवतीर्णौ कौतुकादिह । दोष्णैकेनाप्युद्धरेतां तौ सर्वार्धिधरां[2] धराम् ॥ १३२ ॥
भरतेऽधिष्ठिते ताभ्यां सिंहेनेव महावने । अज्ञानाद्गर्जसि कथं मदांध इव सिंधुरः[3] ॥ १३३ ॥
कोपारुणेक्षणद्वंद्वो द्वंद्वेच्छुरिव[4] तत्क्षणात् । दशनैर्दशनान् घर्षन्मधुराजोऽभ्यधादिदम् ॥ १३४ ॥
यदात्थ तदमिथ्या चेत् स्वैरं तत्क्रीडितुं यमः । मया निमंत्र्यतेऽद्यैष रणं द्रष्टुं भवानिव[5] ॥ १३५ ॥
निःसोमं निःसुप्रभं च तथा निःपुरुषोत्तमम् । करोमि द्वारकाराज्यं पश्य युत्प्रतिभूरिव ॥ १३६ ॥
इत्युक्त्वा नारदमुनिं विसृज्य प्राहिणोदथ । अनुशिष्य रहो दूतं सोमसोमसुतान् प्रति ॥ १३७ ॥
गत्वाशु सोमं ससुतं सौजस्कः सोऽभ्यभाषत । उजायंतेऽनोजसोऽपि दूताः स्वाम्योजसा खलु ॥ १३८ ॥
दृप्तानां दर्पहरणो विनीतानां च वत्सलः । प्रचंडदोर्बलजयी[6] क्षत्रव्रतमहाधनः ॥ १३९ ॥
दासैरिव[7] याम्यार्धभरतक्षेत्रवर्तिभिः । राजहंसैः कुलोद्भूतैः सेव्यमानपदांबुजः ॥ १४० ॥
वैताढ्यदक्षिणश्रेणिविद्याधरनृपैरपि । दत्तदंडः प्रचंडाज्ञ आखंडलइवापरः ॥ १४१ ॥

---

१ हास्याय भवति । २ समुद्रगिरिसहितां महीम् । ३ गजः । ४ युद्धेच्छुः । ५ युद्धसाक्षी । ६ प्रचंडेन हस्तबलेन जयनशीलः । ७ किंकरैरिव ।

स एवमुक्तः पुरुषोत्तमेन रुषितो ययौ । सर्वं च मधवेऽशंसद्दुःशंसमपि तद्वचः ॥ १५५ ॥
शार्ङ्गिणो वाचिकेनोच्चैः श्रुतमात्रेण तेन च । स्तनितेनेव शरजः संरंभं विदधे मधुः ॥ १५६ ॥
सोऽवादयत्क्षणाद्यात्राभेरीं भैरवभाकृतिम् । श्रूयमाणां खेचरीभिः पिधाय श्रवसी भिया ॥ १५७ ॥
राजभिर्बद्धमुकुटैर्महावीर्यैर्महाभटैः । सेनानीभिरमात्यैश्च सामंतैरपरैरपि ॥ १५८ ॥
सैनिकै रणशौण्डीरैः स्वस्य मूर्त्यंतरैरिव । समावृतः स प्रतस्थे मायारूप इवामरः ॥ १५९ ॥

॥ युग्मम् ॥

नाजीगणद्दुर्निमित्ताशकुनानि स दोर्मदी । कालपाशैरिवाकृष्टो देशसीमां द्रुतं ययौ ॥ १६० ॥
पारापतैपणीवागात्तत्कालं तत्र शार्ङ्ग्यपि । सोमसुप्रभसेनानीसेनाभिः परिवारितः ॥ १६१ ॥
आशूपविश्य करभान् रासभोष्ट्रयोरपि । वर्माण्याददिरे सैन्यैर्धनूंष्यास्फालितानि च ॥ १६२ ॥
उड्डीनमुच्चकैः कांस्मकांडे प्रलयप्रदम् । रक्षःकुलमिव व्योमन्यसृक्पानसमुत्सुकम् ॥ १६३ ॥
प्रेर्यमाणा महामात्रैरपसृत्याभिसृत्य च । चतुर्दन्तेन युद्धेनायुध्यन्त वरदंतिनः ॥ १६४ ॥
एकस्मिन् मोचके कुंतमन्यस्मिन् मुद्गरं पुनः । पाणौ कृपाणं बिभ्राणाः सादिनोऽत्वरयन् हयान् ॥ १६५ ॥
निर्घोषेणातिघोरेण जगद्बाधिर्यदायिनः । भिन्नसिंधुतटानीव मिमिलुः स्यंदना मिथः ॥ १६६ ॥
आस्फालयंतः फलकान्यास्फलंतः परस्परम् । असि्यसि विदधुर्वीराः पत्तयो बाहुशालिनः ॥ १६७ ॥

---

१ कोपम् । २ भयंकरभांकारध्वनिम् । ३ श्रवणे । ४ संग्रामदक्षैः । ५ पक्षिविशेषः । ६ शरसमूहः । ७ राक्षसकुलम् । ८ शोणितपानोद्यतम् । ९ हस्तिपकैः । १० अश्ववाराः । ११ भिन्ननदीतटानि । १२ असिभिरसिभिर्गृहीत्वेदं युद्धं प्रवृत्तम् ।

अग्निः स्फुलिंगमात्रोऽपि कक्षं[1] दहति सर्वतः । तेजः प्रमाणं वीराणां तेजसां कीदृशं वयः ॥ १८१ ॥
॥ युग्मम् ॥

तदलं ते विलंबेन मुंच चक्रमशंकितः । व्यालोऽपि गरलं मुक्त्वा शाम्येन्न पुनरन्यथा ॥ १८२ ॥
अंगुल्यामूर्मिकीकृत्य सलीलं मधुरप्यथ । भ्रमयामास तच्चक्रमलातमिव[2] बालकः ॥ १८३ ॥
मुमोच च मधुश्चक्रं तत् पपाताथ शार्ङ्गिणः । वक्षस्तुंबाग्रघातेन चुंबन्नुद्व्रणतेजसा ॥ १८४ ॥
विष्णुस्तेन प्रहारेण मूर्छितः स्यंदनेऽपतत् । उत्प्लुत्य बलभद्रेण स्वोत्संगे च न्यधीयत ॥ १८५ ॥
भ्रात्रंगसंगादमृतस्नपनादिव केशवः । अवाप्तसंज्ञस्तच्चक्रं मधोः प्राणानिवाददे ॥ १८६ ॥
अथ शार्ङ्गधरोऽप्येवमूचे मद्वत् त्वमत्र भोः । मा स्म स्था गछ गछाशु स्पर्धा सिंहेन का शुनः ॥१८७॥
मधुरप्यन्यधत्तैवं मुंच चक्रं त्वमप्यहो । गर्जन् शरन्मेघइव किमात्मानं विकत्थसे[3] ॥ १८८ ॥
एवमुक्तवतस्तस्य चक्रं मुक्त्वा जनार्दनः । अपातयच्छिरो भूमौ फलं तालतरोरिव ॥ १८९ ॥
पुष्पवर्षैः सुरैः शार्ङ्गी साधु साध्विति तुष्टुवे । हा नाथ नाथ क्वासीति निजैस्तु शुशुचे मधुः ॥ १९० ॥
जघ्ने केशवसेनान्या कैटभोऽपि महाभटः । शिश्रिये चापरैः सद्यः श्रीपतिर्मधुपार्थिवैः ॥ १९१ ॥
समागधवरदामप्रभासाधीश्वरं ततः । अपाग्भरतवर्षार्धं साधयामास शार्ङ्गभृत् ॥ १९२ ॥
शिलां कोटिनरोत्पाट्यां मगधेष्वथ माधवः । उत्पाट्य लीलयानंदी पिधान[4]मिव सोऽमुचत् ॥ १९३ ॥
समुद्रेणापि दत्तार्घइवोत्कल्लोलपाणिना । अथाययौ द्वारवतीं स्वपुरीं पुरुषोत्तमः ॥ १९४ ॥

१ तृणम् । २ उल्मुकम् । ३ प्रगल्भसे । ४ पृथ्व्याश्छादनमित्यर्थः ।

तत्र सोमेन रामेण पार्थिवैरपरैरपि । विष्णोश्चक्रेऽर्धचक्रित्वाभिषेकः परया मुदा ॥ १९५ ॥
इतस्त्रिवर्षीं छद्मस्थो विहृत्यानंतजिज्जिनः । समाययावुपवनं सहस्राम्रवणाभिधम् ॥ १९६ ॥
तत्राशोकतले भर्तुर्ध्यानांतरविवर्तिनः । संसारस्येव मर्माणि घातिकर्माणि तुत्रुटुः ॥ १९७ ॥
राधकृष्णचतुर्दश्यां रेवतीस्थे निशाकरे । षष्ठेन तपसा भर्तुरुदपद्यत केवलम् ॥ १९८ ॥
चक्रे च दिव्ये समवसरणे देशनां प्रभुः । पंचाशतं गणधरान् यशःप्रभृतिकानपि ॥ १९९ ॥
तत्तीर्थभूश्च पातालरुयास्थो मकरवाहनः । रक्तो दोर्भिः पद्मखड्गपाशिभिर्दक्षिणैस्त्रिभिः ॥ २०० ॥
वामैर्नकुलफलकाक्षसूत्रसहितैः पुनः । श्रीमतोऽनंतनाथस्य जज्ञे शासनदेवता ॥ २०१ ॥
तथोत्पन्नांकुशा नाम गौरांगी पद्मवाहना । दोर्दंडाभ्यां दक्षिणाभ्यां खड्गं पाशं च बिभ्रती ॥ २०२ ॥
दक्षिणेतरबाहुभ्यां दधती फलकांकुशौ । अनंतस्वामिनो जज्ञे तथा शासनदेवता ॥ २०३ ॥
ताभ्यामुपासिताभ्यर्णो भगवान् विहरन् भुवि । प्रापत् पुरीं द्वारवतीं मोक्षद्वाराग्रगूः प्रभुः ॥ २०४ ॥
शक्राद्यैस्तत्र समवसरणं विदधेऽमरैः । षट्कार्मुकशतोत्तुंगचैत्यपादपभूषितम् ॥ २०५ ॥
तत्र द्वारेण पूर्वेण प्रविश्यानंतजिज्जिनः । त्रिः प्रदक्षिणयामास तमुच्चैश्चैत्यपादपम् ॥ २०६ ॥
कृत्वा तीर्थनमस्कारं पूर्वसिंहासने प्रभुः । प्राङ्मुखो न्यषदत्तस्थौ श्रीसंघश्च यथास्थिति ॥ २०७ ॥
स्वामिनः प्रतिरूपाणि त्रीणि दिक्षु तिसृष्वपि । रत्नसिंहासनस्थानि विचक्रुर्व्यंतरामराः ॥ २०८ ॥
तथा च समवसृतं तीर्थनाथं चतुर्दशम् । गत्वा शशंसुः पुरुषोत्तमायायुक्तपूरुषाः ॥ २०९ ॥

---

१ त्रिमुखः । २ अग्रगूरग्रेसरः ।

सार्धा द्वादश रूप्यस्य कोटीस्तेभ्यः प्रदाय च । ययौ समवसरणं बलभद्रयुतो हरिः ॥ २१० ॥
तत्र प्रदक्षिणीकृत्य तीर्थनाथं प्रणम्य च । अनुशक्रमुपाविक्षत् साग्रजः पुरुषोत्तमः ॥ २११ ॥
भूयो नत्वा जिनेंद्रं ते देवेंद्रोपेन्द्रसीरिणः । भक्तिगद्गदया वाचा स्तोतुमारेभिरे ततः ॥ २१२ ॥
देहभाजां मनोवित्तं[1] विषयैस्तस्करैरिव । तावदुल्लंघ्यते यावन्न त्वमेषामधीश्वरः ॥ २१३ ॥
प्रसर्पत्कोपतिमिरं दृशोऽन्धकरणं नृणाम् । दूरादपसरत्येव त्वद्दर्शनसुधांजनात् ॥ २१४ ॥
मानेन भूतेनेवात्ता[2]स्तावदज्ञाः शरीरिणः । यावद्भवद्वचो मंत्र इव तैर्न हि शुश्रुवे ॥ २१५ ॥
त्वत्प्रसादात् त्रुटन्मायानिगडानां शरीरिणाम् । संप्राप्तार्जवयानानां मुक्तिर्न हि दवीयसी[3] ॥ २१६ ॥
यथा यथा देहभाजो निरीहा[4]स्त्वामुपासते । चित्रं तथा तथा तेषामस्युत्कृष्टफलप्रदः ॥ २१७ ॥
संसारसरितो रागद्वेषौ द्वे श्रोतसी[5]इव । तद्द्वीपइव माध्यस्थ्ये स्थीयते तव शासनात् ॥ २१८ ॥
देहिनां निर्वृतिद्वारप्रवेशोत्सुकचेतसाम् । मोहांधकारदीपत्वं त्वं धारयसि नापरः ॥ २१९ ॥
विषयैः कषायरागद्वेषमोहैरनिर्जिताः । भूयास्म त्वत्प्रसादेन प्रसीद परमेश्वर ॥ २२० ॥
स्तुत्वैवं कृतमौनेषु शक्रमध्वरिसीरिषु । अनंतनाथो भगवान् विदधे देशनामिति ॥ २२१ ॥
अतत्त्व[6]विद्भुरो जंतुरमार्गज्ञइवाध्वगः । अस्मिन् संसारकांतारे बंभ्रमीति दुरुत्तरे ॥ २२२ ॥
जीवाजीवावाश्रवश्च संवरो निर्जरा तथा । बंधो मोक्षश्चेति सप्त तत्त्वान्याहुर्मनीषिणः ॥ २२३ ॥
तत्र जीवा द्विधा ज्ञेया मुक्तसंसारिभेदतः । अनादिनिधनाः सर्वे ज्ञानदर्शनलक्षणाः ॥ २२४ ॥

---

१ मन एव द्रव्यम् । २ भूतेन गृहीता इव । ३ अतिदूरे । ४ इच्छारहिताः । ५ प्रवाहौ । ६ अतत्त्वज्ञः ।

मुक्ता एकस्वभावाः स्युर्जन्मादिक्लेशवर्जिताः । अनंतदर्शनज्ञानवीर्यानंदमयाश्च ते ॥ २२५ ॥
संसारिणो द्विधा जीवाः स्थावरत्रसभेदतः[1] । द्वितयेऽपि द्विधा पर्याप्तापर्याप्तविशेषतः ॥ २२६ ॥
पर्याप्तयस्तु षडिमाः पर्याप्तत्वनिबंधनम् । आहारो वपुरक्षाणि[2] प्राणो भाषा मनोऽपि च ॥ २२७ ॥
स्युरेकाक्षविकलाक्षपंचाक्षाणां शरीरिणाम् । चतस्रः पंच षट् चापि पर्याप्तयो यथाक्रमम्[3] ॥ २२८ ॥
एकाक्षाः स्थावरा भूम्यप्तेजोवायुमहीरुहः । तेषां तु पूर्वे चत्वारः स्युः सूक्ष्मा बादरा अपि ॥ २२९ ॥
प्रत्येकाः साधारणाश्च द्विप्रकारा महीरुहः । तेऽत्र पूर्वे बादराः[4] स्युरुत्तरे सूक्ष्मबादराः ॥ २३० ॥
त्रसा द्वित्रिचतुःपंचेंद्रियत्वेन चतुर्विधाः । तत्र पंचेंद्रिया द्वेधा संज्ञिनोऽसंज्ञिनोऽपि च ॥ २३१ ॥
शिक्षोपदेशालापान् ये जानते तेऽत्र संज्ञिनः । संप्रवृत्तमनःप्राणास्तेभ्योऽन्ये[5] स्युरसंज्ञिनः[6] ॥ २३२ ॥
स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रमितीन्द्रियम् । तस्य स्पर्शो रसो गंधो रूपं शब्दश्च गोचरः[7] ॥ २३३ ॥
द्वींद्रियाः कृमयः शंखा गंडूपदा[8] जलौकसः । कपर्दाः शुक्तिकाद्याश्च विविधाः कृमयो मताः ॥ २३४ ॥
यूकामत्कुणमत्कोटलिक्षाद्यास्त्रींद्रिया मताः । पतंगमक्षिकाभृंगदंशाद्याश्चतुरिंद्रियाः ॥ २३५ ॥
तिर्यग्योनिभवाः शेषा जलस्थलखचारिणः । नारका मानवा देवाः सर्वे पंचेंद्रिया मताः ॥ २३६ ॥
मनोभाषाकायबलत्रय[9]मिंद्रियपंचकम् । आयुरुच्छ्वासनिःश्वासमिति प्राणा दश स्मृताः ॥ २३७ ॥

---

१ स्थावराः त्रसाश्चेत्यर्थः । २ इंद्रियाणि । ३ एकेंद्रियाणां चतस्रो विकलेंद्रियाणां पच पंचेंद्रियाणां च षट्पर्याप्तय इत्यर्थः । ४ प्रत्येका बादरा एव । ५ साधारणाः । ६ प्रवृत्तिमन्तो मनःप्राणा येषां । ७ विषयः । ८ भूम्यंतर्गतजंतुविशेषाः । ९ मनोबलं वचनबलं कायबलं च ।

सर्वजीवेषु देहायुरुच्छ्वासा इन्द्रियाणि च । विकलासंज्ञिनां भाषा पूर्णानां संज्ञिनां मनः ॥ २३८ ॥
उपपादभवा देवनारका गर्भजाः पुनः । जरायुःपोतांडभवाः शेषाः संमूर्छनोद्भवाः ॥ २३९ ॥
संमूर्छिनो नारकाश्च जीवाः पापा नपुंसकाः । देवाः स्त्रीपुंसवेदाः स्युर्वेदत्रययुपः परे ॥ २४० ॥
सर्वे जीवा व्यवहार्यव्यवहारितया द्विधा । सूक्ष्मनिगोदा एवांत्यास्तेभ्योऽन्ये व्यवहारिणः ॥ २४१ ॥
सचित्तः संवृतः शीतस्तदन्यो मिश्रितोऽपि वा । त्रिभेदैरांतरैर्भिन्नो नवधा योनिरंगिनाम् ॥ २४२ ॥
प्रत्येकं सप्त लक्षाश्च पृथ्वीवार्यग्निवायुषु । प्रत्येकानंतकायेषु क्रमाद्दश चतुर्दश ॥ २४३ ॥
षट् पुनर्विकलाक्षेषु मनुष्येषु चतुर्दश । स्युश्चतस्रश्चतस्रश्च श्वभ्रितिर्यक्सुरेषु तु ॥ २४४ ॥
एवं लक्षाणि योनीनामशीतिश्चतुरुत्तरा । केवलज्ञानदृष्टानि सर्वेषामपि जन्मिनाम् ॥ २४५ ॥
एकाक्षा बादराः सूक्ष्माः पंचाक्षाः संज्ञ्यसंज्ञिनः । स्युर्द्वित्रिचतुरक्षाश्च पर्याप्ता इतरेऽपि च ॥ २४६ ॥
एतानि जीवस्थानानि मयोक्तानि चतुर्दश । मार्गणा अपि तावत्यो ज्ञेयास्ता नामतो यथा ॥ २४७ ॥

---

१ यथा द्वींद्रियाणां कायायुरुच्छ्वासाः स्पर्शनरसनेंद्रियद्वयं भाषा चेति षट् प्राणास्तथैव त्रींद्रियाणां चतुरिंद्रियाणामसंज्ञिपंचेंद्रियाणां च क्रमात् स्वस्वेंद्रियवृध्ध्या सप्ताष्टौ नव च प्राणाः संज्ञिनां तु मनःसहिता दशेति तात्पर्यम् । २ मनुष्याः । ३ तिर्यंचो गर्भजा अंडजाश्च । ४ गर्भजातिर्यंचो मनुजाश्च । ५ ये सूक्ष्मनिगोदास्तेऽव्यवहारिणः । ६ सचित्तादन्योऽचित्तः संवृतादन्योऽसंवृत इत्यादि । ७ सचित्ताचित्तः, संवृतासंवृतः शीतोष्ण इत्यर्थः । ८ प्रत्येकेषु दशलक्षा अनंतकायेषु च चतुर्दशलक्षाः । ९ नारकातिर्यक्देवेषु । १० बादरैकेंद्रियाः, सूक्ष्मैकेंद्रियाः, संज्ञिपंचेंद्रियाः, असंज्ञिपंचेंद्रियाः, द्वींद्रियाः त्रींद्रियाः, चतुरिंद्रियाश्चेति सप्त पर्याप्तास्तथैव सप्तापर्याप्ताश्चेति चतुर्दश जीवस्थानानीत्यर्थः । ११ चतुर्दश ।

संयमाहारदृग्लेश्याभव्यसम्यक्त्वसंज्ञिनः ॥ २४८ ॥
गतींद्रियकाययोगवेदज्ञानक्रुधादयः । संयमाहारदृग्लेश्याभव्यसम्यक्त्वसंज्ञिनः ॥ २४९ ॥

मिथ्यादृष्टिः सास्वादनसम्यग्मिथ्यादृशावपि । अविरतसम्यग्दृष्टिर्विरताविरतोऽपि च ॥ २४९ ॥
प्रमत्तश्चाप्रमत्तश्च निवृत्तिबादरस्ततः । अनिवृत्तिबादरश्चाथ सूक्ष्मसंपरायकः ॥ २५० ॥
ततः प्रशांतमोहश्च क्षीणमोहश्च योगवान् । अयोगवानिति गुणस्थानानि स्युश्चतुर्दश ॥ २५१ ॥
मिथ्यादृष्टिर्भवेन्मिथ्यादर्शनस्योदये सति । गुणस्थानत्वमेतस्य भद्रकत्वाद्यपेक्षया ॥ २५२ ॥
मिथ्यात्वस्यानुदयेऽनंतानुबंध्युदये सति । सास्वादनसम्यग्दृष्टिः स्यादुत्कर्षात् षडावलीः ॥ २५३ ॥
सम्यक्त्वमिथ्यात्वयोगान्मुहूर्तं मिश्रदर्शनः । अविरतसम्यग्दृष्टिरप्रत्याख्यानकोदये ॥ २५४ ॥
विरताविरतस्तु स्यात् प्रत्याख्यानोदये सति । प्रमत्तसंयतः प्राप्तसंयमो यः प्रमाद्यति ॥ २५५ ॥
सोऽप्रमत्तसंयतो यः संयमी न प्रमाद्यति । उभावपि परावृत्त्या स्यातामांतर्मुहूर्तिकौ ॥ २५६ ॥
कर्मणां स्थितिघातादीनपूर्वान् कुरुते यतः । तस्मादपूर्वकरणः क्षपकः शमकश्च सः ॥ २५७ ॥
यद्बादरकषायाणां प्रविष्टानामिमं मिथः । परिणामा निवर्तंते निवृत्तिबादरोऽपि सः ॥ २५८ ॥
परिणामा निवर्तंते मिथो यत्र न यत्नतः । अनिवृत्तिबादरः स्यात् क्षपकः शमकश्च सः ॥ २५९ ॥
लोभाभिधः संपरायः सूक्ष्मकिट्टीकृतो यतः । स सूक्ष्मसंपरायः स्यात् क्षपकः शमकोऽपि च ॥ २६० ॥
अथोपशांतमोहः स्यान्मोहस्योपशमे सति । मोहस्य तु क्षये जाते क्षीणमोहं प्रचक्षते ॥ २६१ ॥

---

१ क्रोधादयः कषायाः । २ देशविरतिगुणस्थानम् । ३ उपशांतमोहः । ४ सयोगी । ५ क्षपकश्रेणिकः । ६ उपशमश्रेणिकः । ७ इममपूर्वकरणं प्रविष्टानां साधूनां यद्यस्माद्बादरकषायाणां क्रोधादीनां परिणामा निवर्तंतेऽतः स निवृत्तिबादरोऽपि कथ्यते ।

सयोगिकेवली घातिक्षयादुत्पन्नकेवलः । योगानां च क्षये जाते स एवायोगिकेवली ॥ २६२ ॥

इति जीवतत्त्वम् ॥

अजीवाः स्युर्धर्माधर्मविहाय[1]:कालपुद्गलाः । जीवेन सह पंचापि द्रव्याण्येते निवेदिताः ॥ २६३ ॥
तत्र कालं विना सर्वे प्रदेशप्रचयात्मकाः[2] । विना जीवमचिद्रूपा अकर्तारश्च ते मताः ॥ २६४ ॥
कालं विनास्तिकायाः स्युरमूर्ताः पुद्गलं विना । उत्पादविगमध्रौव्यात्मानः सर्वेऽपि ते पुनः ॥ २६५ ॥
पुद्गलाः स्युः स्पर्शरसगंधवर्णस्वरूपिणः । तेऽणुस्कंधतया द्वेधा तत्राबद्धाः किलाणवः ॥ २६६ ॥
बद्धाः स्कंधा गंधशब्दसौक्ष्म्यस्थौल्याकृतिस्पृशः । अंधकारातपोद्योतभेदच्छायात्मका अपि ॥ २६७ ॥
कर्म[3]कायमनोभाषाचेष्टितोच्छ्वासदायिनः । सुखदुःखजीवितव्यमृत्यूपग्रहकारिणः ॥ २६८ ॥
प्रत्येकमेकद्रव्याणि धर्माधर्मौ नभोऽपि च । अमूर्तानि निष्क्रियाणि स्थिराण्यपि च सर्वदा ॥ २६९ ॥
एकजीवपरिमाणसंख्यातीतप्रदेशकौ । लोकाकाशमभिव्याप्य धर्माधर्मौ व्यवस्थितौ ॥ २७० ॥
स्वयं गंतुं प्रवृत्तेषु जीवाजीवेषु सर्वतः । सहकारी भवेद्धर्मः पानीयमिव यादसाम् ॥ २७१ ॥
जीवानां पुद्गलानां च प्रपन्नानां स्वयं स्थितिम् । अधर्मः सहकार्येष यथा छायाध्वयायिनाम् ॥ २७२ ॥
सर्वगं स्वप्रतिष्ठं स्यादाकाशमवकाशदम् । लोकालोकौ स्थितं व्याप्य तदनंतप्रदेशभाक् ॥ २७३ ॥
लोकाकाशप्रदेशस्था भिन्नाः कालाणवस्तु ये । भावानां परिवर्ताय मुख्यकालः स उच्यते ॥ २७४ ॥
ज्योतिःशास्त्रे यस्य मानमुच्यते समयादिकम् । स व्यावहारिकः कालः कालवेदिभिरामतः ॥ २७५ ॥

---

१ विहाय आकाशास्तिकायः । २ प्रदेशसमूहरूपाः । ३ ज्ञानावरणीयादि कर्म ।

नवजीर्णादिरूपेण यदमी भुवनोदरे । पदार्थाः परिवर्तंते तत् कालस्यैव चेष्टितम् ॥ २७६ ॥
वर्तमाना अतीतत्वं भाविनो वर्तमानताम् । पदार्थाः प्रतिपद्यंते कालक्रीडाविडंबिताः ॥ २७७ ॥

इति अजीवतत्त्वम् ॥

मनोवचनकायानां यत्स्यात् कर्म स आश्रवः । शुभः शुभस्य हेतुः स्यादशुभस्त्वशुभस्य सः ॥ २७८ ॥

इति आश्रवतत्त्वम् ॥

सर्वेषामाश्रवाणां यो रोधहेतुः स संवरः । कर्मणां भवहेतूनां जरणादिह निर्जरा ॥ २७९ ॥

इति संवरनिर्जरे तत्त्वे ॥

सकषायतया जीवः कर्मयोग्यांस्तु पुद्गलान् । यदादत्ते स बंधः स्याज्जीवास्वातंत्र्यकारणम् ॥ २८० ॥
प्रकृतिस्थित्यनुभावप्रदेशा[1] विधयो[2]ऽस्य तु । प्रकृतिस्तु स्वभावः स्याज्ज्ञानावृत्त्यादिरष्टधा ॥ २८१ ॥
ज्ञानदृष्ट्यावृती[3] वेद्यं मोहनीयायुषी अपि । नामगोत्रांतरायाश्च मूलप्रकृतयो मताः ॥ २८२ ॥
निकर्षोत्कर्षतः कालनियमः कर्मणां स्थितिः[4] । अनुभावो विपाकः[5] स्यात् प्रदेशोंऽशप्रकल्पनम् ॥ २८३ ॥
मिथ्यादृष्टिरविरतिप्रमादौ च कुधादयः । योगेन सह पंचैते विज्ञेया बंधहेतवः ॥ २८४ ॥

इति बंधतत्त्वम् ॥

अभावे बंधहेतूनां घातिकर्मक्षयोद्भवे । केवले सति मोक्षः स्याच्छेषाणां कर्मणां जये ॥ २८५ ॥

---

१ बन्धनामानि चत्वारि । २ प्रकाराः । ३ ज्ञानावरणं दर्शनावरणं च । ४ जघन्यत उत्कृष्टतश्च कर्मणां कालनियमः सा स्थितिः। ५ कर्मणां विपाकोऽनुभाव इत्यादि ।

सुरासुरनरेन्द्राणां यत् सुखं भुवनत्रये । स स्यादनंतभागोऽपि न मोक्षसुखसंपदः ॥ २८६ ॥

इति मोक्षतत्त्वम् ॥

एवं तत्त्वानि जानानो जनो जगति जातुचित् । न निमज्जति संसारे वारिधाविव तारकः ॥ २८७ ॥
एवं देशनया भर्तुः प्राज्याः पर्यव्रजञ्जनाः । भेजे हरिस्तु सम्यक्त्वं श्रावकत्वं च सुप्रभः ॥ २८८ ॥
व्यरंसीदादिपौरुष्यां देशनातो जगत्पतिः । यशास्तत्पादपीठस्थो गणभृद्देशनां व्यधात् ॥ २८९ ॥
तत्राप्यवरपौरुष्यां देशनाविरते सति । नत्वा प्रभुं ययुः स्वौकैः शक्रोपेंद्रबलादयः ॥ २९० ॥
ततः स्थानात् प्रभुरपि ग्रामाकरपुरादिषु । प्रबोधयन् भव्यजंतून् विजहार वसुंधराम् ॥ २९१ ॥
षष्टिः षट् च सहस्राणि श्रमणानां महात्मनाम् । तथा चतुर्दशपूर्वभृतां नव शतानि च ॥ २९२॥
चतुःसहस्री त्रिशती चावधिज्ञानशालिनाम् । मनःपर्ययिणां पंच चत्वारिंशच्छतानि च ॥ २९३ ॥
तथा पंच सहस्राणि केवलज्ञानधारिणाम् । जातवैक्रियलब्धीनां सहस्राण्यष्ट योगिनाम् ॥ २९४ ॥
त्रिसहस्री शते द्वे च वादलब्धिमतां पुनः । आर्यिकाणां सहस्राणि द्वाषष्टिर्वीतपाप्मनाम् ॥ २९५ ॥
श्रावकाणां पुनर्लक्षद्वयं षष्टिः शतानि च । श्राविकाणां चतुर्लक्षी चतुर्दशसहस्र्यपि ॥ २९६ ॥
त्र्यब्दोनान्यब्दलक्षाणि सप्त सार्धानि केवलात् । महीं विहरमाणस्य परिवारोऽभवत् प्रभोः ॥ २९७ ॥
स्वं मोक्षकालं ज्ञात्वा तु संमेताद्रिमगात् प्रभुः । साधुसप्तसहस्र्या च सहानशनमाददे ॥ २९८ ॥
मासांते चैत्रविशदपंचम्यां पौष्णगे विधौ । समं तैर्मुनिभिर्मोक्षं प्रपेदेऽनंतजित् प्रभुः ॥ २९९ ॥

---

१ बहवः । २ स्वस्थानम् । ३ पापरहितानाम् ।

## पंचमः सर्गः ।

### श्रीधर्मनाथचरित्रम् ।

ॐ धर्मगंगाहिमवतः कुतीर्थध्वांतभास्वतः । श्रीमतो धर्मनाथस्य चरणौ शरणं श्रिये ॥ १ ॥
तस्यैव तीर्थनाथस्य चरित्रमिदमुच्यते । संसारसिंधुतरणे सेतुबंधवदायतम् ॥ २ ॥
धातकीखंडद्वीपे प्राग्विदेहे भरताभिधे । विजये भद्दिलपुरं नाम्नास्ति विपुलं पुरम् ॥ ३ ॥
तस्मिन् दृढरथो नाम महीपेरिवृढोऽभवत् । दोर्भ्यां दृढाभ्यां भ्राजिष्णुर्दंताभ्यामिव कुंजरः ॥ ४ ॥
तेजांसि जग्रसे राज्ञां ज्योतिषामिव भास्करः । तद्दंडानां भाजनं च सोऽम्भोधिः सरितामिव ॥ ५ ॥
स महत्यपि साम्राज्ये नोत्सेकं जातुचिद्दधौ । विवेकी तूलतरलां जानन्नैन्द्रीमपि श्रियम् ॥ ६ ॥
तत्तद्वैषयिकं सौख्यमाप्नुवन्नपि सोऽकरोत् । आगंतुरिव संसारवासे नास्थां मनागपि ॥ ७ ॥
भोगेषूद्यतवैराग्यः स्वशरीरेऽपि निःस्पृहः । स राज्यं प्राज्यमप्यौज्झच्छरीरमललीलया ॥ ८ ॥
संसारिकमहादुःखरोगैकभिषजस्ततः । ययौ स राजा विमलवाहनस्यांतिकं गुरोः ॥ ९ ॥
तस्मादुपाददे रुच्या वेतनेनेव दुर्लभम् । चारित्ररत्नममलं स नृरत्नशिरोमणिः ॥ १० ॥
योगस्य मातरमिव समतामेव धारयन् । परीषहान् सहमानः स तेपे दुस्तपं तपः ॥ ११ ॥

---

१ कुतीर्थमेव ध्वांतं तस्मिन् सूर्यसदृशस्य । २ मह्याः स्वामी । ३ तेषां राज्ञां दंडानाम् । ४ गर्वम् । ५ तूलवच्चंचलाम् । ६ अतिथिवत् । ७ यथा मूल्येन रत्नमुपाददे तथा ।

आचांतैः श्रुतगंडूषैः पुण्यैस्तीर्थोदकैरिव । अपावयत् स आत्मानं विषयम्लेच्छदूषितम् ॥ १२ ॥
अर्हद्भक्तिप्रभृतीनि स्थानकानि परामृशन् । सुधीरुपार्जयामास तीर्थकृन्नाम कर्म सः ॥ १३ ॥
काले च कृत्वानशनं स विपद्य समाहितः । विमाने वैजयंताख्ये महर्द्धिरमरोऽभवत् ॥ १४ ॥
इतश्च जंबूद्वीपेऽस्मिन्नस्मिन् वर्षे च भारते । अस्ति रत्नपुरं नाम तत्तद्रत्नाकरः पुरम् ॥ १५ ॥
पार्श्वयो रत्नसोपानरश्मिजालैर्मिथो युतैः । सेतुबद्धा इवाभांति तत्रोपवनदीर्घिकाः ॥ १६ ॥
सार्हच्चैत्यानि हैमानि सादर्शानि पदे पदे । तत्राख्यांति गृहाण्येव त्रिपुमर्थीं सदोद्यताम् ॥ १७ ॥
तस्मिन्मरकतैर्बद्धा शोभते मार्गभूर्निशि । प्रतिबिंबितनक्षत्रा मुक्तास्वस्तिकभागिव ॥ १८ ॥
तत्रौकोनागदंतानां कंठेष्विभ्यवधूजनैः । हाराः प्रलंबिता यांति कंठाभरणरूपताम् ॥ १९ ॥
शीतमुद्यानवापीभिर्घर्मे हर्म्यमहानसैः । वर्षा गजमदैर्बिभ्रत्तत्कालत्रयभागिव ॥ २० ॥
तत्रासीन्नृपतिर्भानुर्भानुमानिव तेजसा । वैरिकक्षबृहद्भानुर्भानुच्चैरमलैर्गुणैः ॥ २१ ॥
परिमातुमलंभूष्णुर्माभूदपि बृहस्पतिः । तांस्तांस्तरंगिणीनाथतरंगानिव तद्गुणान् ॥ २२ ॥
एकेन तेनात्तकरा नापश्यदपरं पतिम् । भूरियं कुलजातेव ललना शीलशालिनी ॥ २३ ॥
श्रियं स्वभावचपलां संयम्य सुदृढैर्गुणैः । स्वदोःस्तंभे स्थिरीचक्रे स वारणवधूमिव ॥ २४ ॥

---

१ शास्त्राण्येव गंडूषास्तैः । २ समाधिमान् । ३ रत्नमयसोपानानां किरणैर्वाप्यो बद्धसेतुका इव शोभन्त इत्यर्थः । ४ गृहाणां नागदन्ता दन्तकाः "खुंटि" इति प्रसिद्धास्तेषाम् । ५ बृहद्भानुरग्निः । ६ भाति शोभत इति भान् । ७ आत्तो गृहीतो हस्तोऽन्यत्र षष्ठांशभागो यस्याः । ८ हस्तिनीपक्षे रज्जुभिः ।

प्रौढप्रतापो मार्तंडइव प्रत्यर्थिंभूभुजाम् । संजहार स तेजांसि प्रदीपानामिवान्वितः ॥ २५ ॥
विजेतुकामो नृपतीनध्यारोपयति स्म सः । न भ्रूलतामप्यलिके किं पुनः कार्मुके गुणम् ॥ २६ ॥
अभवत्तस्य पादाब्जोपासनेऽति[1]मधुव्रता । कलत्रं सुव्रता नाम लोकोत्तरसतीव्रता ॥ २७ ॥
कोकिलाभिः कलालापो हंसीभिर्गतिचातुरी । मृगीभिर्दृष्टिविक्षेपः शिक्षितानि ततो ध्रुवम् ॥ २८ ॥
लज्जा सहचरी तस्याः शीललक्ष्मीः [3]प्रसाधिका । कौलीन्यं कं[4]चुकिवरः सहजोऽयं परिच्छदः ॥ २९ ॥
पतिभक्तिरलंकारस्तस्याः समुचितोऽभवत् । अलंकार्यमलंकारजातं हारादि चापरम् ॥ ३० ॥
तदा च वैजयंतस्थो जीवो दृढरथस्य सः । प्रकृष्टं सुखनिमग्नो निजमायुरपूरयत् ॥ ३१ ॥
च्युत्वा ततो राधशुक्लसप्तम्यां पुष्यगे विधौ । सुव्रतास्वामिनीकुक्षौ स जीवः समवातरत् ॥ ३२॥
गजप्रभृतिकांस्तीर्थकरजन्माभिसूचकान् । चतुर्दश महास्वप्नांस्तदादर्शच्च सुव्रता ॥ ३३ ॥
माघशुक्लतृतीयायां पुष्ये भे वज्रलांछनम् । स्वर्णवर्णं सुव्रतादेव्यसूत समये सुतम् ॥ ३४ ॥
दिक्कुमार्यः षट्पंचाशदेत्य भोगंकरादयः । स्वामिनः स्वामिमातुश्च सूतिकर्माणि चक्रिरे ॥ ३५ ॥
तत्कालं पालकारूढः सौधर्मेन्द्र उपेत्य च । आदाय स्वामिनं निन्ये मेरुपर्वतमूर्धनि ॥ ३६ ॥
अपिपांडुकंबलायां रत्नसिंहासने हरिः । आसांचक्रे स्वांकसिंहासनारोपिततीर्थकृत् ॥ ३७ ॥
अथाच्युतप्रभृतिभिस्त्रिषष्ट्या वासवैः प्रभोः । विधिवद्विदधे स्नात्रं पवित्रैस्तीर्थवारिभिः ॥ ३८ ॥

---

१ भाले । २ मधुव्रतं भ्रमरमतिक्रांता भ्रमरीसदृशीत्यर्थः । ३ अलंकारपरिधापिनी दासी । ४ श्रेष्ठः कञ्चुकी ।

चेत्युपचक्रमे ॥ ३९ ॥
ईशानांके निवेश्येशं स्नपयामास वज्रभृत् । विलिप्य पूजयित्वा च स्तोतुं
नमस्तुभ्यं पंचदशायार्हते परमेश्वर । परमध्येयरूपाय परमध्यायिनेऽपि च ॥ ४० ॥
देवेभ्यो दानवेभ्योऽपि मर्त्यान्मन्ये गरीयसः । त्रैलोक्यवंद्यो यत्र त्वमुदभूस्तीर्थनायकः ॥ ४१ ॥
अपागभरतवर्षेऽस्मिन् ममाद्यैवास्तु मर्त्यता । मोक्षसाधनसाधीयस्त्वच्छिष्यत्वजिघृक्षया ॥ ४२ ॥
नारकेभ्यो नाकसदां को भेदः सुखिनामपि । भवेद्येषां प्रमत्तानां न भवत्पाददर्शनम् ॥ ४३ ॥
विजृंभितं तावदेव घूकैरिव कुतीर्थिकैः । न यावत्रिजगन्नाथ रवेरिव तवोदयः ॥ ४४ ॥
तव वर्षाबुदस्येव धर्मदेशनावारिणा । भरतार्धं सरइवाशेषं पूरिष्यतेऽचिरात् ॥ ४५ ॥
अनंतान् देहिनो मुक्तिं प्रापयन् परमेश्वर । अरिदेशमिवोर्वीशस्त्वं कर्ता भवमुद्वसम्[3] ॥ ४६ ॥
त्वत्पादपद्मलीनेन षट्पदेनेव चेतसा । भगवन् कल्पवासेऽपि प्रयांतु मम वासराः ॥ ४७ ॥
स्तुत्वेति स्वामिनं शक्रो गृहीत्वेशानवासवात् । नीत्वा च सुव्रतादेव्याः पार्श्वेऽमुंचद्यथास्थिति ॥ ४८ ॥
गर्भस्थेऽस्मिन् धर्मविधौ यन्मातुर्दोहदोऽभवत् । तेनास्य धर्म इत्याख्यामकार्षीद्भानुभूपतिः ॥ ४९ ॥
अत्यगाच्छैशवं स्वामी क्रीडन् सुरकुमारकैः । प्रापच्च यौवनं पंचचत्वारिंशद्धनून्नतः ॥ ५० ॥
चिरेप्सितं पूरयितुं पित्रोः कौतूहलं प्रभुः । भोग्यकर्माणि भोक्तुं च चक्रे दारपरिग्रहम् ॥ ५१ ॥
वर्षलक्षद्वये सार्धे जन्मतोऽतिगते सति । पर्यग्रहीद्राज्यभारं स्वामी पित्रनुरोधतः ॥ ५२ ॥
पंचलक्षाणि वर्षाणां शशास वसुधां विभुः । प्राप्तकालां तदा दीक्षां चिंतयामास च स्वयम् ॥ ५३ ॥

१ मोक्षसाधने साधीयः श्रेष्ठं तव शिष्यत्वं तद् ग्रहीतुमिच्छया । २ देवानाम् । ३ राजा यथा शत्रुदेशं निर्जनं करोति तथा ।

तीर्थं प्रवर्तय स्वामिन्निति लौकांतिकैः प्रभुः । विज्ञप्तो वार्षिकं दानं दीक्षानाद्या मुखं ददौ ॥ ५४ ॥
अभिषिक्तोऽमरैर्नागदत्ताख्यां शिबिकां विभुः । अधिरुह्य ययौ रम्यमुद्यानं वप्रकांचनम् ॥ ५५ ॥
प्रियंगु[1]मंजरीपुंजमत्तगुंजदलिव्रजम् । पुंनागो[2]त्तंससंदर्भव्याकुलोद्यानपालिकम् ॥ ५६ ॥
पौरांगनामृज्यमानस्वमुखं रोध्ररेणुभिः । शोभितं पुष्पितैः कुंदैः स्मरायुधगृहैरिव ॥ ५७ ॥
लवली[3]पुष्पलवनव्यग्रारामिकदारकम् । मुचुकुंद[4]मरंदोदबिंदुसार्द्रितभूतलम् ॥ ५८ ॥
बद्धोर्वीकं मरकतैरिवोन्मरुचकं[5] ततः । प्रविवेश तदुद्यानं शिशिरश्रीमयं प्रभुः ॥ ५९ ॥
॥ चतुर्भिः कलापकम् ॥

माघशुक्लत्रयोदश्यां पुष्ये भे चापरेऽहनि । समं राजसहस्रेण षष्ठेन प्राव्रजत् प्रभुः ॥ ६० ॥
द्वितीयेऽह्नि सौमनसे धर्मसिंहनृपौकसि । चकार परमान्नेन पारणं परमेश्वरः ॥ ६१ ॥
दिव्यं समभवत्तत्र वसुधारादिपंचकम् । धर्मसिंहो व्यधाद्रत्नपीठं स्वामिपदावनौ ॥ ६२ ॥
निरपेक्षः शरीरेऽपि समीरणइवास्खलन् । ततः स्थानात् प्रववृते क्ष्मां विहर्तुं जगद्गुरुः ॥ ६३ ॥
इतश्च जंबूद्वीपेऽस्मिन् विदेहेष्वपरेषु च । राजा पुरुषवृषभोऽशोकायामभवत् पुरि ॥ ६४ ॥
सदा विरक्तः संसारात्तात्त्विकः[7] सात्विकश्च सः । पर्यव्राजीत् पादमूले प्रजापालमहामुनेः ॥ ६५ ॥

---

१ प्रियंगुलताया मंजरीणां पुंजं मत्तोऽत एव गुंजन्नलिव्रजो भ्रमरसमूहो यस्मिंस्तत् । २ पुंनागपुष्पाणामलंकारग्रथने व्याकुला उद्यानपालस्त्रियो यस्मिंस्तत् । ३ लवनं छेदनम् । ४ मुचुकुंदपुष्पाणां मकरंदस्य जलबिंदुभिरार्द्रं भूतलं यस्य । ५ उत्फुल्ला मरुचकवृक्षा यस्मिंस्तत् । ६ तन्नाम्नि नगरे । ७ तत्ववेत्ता ।

दुस्तपं स तपस्तप्त्वा प्राप्ते काले विपद्य च । अष्टादशसमुद्रायुः सहस्रारे सुरोऽभवत् ॥ ६६ ॥
गतेषु तस्य देवस्यायुषः षोडशवार्धिषु । इहैव पोतनपुरे राजा विकट इत्यभूत् ॥ ६७ ॥
कुंजरः कुंजरेणेव विजिग्ये स्वभुजौजसा । रणांगणे राजसिंहाभिधानेन स भूभुजा ॥ ६८ ॥
पराजयेन तेनाथ ह्रिया राज्यं स्वसूनवे । दत्वा गत्वा चातिभूतेः पादांते व्रतमाददे ॥ ६९ ॥
तपः स तीव्रं तेपे च निदानमिति चाकरोत् । भवांतरे राजसिंहोच्छेदाय स्यामहं ध्रुवम् ॥ ७० ॥
इत्थं कृतनिदानः सन् कालयोगाद्विपद्य सः । कल्पे द्वितीय उत्पेदे [1]द्व्यर्णवायुः सुरोत्तमः ॥ ७१ ॥
राजसिंहनृपः सोऽपि चिरं भ्रांत्वा भवार्णवम् । भरतांतर्हरिपुरे निशुंभोऽभून्महीपतिः ॥ ७२ ॥
स कृष्णवर्णः पंचाग्रचत्वारिंशद्धनून्नतः । दशवत्सरलक्षायुर्भुव्यभूदुग्रशासनः ॥ ७३ ॥
अपाग्भरतवर्षार्धं साधयित्वैकलीलया । प्रतिविष्णुः सोऽर्धचक्री पंचमः समजायत ॥ ७४ ॥
इतश्चात्रैव भरते नगरेऽश्वपुराभिधे । शिवो नामाभवद्राजा [2]शिवानामेकमास्पदम् ॥ ७५ ॥
तस्याभूतामुभे पत्न्यौ नामतो विजयाम्मके । नितांतं वल्लभे मूर्तिमत्यौ कीर्तिश्रियाविव ॥ ७६ ॥
पुरुषवृषभजीवः सहस्रारादथ च्युतः । [3]चतुःस्वप्नाख्यातबलजन्मागाद्विजयोदरे ॥ ७७ ॥
पूर्णे काले च विजयास्वामिनी सुषुवे सुतम् । [4]अवदातं वपुष्मंतमिव पत्युर्यशश्चयम् ॥ ७८ ॥
उत्सवेन [5]गरिष्ठेन शिवोऽथ दिवसे शुभे । [6]सुदर्शनत्वात्तस्याख्यां सुदर्शन इति व्यधात् ॥ ७९ ॥

---

१ द्विसागरोपमायुः २ कल्याणानाम् । ३ चतुर्भिः स्वप्नैराख्यातं बलभद्रस्य जन्म येन सः । ४ निर्मलम् । ५ महता ।
६ सुष्ठु दर्शनं यस्य तस्य भावस्तत्त्वं तस्मात् ।

इतो विकटजीवोऽपि द्वितीयात् कल्पतश्च्युतः । ससस्वप्नाख्यातविष्णुजन्मागादम्मकोदरे ॥ ८० ॥
असूत समये सापि तनयं पूर्णलक्षणम् । इन्द्रनीलमणिनीलं नीलोत्पलमिवापगा ॥ ८१ ॥
एष सिंहः पुरुषेषु पौरुषेणातिशायिना । ततोऽस्य पुरुषसिंह इत्याख्यामकरोन्नृपः ॥ ८२ ॥
धात्रीजनैर्लाल्यमानौ क्रीडंतौ तौ परस्परम् । नीलपीतांबरौ तालताक्ष्यांकौ वृद्धिमीयतुः ॥ ८३ ॥
तौ साक्षिणमुपाध्यायं कृत्वा जगृहतुः कलाः । सावधानौ स्वनिखातसंनिधानंनिधानवत् ॥ ८४ ॥
अभूतां कवचहरौ भ्रातरौ तौ क्रमेण च । प्रतिमल्लाविव द्यावापृथिव्योश्च व्यराजताम् ॥ ८५ ॥
परस्परं स्नेहलौ तावश्विनाविव सोदरौ । अत्यंतभक्तौ च पितुर्व्यवर्तेतां पदातिवत् ॥ ८६ ॥
अन्यदा कस्यचिद्दर्पभ्राजः पर्यंतभूपतेः । साधनाय शिवः प्रैषीद्दिव्यास्त्रमिव सीरिणम् ॥ ८७ ॥
स्नेहात् पुरुषसिंहोऽपि तं प्रयाणानि कानिचित् । अन्वगात् प्रेमबंधो हि वज्रलेपानुहारकः ॥ ८८ ॥
कथंचिद्बलभद्रेण प्रत्यादिष्टोऽनुयानतः । तत्रैवास्थाद्धरिः कष्टं यूथभ्रष्ट इव द्विपः ॥ ८९ ॥
विनोदैर्विविधैस्तत्र दुःखं भ्रातृवियोगजम् । स यावत् क्षपयंस्तस्थौ तावदागात् पितुः पुमान् ॥ ९० ॥
तेनार्पितं पितुर्लेखं मूर्धन्याधत्त माधवः । शीघ्रमागच्छ वत्सेति तत्रैक्षिष्टाक्षराण्यपि ॥ ९१ ॥
स संभ्रान्तस्तमित्यूचे कच्चित् कुशलमंबयोः । कुशलं तातपादानां शीघ्राह्वानं च किं मम ॥ ९२ ॥
पुरुषोऽप्यब्रवीदेवमंगे दाहज्वरो महान् । उत्पन्नोऽस्तीति देवस्त्वां समाह्वयति सत्वरम् ॥ ९३ ॥

---

१ नदी. । २ यथा स्वेन निखातं समीपस्थं निधानं गृह्णाति तद्वत् । ३ वज्रलेपसदृशः ४ निषिद्धः ५ मात्रोः ।

पितुर्दाहज्वरोदंताघातात् ससछदादिव । विधुरः प्रास्थित हरिर्दुःखं नातः परं सताम् ॥ ९४ ॥
प्रपेदे च द्वितीयेऽह्नि नगरीं स्वां जनार्दनः । तादृग्दुःखं हि जात्यानां दवाग्नीयेत वर्त्मनि ॥ ९५ ॥
योज्यमानैः खंड्यमानैः क्वथ्यमानैरनेकशः । वर्त्यमानैश्च विविधैरौषधैर्व्यग्रकिंकरम् ॥ ९६ ॥
रसवीर्यविपाकैश्चौषधानां बलाबलम् । विचारयद्भिश्चतुरैर्वैद्यवर्यैरधिष्ठितम् ॥ ९७ ॥
आत्मरक्षै रक्ष्यमाणतुमुलं करसंज्ञया । द्वाःस्थैर्भ्रूसंज्ञया दूरे स्थाप्यमानं भिषग्जनम् ॥ ९८ ॥
ज्वरार्तेनाश्रितं पित्रा प्रविश्य सदनं हरिः । आहरन्निव तद्दुःखमभूत्तद्दुःखदुःखितः ॥ ९९ ॥
॥ चतुर्भिः कलापकम् ॥

प्राणमच्च पितुः पादौ पाणिभ्यां संस्पृशन् हरिः । बाष्पायमाणैर्नयनैः स्नपयन्निव भक्तितः ॥ १०० ॥
शिवः सुतकरस्पर्शाद्गाढमाश्वसिति स्म च । इष्टस्य दर्शनेनापि शं स्यात् स्पर्शेन किं पुनः ॥ १०१ ॥
भूयो भूयोऽपि शिवराट् संस्पृशन् पाणिना सुतम् । रोमांचमधिकं दध्रे शैत्यमासादयन्निव ॥१०२ ॥
शिवराजोऽप्युवाचैवं कथं क्षामतरोदरः । शुष्काधरदलश्च त्वमुपदावमिव द्रुमः ॥ १०३ ॥
अथ विष्णोः पुमानूचे देव देवस्य दारुणाम् । श्रुत्वा दशामिमां सद्य स्त्वां द्रष्टुमचलद्धरिः ॥ १०४ ॥
द्वाभ्यां दिनाभ्यां चात्रागादभुंजानोऽपिबन् पयः । त्वत्पादान् संस्मरन् भक्त्या स्मृतविंध्य इव द्विपः १०५
आकर्ण्य तच्च द्विगुणं दुःखभागादिशच्छिवः । गंडे पिंटकवच्चक्रे किमनर्थांतरं त्वया ॥ १०६ ॥

---

१ कुलजानाम् । २ सुखम् । ३ कृशोदरः । ४ दावानलसमीपे । ५ स्फोटकस्योपरि स्फोटकवत् ॥

गत्वा सपरिवारोऽपि भोजनावसरं कुरु । सर्वार्थसाधकः कायश्चलत्येष हि भोजनात् ॥ १०७ ॥
एवं पित्रा समादिष्टो भूयो भूयोऽपि साग्रहम् । सदुःखो बुभुजे किंचिद्विष्णुः [1]समदर्दन्तिवत् ॥ १०८ ॥
श्री[2]खंडमप्यनादायावसानश्चान्यवाससी । नाटयन्नतिदुःखेना[3]वतंसे न कुलस्थितम् ॥ १०९ ॥
भुक्तमात्रो निजावासात् पादचारी जनार्दनः । पितुर्जगाम सदनं दीनाशेषपरिच्छदः ॥ ११० ॥
॥ युग्मम् ॥
तत्र च प्रविशन् विष्णुर्जननीदास्ययैकया । अग्रे भूत्वा सकरुणं व्यज्ञपीदमुदश्रिया ॥ १११ ॥
कुमार परित्रायस्व परित्रायस्व नन्वसौ । जीवत्यपि महाराजे देवीदं [4]दुर्व्यवस्यति ॥ ११२ ॥
तदाकर्ण्य वचो विष्णुः संभ्रांतो मातुरालयम् । जगाम वीक्षांचक्रे च मातरं ब्रुवतीमिति ॥ ११३ ॥
पतिप्रसादादुद्भूता ये प्राज्या रत्नराशयः । अनंतं कांचनं यच्च ये वा रजतसंचयाः ॥ ११४ ॥
मुक्तामया वज्रमया जात्यरत्नमयाश्च ये । संमिश्रा ये च नेपथ्यसमुदायाः सहस्रशः ॥ ११५ ॥
यच्चान्यत् कोशसर्वस्वं सप्तक्षेत्र्यां तदर्प्यताम् । महापथप्रस्थितानां पाथेयं हीदमादिमम् ॥ ११६ ॥
पत्युर्वि[5]पत्तौ वैधव्यसहास्मि न मनागपि । अहं तदग्रे यास्यामीत्यनलः सज्ज्यतां द्रुतम् ॥ ११७ ॥
इति ब्रुवाणां जननीं [6]जननीं दुःखसंपदः । उपेत्य नत्वा च हरिर्व्याहरद्गद्गदाक्षरम् ॥ ११८ ॥
मातर्मातस्त्वमपि मां मंदभाग्यं किमुज्झसि । अहो विरुद्धं मे दैवं देव्यैवं यत् प्रचक्रमे ॥ ११९ ॥
अम्मादेव्यप्युवाचैवं [7]तज्ज्ञैः सम्यक् परीक्षितः । त्वत्तातस्योपस्थितोऽयं रोगः प्राणहरो हरे ॥ १२० ॥

१ मदसहितो गजो यथा सदुःखं स्वल्पं भुंक्ते तद्वत् । २ चंदनम् । ३ अवतंसे स्थाने नकुलस्थितिवत् । ४ अयोग्यं व्यवस्यतीत्यर्थः । ५ नाशे । ६ जनयित्रीम् । ७ वैद्यैरित्यर्थः ।

अथ सिक्तः पयस्कुंभैर्लब्धसंज्ञो जनार्दनः । हा तात तात तातेति क्रंदन्नुत्तिष्ठति स्म च ॥ १३५ ॥
न किं संतप्यते तेऽङ्गं गुणः कस्यौषधस्य वा । प्रत्ययः कस्य वैद्यस्य सुखनिद्राथवाद्य किम् ॥ १३६ ॥
ब्रूहि तात प्रसादं मे कृत्वेति स्नेहमोहितः । प्रललाप क्षणं विष्णुर्विललाप च तत्क्षणम् ॥ १३७ ॥
शार्ङ्गभृद्धैर्यमादाय गोत्रवृद्धैः प्रबोधितः । अग्नौ पित्रंगसंस्कारं चकारागुरुचंदनैः ॥ १३८ ॥
विधाय च निवापादि स्वपर्षदि निषद्य च । बलाय प्राहिणोल्लेखं पितृव्यापत्तिसूचकम् ॥ १३९ ॥
तं प्रांतनृपतिं दस्मं साधयित्वा बलोऽपि हि । दुःखितस्तेन लेखेन त्वरमाणः समाययौ ॥ १४० ॥
अन्योऽन्यकंठलग्नौ तौ मुक्तकंठं[1] प्ररोदिनौ । बलदेववासुदेवौ रोदयामासतुः सभाम् ॥ १४१ ॥
बोध्यमानावाप्तजनैः कथंचिद्धैर्यमापतुः । जहतुश्च पितुः स्नेहं मंदं मंदमुभावपि ॥ १४२ ॥
तिष्ठंतौ विचरंतौ च जल्पंतौ मौनसंस्थितौ । दृशोरिवाग्रे पितरं तौ ध्येयवदपश्यताम् ॥ १४३ ॥
तावेवं यावदासाते पितृशोकसमाकुलौ । तावदागात्तत्र दूतो निशुंभस्यार्धचक्रिणः ॥ १४४ ॥
द्वाःस्थेन कथितः पूर्वं प्रविश्य च तदाज्ञया । बलदेववासुदेवौ स नत्वैवमभाषत ॥ १४५ ॥
श्रुत्वा लोकाद्भिवराजं धर्मराजपथस्थितम्[2] । दधार शोकमस्तोकं निशुंभः सुप्रभुः स वः ॥ १४६॥
युष्मत्पितुः स्मरन् भक्तिं स कृतज्ञशिरोमणिः । युष्मत्पार्श्वे प्राहिणोन्मामुपदिश्येति वाचिकम्[3] ॥ १४७ ॥
अद्यापि हि युवां बालौ द्विषां परिभवास्पदम् । पदं च युवयोः पित्र्यं महदेतन्मयार्पितम् ॥ १४८ ॥
कुमारौ मामुपेत्येह तिष्ठतं निरुपद्रवौ । नदीमध्यस्थितानां हि किं करोति दवानलः ॥ १४९ ॥

---

१ उच्चैः स्वरम् । २ यमराजमार्गस्थितं मृतमित्यर्थः । ३ संदेशम् ।

लघीयांसौ गरीयांसौ विधातव्यौ मया युवाम् । चिरं कृताया वां पित्रा भक्तेरानृण्यमिच्छता ॥ १५० ॥
इत्युक्तयोस्तयोः क्रोधोऽभूच्छोकश्च न्यवर्तत । रसांतरेण हि रसो बाध्यते बलवानपि ॥ १५१ ॥
भ्रुवमुन्नमयन्नेकां किंचित् साचीकृतालिकः । अथाबभाषे पुरुषसिंहः सिंह इव क्रुधा ॥ १५२ ॥
इक्ष्वाकुकुलचंद्रस्य तस्य विश्वोपकारिणः । अस्मत्पितुरस्तमये कस्कोऽभून्न शुचां पदम् ॥ १५३ ॥
राजानोऽन्येऽपि शुशुचुर्निशुंभोऽपि शुशोच यत् । तेन पैशून्यमस्य स्याद्दद्याच्चेन्नेति वाचिकम् ॥१५४ ॥
बालकस्यापि सिंहस्य को हि देशं प्रयच्छति । प्रवर्धयति तं को वा कुतस्तस्य पराभवः ॥ १५५ ॥
इदानीमावयोरेवं स जल्पन् किं न लज्जते । आसत्वव्याजतोऽस्माकं न्यक्कारी स द्विषन् खलु ॥ १५६ ॥
सोऽस्तु मित्रममित्रो वोदासीनो वा तव प्रभुः । निरपेक्षा वयं तस्य दोरपेक्षैव दोष्मताम् ॥ १५७ ॥
दूतोऽप्यूचे पितृतुल्यममित्रीकुर्वतोऽद्य तम् । सुव्यक्तं बालकत्वं ते शैवे शिवमनिच्छतः ॥ १५८ ॥
त्वमद्याप्यनभिज्ञोऽसि राजनीतेः कुमारक । उत्पादयस्यरिं तत्तं कुक्षिमामृज्य शूलवत् ॥ १५९॥
त्वदुक्तं स्वामिने नैतद्वक्ष्ये तत् कुरु मद्वचः । त्वत्प्रसादात् क्षेममस्तु चिरं ते सह बंधुना ॥ १६० ॥
अन्यथा तु द्विषन् भावी स एव न चिरात्तव । तस्मिन् रुष्टे कृतांते च जीवितस्यापि संशयः ॥१६१॥
एवं तदुक्त्याभ्यधिकमुद्यत्क्रोधोऽभ्यधाद्धरिः । त्वमेव दूत दूतोऽसि निरपेक्षः स्वजीविते ॥ १६२ ॥
दूतानां वाक्प्रपंचैकछेकानां त्वादृशां गिरा । निर्विषः फटयेवाहिः स भेषयति पार्थिवान् ॥ १६३ ॥

---

१ वक्रीकृतभालः । २ यदि स ईदृशं वाचिकं न दद्यात्तर्हस्य शुचो ज्ञापकं स्यात्तत्तु नास्तीति भावः । ३ तिरस्कर्ता । ४ बाहुपेक्षैव । ५ हे शिवपुत्र । ६ मद्वचनानुसरणरूपात् त्वत्प्रसादादित्यर्थः । ७ यमरूपे । ८ छेकश्चतुरः । ९ फणया ।

गच्छ मास्मद्वचो गोप्यं शंस स्वस्वामिनेऽखिलम्। शत्रुर्जावीति सोऽस्मान्निर्वध्यकोटौ कृतोऽस्त्यलम् १६४
एवमुक्तः ससंरम्भमुत्थाय रत्नसेन सः। दूतो गत्वा निशुंभाय सर्वमाख्यद्यथातथम् ॥ १६५ ॥
तदाकर्ण्य वचः क्रुद्धो निशुंभोऽरिनिशुंभनः। सेनाभिश्छादयन्नुर्वीं प्रतस्थेऽश्वपुरं प्रति ॥ १६६ ॥
निशुंभं प्रस्थितं श्रुत्वा विष्णुनाप्यरिजिष्णुना। सद्यः सर्वाभिसारेण प्रतस्थे साग्रजन्मना ॥ १६७ ॥
निशुंभपुरुपसिंहौ मिथः प्रमथनोद्यतौ। संगच्छेते स्मार्धमार्गे मत्ताविव वनद्विपौ ॥ १६८ ॥
युध्यंते स्म द्वयोः सैन्याः क्षोभयंतोऽपि रोदसी। द्वेडाकार्मुकटंकारकरास्फालनशब्दितैः ॥ १६९ ॥
अजनिष्ट क्षणेनापि क्षयकालइव क्षयः। अक्षौहिण्योरुभयोरप्यात्मरक्षानपेक्षयोः ॥ १७० ॥
अन्वीयमानो हलिना पवनेनेव पावकः। पांचजन्यमपूरिष्ट शार्ङ्गधन्वा रथस्थितः ॥ १७१ ॥
महता तन्निनादेन परसैन्यानि सर्वतः। पतत्कुलिशनिर्घोषेणेव घोरेण चुक्षुभुः ॥ १७२ ॥
तिष्ठ तिष्ठ भटंमन्येत्युच्चकैराक्षिपन्नथ। रथी प्रतिहरिर्योद्धुमुपतस्थे हरिं प्रति ॥ १७३ ॥
आस्फालयामासतुस्तौ हरिप्रतिहरी धनुः। कोपाग्नमन्निजनिजभ्रकुटीभंगभीषणम् ॥ १७४ ॥
अवर्षतामुभौ बाणैर्धारासारैरिवांबुदौ। सिंहनादैस्त्रासयंतौ मृगीरिव नभश्चरीः ॥ १७५ ॥
निरंतरं निपतितैर्विशिखप्रकरैस्तयोः। बभार रणभूर्वेत्रच्छन्नवारिधिविभ्रमम् ॥ १७६ ॥
करमुक्तैर्यन्त्रमुक्तैर्मुक्तामुक्तैरथापरैः। आयुधैर्युयुधाते तौ युद्धांभोधितिमिंगिलौ ॥ १७७ ॥

---

१ वध्यगणनायाम्। २ क्ष्वेडा सिंहशब्दः। ३ अग्निः। ४ कुलिशं वज्रम्। ५ आत्मानं भटं मन्यमान। ६ विद्याधरीः। ७ बाणसमूहैः। ८ युद्धमेव समुद्रस्तस्मिंस्तिमिंगिलौ मत्स्यविशेषौ।

ज्वलज्ज्वालालिजिह्वालं करालं तीक्ष्णधारया । वज्रीव वज्रं सस्मार निशुंभश्चक्रमुच्चकैः ॥ १७८ ॥
स्मृतमात्रोपस्थितं तदंगुल्या भ्रमयन् दिवि । सावष्टंभोऽभ्यधत्तैवं निशुंभः क्षोभणं वचः ॥ १७९ ॥
अनुकंप्योऽसि बालोऽसि का लज्जा तेऽपसर्पतः । तगच्छ मां वा सेवस्व किं ते श्वापि न मंत्रकृत् ॥१८०॥
चक्रेणानेन मुक्तेन दारयामि गिरीनपि । तवाभिनवकूष्मांडकोमलस्य तु का कथा ॥ १८१ ॥
ऊचे पुरुषसिंहोऽथ तवेत्यूर्जितगर्जितः । ओजश्चक्रस्य च प्रेक्ष्यमन्यास्त्रैः किं कृतं त्वया ॥ १८२ ॥
शक्रधन्वेव मेघेन त्वया चक्रमिदं धृतम् । किं मे करिष्यते मूढ मुंच पश्याम्यमोघताम् ॥ १८३ ॥
एवं पुरुषसिंहेन भाषितः परुषाक्षरम् । सर्वौजसामुचच्चक्रं निशुंभो निशुशुंभिषुः ॥ १८४ ॥
हरेरुरसि तुंबाग्रभागेनास्फाल्य तद्भयात् । मोघीबभूव विंध्याद्रेस्तट्यामिव महागजः ॥ १८५ ॥
मूर्छया पुंडरीकाक्षो मुकुलाक्षोऽपतत्ततः । मुशलास्त्रेण सिषिचे चाथ गोशीर्षचंदनैः ॥ १८६ ॥
उत्थाय लब्धसंज्ञस्तच्चक्रमादाय पाणिना । मा तिष्ठ गच्छ गच्छेति निशुंभं प्रत्यभाषत ॥ १८७ ॥
मुंच मुंचेति वदतो निशुंभस्य शिरस्ततः । चकर्त तेन चक्रेणार्धचक्री सोऽथ पंचमः ॥ १८८ ॥
पुष्पवृष्टिर्हरेर्मूर्ध्नि मूर्धन्यस्य तरस्विनाम् । पपात गगनात् सद्यो जयश्रीहाससन्निभा ॥ १८९ ॥
तयैव यात्रया विष्णुर्भरतार्धमसाधयत् । सहस्रधा हि फलति व्यवसायो महात्मनाम् ॥ १९० ॥
दिग्यात्राया निवृत्तोऽथ मगधेष्वागतो हरिः । दोष्णोदध्रे कोटिशिलां मृत्पात्रमिव लीलया ॥ १९१ ॥

---

१ सगर्वः । २ श्वापि तव विचारदाता किं नास्ति । ३ इंद्रधनुः । ४ मारयितुमिच्छुः । ५ विफलीबभूव । ६ मुशलमस्त्रं यस्य तेन बलदेवेनेत्यर्थः । ७ बलवताम् । ८ मृत्तिकापात्रम् ।

मेदिनीं छादयन्नश्वैर्ययावश्वपुरं हरिः । विवेशितः पुरस्त्रीभिः कल्पितार्घः पदे पदे ॥ १९२ ॥
तत्र लांगलिनान्यैश्च राजभिर्भक्तिराजिभिः । अर्धचक्रधरत्वाभिषेकोऽक्रियत शार्ङ्गिणः ॥ १९३ ॥
इतश्च भगवान् धर्मश्छद्मस्थो वत्सरद्वयम् । विहृत्याभ्यागमद्दीक्षोपवनं वप्रकांचनम् ॥ १९४ ॥
दधिपर्णतले तत्र ध्यानांतरजुषः प्रभोः । पुष्ये भे पौषराकायां षष्ठेनाजनि केवलम् ॥ १९५ ॥
दिव्ये समवसरणे देशनां विदधे विभुः । अरिष्टादीन् गणभृतस्त्रिचत्वारिंशतं तथा ॥ १९६ ॥
तत्तीर्थभूः किंनराख्यस्त्र्यास्यः कूर्मरथोऽरुणः । दक्षिणैस्तु मातुलिंगिगदाभृदभयप्रदैः ॥ १९७ ॥
वामैस्तु नकुलपद्माक्षमालामालिभिर्भुजैः । भ्राजिष्णुर्धर्मनाथस्य जज्ञे शासनदेवता ॥ १९८ ॥
तथोत्पन्ना च कंदर्पा गौरांगी मत्स्यवाहना । उत्पलांकुशधारिभ्यां दक्षिणाभ्यां विराजिता ॥ १९९ ॥
दोर्भ्यां तदितराभ्यां च पद्मिनाभयदेन च । प्रभोः शासनदेव्यासीत् सदा सन्निधिवर्तिनी ॥ २०० ॥
सेव्यमानः सदा ताभ्यां विहरन्नवनीमिमाम् । अपरेद्युरुपागच्छत् पुरमश्वपुरं प्रभुः ॥ २०१ ॥
सद्यः समवसरणं चक्रे शक्रादिभिः सुरैः । चत्वारिंशत्पंचधन्वशतोच्चाशोकपादपम् ॥ २०२ ॥
तत्र प्रविश्य कृत्वा च चैत्यवृक्षप्रदक्षिणाम् । नत्वा च तीर्थमध्यास्त पूर्वसिंहासनं प्रभुः ॥ २०३ ॥
रत्नसिंहासनस्थानि प्रतिबिंबान्यथ प्रभोः । तादृशि व्यंतराश्चक्रुस्तिसृष्वन्यासु दिक्ष्वपि ॥ २०४ ॥
यथास्थानं प्रविश्यास्थात् संघोऽपि स्वामिपर्षदि । तिर्यंचो मध्यवप्रेऽस्थुस्तृतीये वाहनानि तु ॥ २०५ ॥
उपेत्य शीघ्रं पुरुषसिंहायायुक्तपूरुषाः । स्वामिनं समवसृतमाख्यन्नुत्फुल्लचक्षुषः ॥ २०६ ॥

१ त्रिमुखः ।

तेभ्यो द्वादश रूप्यस्य कोटीः सार्धा वितीर्य सः । आगात् समवसरणं सुदर्शनसमन्वितः ॥ २०७ ॥
प्रभुं प्रदक्षिणीकृत्य नमस्कृत्य च भक्तितः । साग्रजोऽनुसहस्राक्षमुपाविक्षदधोक्षजः ॥ २०८ ॥
भूयोऽपि स्वामिनं नत्वा शक्रशार्ङ्गिसुदर्शनाः । स्वामिभक्त्यावसंतुष्टा इति तुष्टुवुरुन्मुदः ॥ २०९ ॥
विजयस्व जगच्चक्षुश्चकोरानंदचंद्रमाः । मिथ्यात्वध्वांतमार्तंड धर्मनाथ जगत्पते ॥ २१० ॥
चिरं व्यहार्षीश्छद्मस्थो गतछद्मा तथाप्यसि । अनन्तदर्शनोऽपि त्वं दर्शनांतरबाधकः ॥ २११ ॥
त्वद्देशनापयःपूरैः परितः प्लावितात्मनाम् । अह्नाय कर्ममालिन्यमपयाति शरीरिणाम् ॥ २१२ ॥
तथा न मेघछायासु तरुछायासु नापि वा । यथा शाम्यति संतापः पादमूले तव प्रभो ॥ २१३ ॥
इह त्वद्दर्शनालोकनिस्यंदवपुषः प्रभो । पांचालिकावदुत्कीर्णाइव भांति शरीरिणः ॥ २१४ ॥
पृथग्विरुद्धमप्येतदेकत्र मिलितं चिरात् । त्वत्प्रभावाज्जगद्बंधो बंधूभूतं जगत्त्रयम् ॥ २१५ ॥
त्रिखंडभरतक्षेत्रमूलायतनदैवत । अनन्यशरणानस्मांस्त्रायस्व परमेश्वर ॥ २१६ ॥
भूयो भूयो जगन्नाथ त्वामदः प्रार्थयामहे । त्वत्पादपंकजद्वंद्वेऽस्मन्मनो भ्रमरायताम् ॥ २१७ ॥
एवं स्तुत्वा विरतेषु शक्रकेशवसीरिषु । विदधे भगवान् धर्मस्वाम्येवं धर्मदेशनाम् ॥ २१८ ॥
चतुर्वर्गेऽग्रणीर्मोक्षो योगस्तस्य च कारणम् । ज्ञानश्रद्धानचारित्ररूपं रत्नत्रयं च सः ॥ २१९ ॥
तत्त्वानुगा मतिर्ज्ञानं सम्यक्श्रद्धा तु दर्शनम् । सर्वसावद्ययोगानां त्यागश्चारित्रमिष्यते ॥ २२० ॥

---

१ सहर्षाः । २ जगतां चक्षुरेव चकोरस्तस्यानंदे चंद्रसमः । ३ गतं छद्म कपटं यस्य सः । ४ अन्यदर्शनबाधकर्ता । ५ तूर्णम् । ६ मोक्षस्य । ७ योगः ।

आत्मैव दर्शनज्ञानचारित्राण्यथवा यतेः । यत्तदात्मक एवैष शरीरमधितिष्ठति ॥ २२१ ॥
आत्मानमात्मना वेत्ति मोहत्यागाद्य आत्मनि । तदेव तस्य चारित्रं तज्ज्ञानं तच्च दर्शनम् ॥ २२२ ॥
आत्मोऽज्ञानजं दुःखमात्मज्ञानेन हन्यते । तपसाप्यात्मविज्ञानहीनैश्छेत्तुं न शक्यते ॥ २२३ ॥
अयमात्मैव चिद्रूपः शरीरी कर्मयोगतः । ध्यानाग्निदग्धकर्मा तु सिद्धात्मा स्यान्निरंजनः ॥ २२४ ॥
अयमात्मैव संसारः कषायेंद्रियनिर्जितः । तमेव तद्विजेतारं मोक्षमाहुर्मनीषिणः ॥ २२५ ॥
स्युः कषायाः क्रोधमानमायालोभाः शरीरिणाम् । चतुर्विधास्ते प्रत्येकं भेदैः संज्वलनादिभिः ॥ २२६ ॥
पक्षं संज्वलनः प्रत्याख्यानो मासचतुष्टयम् । अप्रत्याख्यानको वर्षं जन्मानंतानुबंधकः ॥ २२७ ॥
वीतरागयतिश्राद्धसम्यग्दृष्टित्वघातकाः । ते देवत्वमनुष्यत्वतिर्यक्त्वनरकप्रदाः ॥ २२८ ॥
तत्रोपतापकः क्रोधः क्रोधो वैरस्य कारणम् । दुर्गतेर्वर्तनी क्रोधः क्रोधः शमसुखार्गला ॥ २२९ ॥
उत्पद्यमानः प्रथमं दहत्येव स्वमाश्रयम् । क्रोधः कृशानुवत् पश्चादन्यं दहति वा न वा ॥ २३० ॥
अर्जितं पूर्वकोट्या यद्वर्षैरष्टभिरूनया । तपस्तत्तत्क्षणादेव दहति क्रोधपावकः ॥ २३१ ॥
शमरूपं पयः प्राज्यपुण्यसंभारसंचितम् । अमर्षविषसंपर्कादसेव्यं तत्क्षणाद्भवेत् ॥ २३२ ॥
चारित्रचित्ररचनां विचित्रगुणधारिणीम् । समुत्सर्पन् क्रोधधूमो ध्यामलीकुरुतेतमाम् ॥ २३३ ॥

१ यस्मात्कारणाद्दर्शनज्ञानचारित्रात्मक एवैष आत्मा । २ आत्मनोऽज्ञानभवम् । ३ कषायेंद्रियजेतारं तमात्मानमेव मोक्षमाहुः । ४ जन्मपर्यंतम् । ५ संज्वलनो वीतरागत्वघातकः प्रत्याख्यानो यतित्वघातक इत्याद्यनुक्रमेण । ६ संज्वलनो देवत्वप्रद इत्यादि । ७ मार्गः । ८ अग्निवत् । ९ क्रोध एव विषं तस्य संबंधात् । १० अतिशयेन मलिनीकुरुते ।

यो वैराग्यशमीपत्रपुटैः शमरसोऽर्जितः । शाकपत्रपुटाभेन क्रोधेनोत्सृज्यते स किम् ॥ २३४ ॥
प्रवर्धमानः क्रोधोऽयं किमकार्यं करोति न । भाविनी द्वारका द्वैपायनक्रोधानले समित्[1] ॥ २३५ ॥
क्रुध्यतः कार्यसिद्धिर्या न सा क्रोधनिबंधना[2] । जन्मांतरार्जितोर्जस्विकर्मणः खलु तत्फलम् ॥ २३६ ॥
स्वस्य लोकद्वयोच्छित्त्यै नाशाय स्वपरार्थयोः । धिगहो दधति क्रोधं शरीरेषु शरीरिणः ॥ २३७ ॥
क्रोधांधाः पश्य निघ्नंति पितरं मातरं गुरुम् । सुहृदं सोदरं दारानात्मानमपि निर्घृणाः[3] ॥ २३८ ॥
क्रोधवह्नेस्तदह्नाय शमनाय शुभात्मभिः । श्रयणीया क्षमैकैव संयमारामसारणिः[4] ॥ २३९ ॥
अपकारिजने कोपो निरोद्धुं शक्यते कथम् । शक्यते सत्त्वमाहात्म्याद्यद्वा भावनयानया ॥ २४० ॥
अंगीकृत्यात्मनः पापं यो मां बाधितुमिच्छति । स्वकर्मनिहतायास्मै[5] कः कुप्येद्बालिशोऽपि[6] सन् ॥२४१॥
प्रकुप्याम्यपकारिभ्य इति चेदाशयस्तव । तत्किं न कुप्यसि स्वस्य कर्मणे दुःखहेतवे ॥ २४२ ॥
उपेक्ष्य लोष्टक्षेप्तारं लोष्टं दशति मंडलः[7] । मृगारिः शरमुत्प्रेक्ष्य शरक्षेप्तारमृच्छति ॥ २४३ ॥
यैः परः[8] प्रेरितः क्रूरैर्मह्यं कुप्यति कर्मभिः । तान्युपेक्ष्य परे क्रुध्यन् किं श्रये क्षपणश्रियम् ॥ २४४ ॥
भावी ह्यर्हन्महावीरः क्षांत्यै म्लेच्छेषु यास्यति । अयत्नेनागतां क्षांतिं वोढुं किमिव नेच्छति ॥ २४५ ॥
त्रैलोक्यप्रलयत्राणक्षमाश्चेदाश्रिताः क्षमाम्[9] । कदलीतुल्यसत्वस्य क्षमा तव न किं क्षमा[10] ॥ २४६ ॥
तथा किं नाकृथाः पुण्यं यथा कोऽपि न बाधते । स्वप्रमादमिदानीं तु शोचन्नंगीकुरु क्षमाम् ॥ २४७ ॥

---

१ काष्ठरूपा भविष्यति । २ क्रोधो निबंधनं कारणं यस्याः सा । ३ निर्दयाः । ४ संयम एवारामस्तस्य सारणिः । ५ स्वेनैव कर्मणा निहताय । ६ मूर्खोऽपि । ७ श्वा । ८ शत्रुः । ९ त्रैलोक्यप्रलयात्त्राणे क्षमाः समर्थाः । १० समर्था ।

क्रोधांधस्य मुनेश्चंडचंडालस्य च नांतरम् । तस्मात् क्रोधं परित्यज्य भजेोज्ज्वलधियां पदम् ॥ २४८ ॥
महर्षिः क्रोधसंयुक्तो निःक्रोधः कूरगड्डुकः । ऋषिं मुक्त्वा देवताभिः स्तोष्यते कूरगड्डुकः ॥ २४९ ॥
अरुंतुदैर्वचःशस्त्रैस्तुद्यमानो विचिंतयेत् । चेत्तथ्यमेतत् कः कोपोऽथ मिथ्योन्मत्तभाषितम् ॥ २५० ॥
वधायोपस्थितेऽन्यस्मिन् हसेद्विस्मितमानसः । वधे मत्कर्मसंसाध्ये वृथा नृत्यति बालिशः ॥ २५१ ॥
निहंतुमुद्यते ध्यायेदायुषः क्षय एष नः । तदसौ निर्भयः पापात् करोति मृतमारणम् ॥ २५२ ॥
सर्वपुरुषार्थचौरे कोपः कोपे न चेत्तव । धिक् त्वां स्वल्पापराधेऽपि परे कोपपरायणम् ॥ २५३ ॥
सर्वेंद्रियग्लानिकरं प्रसर्पंतं ततः सुधीः । क्षमया जांगुलिकया जयेत् कोपमहोरगम् ॥ २५४ ॥
विनयश्रुतशीलानां त्रिवर्गस्य च घातकः । विवेकलोचनं लुंपन्मानोऽधंकरणो नृणाम् ॥ २५५ ॥
जातिलाभकुलैश्वर्यबलरूपतपःश्रुतैः । कुर्वन् मदं पुनस्तानि हीनानि लभते जनः ॥ २५६ ॥
जातिभेदानैकविधानुत्तमाधममध्यमान् । दृष्ट्वा को नाम कुर्वीत जातु जातिमदं सुधीः ॥ २५७ ॥
उत्तमां जातिमाप्नोति हीनामाप्नोति कर्मतः । तत्राशाश्वतिकीं जातिं को नामासाद्य माद्यतु ॥ २५८ ॥
अंतरायक्षयादेव लाभो भवति नान्यथा । ततश्च वस्तुतत्त्वज्ञो नो लाभमदमुद्वहेत् ॥ २५९ ॥
परप्रसादशक्त्यादिभवे लाभे महत्यपि । न लाभमदमृच्छंति महात्मानः कथंचन ॥ २६० ॥
अकुलीनानपि प्रेक्ष्य प्रज्ञाश्रीशीलशालिनः । न कर्तव्यः कुलमदो महाकुलभवैरपि ॥ २६१ ॥

---

१ मर्मच्छिद्भिः । २ सर्पापहारिण्या विद्यया । ३ भवांतरे इत्यर्थः । ४ अनित्याम् । ५ परस्य राजादेः प्रसादः शक्तिः प्रभुत्वादिस्तदादेरुत्पन्ने ।

विदध्यान्न विचक्षणः ॥ २६२ ॥

किं कुलेन कुशीलस्य सुशीलस्यापि तेन[1] किम् । एवं विदन् कुलमदं विदध्यान्न विचक्षणः ॥ २६३ ॥

श्रुत्वा त्रिभुवनैश्वर्यसंपदं वज्रधारिणः[2] । पुरग्रामधनादीनामैश्वर्ये कीदृशो मदः ॥ २६४ ॥

गुणोज्ज्वलादपि भ्रश्येद्[3] दोषवंतमपि श्रयेत् । कुशीलस्त्रीवद्[4] ऐश्वर्यं न मदाय विवेकिनाम् ॥ २६५ ॥

महाबलोऽपि रोगाद्यैरबलः क्रियते क्षणात् । इत्यनित्यबले पुंसां युक्तो बलमदो न हि ॥ २६६ ॥

बलवंतोऽपि जरसि[5] मृत्यौ कर्मफलांतरे । अबलाश्चेत्ततो हंत तेषां बलमदो मुधा ॥ २६७ ॥

सप्तधातुमये देहे चयापचयधर्मणः । जरारुजादित्रस्तस्य को रूपस्य मदं वहेत् ॥ २६८ ॥

सनत्कुमारस्य रूपं त्रावि श्रुत्वा च तत्क्षयम् । को वा सकर्णः स्वप्नेऽपि कुर्याद्रूपमदं किल ॥ २६९ ॥

नाभेयस्य[6] तपोनिष्ठां श्रुत्वा वीरजिनस्य च । को नाम स्वल्पतपसि स्वकीये मदमाश्रयेत् ॥ २७० ॥

येनैव तपसा त्रुट्येत्[7] तरसा कर्मसंचयः । तेनैव मददिग्धेन[8] वर्धते कर्मसंचयः ॥ २७१ ॥

स्वबुध्या रचितान्यन्यैः[9] शास्त्राण्याघ्राय लीलया । सर्वज्ञोऽस्मीति मदवान् स्वकीयांगानि खादति ॥ २७२ ॥

श्रीमद्गणधरेंद्राणां श्रुत्वा निर्माणधारणम् । कः श्रयेत श्रुतमदं सकर्णहृदयो जनः ॥ २७३ ॥

उत्सर्पयन्[10] दोषशाखां गुणमूलान्यधो नयन् । उन्मूलनीयो मानद्रुस्तन्मार्दवसरित्प्लवैः ॥ २७४ ॥

मार्दवं नाम मृदुता तच्चौद्धत्यनिषेधनम् । मानस्य पुनरौद्धत्यं स्वरूपमनुपाधिकम् ॥ २७५ ॥

अंतः स्पृशेद्यत्र यत्रौद्धत्यं जात्यादिगोचरम् । तत्र तस्य प्रतीकारहेतोर्मार्दवमाश्रयेत् ॥ २७६ ॥

---

१ कुलेन । २ इंद्रस्य । ३ नश्येत् । ४ कुलटास्त्रीवत् । ५ वृद्धावस्थायाम् । ६ आदीश्वरस्य । ७ तूर्णम् । ८ मदलिप्तेन । ९ अन्यैराचार्यैः स्वबुद्ध्या लीलामात्रेण रचितानि शास्त्राण्याघ्राय किंचिज्ज्ञात्वेत्यर्थः । १० विस्तारयन् ।

सर्वत्र मार्दवं कुर्यात् पूज्येषु तु विशेषतः । येन पापाद्विमुच्येत पूज्यपूजाव्यतिक्रमात् ॥ २७६ ॥
मानाद्बाहुबलिर्बद्धो लताभिरिव पाप्मभिः । मार्दवात्तत्क्षणं मुक्तः सद्यः संप्राप केवलम् ॥२७७॥
चक्रवर्ती त्यक्तसंगो वैरिणामपि वेश्मसु । भिक्षायै यात्यहो मानच्छेदायामृदुमार्दवम् ॥ २७८ ॥
चक्रवर्त्यपि तत्कालदीक्षितो रंकसाधवे । नमस्यति त्यक्तमानश्चिरं च वरिवस्यति ॥ २७९ ॥
एवं च मानविषयं ज्ञात्वा दोषमशेषतः । [3]अश्रांतमाश्रयेद्धीमांस्तन्निरासाय मार्दवम् ॥ २८० ॥
[4]असूनृतस्य जननी परशुः शीलशाखिनः । जन्मभूमिरविद्यानां माया दुर्गतिकारणम् ॥ २८१ ॥
कौटिल्यपटवः पापा मायया वकवृत्तयः । भुवनं वंचयमाना वंचयंते स्वमेव हि ॥ २८२ ॥
[5]कूटषाड्गुण्ययोगेन छलाद्विश्वस्तघातनात् । अर्थलोभाच्च राजानो वंचयंतेऽखिलं जगत् ॥ २८३ ॥
तिलकैर्मुद्रया मंत्रैः [6]क्षामतादर्शनेन च । अंतःशून्या बहिःसारा वंचयंति द्विजा जनम् ॥ २८४ ॥
कूटाः कूटतुलामानाशुक्रियासातियोगतः । वंचयंते जनं मुग्धं मायाभाजो वणिग्जनाः ॥ २८५ ॥
जटामौंजीशिखाभस्मवल्कलाग्न्यादिधारणैः । मुग्धं श्राद्धं गर्धयंते पाखंडा हृदि नास्तिकाः ॥२८६॥
अरक्ताभिर्भावहावलीलागतिविलोकनैः । कामिनो रंजयन्तीभिर्वेश्याभिर्वंच्यते जगत् ॥ २८७ ॥
प्रतार्य कूटैः शपथैः कृत्वा [9]कूटकपर्दिकाम् । धनवंतः प्रतार्यन्ते [10]दुरोदरपरायणैः ॥ २८८ ॥

---

१ अमृदु कठिनं च तन्मार्दवं च । २ सेवत इत्यर्थः । ३ निरंतरम् । ४ असत्यस्य । ५ असत्यषाड्गुण्यस्य संध्यादेः प्रयोगेण । ६ दीनतादर्शनेन । ७ आशुक्रिया सत्वरक्रिया । ८ मौंजी मुंजस्य तृणविशेषस्य कटिमेखला । ९ असत्यनाणकम् । १० द्यूततत्परैः ।

दंपती पितरः पुत्राः सोदर्याः सुहृदो निजाः । ईशा भृत्यास्तथान्येऽपि माययान्योऽन्यवंचकाः ॥२८९॥
अर्थलुब्धा गतघृणा बंदिकारमलिम्लुचाः । अहर्निशं जागरूकाश्छलयंति प्रमादिनम् ॥ २९० ॥
कारवश्चांत्यजाश्चैव स्वकर्मफलजीविनः । माययालीकशपथैः कुर्वते साधुवंचनम् ॥ २९१ ॥
व्यंतरादिकुयोनिस्था दृष्ट्वा प्रायः प्रमादिनः । क्रूराश्छलैर्बहुविधैर्बाधंते मानवान् पशून् ॥ २९२ ॥
मत्स्यादयो जलचराश्छलात् स्वापत्यभक्षकाः । बध्यंते धीवरैस्तेऽपि माययोनायपाणिभिः ॥ २९३ ॥
नानोपायैर्मृगयुभिर्वंचनप्रवणैर्जडाः । निबध्यंते विनाश्यंते प्राणिनः स्थलचारिणः ॥ २९४ ॥
नभश्चरा भूरिभेदा वराका लावकादयः । बध्यंते माययात्युग्रैः स्वल्पकग्रासगृध्नुभिः ॥ २९५ ॥
तदेवं सर्वलोकेऽपि परवंचकतापराः । स्वस्वधर्मं सद्गतिं च नाशयंति स्ववंचकाः ॥ २९६ ॥
तिर्यग्जातेः परं बीजमपवर्गपुरार्गला । विश्वासद्रुमदावाग्निर्माया हेया मनीषिभिः ॥ २९७ ॥
मल्लिनाथः पूर्वभवे कृत्वा मायां तनीयसीम् । मायाशल्यमनुत्खाय स्त्रीभावमुपयास्यति ॥ २९८॥
तदार्जवमहौषध्या जगदानंदहेतुना । जयेज्जगद्द्रोहकरीं मायां विषधरीमिव ॥ २९९ ॥
आर्जवं सरलः पंथा मुक्तिपुर्याः प्रकीर्तितः । आचार्यविस्तरः शेषतपस्त्यागादिलक्षणः ॥ ३०० ॥
भवेयुरार्जवजुषो लोकेऽपि प्रीतिकारणम् । कुटिलादुद्विजंते हि जंतवः पन्नगादिव ॥ ३०१ ॥
अजिह्मचित्तवृत्तीनां भववासस्पृशामपि । अकृत्रिमं मुक्तिसुखं स्वसंवेद्यं महात्मनाम् ॥ ३०२ ॥

---

१ कर्मकराः । २ आनायो जालं पाणौ येषां तैः । ३ वंचने चतुरैः । ४ लावकः पक्षिविशेषः । ५ अल्पग्रासलोलुपैः । ६ सर्पिणीम् । ७ आर्जवसेविनो जनाः । ८ संसारे स्थितानामपीत्यर्थः । ९ स्वयं ज्ञेयम् ।

परव्यापादनिष्ठानां स्वप्नेऽपि स्यात् कथं सुखम् ॥ ३०३ ॥
कौटिल्यशंकुना क्लिष्टमनसां वंचकात्मनाम् । धन्यानामुपजायेत बालकानामिवार्जवम् ॥ ३०४ ॥
समग्रविद्यावैदुष्येऽधिगतासु कलासु च । किं पुनः सर्वशास्त्रार्थपरिनिष्ठितचेतसाम् ॥ ३०५ ॥
अज्ञानामपि बालानामार्जवं प्रीतिहेतवे । ततः स्वाभाविकं धर्मं हित्वा कः कृत्रिमं श्रयेत्॥३०६॥
स्वाभाविकी हि ऋजुता कृत्रिमा कुटिलात्मता । धन्याः केचिन्निर्विकाराः सुवर्णप्रतिमा इव ॥ ३०७ ॥
खलपैशून्यवक्रोक्तिवंचनाप्रवणे जने । अहो शैक्षाइवाश्रौपुरार्जवादर्हतां गिरः ॥ ३०८ ॥
अपि श्रुताब्धिपारीणाः सर्वे गणभृदुत्तमाः । कुटिलालोचनां कुर्वन्नल्पीयोऽपि विवर्धते ॥ ३०९ ॥
अशेषमपि दुःकर्म ऋज्वालोचनया क्षिपेत् । किं तु मोक्षः स्यात् सर्वत्राकुटिलात्मनाम् ॥
काये वचसि चित्ते च समंतात् कुटिलात्मनाम् । न मोक्षः सुधीर्निर्वृतिकाम्यया ॥ ३११ ॥
इत्युग्रं कर्म कौटिल्यं कुटिलानां विभावयन् । आश्रयेदृजुतामेकां सर्वार्थबाधकः ॥ ३१२ ॥
आकरः सर्वदोषाणां गुणग्रसनराक्षसः । कंदो व्यसनवल्लीनां लोभः लक्षेश्वरोऽपि च ॥ ३१३ ॥
धनहीनः शतमेकं सहस्रं शतवानपि । सहस्राधिपतिर्लक्षं कोटिं देवोऽपींद्रत्वमिच्छति ॥ ३१४ ॥
कोटीश्वरो नरेंद्रत्वं नरेंद्रश्चक्रवर्तिताम् । चक्रवर्ती च देवत्वं शरावइव वर्धते ॥ ३१५ ॥
इंद्रत्वेऽपि हि संप्राप्ते यदिच्छा न निवर्तते । मूले लघीयांस्तल्लोभः सर्वागसां गुरुः ॥ ३१६ ॥
हिंसेव सर्वपापानां मिथ्यात्वमिव कर्मणाम् । राजयक्ष्मेव रोगाणां लोभः प्रच्छादयंति यत् ॥ ३१७ ॥
अहो लोभस्य साम्राज्यमेकच्छत्रं महीतले । तरवोऽपि निधिं प्राप्य पादैः

---

१ सर्वशास्त्राणामर्थे प्रतिष्ठितं मनो येषां तेषाम् । २ श्रुतसमुद्रस्य पारगामिनः । ३ शिष्या इवाशृण्वन् । ४ मूलैः ।

अपि द्रविणलोभेन ते द्वित्रिचतुरिंद्रियाः । स्वकीयान्यधितिष्ठंति प्राग्निधानानि मूर्छया ॥ ३१८ ॥
भुजंगगृहगोधाः स्युर्मुख्याः पंचेंद्रिया अपि । धनलोभेन लीयंते निधानस्थानभूमिषु ॥ ३१९ ॥
पिशाचमु[1]द्गलप्रेतभूतयक्षादयो धनम् । स्वकीयं परकीयं वाप्यधितिष्ठंति लोभतः ॥ ३२० ॥
भूषणोद्यानवाप्यादौ मूर्छिताश्चि[2]दशा अपि । च्युत्वा तत्रैव जायंते पृथ्वीकायादियोनिषु ॥ ३२१ ॥
प्राप्योपशांतमोहत्वं क्रोधादिविजये सति । लोभांशमात्रदोषेण पतंति यतयोऽपि हि ॥ ३२२ ॥
एकामिषाभिलाषेण सारमेयाइव द्रुतम् । सोदर्या अपि युध्यंते धनलेशजिघृक्षया ॥ ३२३ ॥
लोभाद्ग्रामादिसीमानमुद्दिश्य गतसौहृदाः । ग्राम्या नि[2]युक्ता राजानो वैरायंते परस्परम् ॥ ३२४ ॥
हासशोकद्वेषहर्षानसतोऽप्यात्मनि स्फुटम् । स्वामिनोऽग्रे लोभवंतो नाटयंति नटाइव ॥ ३२५ ॥
आरभ्यते पूरयितुं लोभगर्तो यथा यथा । तथा तथा महच्चित्रं मुहुरेष विवर्धते ॥ ३२६ ॥
अपि नामैष पूर्येत पयोभिः पयसां पतिः । न तु त्रैलोक्यराज्येऽपि प्राप्ते लोभः प्रपूर्यते ॥ ३२७ ॥
अनंता भोजनाच्छा[3]दविषयद्रव्यसंचयाः । भुक्तास्तथापि लोभस्य नांशोऽपि परिपूर्यते ॥ ३२८ ॥
लोभस्त्यक्तो यदि तदा [4]तपोभिरफलैरलम् । लोभस्त्यक्तो न चेत्तर्हि तपोभिरफलैरलम् ॥ ३२९ ॥
मृदित्वा शास्त्रसर्वस्वं तदेतदवधार्यताम् । लोभस्यैकस्य [5]हानाय प्रयतेत महामतिः ॥ ३३० ॥

---

१ मुद्गला व्यंतरविशेषाः । २ अधिकारिणः । ३ आच्छादा वस्त्राणि । ४ लोभरहितस्य पुरुषस्य तपःसदृशं फलं भवत्यत एव तपांसि निष्फलानि लोभसहितस्य च तपःसु तप्तेष्वपि फलं न भवतीति तपांसि निष्फलानीति भावः । ५ नाशाय ।

लोभसागरमुद्वेलमतिवेलं महामतिः । संतोषसेतुबंधेन प्रसरंतं निवारयेत् ॥ ३३१ ॥
यथा नृणां चक्रवर्ती सुराणां पाकशासनः । तथा गुणानां सर्वेषां संतोषः प्रवरो गुणः ॥ ३३२ ॥
संतोषयुक्तस्य यतेरसंतुष्टस्य चक्रिणः । तुलया संमितो मन्ये प्रकर्षः सुखदुःखयोः ॥ ३३३ ॥
स्वाधीनं राज्यमुत्सृज्य संतोषामृततृष्णया । निःसंगत्वं प्रपद्यंते तत्क्षणाच्चक्रवर्तिनः ॥ ३३४ ॥
निवृत्तायां धनेच्छायां पार्श्वस्था एव संपदः । अंगुल्या पिहिते कर्णे शब्दाद्वैतं हि जृंभते ॥ ३३५ ॥
संतोषसिद्धौ संसिद्धाः प्रतिवस्तुविरक्तयः । अक्ष्णोः पिधाने पिहितं ननु विश्वं चराचरम् ॥ ३३६ ॥
किमिंद्रियाणां दमनैः किं कायपरिपीडनैः । ननु संतोषमात्रेण मुक्तिश्रीर्मुखमीक्षते ॥ ३३७ ॥
जीवंतोऽपि विमुक्तास्ते ये मुक्तिसुखशालिनः । किं वा विमुक्तेः शिरसि शृंगं किमपि वर्तते ॥ ३३८ ॥
किं रागद्वेषसंकीर्णं किं वा विषयसंभवम् । येन संतोषजं सौख्यं हीयेत शिवशर्मणः ॥ ३३९ ॥
परप्रत्यायनासारैः किं वा शास्त्रसुभाषितैः । मीलिताक्षा विमृशंतु संतोषास्वादजं सुखम् ॥ ३४० ॥
चेत् कारणानुकारीणि कार्याणि प्रतिपद्यसे । संतोषानंदजन्मा तन्मोक्षानंदः प्रतीयताम् ॥ ३४१ ॥
यच्च तीव्रं तपःकर्म कर्मनिर्मूलनं जगुः । सर्वं तदपि संतोषरहितं विफलं विदुः ॥ ३४२ ॥
कृषिसेवापाशुपाल्यवाणिज्यैः किं सुखार्थिनाम् । ननु संतोषपानात् किं नात्मा निर्वृतिमाप्यते ॥ ३४३ ॥
यत् संतोषवतां सौख्यं तृणसंस्तरशायिनाम् । न तत् संतोषवंध्यानां तूलिकाशायिनामपि ॥ ३४४ ॥

---

१ वेलां मर्यादामतिक्रांतस्तम् । २ यतः सुखस्य प्रकर्षश्चक्रिणश्च दुःखस्येत्यर्थः । ३ प्रतिवस्तुषु वैराग्यवंतः । ४ येन सुखेन मोक्षसुखस्य सौख्यं हीयेत ।

असंतुष्टास्तृणायंते धनिनोऽपीशिनां पुरः । ईशिनोऽपि तृणायंते संतुष्टानां पुरः स्थिताः ॥ ३४५ ॥
आयासमात्रं नश्वर्यं चक्रिशक्रादिसंपदः । अनायासं च नित्यं च सुखं संतोषसंभवम् ॥ ३४६ ॥
इति लोभं निराकर्तुं सर्वदोषनिकेतनम् । अद्वैतसौख्यसदनं सुधीः संतोषमाश्रयेत् ॥ ३४७ ॥
एवं जितकषायः सन्नत्रापि शिवसौख्यभाक् । परत्रावश्यमाप्नोति शिवं पुनरनश्वरम् ॥ ३४८ ॥
श्रुत्वैवं देशनां भर्तुः प्राज्याः पर्यव्रजञ्जनाः । सम्यक्त्वं तु हरिर्भेजे श्रावकत्वं तु सीरभृत् ॥ ३४९ ॥
पूर्णायामादिपौरुष्यां व्यसृजद्देशनां प्रभुः । चक्रेऽरिष्टः स्वामिपादपीठस्थो गणभृत्ततः ॥ ३५० ॥
अंते द्वितीयपौरुष्यां व्यस्राक्षीत् सोऽपि देशनाम् । नत्वार्हंतं ततो जग्मुः शक्रविष्णुबलादयः ॥ ३५१ ॥
ततः स्थानादथान्यत्र सर्वातिशयशोभितः । भगवान् धर्मनाथोऽपि विजहार महीतलम् ॥ ३५२ ॥
चतुःषष्टिः सहस्राणि श्रमणानां महात्मनाम् । आर्यिकाणां तु द्विषष्टिः सहस्राः सचतुःशताः ॥ ३५३ ॥
तथा चतुर्दशपूर्वभृतां नवशतानि तु । अवधिज्ञानभाजां तु त्रिसहस्री सषट्शती ॥ ३५४ ॥
मनःपर्ययिणां पंचचत्वारिंशच्छतानि तु । तथा शतानि तान्येव केवलज्ञानशालिनाम् ॥ ३५५ ॥
जातवैक्रियलब्धीनां मुनीनां शतसप्ततिः । द्वे सहस्रे शतान्यष्टौ वादलब्धिमतां पुनः ॥ ३५६ ॥
लक्षद्वयी श्रावकाणां चत्वारिंशत्सहस्रयुक् । श्राविकाणां चतुर्लक्षी त्रयोदशसहस्रयुक् ॥ ३५७ ॥
वर्षलक्षद्वयं सार्धं वर्षद्वितयवर्जितम् । आ केवलाद्विहरतः परिवारोऽभवत् प्रभोः ॥ ३५८ ॥
ज्ञात्वा तु मोक्षसमयं स्वामी संमेतमेत्य च । समं मुनिशतेनाष्टयुतेनानशनं व्यधात् ॥ ३५९ ॥

१ महव ।

मासांते ज्येष्ठविशदपंचम्यां पुष्यगे विधौ । समं तैर्मुनिभिः स्वामी प्रपेदे पदमव्ययम् ॥ ३६० ॥
श्रीधर्मस्वामिनस्तेषां श्रमणानां च तत्क्षणम् । चक्रुर्निर्वाणमहिमोत्सवं शक्रादयः सुराः ॥ ३६१ ॥
अनंतस्वामिनिर्वाणाद्धर्मनाथस्य निर्वृतिः । अजायत व्यतिक्रांते सागराणां चतुष्टये ॥ ३६२ ॥
कौमारेऽब्दलक्षे सार्धे राज्ये पंचाब्दलक्ष्यभूत् । सार्धा व्रते द्व्यब्दलक्षीत्यब्दलक्षा दश प्रभोः ॥३६३॥
तैस्तैः पुरुषसिंहोऽपि सिंहवद्धिस्रकर्मभिः । पूर्णायुः कालतोऽगच्छत् षष्ठीं नरकमेदिनीम् ॥ ३६४ ॥
कौमारेऽस्य त्र्यब्दशती मंडलित्वे शतानि तु । सार्धानि द्वादशाब्दानां सप्तत्यब्दी तु दिग्जये ॥ ३६५ ॥
राज्ये तु नवलक्ष्यष्टानवतिश्च सहस्रकाः । शतानि त्रीण्यशीतिश्चेत्यब्दलक्षा दशायुषि ॥ ३६६ ॥
ततो बलः सप्तदशाब्दलक्षायुर्विनानुजम् । कथंचिज्जीवितं दध्रे भ्रातृस्नेहवशंवदः ॥ ३६७ ॥

प्राक् सुदर्शनभृतोऽन्तदर्शनादार्द्रशोकविवशः सुदर्शनः ।
कीर्तिसाधुनिकटेऽग्रहीद्व्रतं पूरितायुरपुनर्भवं ययौ ॥ ३६८ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये चतुर्थे पर्वणि
श्रीधर्मनाथपुरुषसिंहसुदर्शननिशुंभचरितवर्णनो नाम पंचमः सर्गः ।

---

१ सुदर्शननामकं चक्रं बिभर्ति तस्य विष्णोः ।

आनंददायकत्वेन भयदत्वेन चानिशम् । मित्राणामप्यमित्राणां हृदयान्नोत्ततार सः ॥ १२ ॥
दोष्मतस्तस्य संग्रामेष्वात्मैवाजनि संमुखः । आकृष्टामलनिस्त्रिंशदर्पणप्रतिबिंबितः ॥ १३ ॥
प्रसह्य स्ववशीचक्रे सर्वा दिश इतीव सः । यशोऽलंकरणं तासामवर्जनकृते ददौ ॥ १४ ॥
महीं गामिव गोपालः स जुगोप यथाविधि । अबाधया च समये करं दुग्धमिवाददे ॥ १५ ॥
पुण्यलावण्यभद्रांगी भद्राणामेकमास्पदम् । सधर्मचारिणी तस्याभवद्भद्रेति नामतः ॥ १६ ॥
धर्माविबाधया तस्य सुखं वैषयिकं तया । सहानुभवतः कालो व्यतीयाय कियानपि ॥ १७ ॥
इतश्च ग्रैवेयकस्थो जीवोऽमरपतेः स तु । पूरयित्वा प्रकृष्टायुर्भद्राकुक्षाववातरत् ॥ १८ ॥
सुखसुप्ता तदा भद्रा महास्वप्नांश्चतुर्दश । स्वास्ये प्रविशतोऽद्राक्षीच्चक्रभृज्जन्मसूचकान् ॥ १९ ॥
काले चासूत सा सूनुमनूनं पुण्यलक्षणैः । सुवर्णवर्णं सार्धद्विचत्वारिंशद्धनून्नतम् ॥ २० ॥
पृथिव्यां मघवेवायं नूनं भावीति सान्वयाम् । चक्रेऽस्य मघवेत्याख्यां समुद्रविजयो नृपः ॥ २१ ॥
समुद्रवसनां सोऽनुसमुद्रविजयं जयी । अलंभूष्णुरलंचक्रे द्यामन्वर्कमिवोडुपः ॥ २२ ॥
तस्यैकदास्त्रशालायां तेजःप्रसरभासुरम् । समुत्पेदे चक्ररत्नमिरंमदइवांबुदे ॥ २३ ॥
यथास्थानमथान्यानि पुरोधःप्रभृतीन्यपि । तस्य रत्नानि सर्वाणि जज्ञिरे क्रमयोगतः ॥ २४ ॥

---

१ मित्राणामानंददत्वेन । २ शत्रूणां भयदत्वेन । ३ आकृष्टो योऽमलो निस्त्रिंशः खड्गः स एव दर्पणस्तस्मिन् प्रतिबिंबितः स राजा युद्धेषु स्वमेव पश्यति शत्रोरभावादित्यर्थः । ४ दिशो मां मा त्यजंत्विति हेतोरित्यर्थः । ५ सार्थकाम् । ६ समुद्रो वस्त्रं यस्यास्तां महीमित्यर्थः । ७ यथा सूर्यादनु चंद्र आकाशं भूषयति तथा । ८ वह्निर्विद्युदिति यावत् ।

चक्रमार्गानुगः सोऽथ प्रस्थितो दिग्जिगीषया । ययौ मागधतीर्थेशं प्राक्समुद्रविभूषणम् ॥ २५ ॥
तस्य नामांकबाणेन दूतेनेव समेयुषा । एत्य मागधतीर्थेशः सेवामेव समाश्रयत् ॥ २६ ॥
सोऽपाच्यां वरदामानं पश्चिमायां पुनर्दिशि । प्रभासाधिपतिं देवं विजिग्ये मागधेशवत् ॥ २७ ॥
गत्वा च दक्षिणं रोधः सिंधुदेवीमसाधयत् । ततो गच्छन्नाससाद चक्री वैताढ्यपर्वतम् ॥ २८ ॥
चक्रवर्त्यंतमसाधक्रे वैताढ्याद्रिकुमारकम् । तदुपायनमादायानुतमिस्रं जगाम च ॥ २९ ॥
स तमिस्रागुहाद्वारे द्वारपालमिव स्थितम् । विधिवत् साधयामास कृतमालाभिधं सुरम् ॥ ३० ॥
तस्यादेशाच्चमूनाथः सिंधुमुत्तीर्य चर्मणा । प्रत्यग्निष्कुटमाक्रामत्तस्याः पुनरुपाययौ ॥ ३१ ॥
सेनान्या दंडरत्नेन कपाटोद्घाटने कृते । ससैन्यः प्राविशच्चक्री गजरत्नेन तां गुहाम् ॥ ३२ ॥
अंतर्विरचितालोकः काकिणीकृतमंडलैः । कुंभिदक्षिणकुंभस्थमणिभाप्रसरेण च ॥ ३३ ॥
उत्तीर्य वर्धकिकृतपद्यया चांतरस्थिते । नद्यावुन्मग्ननिमग्नजले अत्यंतदुस्तरे ॥ ३४ ॥
स्वयं विश्लिष्टकपाटेनोत्तरद्वारवर्त्मना । तस्या गुहाया निरगात् सह चम्वा स चक्रभृत् ॥ ३५ ॥
आपातनामकांस्तत्र किरातानतिदुर्जयान् । मघवेवासुरभटान् विधिवन्मघवाजयत् ॥ ३६ ॥
सिंधोश्च निष्कुटं प्रत्यगजयत्तच्चमूपतिः । स्वयं त्वसाधयद्गत्वा हिमाचलकुमारकम् ॥ ३७ ॥
मघवा चक्रवर्तीति कूटे ऋषभनामनि । आदाय काकिणीरत्नं लिलेख निजनाम सः ॥ ३८ ॥

---

१ आगतेन । २ तत्प्राभृतम् । ३ चर्मरत्नेन । ४ हस्तिनो दक्षिणकुंभस्थले स्थितस्य मणेः कांतिप्रसरेण । ५ वर्धकिरत्नेन कृता या पद्या सेतुबंधस्तया ।

ततो निवृत्तो मघवा गंगायाः पूर्वनिष्कुटम् । सेनान्या साधयामास गंगादेवीं स्वयं पुनः ॥ ३९ ॥
वैताढ्यपर्वतश्रेणिद्वयविद्याधरानपि । स तृतीयश्चक्रधरः साधयामास लीलया ॥ ४० ॥
खंडप्रपाताद्वारस्थं नाट्यमालमथापरम् । यथाविध्यात्मसाच्चक्रे चक्रभृद्विधिकोविदः ॥ ४१ ॥
खंडप्रपातया सेनान्युद्घाटितकपाटया । वैताढ्यान्निरगाच्चक्री पोतोऽर्णवजलादिव ॥ ४२ ॥
नवापि निधयस्तत्र गंगामुखनिवासिनः । बभूवुर्वशगास्तस्य नैसर्पप्रमुखाः सुखम् ॥ ४३ ॥
सेनान्या साधयामास गंगायाः पूर्वनिष्कुटम् । इत्थं स च वशीचक्रे षट्खंडमपि भारतम् ॥ ४४ ॥
संपूर्णचक्रिसामग्र्या भ्राजिष्णुर्मघवा ततः । श्रावस्तीनगरीमागान्मघवेवामरावतीम् ॥ ४५ ॥
तत्र देवैर्नृदेवैश्च मघोनोऽनूनसंपदः । चक्रवर्तित्वाभिषेकोऽविधीयत यथाविधि ॥ ४६ ॥
अभिषिक्तोऽपि चक्रित्वे सेवमानोऽपि संततम् । द्वात्रिंशता मुकुटिनां[1] सहस्रैर्मेदिनीभुजाम् ॥ ४७ ॥
श्रीयमाणः[2] षोडशभिः सहस्रैर्द्युसदामपि । निधिभिर्नवभिरपि परिपूर्णेप्सितोऽपि हि ॥ ४८ ॥
चतुःषष्ट्या सहस्रैश्च शुद्धांत[3]हरिणीदृशाम् । नयनेंदीवरस्रग्भि[4]रर्च्यमानोऽप्यनारतम् ॥ ४९ ॥
अन्येष्वपि प्रमादस्य स्थानेषु सुलभेषु सः । पित्र्ये[5] श्रावकधर्मे तु न जात्वासीत् प्रमद्वरः ॥ ५० ॥
नानाविधानि चैत्यानि विमानानीव नाकिनाम् । जिनबिंबसनाथानि स्वर्णरत्नैर्व्यधत्त सः ॥ ५१ ॥
यथैकः स पतिः पृथ्व्यास्तथा तस्याप्यजायत । अर्हन् देवः सुसाधुश्च गुरुर्धर्मो दयामयः ॥ ५२ ॥
सदा स चैत्यपूजासु तत्पूजास्विव राजकम् । नोज्झांचकार नियमं नित्यं नियमितेंद्रियः ॥ ५३ ॥

---

१ मुकुटधारिणां राज्ञाम् । २ आश्रीयमाणः। ३ अंतःपुरस्त्रीणाम् । ४ नयनान्येव कमलानि तेषां मालाभिः। ५ पितुरागते परंपरयेत्यर्थः।

# सप्तमः सर्गः ।

## सनत्कुमारचाक्रिचरितम्

ॐ ॥ अस्तीह कांचनपुरं दधानं कांचनश्रियम् । भोगावत्यमरपुरीलंकादिभ्योऽतिशायिनीम् ॥ १ ॥
तत्रासीद्विक्रमयशा नाम प्रवरविक्रमः । रिपु[1]स्त्रैणास्रनीरेद्धप्रतापैरंमदो नृपः ॥ २ ॥
तस्य पंचशतान्यासन्नंतःपुरमृगीदृशाम् । यूथभर्तुर्द्विपस्येव करिण्यः प्रेमभाजनम् ॥ ३ ॥
तदा चासीत् पुरे तस्मिन् सार्थवाहो महर्द्धिकः । नागदत्तोऽभिधानेन निधानमिव संपदाम् ॥ ४ ॥
सौभाग्यलावण्यवती रूपातिशयशालिनी । विष्णोः श्रीरिव विष्णुश्रीर्नाम्ना तस्य गृहिण्यभूत् ॥ ५ ॥
अन्योऽन्यनीलिकारागप्रेमाणौ तौ विजह्रतुः । [2]अव्याहतस्मरक्रीडासरसौ सारसाविव ॥ ६ ॥
काकतालीयन्यायेन कथमप्येकदा तु सा । दृक्पथं विक्रमयशोवसुधाभर्तुराययौ ॥ ७ ॥
तां प्रेक्ष्य विक्रमयशा दस्युनेव मनोभुवा । लुंठ्यमान[3]विवेकस्वश्चेतस्येवमचिंतयत् ॥ ८ ॥
अहो वि[4]लोकने अस्या मृग्याइव मनोरमे । बंधु[5]रः केशपाशश्च कलापइव केकिनः ॥ ९ ॥
पक्वबिंबं द्विधाभूतमिवोष्ठौ कोमलारुणौ । पीनोन्नतौ कुचावेतौ स्मरक्रीडाचलाविव ॥ १० ॥
प्रत्य[6]ग्रे इव च लते भुजे सरलकोमले । मध्यं नितांतक्षामं च मुष्टिग्राह्यं प[7]वेरिव ॥ ११ ॥

---

१ रिपुस्त्रीसमूहस्याश्रुनीरैः एद्धः प्रदीप्तः प्रताप एवैरंमदो मेघाग्निर्यस्य सः । २ अप्रतिहतकामक्रीडायां रससहितौ । ३ लुंठ्यमानं विवेक एव स्वं धनं यस्य सः । ४ नेत्रे । ५ सुंदरः । ६ नूतने । ७ वज्रस्य मध्यम् ।

शेवलालीव रोमावल्यावर्तश्च नाभ्यपि । नितंबः पुलिनमिव लावण्यसरितस्त्वसौ ॥ १२ ॥
रंभास्तंभाविवोरू च पादौ च कमले इव । किमन्यत् सर्वमप्यस्या मनो हरति कस्य न ॥ १३ ॥
जराविक्लवचित्तत्वादनौचित्येन वेधसा । निवेशिता क्वाप्यपात्रे शक्रसंज्ञः श्मशानवत् ॥ १४ ॥
एतामपहरिष्यामि क्षेप्स्याम्यन्तःपुरे निजे । अनौचित्यनिवेशित्वदोषः स्रष्टुः प्रयातु च ॥ १५ ॥
एवं मनसि निश्चित्य कंदर्पविधुरोऽथ ताम् । जग्राह विक्रमयशा यशो म्लानीचकार च ॥ १६ ॥
अंतरंतःपुरं क्षिप्त्वा रमयामास तां सदा । विचित्रस्मरलीलाभिरेकतानः[1] स नृपतिः ॥ १७ ॥
आविष्टइव भूतेन धत्तूरमिव लीढवान् । अपस्मारमिव प्राप्तो मदिरामिव पीतवान् ॥ १८ ॥
आघ्रात इव सर्पेण सन्निपातमिवाप्तवान् । विधुरस्तद्वियोगेन सार्थवाहो बभूव सः ॥ १९ ॥ युग्मम् ।
तया सह वियुक्तस्य सार्थवाहस्य तस्य च । संयुक्तस्य च नृपतेः कालोऽगाद्दुःखसौख्यकृत्[2] ॥ २० ॥
विष्णुश्रिया रममाणे नृपे तस्मिन्निरंतरम् । ईर्ष्यया कार्मणं चक्रुः क्रुद्धाः शुद्धांतयोषितः ॥ २१ ॥
कार्मणेन च सा तेन क्षीयमाणा क्षणे क्षणे । मूलवम्येव लतिका जीवितेन व्यमुच्यत ॥ २२ ॥
नृपोऽपि मृत्युना तस्या जीवन्मृतइव स्थितः । प्रलापी च विलापी च नागदत्तइवाभवत् ॥ २३ ॥
नादत्त चानले क्षेप्तुं तद्विष्णुश्रीकलेवरम् । प्रिया ममैषा प्रणयतूष्णीकेत्यनिशं वदन् ॥ २४ ॥
मंत्रिणो मंत्रयित्वाथ वंचयित्वा च नृपतिम् । अरण्ये चिक्षिपुर्नीत्वा तद्विष्णुश्रीकलेवरम् ॥ २५ ॥
त्वमासीरधुनैवेह किं प्रिये न निरीक्ष्यसे । तिरोधानक्रीडयालं वियोगस्य वयस्यया[3] ॥ २६ ॥

---

१ तल्लीनः । २ सार्थवाहस्य दुःखकृत्, नृपतेश्च सौख्यकृदित्यर्थः । ३ वियोगस्य मित्ररूपया तिरोधानक्रीडयालमित्यन्वयः ।

नर्मणापि वियोगाग्निर्मर्माविद्धुज्यते न हि । मदर्थां तव किं नार्तिरावां ह्येकात्मकौ सदा ॥ २७ ॥
एकाकिनी किमगच्छः क्रीडासरिति कौतुकात् । क्रीडाद्रिमथवारोहः क्रीडोद्यानमथान्यगाः ॥ २८ ॥
मां विना क्रीडसि कथमायाम्येष इति ब्रुवन् । तेषु तेषु प्रदेशेषु बभ्रामोन्मत्तवन्नृपः ॥ २९ ॥
राज्ञश्च त्यक्तपानान्नवृत्तेर्गतवति त्र्यहे । मरणाशंकिनोऽमात्यास्तस्या वपुरदर्शयन् ॥ ३० ॥
अत्यन्तप्रवर्दत्यंतविसंस्थुलशिरोरुहम् । शशवच्छरे वन्या कंकराकृष्टलोचनम् ॥ ३१ ॥
चर्वितोरसिजद्वंद्वं गृध्रैः पिशितगृध्नुभिः । समाकृष्टांत्रजालं च शिवाभिरशिवाकृति ॥ ३२ ॥
गादितं मक्षिकावृंदैर्मधुमंडकजालवत् । पिपीलिकाभिश्चाश्लिष्टं पातभग्नांडभांडवत् ॥ ३३ ॥
पूतिगंधि तदालोक्य सद्यो विष्णुश्रियो वपुः । विरक्तो विक्रमयशाश्चिंतयामासिवानिति ॥ ३४ ॥
॥ चतुर्भिः कलापकम् ॥

अहो असारे संसारे सारं वस्तु न किंचन । सारबुद्ध्या धिगेतस्यां मोहिताः स्मः कियच्चिरम् ॥ ३५ ॥
आहार्यैरेव हि गुणैर्हरिद्रारागसन्निभैः । अहो ह्रियंते नारीभिर्न कश्चित् परमार्थवित् ॥ ३६ ॥
यकृच्छकृन्मलश्लेष्ममज्जास्थिपरिपूरिताः । स्नायुस्यूता बहीरम्याः स्त्रियश्चर्मप्रसेविकाः ॥ ३७ ॥
बहिरंतर्विपर्यासः स्त्रीशरीरस्य चेद्भवेत् । तस्यैव कामुकः कुर्याद्गृध्रगोमायुगोपनम् ॥ ३८ ॥

---

१ अतिविस्तीर्णानि शिरोरुहाणि केशा यस्मिंस्तद्वपुः । २ चर्वितस्तनयुग्मम् । ३ मांसलोलुपैः । ४ अशुभाकारम् । ५ यथा पतनेन भग्नं स्फुटितमंडं पिपीलिकाभिराश्लिष्यते तथा । ६ पार्श्वस्थो मांसपिंडो यकृत् । ७ चर्मणा परिवृताः । ८ बहिर्यथा चर्म दृश्यते तदंतर्भवेदन्तर्यन्मांसरुधिरादि चास्ति तद्बहिर्भवेदिति विपर्यासः ।

ततः प्राग्जन्मवैरेण रुषी रोषारुणेक्षणः । बभाषे योजितकरं नरेंद्रं हरिवाहनम् ॥ ५३ ॥
पृष्ठेऽस्य श्रेष्ठिनो न्यस्यात्युष्णपायसभाजनम् । चेद्भोजयति मां राजंस्तदा भुंजेऽन्यथा न हि ॥ ५४ ॥
पृष्ठेऽन्यपुंसो विन्यस्य स्थालं त्वां भोजयाम्यहम् । इत्युक्तो भूभुजा भूयः स क्रुद्धो मुनिरब्रवीत् ॥५५॥
अस्यैव पृष्ठे विन्यस्य स्थालमत्युष्णपायसम् । भुंजेऽहं भूभुजां नाथाकृतार्थो यामि वा ध्रुवम् ॥ ५६ ॥
राजा भागवतत्वेन प्रत्यपद्यत तद्वचः । जिनशासनबाह्यानां विवेकः कीदृशो नृणाम् ॥ ५७ ॥
राजाज्ञया दत्तपृष्ठो भुंजानस्य द्विजन्मनः । स्थालतापं सोऽधिसेहे दवानलमिव द्विपः ॥ ५८ ॥
कर्मणः प्राक्तनस्यैव मदीयस्य फलं ह्यदः । सख्यानेन त्रुटत्वेतदिति चाचिंतयच्चिरम् ॥ ५९ ॥
भुक्ते तस्मिन्समुच्चख्ने सासृग्मांसवसारसान् । पृष्ठात्पायसपात्री सा सपंकेव चितेष्टका ॥ ६० ॥
गत्वौको लोकमाहूय स्वकीयं सर्वमप्यथ । अक्षमयज्जिनधर्मो जिनधर्मविचक्षणः ॥ ६१ ॥
निर्माय चैत्यपूजां च साधुपार्श्वमुपेत्य च । जिनधर्मः परिव्रज्यामुपादत्त यथाविधि ॥ ६२ ॥
निर्गत्य नगराच्छैलशृंगं समधिरुह्य च । संन्यस्य पक्षं पूर्वस्यां कायोत्सर्गं व्यधत्त सः ॥ ६३ ॥
अपरास्वपि दिक्ष्वेवं कायोत्सर्गं स निर्ममे । त्रोटिभिस्त्रोट्यमानोऽपि गृध्रकंकादिभिः खगैः ॥ ६४ ॥
सहमानो व्यथामेवं नमस्कारपरायणः । विपद्य कल्पे सौधर्मे स इंद्रः समजायत ॥ ६५ ॥
मृत्वा त्रिदंडिकः सोऽपि ह्यात्नियोगेन कर्मणा । शक्रस्य वाहनमभूदैरावण इति द्विपः ॥ ६६ ॥

---

१ भवानिति कर्तृपदमध्याहार्यम् । २ अंगीचक्रे । ३ अनेन मित्रेण कर्मच्छेदकरूपेणेत्यर्थः । ४ गृहम् । ५ पार्श्वभागम् । ६ चंचूभिः । ७ पंचपरमेष्ठिनमस्कारपरायण इत्यर्थः ।

सोऽपि पूर्णैरावणायुश्च्युत्वा जीवस्त्रिदंडिनः । भवे भ्रान्त्वासिताक्षाख्यो बभूव किल यक्षराट् ॥ ६७ ॥
इतश्च जंबूद्वीपेऽस्मिन् क्षेत्रे भरतनामनि । कुरुजांगलदेशेऽभून्नगरं हस्तिनापुरम् ॥ ६८ ॥
तत्राश्वसेनोऽश्वसेनाच्छादितावनिमंडलः । मंडलाग्र[1]जितारातिमंडलोऽभून्महीपतिः ॥ ६९ ॥
तस्मिंश्च गुणरत्नानां रोहणाद्रौ कदाचन । दुग्धे जलकृमिरिव न दोषकणिकाप्यभूत् ॥ ७० ॥
अस्याहं तृणवदिति सौभाग्यस्याभिकांक्षया । असिधाराव्रतं कर्तुमिव श्रीस्तद[2]सौ स्थिता ॥ ७१ ॥
आगतेष्वर्थिषु दधौ स हर्षमतिशायिनम् । व्यषीदच्च स्वदित्सानुमानेन स्तोक[3]याचिषु ॥ ७२ ॥
अभूत्तस्य महादेवी सहदेवीति नामतः । कापि देवीव रूपेण महीतलमुपागता ॥ ७३ ॥
चिरं शक्रश्रियं भुक्त्वा कल्पात् पूर्णायुरादिमात् । स जीवो जिनधर्मस्य तस्याः कुक्षाववातरत् ॥ ७४ ॥
मुखे प्रविशतः स्वस्मिन् सहदेव्यपि तत्क्षणम् । कुंजरादीन् महास्वप्नांश्चतुर्दश ददर्श सा ॥ ७५ ॥
समयेऽसूत सा सूनुं सर्वलक्षणलक्षितम् । अद्भुतरूपविभवं जात्यजांबूनदद्युतिम् ॥ ७६ ॥
महीयसाथोत्सवेन जगदानंददायिना । सनत्कुमार इत्याख्यां चक्रे तस्य महीपतिः ॥ ७७ ॥
कनकच्छेदगौरांगो बालो बाल इवोडुपः[4] । प्रीणन्नेत्राणि लोकानां स क्रमेण व्यवर्धत ॥ ७८ ॥
अंकादंके नरेन्द्राणां संचरन् स व्यराजत । अरविंदादरविंदे सितच्छद[5] इवोच्चकैः ॥ ७९ ॥
रूपेणाप्रतिरूपेण स बालोऽपि मृगीदृशाम् । जहार दृष्टमात्रोऽपि नेत्राणि च मनांसि च ॥ ८० ॥
सांगानि शब्दशास्त्राणि समस्तज्ञानमातृकाः । पपौ गुरुमुखोद्गीर्णा[6]न्येष गंडूषलीलया ॥ ८१ ॥

---

१ मंडलाग्रेण खड्गेन जितं शत्रुमंडलं येन सः । २ तस्य खड्गे । ३ दातुमिच्छाया अनुमानेनाल्पार्थिषु । ४ चंद्रः । ५ हंसः । ६ गुरुमुखान्निर्गतानि ।

राज्यश्रीभुवनस्तंभान् स्वदोःस्तंभानिवापरान् । स आददे शस्त्रशास्त्राण्यर्थशास्त्राणि चान्वितः ॥ ८२ ॥
अन्या अपि कलाः सर्वाः कलयामास लीलया । क्रमेण वर्धमानः स कलानिधिरिवामलः ॥ ८३ ॥
स सार्धैकचत्वारिंशद्धनुरुन्नतविग्रहः । मर्त्यलोकादिव दिवं शैशवात् प्राप यौवनम् ॥ ८४ ॥
तस्याभूत् परमं मित्रं कालिंदीसूरनंदनः । महेंद्रसूर इत्याख्याख्यातः प्रख्यातविक्रमः ॥ ८५ ॥
प्राप्ते वसंते सोऽन्येद्युः कालिंदीसूनुना समम् । मकरंदाख्यमुद्यानं कौतुकात् क्रीडितुं ययौ ॥ ८६ ॥
क्रीडाभिस्तत्र चित्राभिश्चिक्रीड सुहृदा समम् । सनत्कुमारो गीर्वाण[1]कुमार इव नंदने ॥ ८७ ॥
तदा च राज्ञोऽश्वपतेः प्राहिणोत् प्राभृतान् हयान् । धारा[2]पंचकचतुरान् सर्वलक्षणलक्षितान् ॥ ८८ ॥
नाम्ना जलधिकल्लोलं कल्लोलमिव चंचलम् । एकं सनत्कुमारस्याप्यर्पयामास वाजिनम् ॥ ८९ ॥
त्यक्त्वा क्रीडां कुमारस्तमारुरोह तुरंगमम् । हस्त्यश्वे राजपुत्राणां कौतुकं सर्वतोऽधिकम् ॥ ९० ॥
[3]कशामुत्क्षिप्य चैकेन वल्गां चैकेन पाणिना । [4]आसनास्पृष्टपर्याण ऊरुभ्यां प्रैरयच्च तम् ॥ ९१ ॥
पर्यधाविष्ट वेगेन पादैः क्ष्मामस्पृशन्निव । गच्छन् बहुतरं व्योम्नि सोऽश्वान् द्रष्टुं रवेरिव ॥ ९२ ॥
वल्गया चकृषे सोऽश्वः कुमारेण यथा यथा । तथा तथा [5]विपरीतशिक्षोऽधिकमधावत ॥ ९३ ॥
[6]सादिनां राजपुत्राणां धावतामपि मध्यतः । निर्ययौ स क्षणादश्वोऽश्वमूर्तिरिव राक्षसः ॥ ९४ ॥
पश्यतामपि भूपानामुडूना[7]मिव चंद्रमाः । स आरूढकुमारोऽश्वोऽभूददृश्यः क्षणादपि ॥ ९५ ॥

---

१ देवकुमारः । २ धाराऽश्वस्य गतिविशेषः । ३ अश्वस्य ताडनी कशा । ४ आसनेनोपवेशनेनास्पृष्टं पर्याणं येन सः । ५ विपरीता शिक्षा यस्य सः । ६ अश्ववाराणाम् । ७ नक्षत्राणाम् ।

अश्वेन सूनुमाकृष्टं नदीपूरेण पोतवत् । प्रत्यानेतुमन्वचालीदश्वसेनोऽश्वसेनया ॥ ९६ ॥
यात्यसौ यात्यसावश्वः पदान्येतानि तस्य हि । फेनलालास्तस्य चेमा यावदाख्यदिदं जनः ॥ ९७ ॥
तावद्वात्योदभूच्चंडा[1] पूर्णब्रह्मांडभस्त्रिका । अकालिका कालरात्रिरिवांधंकरणी दृशाम् ॥ ९८ ॥
॥ युग्मम् ॥
अपटीभिरिवौकांसि[2] दिशोऽछादयंत रेणुभिः । स्तंभितानीव सैन्यानि नोत्क्षेप्तुं[3] पादमप्यलम् ॥ ९९ ॥
पदफेनानि चिह्नानि गच्छतस्तस्य वाजिनः । अशेषाण्यपि भग्नानि पांसुकल्लोलमालया ॥ १०० ॥
न निम्नं नोन्नतं नापि स्थपुटं[4] न द्रुमाद्यपि । अलक्षि पाताल इव प्रविष्टोऽभूज्जनोऽखिलः ॥ १०१ ॥
मूढोपायाः सैनिकास्ते पर्याकुलयभवन्नथ । अन्धावम्भःपूर्यमाणयानाः सांयात्रिका इव ॥ १०२ ॥
नत्वा महेंद्रसिंहोऽश्वसेनमेवं व्यजिज्ञपत् । देव दैवस्य घटना दुर्घटान्यस्य खल्वियम् ॥ १०३ ॥
अन्यथा हि कुमारः क्व दूरदेशो हयः क्व च । तत्र चाज्ञातशीले[5] क्व कुमारस्याधिरोहणम् ॥ १०४ ॥
कुमारस्यापहरणं तेन दुर्वाजिना क्व च । क्व वा वात्येयमुद्दंडरजश्छादितदृक्पथा ॥ १०५ ॥
पर्यंतसामंतमिव दैवं जित्वा तथापि हि । आनेष्याम्यहमन्विष्य स्वमित्रं स्वामिसन्निभम् ॥ १०६ ॥
कंदरेषु गिरींद्राणां तुंगेषु शिखरेषु च । निरंतरतरुस्तोमदुर्गमास्वटवीषु च ॥ १०७ ॥
रोधोरंध्रेषु[6] पातालकल्पेषु सरितामपि । निर्जलेष्वपि देशेषु विषमेष्वपरेष्वपि ॥ १०८ ॥

---

१ वायुसमूहो वात्या । २ यथा गृहाणि अपटीभिः पटविशेषैश्छाद्यंते तथा । ३ स्थापयितुं । ४ समप्रदेशम् । ५ अज्ञातं शीलं यस्य तस्मिन्नश्वे । ६ रोधसां तीराणां रंध्रेषु ।

ममाल्पपरिवारस्य क्वचिदेकाकिनोऽपि वा । ईषत्करं [1]चरस्येव कुमारान्वेषणं प्रन्नो ॥ १०९ ॥
देवस्यामितसैन्यस्यासम्मातो यत्र कुत्रचित् । तन्नार्हं ह्रस्वरथ्यायां प्रवेशइव दंतिनः ॥ ११० ॥
न्नूयो न्नूयोऽप्येवमुक्त्वा पादलग्नेन तेन तु । निवर्तितोऽश्वसेनः स्वं दुःखितो नगरं ययौ ॥ १११ ॥
मितसारपरीवारो दुर्वार इव वारणः । महेंद्रसिंहः सहसा प्रविवेश महाटवीम् ॥ ११२ ॥
पाषाणैः [2]खड्गिविषाणोत्क्षिप्तैर्विषमपद्धतिम् । घर्मार्तप्रविशत्[3]क्रोडपंकिलीकृतपल्वलाम् ॥ ११३ ॥
प्रौढ[4]न्नल्लूकहिक्कान्निः प्रतिशब्दितगह्वराम् । गह्वरासीनशार्दूलकृतबूत्कारदारुणाम् ॥ ११४ ॥
उत्फालचित्रककुल[5]व्याकुलैणकुलाकुलाम् । गलितश्वापदैर्बाढं[6]वाहसैर्वेष्टितद्रुमाम् ॥ ११५ ॥
[7]चमूरुचक्रैराक्रांतमार्गच्छायावनीरुहाम् । [8]सिंहीसखीपयःपायिसिंहरुद्धाध्वनिम्नगाम् ॥ ११६ ॥
मत्तकुंजरन्नग्नाध्वशाखिशाखातिदुर्गमाम् । सनत्कुमारमन्वेष्टुं स विष्वक् तामगाहत ॥ ११७ ॥
॥ पंचन्निः कुलकम् ॥

विकटां कंटकितरुश्वापदै[9]रवटैः स्थलैः । महाटवीं तामटतस्तस्य सैन्यं व्यशीर्यत ॥ ११८ ॥
खिन्नखिन्नैर्मुच्यमानो मंत्रिमित्रादिकैरपि । त्यक्तसंगो मुनिरिव स एकाकी क्रमादन्नूत् ॥ ११९ ॥
न्नूयो महानिकुंजेषु गिरीणां कंदरेष्वपि । पल्लीपतिरिवैकोऽपि स बभ्राम धनुर्धरः ॥ १२० ॥
बृंहिते वननागानां सिंहगुंजारवेष्वपि । सोऽधावत् सनत्कुमारवीरध्वनितशंकया ॥ १२१ ॥

---

१ दूतस्येव । २ खड्गी गंडकः । ३ क्रोडः सूकरः । ४ भल्लूक ऋक्षः । ५ एणकुलं मृगकुलम् । ६ वाहसोऽजगरः । ७ चमूरुर्हरिणभेदः । ८ सिंही सखीव तया सह पयःपिबद्भिः सिंहै रुद्धा मार्गसरितो यस्यां ताम् । ९ गर्तैः ।

गतिरीदृशी ॥ १२२ ॥

स्वमित्रं तत्र चापश्यन्नुच्छलन्निर्झरध्वनौ । तदाशंक्यन्यतोऽधावत् प्रेम्णो हि गतिरीदृशी ॥ १२३ ॥

नदीकरिदरीनूचे मद्बंधोर्ध्वनिरेप यत् । स वः पार्श्वे ततो लभ्यं सर्वं ह्येकांशदर्शनात् ॥ १२४ ॥

सर्वत्राप्रेक्ष्य सुहृदमुच्चैरारुह्य शाखिनः । दिशो न्यरूपयद्भूयो मार्गभ्रांत इवाध्वगः ॥ १२५ ॥

बद्धशोक इवाशोकेष्वाकुलो बकुलेष्वपि । असहः सहकारद्रुष्वमल्लो मल्लिकास्वपि ॥ १२६ ॥

न्यक्कारी कर्णिकारेषु पाटलः पाटलास्वपि । दूरस्थः सिंदुवारेषु सोत्कंपश्चंपकेष्वपि ॥ १२७ ॥

पराङ्मुखश्च मलयानिलेष्वपि खलेष्विव । स्फुटत्कर्णः कोकिलानां पंचमोच्चारितेष्वपि ॥ १२८ ॥

अशांततापः पीयूपरश्मेरपि हि रश्मिपु । स वसंतमतीयाय रोरपुत्र इवैककः ॥ १२९ ॥

॥ चतुर्भिः कलापकम् ॥

कुकूलैरिव विस्तीर्णैः पादपद्मनखंपचैः । भृज्यमानोऽर्कांशुतप्तैर्भूरजोभिः पदे पदे ॥ १३० ॥

सद्यो निर्वाणदावाग्निभस्मदुःसंचरेऽध्वनि । पादतापमजानानोऽग्निस्तंभमिव सूत्रयन् ॥ १३१ ॥

उष्णवात्याभिरनलज्वालाभिरिव भूरिभिः । वपुस्तापमगणयन् करी गिरिचरो यथा ॥ १३२ ॥

पिबन् पयांसि स ग्रीष्मं भ्राम्यन्नेकोऽत्यवाहयत् ॥ १३२ ॥

॥ चतुर्भिः कलापकम् ॥

काथान् रोगीव सरितां पंकिलान्यूष्मलानि च । पिबन् पयांसि स ग्रीष्मं भ्राम्यन्नेकोऽत्यवाहयत् ॥ १३२ ॥

रक्षोभिरिव जीमूतैरुद्यद्विद्युन्मुखाग्निभिः । अक्षोभ्यमाणहृदयो विश्वविक्षोभणैरपि ॥ १३३ ॥

---

१ तन्निगन्नगाशंकत इति तदाशंकी । २ यत्रैकांशदर्शनं तत्र सर्वं गवेदिति न्यायात् । ३ आम्रवृक्षेषु । ४ तिरस्कर्ता । ५ दीनपुत्रः । ६ तुषानलैः । ७ वायूनां समूहो वात्या । ८ मेघैः ।

अखंडप्रसरैर्धारासारैः शितशरैरिव । विध्यमानोऽपि संनद्ध इवामुह्यन् मनागपि ॥ १३४ ॥
पदे पदे वननदीर्वेगोन्मूलितपादपाः । दुस्तरा अप्यनायासं राजहंस इवोत्तरन् ॥ १३५ ॥
आक्रामन् पंकिलं मार्गं वराह इव लीलया । मित्रान्वेषी पर्यटन् स वर्षा अप्यत्यवाहयत् ॥ १३६ ॥
॥ चतुर्भिः कलापकम् ॥
मूर्ध्नि चित्रातपं घोरं पादयोस्तप्तवालुकाः । सहमानोऽग्निशरावसंपुटांतर्वसन्निव ॥ १३७ ॥
स्वच्छे तोये तोयजेषु हंसादिषु च पक्षिषु । अविश्रांतमनाः क्वासि क्वासि मित्रेवमुद्गृणन् ॥ १३८ ॥
मदगंधिसप्तपर्णक्रुद्धधावितदंतिनाम् । मध्येन गच्छन् दंतीव वनांतरसमागतः ॥ १३९ ॥
सख्येव पवमानेन प्रेर्यमाणोऽब्जगंधिना । अत्यगाच्छरदमपि स भ्रमन् शरदभ्रवत् ॥ १४० ॥
॥ चतुर्भिः कलापकम् ॥
उत्तरेण समीरेण हिमाद्रेरिव बंधुना । हिमसात् क्रियमाणेषु सरसीसरिदंबुषु ॥ १४१ ॥
दवाग्निनाप्यदाह्यासु दह्यमानासु सर्वतः । जलांतःपद्मकह्लारकैरवोत्पलपंक्तिषु ॥ १४२ ॥
शीतार्त्तेषु किरातेषु दवानलमपीच्छुषु । हेमन्तमप्यतीयाय स बाढं दृढनिश्चयः ॥ १४३ ॥
॥ त्रिभिर्विशेषकम् ॥
शीर्णेषु जीर्णपर्णेषु जानुदघ्नेषु भूरुहाम् । छन्नाहिवृश्चिकेष्वंघ्रिन्यासं निःशंकमादधत् ॥ १४४ ॥

---

१ तीक्ष्णवाणैः । २ वर्मितः । ३ चित्रा नक्षत्रं तस्य तापम् । ४ पंकजेषु । ५ मदो हस्तिमदस्तस्येव गंधो यस्यैतादृशेन सप्तपर्णवृक्षेण क्रुद्धा अत एव धाविताश्च ते दंतिनश्च तेषाम् । ६ वायुना । ७ छन्नाः सर्पाश्च वृश्चिकाश्च येषु तेषु ।

कर्णमर्माविद्भिरिव मर्मरैररति दुःश्रवैः । प्रबुद्धोत्कर्णपंचास्य[1]बूत्कारैष्वप्यकंपितः ॥ १४५ ॥
प्रत्यग्रपल्लवास्वादमात्रेणैवोदरंभरिः । शिशिरं गमयामासोऽशिशिरो मित्रपीडया ॥ १४६ ॥
॥ त्रिभिर्विशेषकम् ॥

एवं सनत्कुमारस्यान्वेषणायाटतोऽटवीम् । एको महेन्द्रसिंहस्य जगाम परिवत्सरः ॥ १४७ ॥
तस्यामटव्यामन्येद्युर्गत्वा कियदवस्थितः । दिशो विलोकयामास नैमित्तिक इवोन्मुखः ॥ १४८ ॥
ततः कारंडवक्रौंचहंससारसपक्षिणाम् । क्षणादाकर्णयामास कोलाहलमनाकुलः ॥ १४९ ॥
मरुता पंकजामोदवाहिनाश्वासितश्च सः । सरः किंचिदिहास्तीति निश्चिकायानुमानतः ॥ १५० ॥
आनंदबाष्पतोयेन निश्चिन्वन् मित्रसंगमम् । सरोवरस्याभिमुखं स ययौ राजहंसवत् ॥ १५१ ॥
गच्छन्नग्रे च शुश्राव गीतं गांधारबंधुरम् । मधुरं वेणुनादं च वीणाक्वाणं च हारि[3]णम् ॥ १५२ ॥
विचित्रवस्त्रनेपथ्यरमणीमध्यवर्तिनम् । मित्रं सनत्कुमारं स ददर्श प्रियदर्शनम् ॥ १५३ ॥
असौ प्रियसुहृत् किं मे माया कस्यापि कापि वा । इन्द्रजालमिदं किं वा हृदयान्निर्गतोऽग्र मे ॥ १५४ ॥
इति सोऽचिंतयद्यावत्तावत् कर्णरसायनम् । वैतालिकेन केनापि पठ्यमानमदोऽशृणोत् ॥ १५५ ॥
कुरुवंशसरोहंसाश्वसेनाब्धिनिशाकर । सनत्कुमार सौभाग्यमनोभव चिरं जय ॥ १५६ ॥
जय विद्याधरवधूदोर्लतालिंगनद्रुम । आढ्यंभविष्णो वैताढ्यश्रेणिद्वयजयश्रिया ॥ १५७ ॥
एवं समाकर्ण्य सनत्कुमारस्य स दृक्पथम् । जगाम ग्रीष्मसंत[2]प्तो जलाशयमिव द्विपः ॥ १५८ ॥

---

१ पंचास्यः सिंहः । २ तप्तः । ३ मनोहरम् ।

हर्षाश्रुधारया तुल्यं स पतन् पादपद्मयोः । अभ्युत्थायो[1]द्धृत्य सनत्कुमारेणाभिपस्वजे ॥ १५९ ॥

उभौ हर्षाश्रु वर्षन्तौ वार्षिकाविव वारिदौ । सविस्मयावप्रतर्क्य[2]परस्परसमागमात् ॥ १६० ॥

साश्चर्यैर्वीक्ष्यमाणौ तौ विद्याधरकुमारकैः । महार्घ्यासनयोरासांचक्राते रोमहर्षिणौ ॥ १६१ ॥

अनन्यदृष्टिमनसौ तावभूतां परस्परम् । योगिनाविव रूपस्थध्यानमुद्रापरायणौ ॥ १६२ ॥

सनत्कुमारकुमारयोगाद्दिव्यौषधादिव । तदा महेन्द्रसिंहस्य श्रमो रोग इवात्रुटत् ॥ १६३ ॥

सनत्कुमारो हर्षाश्रु प्रमृज्याथ स्वचक्षुषोः । महेन्द्रसिंहमित्यूचे ससुधोद्गारया गिरा ॥ १६४ ॥

कथमत्र स[3]मायासीरेकाक्यासीः कथं नु वा । मामज्ञासीः कथं वात्र कथं वा कालमक्षिपः ॥ १६५ ॥

मद्वियोगे पितृपादाः कथं प्राणानधारयन् । कथं पितृभ्यामेकाकी प्रेपितोऽसीह दुर्गमे ॥ १६६ ॥

इति पृष्टः कुमारेण बाष्पगद्गदवागथ । महेन्द्रसिंहः प्राग्वृत्तमाचचक्षे यथातथम् ॥ १६७ ॥

ततः सनत्कुमारस्तं विद्याधरवधूजनैः । चतुरैः कारयामास म[4]ज्जनं भोजनादि च ॥ १६८ ॥

महेन्द्रसिंहस्तदनु वि[5]स्मयस्मेरलोचनः । सनत्कुमारमित्यूचे विनयाञ्चितांजलिः ॥ १६९ ॥

तदा तेन तुरंगेणापहृतः कियतीं भुवम् । त[6]दादि मद्वियोगे च प्राप्तं किमथवा त्वया ॥ १७० ॥

इयमृद्धिः कुतो वा ते प्रसीदाख्यातुमर्हसि । रहस्यभूतमेतत्ते गोपनीयं न चेन्मयि ॥ १७१ ॥

सनत्कुमार इत्युक्तश्चिंतयामास चेतसि । आ[7]त्मकल्पे वयस्येऽस्मिन् गोपनीयं न किंचन ॥ १७२ ॥

---

१ उत्थाप्य । २ तर्कितुमशक्यः परस्परसमागमस्तस्मात् । ३ आगतः । ४ स्नानम् । ५ विस्मयेन प्रफुल्लनेत्रः । ६ तत्प्रभृति । ७ स्वसदृशे ।

परैरप्युच्यमानेन स्ववृत्तेन सतापि[1] हि । महापुमांसो लज्जन्ते तत् स्ववृत्तं कथं ब्रुवे ॥ १७३ ॥
ज्ञवत्वेवं तावदिति विनिश्चित्याश्वसेनसूः । इत्यादिदेश दयितां वामपार्श्वे निषेदुषीम् ॥ १७४ ॥
प्रिये बकुलमतिके विद्यया वेद्य वेदिनि । अस्मै महेन्द्रसिंहाय तथ्यां कथय मत्कथाम् ॥ १७५ ॥
मुकुलीकुरुते नेत्रांभोजे निद्रा तु मेऽधुना । इत्युदित्वा रतिगृहं सुषुप्सुः प्रविवेश सः ॥ १७६ ॥
ततो बकुलमतिरप्यवोचत्तत्र वासरे । सखा ते वाजिना[2] जह्रे युष्माकं पश्यतामपि ॥ १७७ ॥
प्रवेशितश्च महतीमटवीमतिदारुणाम् । रहःक्रीडास्थानमिव देवस्य समवर्तिनः[3] ॥ १७८ ॥
गच्छन्नह्नि द्वितीयेऽपि सोऽश्वः पंचमधारया[4] । मध्याह्ने क्षुत्पिपासार्त्तः कृष्ट्वा जिह्वामवास्थितः ॥ १७९ ॥
तस्माच्छ्वासापूर्णकंठात्स्तब्धपादात्तुरंगमात् । आर्यपुत्रोऽप्यवातारीत् प्रपित्सोः कुट्टिमादिव ॥ १८० ॥
त्रोटयित्वा तदुदरबंधिनं पट्टमायतम् । सोऽश्वादुत्तारयामास पर्याणकविके[5] स्वयम् ॥ १८१ ॥
तुरंगमः स घूर्णित्वा पपात धरणीतले । सद्यश्च मुमुचे प्राणैः सहपातभयादिव ॥ १८२ ॥
पिपासयाथार्यपुत्रः पयोऽन्वेष्टुमितस्ततः । तस्यामटव्यां बभ्राम नापश्यच्च मराविव ॥ १८३ ॥
सुकुमारतयांगस्य दूरायातश्रमेण च । दवदाहादटव्याश्च व्याकुलोऽभूत् सखा तव ॥ १८४ ॥
गत्वादूरात् सप्तपर्णतरुमूले द्रुतं ततः । जपाविक्रान्मुकुलितेक्षणः क्षोण्यां पपात च ॥ १८५ ॥
तदा चामुं पुण्यवशाद्यक्षस्तद्वनदैवतम् । जलैः सिषेच सर्वांगं शिशिरैरमृतोपमैः ॥ १८६ ॥

---

१ सत्येनापि । २ अश्वेन । ३ यमराजस्य । ४ गतिविशेषेण । ५पर्याणं अश्वपृष्ठाच्छादनं कविका वल्गानुगता 'चोकडा'इति ख्याता।

उत्थाय लब्धसंज्ञोऽसौ तद्दत्तं तत्पयः पपौ । कस्त्वं कुतो वा वारीदमित्यपृच्छच्च तं शनैः ॥ १८७ ॥
यक्षोऽहमिह वास्तव्यो [1]मानसात् त्वत्कृते पयः । इदं मया समानीतमित्याचख्यौ स यक्षराट् ॥ १८८ ॥
आर्यपुत्रोऽवदद्भूयः संतापोऽङ्गे महानयम् । न विना मानससरोमज्जनादपयास्यति ॥ १८९ ॥
तवेछां पूरयाम्येष इत्युक्त्वा यक्षपुंगवः । कदलीसंपुटे क्षिप्त्वामुं मानससरोऽनयत् ॥ १९० ॥
तत्र च स्नपयामासार्यपुत्रं स यथाविधि । गजराजं [2]गजायुक्त इव शीतामलैर्जलैः ॥ १९१ ॥
सर्वांगीणं सुखस्पर्शैरपनिन्ये श्रमो जलैः । आर्यपुत्रस्य निपुणैः संवाहकजनैरिव ॥ १९२ ॥
तत्रासिताक्षो यक्षः प्राग्जन्मारिः सुहृदस्तव । हननाय समागछत् कृतांत इव नूतनः ॥ १९३ ॥
अरे रे तिष्ठ सिंहेन क्षुधितेनेव कुंजरः । चिरादसि मया दृष्टः कियद्दूरं गमिष्यसि ॥ १९४ ॥
इत्यूर्जितं स [3]तर्जित्वा समुन्मूल्यैकमं[4]घ्रिपम् । आर्यपुत्राय सोऽनार्यः प्राक्षिपद्यष्टिलीलया ॥ १९५ ॥
समापतंतं हस्तेन निहत्यापातयद्द्रुमम् । तं ते सखा प्रतिं[5]कारज्जस्त्रामिव मतंगजः ॥ १९६ ॥
ततो बहलधूलीभिरंधकारमयं जगत् । अकालोत्पन्नकल्पान्तमिव यक्षश्चकार सः ॥ १९७ ॥
स विचक्रे पिशाचांश्च धूमधूम्रकलेवरान् । सोदरानन्धकारस्य दारुणाकारधारिणः ॥ १९८ ॥
ज्वालाजालकरालास्यास्ते [6]चित्या इव जंगमाः । अट्टहासं विमुंचन्तः पतत्पविरवोपमम् ॥ १९९ ॥
पिंगकेशाः पिंगनेत्राः [7]सदवा इव पर्वताः । लंबजिह्वाः कोटरान्तःस्थिताहय इव द्रुमाः ॥ २०० ॥

---

१ तन्नाम्नः सरोवरात् । २ हस्तिपकः । ३ निर्भर्त्स्य । ४ वृक्षम् । ५ गजग्रहणोपायभूतां मल्लाम् । ६ अग्नयः । ७ दवानलसहिताः ।

तीक्ष्णवक्त्रा महादंष्ट्रा दधानाः कर्त्रिका इव । अधावन्ताध्यार्यपुत्रमधिमध्विव मक्षिकाः ॥ २०१ ॥
॥ त्रिभिर्विशेषकम् ॥

भ्राम्यतो विकृताकारान्रंगादाविव नर्तकान् । आर्यपुत्रोऽपि तान् पश्यन्न बिभाय मनागपि ॥ २०२ ॥
पिशाचेभ्योऽप्यचकितमार्यपुत्रं तरस्विनम् । अकालकालपाशाभैर्नागपाशैर्बबंध सः ॥ २०३ ॥
आर्यपुत्रस्तु तान् सर्वांस्त्रोटयामास लीलया । हस्तोत्क्षेपेण हस्तीवाविहस्तो वल्लिमंरूपम् ॥ २०४ ॥
अमुं यक्षो विलक्षोऽथ करघातैरघातयत् । महागिरिप्रस्थमिव लांगूलाच्छोटनैर्हरिः ॥ २०५ ॥
आजघानार्यपुत्रस्तं वज्रसारेण मुष्टिना । महामात्र इव क्रुद्धो लोहगोलेन दन्तिनम् ॥ २०६ ॥
अयोवलयितेनाथ मुद्गरेण गरीयसा । आर्यपुत्रं न्यहन् यक्षस्तडितेवाद्रिमंबुदः ॥ २०७ ॥
चंदनद्रुममुन्मूल्य तेन वार्धिणुराहतः । यक्षः पपात क्षुण्णूर्ध्वशोषं शुष्क इव द्रुमः ॥ २०८ ॥
यक्षोऽपि शैलमुत्क्षिप्य लीलया गंडशैलवत् । आर्यपुत्रस्योपरिष्टाच्चिक्षेपामर्षणः क्षणात् ॥ २०९ ॥
तेन शैलप्रहारेण जज्ञे निश्चेतनः क्षणम् । सायं नदीह्रद इव मीलितेक्षणपंकजः ॥ २१० ॥
लब्धसंज्ञो विधूयाद्रिं महावायुरिवांबुदम् । आर्यपुत्रः प्रववृते बाहुभ्यां योद्धुमुच्चकैः ॥ २११ ॥
दंडेन दंडभृदिव दोर्दंडेन निहत्य तम् । चक्रे सखा ते कणशः सोऽमरत्वात्तु नामृत ॥ २१२ ॥
ततो विरसमारभ्य मुमूर्षन्निव सूकरः । असिताक्षः पलायिष्ट वायवीयेन रंहसा ॥ २१३ ॥
रणकौतुकवीक्षिण्यः सुरविद्याधरांगनाः । त्वन्मित्रे ववृषुः पुष्पाण्यृतुश्रिय इव स्वयम् ॥ २१४ ॥

१ बलिनम् । २ अमंदः । ३ विषण्णः । ४ दंडधारी वरुणो वा यमः । ५ वायुसदृशेन ।

अपराह्णे ततोऽचालीन्मानसाब्धीरमानसः । आर्यपुत्रो ययौ वाह्यां भुवं मत्त इव द्विपः ॥ २१५ ॥
नंदनात्तत्र चायाता असौ खेचरकन्यकाः । ईक्षांचक्रे रूपवतीः [1]स्मरजीवातुसन्निभाः ॥ २१६ ॥
सखा ते ताभिरप्यैक्षि हावभावमनोहरम् । स्वयंवरस्रज इव क्षिपंतीभिर्दृशोऽलसाः ॥ २१७ ॥
आविश्चिकीर्षुः सद्भावमार्यपुत्र उपेत्य ताः । सुधामधुरया वाचा प्रोवाचार्यो वचस्विनाम् ॥ २१८ ॥
यूयं महात्मनः कस्य पुत्र्यः कुलविभूषणम् । युष्माभिर्भूषितं चेदमरण्यं केन हेतुना ॥ २१९ ॥
ता अप्यूचुर्महाभाग विद्याधरमहीपतेः । श्रीमतो भानुवेगस्य वयमष्टापि कन्यकाः ॥ २२० ॥
इतश्चानतिदूरेऽस्ति तातस्य नगरी वरा । तामलंकुरु विश्रांत्या राजहंस इवाब्जिनीम्[2] ॥ २२१ ॥
इत्युक्तः प्रश्रयात्[3] ताभिः सखा ते तत्पुरीमगात् । सांध्यं विधिं कर्तुमिवांभोधौ भानुर्ममज्ज च ॥ २२२ ॥
वरचिंताशल्यभृतो विशल्यकरणौषधिः । ताभिः सखा ते स्वपितुरंतिकेऽनायि [4]सौविदैः ॥ २२३ ॥
अभ्युत्थानं भानुवेगः कृत्वेत्यमुमभाषत । दिष्ट्या नः सदनं पुण्यं पुण्यराशिर्यदागमः ॥ २२४ ॥
आकृत्यापि ज्ञायसे त्वं महावंश्यो महाभुजः । इन्दोः क्षीरार्णवाजन्म मूर्त्त्यापि ह्यनुमीयते ॥ २२५ ॥
यत्कन्यानां त्वमुचितो वरोऽसीति मयार्थ्यसे । इमाः परिणयाष्टापि रत्नं स्वर्णे हि योज्यते ॥ २२६ ॥
एवमभ्यर्थितस्तेन तदैव विधिपूर्वकम् । ता दिक्श्रिय इवाष्टापि पर्यणैषीत् सखा तव ॥ २२७ ॥
ताभिः समं रतिगृहे सुप्तोऽसौ बद्धकंकणः । निद्रासुखं चान्वभवद्तल्पर्यंकमास्थितः ॥ २२८ ॥
निद्रापराजितं चैतमसिताक्षः क्षणादपि । उत्क्षिप्यान्यत्र चिक्षेप बलिभ्योऽपि छलं बलिः ॥ २२९ ॥

---

१ स्मरजीवनतुल्याः । २ कमलिनीम् । ३ विनयात् । ४ अंतःपुरचारिभिः नपुंसकनरैः ।

पश्यन् सखा ते निशान्ते स्वं भूमिष्ठं सकंकणम् । एकाकिनमरण्यान्तर्दध्यौ किमिदमित्यथ ॥ २३० ॥
असावटन्नटव्यंतरेकाकी पूर्ववत् पुनः । अभ्रंलिहं ददर्शैकं प्रासादं सप्तभूमिकम् ॥ २३१ ॥
कस्यापि मायिनोऽदोऽपि मायाविलसितं किमु । इत्यामृशन्नार्यपुत्रस्तं प्रासादं समासदत् ॥२३२॥
कस्याश्चिद्योषितस्तत्र कुररीकरुणस्वरम् । अश्रौषीद्रुदितमसौ वनांतमपि रोदयत् ॥ २३३ ॥
आर्यपुत्रो दयावीरः प्रासादे तत्र सप्तमीम् । आरोहद्भूमिकां धिष्ण्यविमानभ्रान्तिदायिनीम् ॥ २३४ ॥
सनत्कुमार कौरव्य मम जन्मान्तरेऽपि हि । भर्ता भूयास्त्वमेवेति भूयो भूयोऽपि शंसिनीम् ॥ २३५ ॥
अश्रुपूर्णेक्षणां दीनां कन्यामेकामधोमुखीम् । रूपलावण्यपुण्यांगीं सखा ते तत्र चैक्षत ॥ २३६ ॥
स्वनामश्रवणात् केयं ममेत्याशंकितोऽथ सः । पुरोभूयेत्यभाषिष्ट प्रत्यक्षेवेष्टदेवता ॥ २३७ ॥
भद्रे सनत्कुमारः कः कासि त्वं किमिहागता । किं वा ते व्यसनं येन तं स्मरन्तीति रोदिषि ॥ २३८ ॥
इत्युक्ता तेन सा बाला बलादाह्लादमीयुषी । पीयूषमिव वर्षन्ती गिरा मधुरयावदत् ॥ २३९ ॥
साकेतपुरनाथस्य सुराष्ट्रस्य महीपतेः । देव्याश्च चंद्रयशसः सुनंदा नाम पुत्र्यहम् ॥ २४० ॥
कुरुवंशनभोभानोरश्वसेनस्य भूपतेः । सूनुः सनत्कुमारस्तु रूपन्यक्कृतमन्मथः ॥ २४१ ॥
स मनोरथमात्रेण भर्ता मम महाभुजः । तस्मै पितृभ्यां दत्तास्मि यस्मादुदकपूर्वकम् ॥ २४२ ॥
ततोऽकृतविवाहां मामेको विद्याधरात्मजः । स्वकुट्टिमादिहानैषीत् परस्वमिव तस्करः ॥ २४३ ॥

---

१ आकाशगामिनम् । २ विचारयन् । ३ कुररीवत् करुणः स्वरो यस्मिन् । ४ धिष्ण्यं नक्षत्रं तारा वा । ५ संकल्पपूर्वकम् । ६ परधनम् ।

इमं विकृत्य प्रासादं मामत्रैव विमुच्य च । क्वापि विद्याधरः सोऽगान्न जाने किं भविष्यति ॥ २४४ ॥
अवोचदार्यपुत्रोऽपि मा भैषीः कातरेक्षणे[1] । सनत्कुमारः सोऽस्म्येष कौरव्यो यं स्मरस्यलम्[2] ॥ २४५ ॥
प्रत्यभाषिष्ट साप्येवं चिराद्दृष्टिपथेऽद्य मे । देव दैवेन सुस्वप्नमिव दिष्ट्यासि दर्शितः ॥ २४६ ॥
एवं तयोरालपतोरागात् क्रोधारुणेक्षणः । विद्याधरो वज्रवेगाभिधानोऽशनिवेगसूः ॥ २४७ ॥
उत्पाट्योल्लालयामास स विद्याधरदारकः । आर्यपुत्रं समुत्पातिखेचरभ्रमदायिनम् ॥ २४८ ॥
हा नाथ नाथ दैवेन निहतास्मीति भाषिणी । मूर्छया सा महीपृष्ठे शीर्णपर्णमिवापतत् ॥ २४९ ॥
क्रुद्धः सन्नार्यपुत्रोऽपि मुष्ट्या मशकमुष्टिवत् । वज्रौजसा वज्रवेगमवधीत्तं दुराशयम् ॥ २५० ॥
अक्षतांगस्तदभ्यर्णमार्यपुत्रः समाययौ । नेत्रनीलोत्पलानंदं जनयंश्चन्द्रमा इव ॥ २५१ ॥
समाश्वास्य च तां सद्यः पर्यणैषीन्मनीष्यसौ[3] । नैमित्तिकवरैः सा हि स्त्रीरत्नमिति सूचिता ॥ २५२ ॥
आगात्तत्र क्षणेनापि वज्रवेगस्य सोदरा[4] । कन्या संध्यावली नामाकुप्यज्ज्ञातृवधाच्च सा ॥ २५३ ॥
“भर्ता ते भ्रातृवधको भावीति” ज्ञानिनां वचः । स्मृत्वाशाम्यत् क्षणेनापि स्वलोभः कस्य नोपरि २५४
जयश्रीः सा द्वितीयेव स्वयंवरपरायणा । आर्यपुत्रं नाथमिच्छन्त्युपतस्थे कुमारिका ॥ २५५ ॥
अनुज्ञातस्त्वत्सखाथानंदभाजा सुनंदया । गांधर्वेण विवाहेन तामुपायंस्त रागिणीम् ॥ २५६ ॥
एत्य विद्याधरौ द्वौ च तदानीमाश्वसेनेये[5] । महारथं ससन्नाहमुपनीयेत्यवोचताम्[6] ॥ २५७ ॥
त्वया हतं वज्रवेगं गरुडेनेव पन्नगम् । विज्ञायाशनिवेगस्तत्पिता विद्याधरेश्वरः ॥ २५८ ॥

---

१ अधीरेक्षणे । २ अतिशयेन । ३ बुद्धिमान् । ४ भगिनी । ५ अश्वसेनस्य पुत्राय । ६ कवचसहितम् ।

। त्वां योधयितुमेत्येष रोषक्षारांबुसागरः ॥ २५९ ॥
विद्याधरबलछन्नदिको दिक्करिविक्रमः । आवां श्वशुर्यौ भवतः साहाय्यार्थं समागतौ ॥ २६० ॥
पितृभ्यां चंद्रवेगेन भानुवेगेन चेरितौ । अमुं चामुंच सन्नाहं विजयस्व द्विषां बलम् ॥ २६१ ॥
तत्प्रेषितं रथं चासुमारोहेन्द्ररथोपमम् । साहाय्यायागतौ विद्धि निजे मूर्त्ती इवापरे ॥ २६२ ॥
चंद्रवेगभानुवेगौ वाहनैर्वायुवेगिभिः । चंद्रवेगभानुवेगावब्धी पूर्वापराविव ॥ २६३ ॥
तौ तदानीमपि महावाहिनीकौ समेयतुः । उत्तस्थौ तुमुलो व्योम्नि पुष्करावर्त्तकैरिव ॥ २६४ ॥
तदा चाशनिवेगस्यागच्छतः सैन्यसंचयैः । विद्यां प्रज्ञप्तिकां नाम भर्तृगृह्या हि योषितः ॥ २६५ ॥
तदानीमार्यपुत्राय संध्यावलिरदत्त सा । रणायोत्कंठितस्तस्थौ क्षत्रिया हि रणप्रियाः ॥ २६६ ॥
आर्यपुत्रोऽपि सन्नह्य समारुह्य च तं रथम् । स्वसैन्यैर्ववृिरे वैरियशोविधुविधुंतुदाः ॥ २६७ ॥
चंद्रवेगभानुवेगादयो विद्याधरा अमुम् । आगमन्नतिवेगेनाशनिवेगस्य सैनिकाः ॥ २६८ ॥
गृह्णीत गृह्णीत हत हतेति च विभाषिणः । ताम्रचूडा इवोत्पत्योत्पत्यामर्षात् प्रहारिणः ॥ २६९ ॥
उभयोरप्ययुध्यन्त सैन्या दैन्यविनाकृताः । तदायुधेभ्यो दीप्तेभ्यो नान्यत्किंचित्त्वदृश्यत ॥ २७० ॥
तेषां क्ष्वेडारवादन्यन्नकिंचित्तुश्रुवे तदा । प्रतीयुश्च रणविदः सुभटाः कुंजरा इव ॥ २७१ ॥
अपासर्पन्नुपासर्पन् प्रहारानसकृद्ददुः । समुत्तस्थेऽशनिवेगो रथेनानिलवेगिना ॥ २७२ ॥
युद्ध्वा चिरेण भग्नेषु सैनिकेषु द्वयोरपि । इत्याक्षिपन् परानुच्चैः साधिज्यं विदधे धनुः ॥ २७३ ॥
भो भोः क्व वज्रवेगारिर्यमागारनवातिथिः ।

---

१ गृहाण । २ वैरिणां यश एव चंद्रस्तस्मिन् राहुसदृशाः । ३ दीनतारहिताः । ४ कुर्कुटाः । ५ गर्जनाशब्दात् । ६ प्रतिजग्मुः ।

एषोऽहं वज्रवेगारिर्मार्गणारसनातिथिः । इति ब्रुवन्नार्यपुत्रोऽप्याततज्यं धनुर्व्यधात् ॥ २९४ ॥
ततः प्रववृते युद्धं द्वयोरपि महौजसोः । शराशरि तिरोभूतदिवाकरकरोत्करम् ॥ २९५ ॥
द्वावप्यार्यपुत्रविद्याधरेशौ मारतत्परौ । मुक्त्वा महाधीरध्वस्त्रैरसंजातपराजयौ ॥ २९६ ॥
सार्पगारुडमाग्नेयवारुणाद्यैस्तु दारुणैः । दिव्यैरस्त्रैरयुध्येतामन्योन्यं बाध्यबाधकैः ॥ २९७ ॥ युग्मम् ॥
विद्याधरपतेश्चापमास्फाल्योन्मुंचतः शरम् । आर्यपुत्रः सायकेन जीवां जीवमिवाछिदत् ॥ २९८ ॥
मंडलाग्रमथाकृष्याशनिवेगस्य धावतः । यशोऽर्धमिव दोरर्धं निचकर्ताश्वसेनभूः ॥ २९९ ॥
नष्टैकदन्तो दन्तीव दंष्ट्रीवास्तैकदंष्ट्रिकः । निरेकभुजदंडोऽपि सोऽतिक्रोधादधावत ॥ ३०० ॥
प्रहर्तुं धावतस्तस्य दशनैर्दशतोऽधरम् । विद्यार्पितेन चक्रेण शिरश्चिच्छेद मत्पतिः ॥ ३०१ ॥
ततश्चाशनिवेगस्य राज्यलक्ष्मीः समंततः । मम भर्तरि संधाता विक्रान्तो हि श्रियां पदम् ॥ ३०२ ॥
चंद्रवेगप्रभृतिभिः समं विद्याधरेश्वरैः । गिरिं जगाम वैताढ्यमाश्वसेनिरशंकितः ॥ ३०३ ॥
विद्याधरमहाराज्याभिषेकोऽमुष्य तत्र च । विद्याधरेन्द्रैर्विदधे प्रपेदानैः पदातिताम् ॥ ३०४ ॥
शाश्वतार्हत्प्रतिमानां तत्रैषोऽतिमहर्द्धिकः । नंदीश्वरे शक्र इव विदधेऽष्टाह्निकोत्सवम् ॥ ३०५ ॥
अथार्यपुत्रमन्येद्युर्विद्याधरशिरोमणिः । चंद्रवेगो मम पिता सप्रश्रयमदोऽवदत् ॥ ३०६ ॥
कोऽप्येकदा मया पूर्वमपूर्वमहिमा मुनिः । ज्ञानरत्नाकरो दृष्टः स पृष्टः शिष्टवानिति ॥ ३०७ ॥

---

१ आतता विस्तीर्णा ज्या यस्मिन् । २ तिरोभूतः सूर्यकिरणसमूहो यस्मिन् । ३ धनुर्गुणम् । ४ नष्टैकदंष्ट्रः । ५ दन्तैः । ६ संधास्यति । ७ विक्रमी । ८ प्राशैः । ९ कथितवान् ।

चक्री चतुर्थोऽत्र सनत्कुमारः परिणेष्यति ॥ २८८ ॥
तवेदं बकुलमतिप्रमुखं कन्यकाशतम् । त्वं भाग्यैरिह समागमः ॥ २८९ ॥
इति चिंताजुषो मे
कथं गम्यः कथं प्राथ्यः कन्या दातुममूः स तु । ऋषेर्वचः ॥ २९० ॥
याञ्चा ह्यमोघा महताममोघं च
तत्प्रसीद शतं कन्या अमूः परिणय प्रभो । पर्यणैषीत्तव सुहृच्छतं कन्या मदादिकाः ॥ २९१ ॥
प्रार्थितो मम पित्रैवमार्थिचिंतामणिस्तदा । कदाप्यालेख्यवीक्षणैः ॥ २९२ ॥
कदाचिच्चारुसंगीतैः कदाचिद्वरनाटकैः । कदाप्याख्यानकवरैः कदाप्युद्यानवीथीषु पुष्पोच्चयनकेलिभिः ॥ २९३ ॥
कदाचिद्दिव्यवापीषु जलक्रीडामहोत्सवैः । कालं सुखं सखा ॥ २९४ ॥
कदाचिदन्याभिरपि क्रीडन् क्रीडाभिरेष ते । विद्याधरैः परिवृतोऽनैषीत्
॥ त्रिभिर्विशेषकम् ॥

दलितो दुर्दैवस्य मनोरथः ॥ २९५ ॥
क्रीडानिमित्तमधुना त्विहागात्तव बांधवः । मिलितस्त्वं च
इत्युक्तवत्यां बकुलमत्यां रतिनिकेतनात् । सनत्कुमारो निरगाद्ध्रदादिव मतंगजः ॥ २९६ ॥
समं महेन्द्रसिंहेन विद्याधरसमावृतः । वैताढ्याद्रिं ततः सोऽगात् सुमेरुमिव वासवः ॥ २९७ ॥
स कालं गमयन्नृद्ध्या महत्या परिबृंहितः । महेन्द्रसिंहेनान्येद्युर्व्यज्ञपीदं यथोचितम् ॥ २९८ ॥
तव ऋद्ध्यानया स्वामिन् मनो मे मोदतेतमाम् । पितरौ त्वद्वियोगार्तौ स्मारं स्मारं च सीदतः ॥ २९९॥
असौ सनत्कुमारोऽसौ महेन्द्र इति तन्मयम् । पितरौ पश्यतो विश्वं मन्ये तनयवत्सलौ ॥ ३०० ॥
तत्प्रसीदावगच्छामो नगरं हस्तिनापुरम् । आनंदय पितृजनं शशांक इव सागरम् ॥ ३०१ ॥

१ चिंतासेविनः चिंतातुरस्येति यावत् । २ याचकेषु चिंतामणिसमानः ।

तेनेत्यभिहितः सख्या सोत्कण्ठः सोऽपि तत्क्षणात् । विद्याधराधिपशतैश्चमूयुक्तैः समावृतः ॥ ३०२ ॥
विमानैर्भासुरैः कुर्वन्नानादित्यमिवांबरम् । विद्याधरैः कैश्चिदपि विधृतातपवारणः ॥ ३०३ ॥
उद्धूतचामरः कैश्चित्कैश्चिदप्यूढपादुकः । कैश्चिद्गृहीतव्यजन आत्तवेत्रश्च कैश्चन ॥ ३०४ ॥
ध्रियमाणस्थगिकोऽन्यैः कथ्यमानपथोऽपरैः । दर्श्यमानविनोदोऽन्यैस्स्तूयमानगुणोऽपरैः ॥ ३०५ ॥
कैरपि द्विरदारूढैरश्वारूढैश्च कैश्चन । कैश्चिच्च स्यंदनारूढैः खे कैश्चित् पादचारिभिः ॥ ३०६ ॥
सकलत्रः समित्रश्चामित्रशैलमहाशनिः । सनत्कुमारः संप्राप नगरं हस्तिनापुरम् ॥ ३०७ ॥

॥ षड्भिः कुलकम् ॥

पितरौ तत्र दुःखार्तौ पौरांश्च निजदर्शनात् । स समानंदयद्ग्रीष्मतापार्तानिव वारिदः ॥ ३०८ ॥
सनत्कुमारं स्वे राज्येऽश्वसेननृपतिर्न्यधात् । महेन्द्रसिंहं तत्सेनाधिपत्ये प्रीतमानसः ॥ ३०९ ॥
श्रीधर्मतीर्थकृत्तीर्थे स्थविराणामथान्तिके । परिव्रज्यां समादाय राजा स्वार्थमसाधयत् ॥ ३१० ॥
राज्यं सनत्कुमारस्य परिपालयतः सतः । महारत्नान्यजायंत चक्रादीनि चतुर्दश ॥ ३११ ॥
ततः स साधयामास चक्रमार्गानुगः स्वयम् । षट्खंडं भरतक्षेत्रं नैसर्प्याद्यान्निधीनपि ॥ ३१२ ॥
दशभिर्वर्षसहस्रैः साधयित्वा स भारतम् । प्राविशद्गजभूतेन हस्तिना हस्तिनापुरम् ॥ ३१३ ॥
प्रविशन्तं महात्मानमवधिज्ञानतोऽथ तम् । वीक्षांचक्रे सहस्राक्षः साक्षात् स्वमिव सौहृदात् ॥ ३१४ ॥
सौधर्मेन्द्रः पूर्वजन्मन्यसौ मे तेन बांधवः । इति स्नेहवशाच्छक्रः कुबेरमिदमादिशत् ॥ ३१५ ॥

१ स्थगी तांबूलकरंकः ।

अयं शक्रवरश्चक्री कुरुवंशाब्धिचंद्रमाः । राज्ञोऽश्वसेनस्य सुतो महात्मा बन्धुवन्मम ॥ ३१६ ॥
सनत्कुमारः षट्खंडं साधयित्वाद्य भारतम् । स्वपुरं प्रविशत्येषोऽभिषेकोऽस्य विधीयताम् ॥ ३१७ ॥
हारं च शशिमालां चातपत्रं चामरे अपि । मुकुटं कुंडलयुगं देवदूष्यद्वयीमपि ॥ ३१८ ॥
सिंहासनं पादुके च पादपीठं च भासुरम् । सद्यः सनत्कुमारार्थं कुबेरस्यार्पयद्धरिः ॥ ३१९ ॥
तिलोत्तमोर्वशीमेनारंभातुंबुरुनारदान् । अन्यानपीन्द्रस्तदभिषेकायाशु समादिशत् ॥ ३२० ॥
ततः कुबेरस्तैः सार्धमेत्य नागपुरे[1] पुरे । आख्यात् सनत्कुमाराय तमादेशं दिवस्पतेः[2] ॥ ३२१ ॥
सनत्कुमारानुज्ञातो विचकारैकयोजनम् । माणिक्यपीठं धनदो रोहणाद्रेस्तटीमिव ॥ ३२२ ॥
तदूर्ध्वं मंडपं दिव्यं मणिपीठं च मध्यतः । सिंहासनं तदुपरि विदधे धनदः क्षणात् ॥ ३२३ ॥
क्षीरोदात्रिदशैरंभोऽथानायि धनदाज्ञया । गंधमाल्यादि चानर्घ्यं सर्वैरपि च पार्थिवैः ॥ ३२४ ॥
सनत्कुमारं विज्ञप्य तत्र सिंहासनोत्तमे । कुबेर आसयामास शक्रप्राभृतमार्पयत् ॥ ३२५ ॥
तस्थौ सनत्कुमारस्य सामन्तादिः परिच्छदः । सामानिकादिको वज्रपाणेरिव यथोचितम् ॥ ३२६ ॥
तस्याथ चक्रवर्तित्वाभिषेकं पुण्यवारिभिः । राज्याभिषेकं श्रीनाभिसूनोरिव[3] सुरा व्यधुः ॥ ३२७ ॥
मंगल्यं गीतमारेभे तुंबुरुप्रमुखैरथ । पटहादीनि वाद्यानि त्रिदशैस्ताडितानि च ॥ ३२८ ॥
रंभोर्वशीप्रभृतिभिर्नर्तकीभिरनृत्यत । विचित्राण्यभ्यनीयन्त गंधर्वैर्नाटकानि च ॥ ३२९ ॥
सनत्कुमारं त्रिदशा अभिषिच्यैवमुच्चकैः । वस्त्रांगरागनेपथ्यमाल्यैर्दिव्यैरयोजयत् ॥ ३३० ॥

---

१ हस्तिनापुरे । २ इन्द्रस्य । ३ आदीश्वरस्य ।

गजरत्नं गन्धवरमध्यारोह्य न्यवीविशत् । सनत्कुमारं मुदितः कुबेरो हस्तिनापुरे ॥ ३३१ ॥
स्वपुरीवद्धनापूर्णं नगरं हस्तिनापुरम् । कृत्वा कुबेरोऽथ ययौ विसृष्टश्चक्रवर्तिना ॥ ३३२ ॥
राजभिर्बद्धमुकुटैः सामन्तैरपरैरपि । तस्याभिषेको विदधे स्वसंपद्वल्लिसारणिः ॥ ३३३ ॥
अभिषेकोत्सवात्तस्याभूत् पुरं हस्तिनापुरम् । द्वादशाब्दीं दंडशुल्कभटवेशादिवर्जितम् ॥ ३३४॥
स चक्री पालयामास पितेव विधिवत्प्रजाः । महार्द्धिः शक्र इव करादिभिरपीडयन् ॥ ३३५ ॥
न समोऽस्य प्रतापेन यथा कश्चिदजायत । तथैवाप्रतिरूपेण रूपेणापि जगत्त्रये ॥ ३३६ ॥
तदानीं च सुधर्मायां रत्नसिंहासनस्थितः । शक्रः सौदामनीं नाम नाटकं नाटयन्नभूत् ॥ ३३७ ॥
अनवद्येन रूपेण सर्वरूपाभिभाविना[1] । विस्मापयन् दिविपदस्तत्पर्षदि निषेदुषः[2] ॥ ३३८ ॥
देहप्रभाभिस्तिरयंस्[3]तेजांस्यखिलनाकिनाम् । ऐशानकल्पादभ्यागात् संगमस्तत्र चामरः ॥ ३३९ ॥
॥ युग्मम् ॥

गतेऽथ तस्मिन् पप्रच्छुः शक्रमेवं दिवौकसः । अस्य लोकोत्तरं तेजो रूपं चानुपमं कथम् ॥ ३४० ॥
शक्रोऽप्यशंसदेतेन प्राग्जन्मनि कृतं तपः । आचामाम्लवर्धमानं तेनेमे रूपतेजसी ॥ ३४१ ॥
किमन्योऽपीदृशः कोऽपि विद्यतेऽत्र जगत्त्रये । इतिभूयोऽमरैः पृष्टः सौधर्मेन्द्रोऽब्रवीदिदम् ॥ ३४२ ॥
राज्ञः सनत्कुमारस्य कुरुवंशशिरोमणेः । यद्रूपं न तदन्यत्र देवेषु मनुजेषु च ॥ ३४३ ॥
इति प्रशंसां रूपस्याश्रद्दधानावुभौ सुरौ । विजयो वैजयन्तश्च पृथिव्यामवतेरतुः ॥ ३४४ ॥

---

१ सर्वरूपतिरस्कारिणा । २ निषण्णान् । ३ आच्छादयन् ।

ततस्तौ विप्ररूपेण रूपान्वेषणहेतवे । प्रासादद्वारि नृपतेस्तस्थतुर्द्वाःस्थसन्निधौ ॥ ३४५ ॥
आसीत् सनत्कुमारोऽपि तदा प्रारब्धमज्जनः[1] । मुक्तनिःशेषनेपथ्यः सर्वांगाभ्यंगमुद्वहन् ॥ ३४६ ॥
द्वारस्थौ द्वारपालेन द्विजाती[2] तौ निवेदितौ । न्यायवर्ती चक्रवर्ती तदानीमप्यवीविशत् ॥ ३४७ ॥
सनत्कुमारमालोक्य विस्मयस्मेरमानसौ । धूनयामासतुर्मौलिं चिंतयामासतुश्च तौ ॥ ३४८ ॥
ललाटपट्टः पर्यस्ताष्टमीरजनिजानिकः[3] । नेत्रे कर्णांतविश्रान्ते जितनीलोत्पलत्विषी ॥ ३४९ ॥
दंतच्छदौ पराभूत पक्वबिम्बफलच्छवी । निरस्तशुक्तिकौ कर्णौ कण्ठोऽयं पाञ्चजन्यजित् ॥ ३५० ॥
करिराजकराकारतिरस्कारकरौ भुजौ । स्वर्णशैलशिलालक्ष्मीविलुंटाकमुरस्थलम्[4] ॥ ३५१ ॥
मध्यभागो मृगारातिकिशोरोदरसोदरः । किमन्यदस्य सर्वांगलक्ष्मीर्वाचां न गोचरा ॥ ३५२ ॥
अहोकोऽप्यस्य लावण्यसरित्पूरो निरर्गलः । येनाभ्यंगं न जानीमो ज्योत्स्नयोडुप्रभामिव[5] ॥ ३५३ ॥
यथेन्द्रो वर्णयामास तथेदं भाति नान्यथा । मिथ्या न खलु भाषंते महात्मानः कदाचन ॥ ३५४ ॥
"किं निमित्तमिहायातौ भवन्तौ द्विजसत्तमौ । इत्थं सनत्कुमारेण पृष्टौ तावेवमूचतुः ॥ ३५५ ॥
लोकोत्तरचमत्कारकारकं सचराचरे । भुवने भवतो रूपं नरशार्दूल गीयते ॥ ३५६ ॥
दूरतोऽपि तदाकर्ण्य तरंगितकुतूहलौ । विलोकयितुमायातावावामवनिवासव[6] ॥ ३५७ ॥
वर्ण्यमानं यथा लोके शुश्रुवेऽस्माभिरद्भुतम् । रूपं नृप ततोऽप्येतत् सविशेषं निरीक्ष्यते ॥ ३५८ ॥
ऊचे सनत्कुमारोऽपि स्मितविच्छुरिताधरः । इयं हि कियती कांतिरंगेऽभ्यंगतरंगिते ॥ ३५९ ॥

---

१ प्रारब्धं मज्जनं स्नानं येन । २ द्विजौ । ३ रजनिजानिश्चंद्रः । ४ विलुंटाकश्चौरः । ५ तारकप्रभाम् । ६ अवनिपते ।

अत्रान्तरे सुरपतिः समुद्दिश्य दिवौकसः । हृदि जातचमत्कारश्चकारेत्यस्य वर्णनम् ॥ ३८८ ॥
चक्रवर्तिश्रियं त्यक्त्वा प्रज्वलत्तृणपूलवत् । अहो सनत्कुमारोऽयं तप्यते दुस्तपं तपः ॥ ३८९ ॥
तपोमाहात्म्यलब्धासु सर्वास्वपि हि लब्धिषु । शरीरनिरपेक्षोऽयं स्वरोगान्न चिकित्सति ॥ ३९० ॥
अश्रद्दधानौ तद्वाक्यं वैद्यरूपधरौ सुरौ । विजयो वैजयन्तश्च तत्समीपमुपेयतुः ॥ ३९१ ॥
ऊचतुश्च महाभाग किं रोगैः परिताम्यसि । वैद्यावावां चिकित्सावो विश्वं स्वैरेव भेषजैः ॥ ३९२ ॥
यदि त्वमनुजानासि रोगग्रस्तशरीरकः । तदह्नाय निगृह्णीवो रोगानुपेचितांस्तव ॥ ३९३ ॥
ततः सनत्कुमारोऽपि प्रत्यूचे भोश्चिकित्सकौ । द्विविधा देहिनां रोगा द्रव्यतो भावतोऽपि च ॥ ३९४ ॥
क्रोधमानमायालोभा भावरोगाः शरीरिणाम् । जन्मान्तरसहस्रानुगामिनोऽत्यंतदुःखदाः ॥ ३९५ ॥
तांश्चिकित्सितुमीशौ[3] चेद्युवां तर्हि चिकित्सतम् । अथो चिकित्सथो द्रव्यरोगांस्तद्भुत पश्यतम् ॥ ३९६ ॥
ततोऽङ्गुलिं गलत्पामां शीर्णां स्वकफ[4]विप्रुषा । लिप्त्वा शुद्धं रसेनेव ताम्रं सुवर्णीचकार सः ॥ ३९७ ॥
ततस्तामङ्गुलीं स्वर्णशलाकामिव भास्वतीम् । आलोक्य पादयोस्तस्य पेततुः प्रोचतुश्च तौ ॥ ३९८ ॥
निरूपयिषू त्वद्रूपं यौ त्वामायातपूर्विणौ । तावेव त्रिदशावावां संप्रत्यपि समागतौ ॥ ३९९ ॥
सिद्धलब्धिरपि व्याधिबाधां सोढा तपस्यति । सनत्कुमारो भगवानितीन्द्रस्त्वामवर्णयत् ॥ ४००[5] ॥
आवाभ्यां तदिहागत्य प्रत्यक्षेण परीक्षितम् । इत्युदित्वा च नत्वा च त्रिदशौ तौ तिरोहितौ ॥ ४०१ ॥

---

१ आज्ञापयासि । २ वृद्धान् । ३ समर्थौ । ४ स्वकफबिंदुना । ५ लोहं ।

इतो भूत्वा प्रतीक्षेथां क्षणमात्रं द्विजोत्तमौ । यावन्निर्वर्त्यतेऽस्माभिरेष मज्जनकक्षणः ॥ ३६० ॥
विचित्ररचनाकेद्यं भूरिभूषणभूषितम् । रूपं पुनर्निरीक्षेथां सरत्नमिव कांचनम् ॥ ३६१ ॥
ततोऽवनिपतिः स्नात्वा कल्पिताकल्पभूषणः । साडंबरः सदोऽध्यास्तांबररत्नमिवांबरम् ॥ ३६२ ॥
अनुज्ञातौ ततो विप्रौ पुरोभूय महीपतेः । निर्दध्यतुश्च तद्रूपं विषण्णौ दध्यतुश्च तौ ॥ ३६३ ॥
क्व तद्रूपं क्व सा कान्तिः क्व तल्लावण्यमप्यगात् । क्षणेनाप्यस्य मर्त्यानां क्षणिकं सर्वमेव हि ॥ ३६४ ॥
नृपः प्रोवाच तौ कस्माद्दृष्ट्वा मां मुदितौ पुरा । कस्मादकस्मादधुना विषादमलिनाननौ ॥ ३६५ ॥
ततस्तावूचतुरिदं सुधामधुरया गिरा । महाभाग सुरावावां सौधर्मस्वर्गवासिनौ ॥ ३६६ ॥
मध्येसुरसभं शक्रश्चक्रे त्वद्रूपवर्णनम् । अश्रद्दधानौ तद्द्रष्टुं मर्त्यमूर्त्त्यागताविह ॥ ३६७ ॥
शक्रेण वर्णितं यादृक्तादृगेव पुरेक्षितम् । रूपं नृप तवेदानीमन्यादृशमजायत ॥ ३६८ ॥
अधुना व्याधिभिरयं कान्तिसर्वस्वतस्करैः । देहः समंतादाक्रांतो निःश्वासैरिव दर्पणः ॥ ३६९ ॥
यथार्थमभिधायेति द्राक् तिरोहितयोस्तयोः । विच्छायं स्वं नृपोऽपश्यद्धिमग्रस्तमिव द्रुमम् ॥ ३७० ॥
सोऽचिंतयच्च धिगिदं सदा गर्दपदं वपुः । मुधैव मुग्धाः कुर्वन्ति तन्मूर्छां तुच्छबुद्धयः ॥ ३७१ ॥
शरीरमन्तरुत्पन्नैर्व्याधिभिर्विविधैरिदम् । दीर्यते दारुणैर्दारु दारुकीटगणैरिव ॥ ३७२ ॥
बहिः कथंचिद्यद्येतत्प्ररोच्येत तथापि हि ॥ नैयग्रोधं फलमिव मध्ये कृमिकुलाकुलम् ॥ ३७३ ॥

१ विचित्ररचनयासज्जीभूतम् । २ कल्पितानि नेपथ्यानि च भूषणानि च यस्य । ३ सभाम् । ४ सूर्यः । ५ ददृशतुः । ६ रोगस्थानं । ७ काष्ठकीटसमूहैः ।

रुजा लुम्पति कायस्य तत्कालं रूपसंपदम् । महासरोवरस्येव वारि सेवालवल्लरी ॥ २७४ ॥
शरीरं श्रथते नाशा रूपं याति न पापधीः । जरा स्फुरति न ज्ञानं धिक् स्वरूपं शरीरिणाम् ॥ २७५ ॥
रूपं लावणिमा कान्तिः शरीरं द्रविणान्यपि । संसारे तरलं सर्वं कुशाग्रजलबिंदुवत् ॥ २७६ ॥
अद्यश्वीनविनाशस्य[1] शरीरस्य शरीरिणाम् । सकामनिर्जरासारं तप एव महत्फलम् ॥ २७७ ॥
इति संजातवैराग्यज्ञावनः पृथिवीपतिः । प्रव्रज्यां स्वयमादित्सुः सुतं राज्ये न्यवीविशत् ॥ २७८ ॥
गत्वोद्याने सविनयं विनयंधरसूरितः । सर्वसावद्यविरतिप्रधानं सोऽग्रहीत्तपः ॥ २७९ ॥
महाव्रतधरस्यास्य दधानस्योत्तरान् गुणान् । ग्रामाद् ग्रामं विहरतः समतैकाग्रचेतसः[2] ॥ २८० ॥
गाढानुरागबन्धेन सर्वं प्रकृतिमंडलम् । पृष्ठतोऽगात् करिकुलं महायूथपतेरिव ॥ २८१ ॥ युग्मम् ॥
निःकषायमुदासीनं निर्ममं निष्परिग्रहम् । तं पर्युपास्य षण्मासान् कथंचित्तन्न्यवर्तत ॥ २८२ ॥
कृतषष्ठः पारणाय प्रविष्टो गोचरेऽन्यदा । लेभे चीनककूरं स साजातक्रमज्ञुक्त[3] च ॥ २८३ ॥
भूयोऽपि षष्ठनिष्क्रान्ते तथैव कृतपारणात् । व्याधयोऽस्य ववृधिरे संपूर्णादिव दोहदात् ॥ २८४ ॥
कच्छूशोषज्वरश्वासारुचिकुक्ष्यक्षिवेदनाः । सप्ताधिसेहे पुण्यात्मा सप्त वर्षशतानि सः ॥२८५ ॥
दुःसहान् सहमानस्य तस्याशेषपरीषहान् । उपायनिरपेक्षस्य समपद्यंत लब्धयः ॥ २८६ ॥
कफविप्रुड्जल्लमलविष्ठामर्षास्तथापरम् । सर्वमप्यौषधिरिति नामतः सप्त लब्धयः ॥ २८७ ॥

---

१ अद्य वा श्वो वा अद्यश्वीनः । २ समतयैकाग्रं चेतो यस्य तस्य । ३ अजायास्तक्रेण सहितं ।

तस्य चासीद्यशोभद्रा भद्राभक्तिः कुलोद्भवा । सधर्मचारिणी गेहलक्ष्मीरिव विहारिणी ॥ २६ ॥
तस्याः क्रमेण जज्ञाते द्वौ पुत्रौ कुलदीपकौ । ज्येष्ठो नाम्ना नंदिभूतिः श्रीभूतिरिति चापरः ॥ २७ ॥
तस्य च ब्राह्मणस्यासीत् कपिला नाम दासिका । तयापि च चिरं रेमे दुर्जया विषयाः खलु ॥ २८ ॥
स्वछंदं रममाणस्य क्रमयोगेन तस्य च । अजनिष्ट कपिलायां कपिलो नाम नंदनः ॥ २९ ॥
स तु द्विजो यशोभद्राकुक्षिजातावुभौ सुतौ । सांगान् वेदान् सरहस्यान् प्रह्वः स्वयमपाठयत् ॥ ३० ॥
कपिलोऽप्यतिमेधावी तूष्णीकोऽप्यवधारयन् । वेदाब्धिपारगो जज्ञे प्रज्ञायाः किं न गोचरम् ॥ ३१ ॥
स प्राडुष्यवैदुषीको निर्गत्य पितृवेश्मतः । यज्ञोपवीतद्वितयं कंठदेशे निधाय च ॥ ३२ ॥
द्विजोत्तमोऽस्मीति गिरा ध्वनयन्निव डिंडिमम् । देशांतरेषु बभ्राम विदेशो विदुषां हि कः ॥ ३३ ॥

॥ युग्मम् ॥

भ्रमन् क्रमेण स प्राप तद्रत्नपुरपत्तनम् । पांडित्यं दर्शयंस्तत्र जगर्ज प्रावृडब्दवत्[1] ॥ ३४ ॥
तत्र चाशेषपौराणामुपाध्यायः कलानिधिः । अवात्सीत् सत्यकिर्नाम धीपात्रछात्रशोभितः[2] ॥ ३५ ॥
कपिलः सत्यकेः पाठशालां गत्वा दिने दिने । पृच्छतां खंडिकानां[3] च संशयानन्तराछिदत् ॥ ३६ ॥
विस्मितः सत्यकिरपि तं पप्रछ कुतूहलात् । दुर्ज्ञानानि रहस्यानि शास्त्राणां मंत्रजातवित् ॥ ३७ ॥
आचख्यौ कपिलस्तस्मै सविशेषाणि तानि तु । उपाध्यायधिया छात्रैः श्रद्दधानैर्निरीक्षितः ॥ ३८ ॥
शालायां सत्यकिश्चक्रे तं स्वकर्मधुरंधरम् । युवराजमिव राजा क नार्घन्त्युज्वला गुणाः ॥ ३९ ॥

---

१ अब्दो मेघः । २ धियां पात्रैः स्थानैश्छात्रैः शोभितः । ३ छात्राणाम् ।

व्याख्यां समस्तशिष्याणा चकार कपिलोऽन्वहम् । निश्चिंतः सत्यकिस्तस्थौ तेन स्वेनेव सूनुना ॥ ४० ॥
न्वक्तिं पितुरिवात्यंतं सत्यकेः कपिलोऽकरोत् । किमेतस्मै करोमीति प्रीतो दध्यौ च सत्यकिः ॥ ४१ ॥
सत्यकेर्जंबुका नाम तदा न्नार्येदमब्रवीत् । यद्यप्यवहितोऽसि त्वं तथापि स्मार्यसे मया ॥ ४२ ॥
देवकन्येव निःसीमरूपलावण्यशालिनी । विनीता ह्रीमंती क्षांतिमार्दवार्जवशालिनी ॥ ४३ ॥
मत्कुक्षिसंन्नवा तेऽसौ सत्यन्नामेति कन्यका । संप्राप्तयौवनं तस्या वरं मृगयसे न किम् ॥ ४४ ॥
कन्यका वर्धते यस्य ऋणं वैरं रुजापि च । तस्य निद्रा कथं नामाचिंतः शेते न्नवान् पुनः ॥ ४५ ॥
ऊचे सत्यकिरप्येवं सत्यं सत्यमिदं प्रिये । इयत्कालमहं नापं सत्यन्नामोचितं वरम् ॥ ४६ ॥
अयं तु रूपसंपन्नो गुणिनामग्रणीर्युवा । विनीतः कपिलो विप्रः सत्यन्नामोचितो वरः ॥ ४७ ॥
आमेत्युक्ते जंबुकया शुन्ने लग्ने स सत्यकिः । सत्यन्नामाकपिलयोर्विवाहं विधिवद्व्यधात् ॥ ४८ ॥
न्नोगान्निर्न्नामिया सत्यन्नामया वुन्नुजेऽन्वहम् । पूज्यमानः सत्यकिवत् स पौरैः सकले पुरे ॥ ४९ ॥
सत्यकेरपि पूज्योऽयमिति तस्मै ददौ जनः । विशिष्टं धनधान्यादि सर्वेष्वपि हि पर्वसु ॥ ५० ॥
एवं च वर्तमानः स वर्तमानद्विजोत्तमः । समृद्धः कपिलो जज्ञे धनैरपि गुणैरपि ॥ ५१ ॥
अन्यदा प्रावृषि निशि प्रेक्षणीयेक्षणाय सः । बहिर्जगाम सदनाच्चिरं तत्र तथा स्थितः ॥ ५२ ॥
निवृत्तस्यार्धमार्गेऽथ वेश्मने तस्य गच्छतः । सूचिन्नेद्यं तमः कुर्वन् ववर्षात्यन्तमम्बुदः ॥ ५३ ॥
विजनत्वात्तदानीं स नग्नीन्नूय स्ववाससी । प्रक्षिप्य कक्षान्तरगाद्वेश्मद्वारे च पर्यधात् ॥ ५४ ॥

१ लज्जावती । २ तथेत्युक्ते । ३निर्न्नीत्या । ४ नाट्यविलोकनाय ।

# पंचमं पर्व ।

## प्रथमः सर्गः ।

### श्रीशांतिनाथचरित्रम् ।

ॐ नमः श्रीशांतिनाथाय कृतविश्वाघशान्तये । षोडशाय जिनेन्द्राय पञ्चमाय च चक्रिणे ॥ १ ॥
मोहान्धकारसंदोहकर्त्तनैकविकर्त्तनम्[1] । कीर्तयिष्यामि तस्याहं चरित्रमतिपावनम् ॥ २ ॥
अस्यैव जंबूद्वीपस्य मंडलाकारधारिणः । इन्दोरिव सप्तमोंऽशः क्षेत्रं भरतमस्त्यदः ॥ ३ ॥
अर्धे च दक्षिणे तस्य मध्यखंडविभूषणम् । अस्ति रत्नपुरं नाम पुरं सुरपुरोपमम् ॥ ४ ॥
तत्र श्रीषेण इत्यासीद्राजा राजीवलोचनः[2] । राजीवमिव वासाय श्रियो देव्या विकस्वरम् ॥ ५ ॥
ज्येष्ठं बन्धुमिवाजस्रं स धर्मं बह्वपूजयत् । अर्थकामौ कनीयांसाविवाबाधमपालयत् ॥ ६ ॥
प्रार्थनामर्थिलोकस्य पूरयामास सोऽनिशम् । स्मरातुरपरस्त्रीणां न पुनर्धर्मकर्मठः[3] ॥ ७ ॥
तथा रूपमभूदस्य सर्वौपम्यविलक्षणम् । आलेख्यस्याप्यविषयो यथा ह्यालेख्यकारिणाम्[4] ॥ ८ ॥
दंडप्रधानं साम्राज्यमपि स प्रतिपालयन् । दयामाराधयामास देवतामिव कामदाम् ॥९॥
विशुद्धशीला तद्भार्या नाम्नाभूदभिनंदिता । हृदयानंदिनी वाचा नेत्रकैरवचंद्रिका ॥ १० ॥
मनसापि न सा शीलं खंडयामास जातुचित् । मंडयामास तेन[5] स्वं फल्गु[6] बाह्यं हि मंडनम् ॥ ११ ॥

---

१ विकर्तनः सूर्यः । २ राजीवं कमलम् । ३ धर्मकुशलः । ४ चित्रस्य । ५ शीलेन । ६ तुच्छम्

भूषणान्यप्यभूष्यंत निवेश्य स्वतनौ तया । तस्या निसर्गसुंदर्या भारभूतानि तानि तु ॥ १२ ॥
तरंगायितलावण्यपुण्यावयवशालिनः । तद्रूपस्य प्रतिच्छंदो[1] दर्पणेष्वेव नान्यतः ॥ १३ ॥
मातापितृश्वशुराणां युगपत् सा कुलत्रयम् । एकाप्यनेकरूपेवाभूषयद्गुणभूषणा ॥ १४ ॥
द्वितीयाप्यभवत्तस्य राज्ञो हृच्छिखिनंदिका[2] । मेघमालेव दयिता नामतः शिखिनंदिता ॥ १५ ॥
सुखं वैषयिकं पत्यानुभवन्त्या अखंडितम् । जज्ञेऽभिनंदितादेव्या गर्भः कालेन गच्छता ॥ १६ ॥
सूर्याचंद्रमसौ स्वप्ने स्वोत्संगस्थौ ददर्श सा । पुत्रद्वयं तवोत्कृष्टं भावीत्याख्याच्च तत्पतिः ॥ १७ ॥
संपूर्णे समये सूनुयुग्मं देव्यभिनंदिता । असूत तेजसानूनं[3] रवेश्चंद्रमसोऽपि च ॥ १८ ॥
इन्दुषेणो बिंदुषेणश्चेत्याख्ये पुत्रयोर्द्वयोः । श्रीषेणः पार्थिवोऽकार्षीदुत्सवेन महीयसा ॥ १९ ॥
धात्रीभिर्लाल्यमानौ तावतियत्नेन पुष्पवत् । ववृधाते क्रमादन्यौ भुजाविव महीभुजः ॥ २० ॥
अथ व्याकरणादीनि शास्त्राणि पृथिवीपतिः । तावध्यजीगपदुपाध्यायेन निजनामवत् ॥ २१ ॥
शस्त्रे शास्त्रे च निष्णातावपरासु[4] कलास्वपि । व्यूहप्रवेशनिष्काशकुशलौ तौ बभूवतुः ॥ २२ ॥
मनोभवविकाराब्जविकासनदिवामुखम्[5] । भेजौ तौ प्रतिपेदाते यौवनं रूपपावनम् ॥ २३ ॥
इतश्चास्तीह भरते मगधेषु महर्द्धिकः ॥ ग्रामाणां ग्रामणीर्ग्रामोऽचलग्राम इतीरितः[6] ॥ २४ ॥
तत्र सांगचतुर्वेदवेदी द्विजशिरोमणिः । धरणीजट इत्यभून्नाम्ना धरणिविश्रुतः ॥ २५ ॥

---

१ प्रतिकृतिः । २ हृदयमेव मयूरस्तस्यानंदयित्री । ३ अन्यूनम् । ४ कुशलौ । ५ कामविकार एवाब्जं कमलं तस्य विकासने प्रातःकालसमानम् । ६ मुख्यः ।

वृष्ट्या वस्त्राणि मङ्क्तुस्तिमितानीति मानिनी । सत्यभामान्यवस्त्राणि गृहीत्वा समुपास्थिता ॥ ५५ ॥
मुग्धे विद्याप्रभावेण स्तिमिते मे न वाससी । कृतं तदन्यैर्वासोभिरित्यूचे कपिलः प्रियाम् ॥ ५६ ॥
तस्य वासांस्यनार्द्राणि वपुरार्द्रं च सर्वतः । सत्यभामा निदध्यौ च दध्यौ चेदं स्वचेतसि ॥ ५७ ॥
विद्याशक्त्या स्ववासांसि यद्यरक्षदसौ जलात् । नारक्षत्तत्कथं स्वांगं नूनं नग्नोऽयमाययौ ॥ ५८ ॥
अकुलीनस्ततो मन्ये वृत्तेनानेन मत्पतिः । मेधाबलादध्यगीष्ट कर्णश्रुत्या श्रुतीरपि ॥ ५९ ॥
एवं च मन्यमाना सा तदाप्रभृति तत्र च । मंदानुरागा समभूद्दानीतेव खेदिनी ॥ ६० ॥
तदा च धरणिजटो दैवात् क्षीणधनोऽभवत् । आढ्यं च कपिलं श्रुत्वा स्वं समुद्धर्तुमाययौ ॥ ६१ ॥
पाद्यस्नानादिना तं च सच्चक्रे कपिलः स्वयम् । आराध्योऽतिथिमात्रोऽपि किं पुनः स पितातिथिः॥६२॥
अथ पित्रा कृते स्नाने निर्मिते नित्यकर्मणि । भोजनावसरे प्राप्ते प्रोवाच कपिलः प्रियाम् ॥ ६३ ॥
शरीरकारणं मेऽस्ति तत्प्रिये पितृहेतवे । विभिन्नं भोजनस्थानमुत्तमं प्रगुणीकुरु ॥ ६४ ॥
पितुः पुत्रस्य च तयोर्दृष्ट्वाचरणमन्यथा । आशशंकेऽधिकं सत्या कुलीना सा यतः स्वयम् ॥ ६५ ॥
कुलीनं श्वशुरं ज्ञात्वा चरितैरतिनिर्मलैः । आराधयज्जनकवद्गुरुवद्देववच्च सा ॥ ६६ ॥
दत्वान्यदा ब्रह्महत्याशपथं रहसि स्वयम् । श्वशुरं परिपप्रच्छ महता विनयेन सा ॥ ६७ ॥
युष्माकं किमसौ सूनुः शुद्धपक्षद्वयोद्भवः । अवरुद्धोद्भवः किं वा सत्यं ब्रूत प्रसीदत ॥ ६८ ॥
ततश्च धरणिजटः समाचख्यौ यथातथम् । महात्मानः प्रकृत्यापि शपथच्छेदकातराः ॥ ६९ ॥

---

१ आर्द्राणि । २ ददर्श । ३समृद्धम् । ४ विपरीतोद्भवः ।

विसृष्टः कपिलेनाथ ब्राह्मणो धरणीजटः । पुनरेव निजं ग्राममवलग्राममभ्यगात् ॥ ७० ॥
सत्यभामापि गत्वैवं श्रीश्रीषेणं व्यजिज्ञपत् । अकुलीनोऽभवद्भर्ता मम दैववशादयम् ॥ ७१ ॥
शार्दूलादिव सुरेभिं राहोः शशिकलामिव । चटकामिव च श्येनान्मोचयास्मात्तदद्य माम् ॥ ७२ ॥
आचरिष्यामि सुकृतं मुक्तानेन सती सती । दुष्कर्मणा प्राक्तनेन वंचितास्मि कियच्चिरम् ॥ ७३ ॥
श्रीषेणोऽप्यधत्तैवमाहूय कपिलं स्वयम् । मुच्यतां सत्यभामेयं धर्माचरणहेतवे ॥ ७४ ॥
विरक्तायां तवैतस्यां कीदृग्वैषयिकं सुखम् । भविष्यति बलात्कारापहृतान्यस्त्रियामिव ॥ ७५ ॥
कपिलोऽपि जगादैवं क्षणमप्यनया विना । प्राणान् धर्तुं नालमस्मि जीवातुरयमेव मे ॥ ७६ ॥
इमां पाणिगृहीतां स्वां न त्यजामि कथंचन । त्यजनं त्याजनं वापि गणिकास्वेव युज्यते ॥ ७७ ॥
उद्भामा सत्यभामोचे त्यजत्येष न मां यदि । जले वा ज्वलने वापि प्रवेक्ष्यामि तदा ह्यहम् ॥ ७८ ॥
राजापि व्याजहारैवं मा स्म त्याक्षीदसूनसौ । दिनानि कतिचित्तिष्ठत्वस्मद्वेश्मनि ते प्रिया ॥ ७९ ॥
एवमस्त्विति तेनोक्ते राज्ञा राज्यै समर्पिता । समाचरंती विविधं तपः सा समवास्थिता ॥ ८० ॥
तदा च राजा कौशांब्यां बलो नाम महाबलः । श्रीकांतां श्रीमतीदेवीप्रसूतां निजकन्यकाम् ॥ ८१ ॥
उद्यौवनां रूपवतीं प्रैषीदृद्ध्या प्रभूतया । श्रीषेणनृपपुत्रस्येन्दुषेणस्य स्वयंवरे ॥ ८२ ॥
तया सहागतां वेश्यामनंतमतिकाभिधाम् । इन्दुषेणबिंदुषेणौ रूपोत्कृष्टामपश्यताम् ॥ ८३ ॥
एषा मम ममैषेति प्रजल्पन्तावुभावपि । सामर्षौ देवरमणाभिधानोद्यानमीयतुः ॥ ८४ ॥

---

१ सिंहात् । २ धेनुम् । ३ जीवनौषधम् । ४ उत्कटा । ५ प्राणान् । ६ समृद्ध्या ।

तत्रोभावपि संनद्धावेककांतारिरंसया । वृषभाविव दुर्दान्तौ युयुधाते महाभुजौ ॥ ८५ ॥
निषेधितुं तयोर्युद्धं नालमासीन्महीपतिः । प्रियसामा[1] स हि सदा दंभसाध्यास्तु दुर्मदाः ॥ ८६ ॥
तां प्रवृत्तिं तयोर्द्रष्टुं निरोद्धुं चाक्षमो नृपः । सहाभिनंदिताशिखिनंदिताभ्यां विचार्य च ॥ ८७ ॥
प्राप्तकालमिदमिति ब्रुवाणः सरसीरुहम् । आघ्रात्तालपुटाविद्धं[2] विपेदे[3] च क्षणादपि ॥ ८८ ॥

॥ युग्मम् ॥

देव्यावपि तदाघ्राय तमेवाध्वानमीयतुः । न मनागपि जीवंति कुलनार्यः पतिं विना ॥ ८९ ॥
सत्यभामापि कपिलादनर्थं चिन्तयन्त्यथ । तत्पद्ममाघ्राय ययौ तत्पथं शरणोज्झिता ॥ ९० ॥
अत्यंतमार्दवान्मृत्वा ते चत्वारोऽपि जज्ञिरे । जंबूद्वीपोत्तरकुरुक्षेत्रे युगलधर्मिणः ॥ ९१ ॥
अभूतां नृस्त्रियौ तत्र श्रीषेणोऽथाभिनंदिता । ते शिखिनंदितासत्यभामे अपि तथैव हि ॥ ९२ ॥
ते च पल्यत्रयायुष्का गव्यूतत्रितयोच्छ्रिताः । अनुभूतसुखाद्वैताः सुखं कालमलंघयन् ॥ ९३ ॥
तयोश्चेन्दुषेणबिन्दुषेणयोर्युध्यमानयोः । आगादेको विमानस्थः कोऽपि विद्याधराग्रणीः ॥ ९४ ॥
दैवस्येवानुकूलस्य प्रतीहारो निवारकः । स तयोरन्तरे स्थित्वा निजगादैवमुद्भुजः ॥ ९५ ॥
अज्ञात्वा भगिनीमेतां भार्यीयन्तौ कुमारकौ । किं युध्येथे विस्तरेण श्रूयतां वचनं मम ॥ ९६ ॥
जंबूद्वीपस्यास्य महाविदेहेऽस्ति सुविस्तृतः । सीतानद्युत्तरतटे विजयः पुष्कलावती ॥ ९७ ॥
अभ्रंलिहोऽस्ति मेदिन्याः किरीट इव राजतः[4] । तत्र विद्याधरावासो वैताढ्यो नाम पर्वतः ॥ ९८ ॥

---

१ प्रियं सामवाक्यं यस्य सः । २ तालपुटनाम्ना विषेण व्याप्तम् । ३ अम्रियत । ४ रूप्यमयः ।

तत्राढ्यावुत्तरश्रेण्यामादित्याभाभिधे पुरे । राजा सुकुण्डलीत्यस्ति कुण्डलेन्द्र इव श्रिया ॥ ९९ ॥
तस्यास्त्यजितसेनेति दयिता शीलशालिनी । अहमस्मि तयोः पुत्रो नामतो मणिकुंडली ॥ १०० ॥
अपरेद्युस्ततः स्थानाद्रभसा पक्षिराडिव । जिनेन्द्रं वंदितुमगां नगरीं पुंडरीकिणीम् ॥ १०१ ॥
तत्र चामितयशसं भगवन्तं जिनेश्वरम् । वंदित्वा सांजलिपुटमश्रौषं धर्मदेशनाम् ॥ १०२ ॥
मया च देशनाप्रांते भगवन् केन कर्मणा । विद्याधरोऽहमभवमिति पृष्टोऽब्रवीत् प्रभुः ॥ १०३ ॥
पश्चिमे पुष्करवरद्वीपस्यार्धे महर्द्धिके । शीतोदाया महानद्या विशाले दक्षिणे तटे ॥ १०४ ॥
विजये सलिलावत्यां वीतशोकजनाकुला । वीतशोकाभिधाना पूरस्ति स्वस्तिकवद्भुवः ॥ १०५ ॥
॥ युग्मम् ॥
मीनध्वजो रूपधेयेनौजसा कुलिशध्वजः । तत्र रत्नध्वजो नाम चक्रवर्त्यभवत्पुरा ॥ १०६ ॥
प्रधानभार्ये तस्योभे अभूतां शीलभूषणे । एका तत्र कनकश्रीर्द्वितीया हेममालिनी ॥ १०७ ॥
अंकस्थकल्पलतिकाद्वितयस्वप्नसूचिते । कनकश्रीर्दुहितरौ सुषुवे धीश्रियाविव ॥ १०८ ॥
तयोश्च कनकलतेत्याख्यां पद्मलतेति च । चक्रतुर्मातापितरौ जन्मोत्सवसमोत्सवम् ॥ १०९॥
स्वप्ने पद्मलतालोकसूचिता हेममालिनी । पद्मा नाम प्रसुषुवे नंदनां कुलनंदनीम् ॥ ११० ॥
प्रापुः कलाकलापं ता यौवनं चाथ पावनम् । विधात्रा श्रिय एकत्र त्रैलोक्यस्याहृता इव ॥ १११ ॥
पद्माप्यजितसेनार्या सान्निध्येन विरागिणी । तत्पादांते परिव्रज्यामुपादत्त यथाविधि ॥ ११२ ॥

१ शेषनागः । २ तन्नामानम् । ३ शोकरहितैर्जनैर्व्याप्ता । ४ इन्द्रः ।

एकदानुज्ञयार्यायास्तपःकर्म चतुर्थकम् । चक्रे त्रिरात्रे द्वे षष्टिश्चतुर्थानि स्युरत्र तु ॥ ११३ ॥
यथावत्पालयित्वा च दुस्तपं तत्तपोऽन्यदा । बहिः शरीरचिंतार्थं गच्छन्ती राजवर्त्मनि ॥ ११४ ॥
कृते मदनमंजर्या वेश्यायाः कामलंपटौ । युध्यमानौ महाबाहू राजपुत्रौ ददर्श सा ॥ ११५ ॥

॥ युग्मम् ॥

तौ दृष्ट्वाचिंतयत् पद्माप्यस्याः किमपि सुभ्रुवः । अहो सौभाग्यमेतौ यद्युध्येते हंत तत्कृते ॥ ११६ ॥
तन्ममाप्यस्य तपसः प्रभावेण भवान्तरे । सौभाग्यमीदृशं भूयान्निदानमिति साकरोत् ॥ ११७ ॥
अन्ते सानशनं कृत्वानालोचितनिदानिका[1] । मृत्वा सौधर्मकल्पेऽभूदमरी विपुलर्धिका ॥ ११८ ॥
कनकश्रीर्भवं भ्रांत्वा भवे दानाद्यनन्तरे[2] । कृत्वा विद्याधरेन्द्रत्वं नाम्नाभूर्मणिकुंडली ॥ ११९ ॥
भवं भ्रांत्वा च कनकलतापद्मलते अपि । दानादिधर्मं बहुधा विधाय प्राग्भवेषु च ॥ १२० ॥
जंबूद्वीपस्य भरतेऽभूतां रत्नपुरे पुरे । इन्दुषेणबिन्दुषेणौ श्रीषेणनृपतेः सुतौ ॥ १२१ ॥

॥ युग्मम् ॥

पद्माजीवोऽपि सौधर्माच्च्युत्वा तत्रैव भारते । वेश्या बभूव कौशांब्यामनंतमतिकाभिधा ॥ १२२ ॥
इन्दुषेणबिन्दुषेणावनंतमतिकाकृते । अधुना युध्यमानौ स्तस्तौ देवरमणे वने ॥ १२३ ॥
श्रुतपूर्वभवः सोऽहं स्नेहादिह समागमम् । विनिवारयितुं युद्धात् प्राग्जन्मज्ञापनेन वाम्[3] ॥ १२४ ॥
अहं वां प्राग्भवे माता गणिकेयं पुनः स्वसा । बुध्येथां सर्वमप्येवं संसारे मोहजृंभितम्[4] ॥ १२५ ॥

---

१ अनालोचितं निदानं यया सा । २ पूर्वस्मिन् भवे दानादि कृत्वा । ३ युवाम् । ४ मोहविलसितम् ।

अर्ककीर्तेरभूत् पत्नी ज्योतिर्मालेति नामतः । दुहिता मेघवनस्य विद्याधरनरेशितुः ॥ १४० ॥
च्युत्वा श्रीषेणजीवोऽपि तदा सौधर्मकल्पतः । ज्योतिर्मालोदरे हंस इवाब्जे समवातरत् ॥ १४१ ॥
ददर्श च तदा स्वप्ने प्रविशंतं निजे मुखे । सहस्ररश्मिममिततेजसं द्योतितांबरम् ॥ १४२ ॥
समयेऽसूत सा सूनुं पुण्यलक्षणलक्षितम् । साम्राज्यभुवनाधारसुदृढस्तंभमुच्चकैः ॥ १४३ ॥
दृष्टस्वप्नानुमानेन पितरौ तस्य चक्रतुः । नामामिततेजा इति मूर्त्याप्यमिततेजसः ॥ १४४ ॥
न्यस्यार्ककीर्तौ स्वं राज्यं प्राव्राजीद्वह्निजव्यथ । चारणर्षिजगन्नंदनाभिनंदनयोः पुरः ॥ १४५ ॥
जीवोऽपि सत्यभामायाश्च्युत्वा सौधर्मकल्पतः । ज्योतिर्मालासूर्यकीर्त्योः पुत्रीत्वेनोदपद्यत ॥ १४६ ॥
गर्भस्थायामिहापश्यत् सुतारां जननी निशाम् । इति तस्याः सुतारेति पितरौ नाम चक्रतुः ॥ १४७ ॥
स चाभिनंदिताजीवश्च्युत्वा सौधर्मकल्पतः । त्रिपृष्टः स्वयंप्रभयोः पुत्रत्वेनोदपद्यत ॥ १४८ ॥
यत्स्वप्ने साभिषेका श्रीगर्भस्थेऽत्रांबयेक्षिता । तेन श्रीविजय इति तस्य नाम पिता व्यधात् ॥ १४९ ॥
स्वयंप्रभायास्तनयो द्वैतीयीकोऽप्यजायत । नामतो विजयभद्रो जयभद्रनिकेतनम् ॥ १५० ॥
स शिखिनंदिताजीवश्च्युत्वा प्रथमकल्पतः । त्रिपृष्टस्वयंप्रभयोः पुत्री ज्योतिःप्रभेत्यभूत् ॥ १५१ ॥
सत्यभामापतिः पूर्वं कपिलो नाम योऽभवत् । संसारं स चिरं भ्रान्त्वा तिर्यगादिषु योनिषु ॥ १५२ ॥
पुर्यां चमरचंचायां विद्याधरनरेश्वरः । अजायताशनिघोष इति नाम्ना हि विश्रुतः ॥ १५३ ॥
॥ युग्मम् ॥
अर्ककीर्तिर्दुहितरं सुतारां तारलोचनाम् । त्रैपृष्टिना श्रीविजयनाम्ना स्वां पर्यणाययत् ॥ १५४ ॥

ज्योतिःप्रज्ञां त्रिपृष्टोऽपि स्वपुत्रीमतिसुंदरीम् । व्यवाहयदर्ककीर्तिपुत्रेणामिततेजसा ॥ १५५ ॥
सुतारया श्रीविजयो भुंक्ते वैषयिकं सुखम् । समं च ज्योतिःप्रज्ञयामिततेजा महाभुजः ॥ १५६ ॥
अन्यदा रथनूपुरचक्रवालाभिधे पुरे । विशाले बहिरुद्याने श्रिया सौमनसोपमे ॥ १५७ ॥
त्रयोऽभिनंदनजगन्नंदनावग्निजव्यपि । ज्ञानादीनीव रत्नानि मूर्त्तानि समवासरन् ॥ १५८ ॥
॥ युग्मम् ॥

ज्ञात्वार्ककीर्तिरायातं गुरुं गुरुगुरू अपि । एत्यावंदिष्ट नोत्कंठा विलंबं सहते क्वचित् ॥ १५९ ॥
अथाभिनंदनमुनिर्विदधे धर्मदेशनाम् । महामोहहिमस्तोमविद्रावणरविप्रभाम् ॥ १६० ॥
तया देशनया चार्ककीर्तिर्वैराग्यभागभवे । रचितांजलिरित्यूचेऽभिनंदनमहामुनिम् ॥ १६१ ॥
तावदागमयस्वेह यावतामिततेजसम् । निजे राज्ये निवेश्याहमायामि व्रतहेतवे ॥ १६२ ॥
न प्रमादो विधातव्य इति शिष्टो महर्षिणा । अर्ककीर्तिर्ययौ धाम प्रागनुस्यूतमानसः ॥ १६३ ॥
भूयो भूयः सनिर्बंधमभ्यर्थ्यामिततेजसम् । राज्यमग्राहयदयं क्रमो जनकपुत्रयोः ॥ १६४ ॥
कृतनिष्क्रमणः सोऽथ नृपेणामिततेजसा । परिव्रज्यामुपादत्ताभिनंदनमुनेः पुरः ॥ १६५ ॥
समं गुरुजनेनाथ विजहार वसुंधराम् । अर्ककीर्तिराजमुनिः शमराज्यं प्रपालयन् ॥ १६६ ॥
विद्याधरेन्द्रमुकुटोद्घृष्टपादांबुजासनः । तेजस्वी सोऽमिततेजाः पित्र्यां राज्यधुरां दधौ ॥ १६७ ॥

---

१ पितुर्गुरू । २ महामोह एव हिमस्तोमस्तस्य विद्रावणे नाशने सूर्यप्रभासदृशीम् । ३ प्रतीक्षस्व । ४ आग्रहसहितम् ।

इतश्चान्ते त्रिपृष्टस्य शुचा वैराग्यमुद्वहन् । राज्ये श्रीविजयं न्यस्य प्रवव्राजाचलो बलः ॥ १६८ ॥
नरेश्वरैरर्च्यमानो विजयश्रीस्वयंवरः । ततः श्रीविजयो विश्वं पित्र्यं राज्यमपालयत् ॥ १६९ ॥
अन्यदा चामिततेजास्तत्पोतनपुरं पुरम् । सुताराश्रीविजययोर्दर्शनोत्कंठितो ययौ ॥ १७० ॥
नगरं तदपश्यच्चोत्पताकामंचतोरणम् । संजातानंदसाम्राज्यमनुत्तरविमानवत् ॥ १७१ ॥
विशेषतो राजकुलं स हृष्टं वीक्ष्य विस्मितः । व्योमतोऽवातरत्तत्र समुद्र इव भास्करः ॥ १७२ ॥
अभ्युत्तस्थौ दूरतस्तं दृष्ट्वा श्रीविजयो नृपः । पूजार्हा[1]तिथिमात्रेऽपि किं पुनस्तादृशोऽतिथौ ॥ १७३ ॥
परस्परं श्वशुर्यौ[2] तौ मिथः स्वसृपती च तौ । सस्वजाते मिथो गाढं प्रौढप्रीतिसुधाह्रदौ ॥ १७४ ॥
महार्घ्यसिंहासनयोर्निषेदतुरुभावपि । पूर्वपश्चिमयोरद्र्योः सूर्याचन्द्रमसाविव ॥ १७५ ॥
ततश्चामिततेजास्तं पप्रच्छ स्वच्छमानसः । नाधुना कौमुदी नाग्रहायणी ग्रीष्मको न च ॥ १७६ ॥
वसंतो नापि नो पुत्रजन्मापि तव भूपते । पुरं केनोत्सवेनेदमुद्यदानंदमीक्ष्यते ॥ १७७ ॥

॥ युग्मम् ॥

ततः श्रीविजयोऽशंसदितः प्रागष्टमे दिने । एको नैमित्तिकः कश्चिदागादागामिवेदकः[3] ॥ १७८ ॥
याचितुं किमिहायासीः समाख्यातुं किमप्यथ । मयैवं सादरं पृष्ट इत्यभाषिष्ट स स्फुटम् ॥ १७९ ॥
जीवामो याचितेनैव वयं यद्यपि पार्थिव । तथापि याचितुं त्वत्तः सांप्रतं न हि सांप्रतम्[4] ॥ १८० ॥
शक्यते न यदाख्यातुं तदाख्यातुमिहागमम् । आख्याते हि प्रतीकारो भवेद्धर्मादिनापि हि ॥ १८१ ॥

---

१ अतिथिमात्रेऽपि पूजा योग्या । २ श्यालौ । ३ भविष्यवेत्ता । ४ योग्यम् ।

अस्मादह्नः सप्तमेऽह्नि मध्याह्नसमये ध्वनन् । अशनिः पोतनपुरेश्वरोपरि पतिष्यति ॥ १८२ ॥
तया कटुकया वाचा विषेणेवातिघूर्णितः । पतिष्यति त्वयि किमित्युवाच सचिवाग्रणीः ॥ १८३ ॥
नैमित्तिकोऽप्यभ्यधिष्ट मह्यं सचिव मा कुपः । शास्त्रदृष्टमिदं वच्मि ह्याव दोषोऽत्र मे न हि ॥ १८४ ॥
तस्मिन् दिने मयि पुनर्वसुधारासहोदरा । वस्त्राभरणमाणिक्यस्वर्णवृष्टिः पतिष्यति ॥ १८५ ॥
मयाप्यभिहितो मंत्री मास्मै कुप्य महामते । उपकारी प्रणिधिवद्यथार्थकथनादयम् ॥ १८६ ॥
नैमित्तिक परं ब्रूहि निमित्तं शिक्षितं कुतः । निराम्नायस्य वचसि श्रद्धा न प्रत्ययं विना ॥ १८७ ॥
नैमित्तिकोऽप्यभ्यधिष्ट क्ष्माधव श्रूयतां तदा । बलदेवेन देवेन प्रव्रज्यां गृह्णता सह ॥ १८८ ॥
उपादत्त परिव्रज्यां शांडिल्यो नाम मे पिता । तदनु प्राव्रजमहं पितृवात्सल्यमोहितः ॥ १८९ ॥
निमित्तजातमखिलं तदेदं शिक्षितं मया । ज्ञानमव्यभिचारि स्यान्नान्यतो जिनशासनात् ॥ १९० ॥
लाभालाभौ सुखं दुःखं जीवितं मरणं जयः । पराजयश्चेति वेद्मि निमित्तमहमष्टधा ॥ १९१ ॥
संप्राप्तयौवनश्चाहं विहरन्नपरेऽहनि । अगमं पद्मिनीखंडं नाम पत्तनमुत्तमम् ॥ १९२ ॥
हिरण्यलोमिका नाम मम तत्र पितृष्वसा । वसत्युद्यौवना चंद्रयशास्तद्दुहितापि च ॥ १९३ ॥
तां दत्तपूर्विणी सा मे बालायापि हि बालिकाम् । दीक्षालक्षणविघ्नेन विवाहस्त्वभवन्न हि ॥ १९४ ॥
तां दृष्ट्वा सानुरागोऽहं हित्वा जारमिव व्रतम् । पर्यणैषं विवेको हि स्मरार्त्तानां कियच्चिरम् ॥ १९५ ॥
ज्ञात्वा स्वार्थं निमित्तेन महानर्थमिमं च ते । अत्रागममहं राजन् यज्जानासि कुरुष्व तत् ॥ १९६ ॥

---

१ विद्युत् । २ हे अंग । ३ दूतवत् । ४ कामपीडितानाम् ।

इत्युदित्वा स्थिते तस्मिंस्तत्क्षणं राजरक्षणे । अब्रूवन् बुद्धिमन्तोऽपि व्याकुलाः कुलमंत्रिणः ॥ १९७ ॥
तत्रैकः सचिवोऽवोचद्विद्युत्पातोऽर्णवे[1] न हि । ससाहं तत्र तत्स्वामी नावमारुह्य तिष्ठतु ॥ १९८ ॥
द्वितीयोऽप्यब्रवीन्मंत्री नेदं मे प्रतिभासते । पतंतीं विद्युतं तत्र हंत को वारयिष्यति ॥ १९९ ॥
वैताढ्ये नावसर्पिण्यां विद्युत्पातो यतस्ततः । तस्योपरि गुहां गत्वा ससाहं वसतु प्रभुः ॥ २०० ॥
मंत्र्यवोचत्तृतीयोऽपि मह्यं नादोऽपि रोचते । अवश्यभावी यो ह्यर्थो यत्र तत्र स नान्यथा ॥ २०१ ॥
तथाह्यत्रैव भरते पुरे विजयनामनि । अवात्सीद्[2]ब्राह्मणवरो रुद्रसोमोऽभिधानतः ॥ २०२ ॥
अनपत्यस्य तस्याथ महद्भिरुपयाचितैः । पत्न्यां ज्वलनशिखायां शिखी नाम सुतोऽभवत् ॥ २०३ ॥
एकदा राक्षसस्तत्र कश्चिदप्यतिदारुणः । अधिष्ठितः क्रूरदेवेनागान्मर्त्यपलप्रियः[3] ॥ २०४ ॥
मानुषाण्यन्वहं तत्र बहूनि प्रणिहंति सः । अल्पं तु ग्रसते शेषं फेलामिव[4] समुज्झति ॥ २०५ ॥
राजा जजल्प तं साम्ना किं मुधा हंसि नॄन् बहून् । घ्नंति व्याघ्रादयोऽप्यज्ञा जन्तुमेकं क्षुदौषधम् २०६
दिने दिने त्वयाप्येकं ग्राह्यं ग्रासाय मानुषम् । मन्निर्णीतेन वारेण तत्तत्र स्वयमेष्यति ॥ २०७ ॥
तेनाभ्युपगतेऽर्थेऽस्मिन्नृपः स्वपुरवेश्मसु । मानुषाणां नामगोलांश्चक्रे वारकहेतवे ॥ २०८ ॥
कृष्यमाणः करे गोलो यदा यस्य चटेत्तदा । प्रयाति पुररक्षायै भदयभूतः[5] स रक्षसे ॥ २०९ ॥
तस्य ब्राह्मणपुत्रस्य निर्ययौ गोलकोऽन्यदा । तन्नाम वाचितं चांतरंतकेनेव पत्रकम् ॥ २१० ॥
तच्छ्रुत्वा तस्य माता तु रोदयंती पशूनपि । हा पुत्र नासि नासीति रुरोद करुणस्वरम् ॥ २११ ॥

१ समुद्रे । २ अवसत् । ३ मर्त्यपलं मनुष्यमांसं प्रियं यस्य । ४ उच्छिष्टमिव । ५ यमेन ।

आसीच्च तद्गृहासन्नमेकं भूतगृहं महत्। तद्भूतैः क्रंदितं तस्याः शुश्रुवे कर्णदुःश्रवम् ॥ २१२ ॥
उत्पन्नकरुणैस्तैश्च जगदे ब्राह्मणीति सा। मा रोदीर्नैव सुस्था त्वं त्वत्पुत्रो यातु रक्षसे ॥ २१३ ॥
राक्षसाग्रतोऽप्येनमानेष्यामस्तवांतिके। लंघिष्यते न व्यवस्थां न चाप्येष मरिष्यति ॥ २१४ ॥
साधु हे देवताः साधु यावदेवं जजल्प सा। आरक्षास्तावदजवन्निन्युराकृष्य तत्सुतम् ॥ २१५ ॥
तद्दत्तं यावदादत्ते राक्षसस्तं द्विजात्मजम्। अपहृत्यानयन् भूतास्तावत्तन्मातुरंतिके ॥ २१६ ॥
भीता भयानि पश्यंती ब्राह्मण्यपि तमात्मजम्। अन्तर्गिरिगुहं[1] रक्षाकृते चिक्षेप तत्क्षणम् ॥ २१७ ॥
तत्रस्थेन जग्रसे च जाग्रताजगरेण सः। तद्वदन्यदपि भवेन्न भावि क्वचिदन्यथा ॥ २१८ ॥
इदमौपयिकं तस्मात् सर्वैराचर्यतां तपः। निकाचितानामपि यत् कर्मणां तपसा क्षयः ॥ २१९ ॥
मंत्री तुर्योऽप्यभाषिष्टोपरिष्टात् पोतनप्रभोः। ख्यातोऽनेन तडित्[2]पातो न श्रीश्रीविजयस्य तु ॥ २२० ॥
तत् सप्ताहं पुरेऽमुष्मिन् कोऽप्यन्यः क्रियतां पतिः। पतिष्यत्यशनिस्तत्र दुरितं यातु तेन वः ॥ २२१ ॥
अथ नैमित्तिको हृष्टः प्राशंसदिति मंत्रिणम्। मन्निमित्तज्ञानतोऽपि मतिज्ञानं तवाधिकम् ॥ २२२ ॥
अनर्थपरिहाराय कुरुध्वममुमाशु तत्। जिनपूजारतश्चैत्यस्थितो राजापि तिष्ठतु ॥ २२३ ॥
मयाप्यवादि योऽप्यद्य नरो राज्येऽभिषिच्यते। चिंतयामि कथं तस्य प्राणनाशं निरागसः[3] ॥ २२४ ॥
आ[4] शक्रादा कृमेः प्राणाः प्राणिनामतिदुस्त्यजाः। कथं वराकः पुंमात्रः पश्यतो मे विपत्स्यते ॥ २२५ ॥
परेषां प्राणिनां प्राणत्राणैकपुरुषव्रताः। वयं हि घातयामोऽन्यं स्वप्राणितकृते कथम् ॥ २२६ ॥

१ गिरेर्गुहायाम्। २ विद्युत्। ३ निरपराधिनः। ४ इंद्रादारभ्य कीटपर्यंतम्।

मंत्रिणोऽथाब्रुवन् देव कार्यद्वयमिदं हि नः । यास्यति स्वामिनोऽनर्थः प्राणी च न विपत्स्यते ॥ २२७ ॥
वैश्रवणस्य प्रतिमा देव राज्येऽभिषिच्यताम् । तां च त्वामिव सप्ताहं सर्वः सेविष्यते जनः ॥ २२८ ॥
दिव्यशक्त्योपसर्गश्चेन्न स्यात्तदपि सुंदरम् । स्याच्चेत्तदपि न प्राणिवधपापं भविष्यति ॥ २२९ ॥
युक्तमेतदिति प्रोच्य गतोऽस्मि जिनमंदिरम् । दर्भसंस्तारके[2] तस्मिन्नस्थां च कृतपौषधः ॥ २३० ॥
नरेंद्रवदवर्तंत मूर्तौ वैश्रवणस्य ते । स्वाम्युदर्काय[3] धीमंतो यांति स्वाम्यंतरेऽपि हि ॥ २३१ ॥
सप्तमे च दिने प्राप्ते मध्याह्नेऽत्यूर्जिगर्जितः । दिव्युन्ननाम पर्जन्यः प्रलयांबुददारुणः ॥ २३२ ॥
तस्मादंभोधराद्घोराद्ब्रह्मांडं स्फोटयन्निव । निपपाताशनिस्तस्मिन् यक्षे राज्यधरीकृते[4] ॥ २३३ ॥
यथा यक्षे तडित्पातस्तत्र नैमित्तिके तथा । रत्नादिवृष्टिरभवद्विहितांतःपुरादिभिः ॥ २३४ ॥
पत्तनं पद्मिनीखंडमखंडितमहर्द्धिकम् । दत्वा नैमित्तिकवरो व्यसृज्यत मयापि हि ॥ २३५ ॥
मूर्तिं वैश्रवणस्यापि दिव्यरत्नमयीं नवाम् । अकारयमहं सद्यो विपद्बंधुः स मे यतः ॥ २३६ ॥
मद्विघ्नशांत्या तदमी पौरामात्यादयो मुदा । महोत्सवं विदधते सर्वोत्सवशिरोमणिम् ॥ २३७ ॥
इति श्रुत्वामिततेजाः सुतारां भगिनीं निजाम् । वस्त्रालंकारदानेन पूजयामास संमदात्[5] ॥ २३८ ॥
सुताराश्रीविजययोः पार्श्वे कालं कमप्यथ । अतिवाह्यामिततेजाः[6] स्वमेव[7] नगरं ययौ ॥ २३९ ॥
अथ श्रीविजयो राजा देव्या सह सुतारया । वनं ज्योतिर्वनं नाम ययौ क्रीडाकुतूहलात् ॥ २४० ॥

---

१ कुबेरस्य । २ कुशासने । ३ स्वामिहिताय । ४ अराज्यधरो राज्यधरः कृतो राज्यधरीकृतस्तस्मिन् । ५ हर्षात् । ६ उल्लंघ्य । ७ स्वकीयम् ।

तच्छ्रुत्वा हरिणं मुक्त्वा ववले स इलापतिः । अभियोगो[1] हि योगाय क्षेमे सति विपश्चिताम् ॥ २५३ ॥
भूमौ च लुठितां दृष्ट्वा तां निःसहशरीरिकाम् । मणिमंत्रौषधिवरैरुपाचारीन्नरेश्वरः[2] ॥ २५४ ॥
प्राग्दृष्टप्रत्ययमपि सर्वमप्यगदादिकम् । उपचारः[3] खल इव तस्यामफलतां ययौ ॥ २५५ ॥
निमीलन्नेत्रनलिना विच्छाय[4]वदनच्छविः । कंपमानोरुयुगला वेपमानपयोधरा ॥ २५६ ॥
शिथिलीभूतसर्वांगोपांगसंध्यस्थिबंधना । नृपतेः पश्यतोऽप्याशु कालधर्ममियाय[5] सा ॥ २५७ ॥

॥ युग्मम् ॥

परासुरिव निःसंज्ञः परासु[6]मवलोक्य ताम् । पपात मूर्छितः पृथ्व्यां स पृथ्वीपतिपुंगवः ॥ २५८ ॥
पुनर्व्यावृत्तचैतन्योऽभिषिक्तश्चंदनद्रवैः । मूर्धाभिषिक्त[7]मूर्धन्यो विललापैवमुच्चकैः ॥ २५९ ॥
ह हा दैवेन मुषितो नयता त्वां मनोरमे । त्वद्रूपैरेव हि प्राणैः प्राणितव्यं ममाभवत् ॥ २६० ॥
त्वां विनैष जनः कांते शोकसंभारभारतः । जीर्णं गृहमिवाधारस्तंभहीनं पतिष्यति ॥ २६१ ॥
मद्वल्लभां लोभयता वल्लभादेशतत्परः । कांचनेन कुरंगेण वंचितोऽस्मि ह हा जडः ॥ २६२ ॥
प्रत्यक्षं मे प्रियां दष्टुं तक्षकोऽपि हि न क्षमः । कुर्कुटाहिस्तु दूरेऽस्तु दैवं हि बलवत् परम् ॥ २६३ ॥
ततोऽनुगंतुं दयितां त्यजन् प्राणान् हुताशने । जनं प्रपूरयाम्यद्य दुर्दैवस्याभिसर्पतः ॥ २६४ ॥
तया सह महीनाथः सद्यो विरचितां चिताम् । अलंचक्रे स्वयं धीरो रतिमंदिरतल्पवत् ॥ २६५ ॥

---

१ अभियोगः परास्कंदनम् । २ उपचारमकरोत् । ३ विनयः । ४ म्लानमुखकांतिः । ५ मृत्युमगच्छत् । ६ गतप्राणाम् । ७ मूर्धाभिषिक्तानां राज्ञां मूर्धन्यो मुकुटसमानः ।

यावज्ज्वलितुमारेभे क्षणादप्याशुशुक्षणिः[1] । तावदाजग्मतुस्तत्र द्वौ विद्याधरपूरुषौ ॥ २६६ ॥
अभिमंत्र्य तयोरेकः सिषेच पयसा चिताम् । प्रतारिण्यपि तत्कालं पलायिष्टाट्टहासकृत् ॥ २६७ ॥
क्व स ज्वलन उज्ज्वालः परासुः प्रेयसी क्व मे । कृताट्टहासा केयं च किमिदं दैवनाटकम् ॥ २६८ ॥
इति संचिंतयन् स्वस्थः पुरःस्थौ तौ च पूरुषौ । सौम्याकृती किमिदमित्यपृच्छत् पृथिवीपतिः ॥ २६९ ॥
तौ च प्रणम्य राजानमूचतुर्विनयोचितम् । विद्याधरपतेरावां पत्ती अमिततेजसः ॥ २७० ॥
पितापुत्रौ च संभिन्नश्रोतोदीपशिखाभिधौ । निर्गतौ स्वेच्छया तीर्थजिनबिंबानि वंदितुम् ॥ २७१ ॥
अत्रापतद्भ्यामावाभ्यामश्रावि[2] श्रुतिदुःश्रवा[3] । पशूनप्युत्कर्णयंती वागियं करुणाक्षरा ॥ २७२ ॥
हा श्रीविजय मत्प्राणनाथ भूनाथसेवित । हा बांधवामिततेजस्तेजस्तुलितभास्कर ॥ २७३ ॥
हा वत्स विजयभद्र बलभद्रसमौजसा । हा सर्वदा संनिहितास्त्रिपृष्ठकुलदेवताः ॥ २७४ ॥
दुष्टविद्याधरादस्माद्वृकादिव कुरंगिकाम् । इमां सुतारां त्रायध्वं त्रायध्वमविलंबितम् ॥ २७५ ॥
॥ त्रिभिर्विशेषकम् ॥

स्वसारं स्वामिनो ज्ञात्वा ह्रियमाणां दुरात्मना । तां वाचमन्वगच्छाव शब्दपातिशराविव[4] ॥ २७६ ॥
अचिरादप्यपश्याव सुतारां तरलेक्षणाम् । आत्तामशनिघोषेण पद्मिनीमिव दंतिना ॥ २७७ ॥
ह्रियमाणां स्वामिजामिं[5] तामुपेक्षितुमक्षमौ । आबद्धभ्रकुटी वाचमवोचाव च वैरिणम् ॥ २७८ ॥
रे विद्याधर[6] हतकाशनिघोष क्व यास्यसि । हृत्वा सुतारां चंडालो देवताप्रतिमामिव ॥ २७९ ॥

१ अग्निः । २ श्रुता । ३ कर्णदुःश्रवा । ४ शब्दानुसारिणौ शरौ इव । ५ जामिः भगिनी । ६ रे दुष्टविद्याधर ।

अरे रे न भवस्येष हन्वस्त्वामुद्धतायुधम् । आवां विद्याधरपतेः पत्ती ह्यमिततेजसः ॥ २८० ॥
एवमाक्षिप्य कृष्टासी कृष्णाही इव वार्तिकौ । आवां नरजघन्यं तं जिघांसंतावुपस्थितौ ॥ २८१ ॥
ततः सुतारादेव्योक्तं युष्मेन युवयोरक्षम् । वनं ज्योतिर्वनं यातं तत्र श्रीविजयः प्रभुः ॥ २८२ ॥
प्रतारण्या वंचयित्वा त्याज्यमानमसूनपि । निषेधतं श्रीविजयं तस्मिन् जीवामि जीवति ॥ २८३ ॥
द्रुतमावां तदादेशादिह त्वां समुपस्थितौ । विध्यापितश्चितावह्निरावाभ्यां मंत्रितोदकैः ॥ २८४ ॥
इयं प्रतारणी विद्या सुताराखपधारिणी । वेतालवत्समुत्ताला साट्टहासा पलायत ॥ २८५ ॥
हृतां सुतारां विज्ञाय विषसाद महीपतिः । चितानलादप्यधिकं प्रज्वलन्विरहानलः ॥ २८६ ॥
तं तावित्यूचतुः स्वामिन् मा ताम्य कुशली न सः । यतो न दूरे भवतो दैवस्येव क यास्यति ॥ २८७ ॥
तौ प्रणम्याथ राजानं जानुस्पृष्टमहीतलौ । गाढमभ्यर्थ्य वैताढ्यमात्मना सह निन्यतुः ॥ २८८ ॥
ततः सर्वाभिसारेणामिततेजाः क्षणादपि । अभ्युत्तस्थौ श्रीविजयं विजयो मूर्तिमानिव ॥ २८९ ॥
महत्या प्रतिपत्त्या तमासयित्वोचितासने । ससंभ्रमोऽमिततेजाः पप्रच्छागमकारणम् ॥ २९० ॥
तौ च विद्याधरवरौ तस्मै श्रीविजयेरितौ[3] । सुताराहरणोदंतमाचख्यतुरशेषतः ॥ २९१ ॥
अथार्ककीर्तितनयो भ्रृकुटीकुटिलालिकः[4] । रुषारुणकपोलाक्षो निजगादेति भूपतिम् ॥ २९२ ॥
कंडूयित्वा तुंडमिव तक्षकस्य फणाभृतः । सटामुष्टिमिवोत्पाट्य[6] शयानस्य मृगद्विषः ॥ २९३ ॥

---

१ हंतुमिच्छन्तौ । २ उन्मत्ता । ३ श्रीविजयेन प्रेरितौ । ४ भ्रुवः कौटिल्येन वक्रमलिकं ललाटं यस्य सः । ५ मरतकम् । ६ सटानां केसराणां मुष्टिम् ।

तव भार्यां स्वसारं मे सुतारामपहृत्य सः । जीविष्यति कियन्नामाशनिघोषो नराधमः ॥ २९४ ॥
॥ युग्मम् ॥

ततश्च शस्त्रावरणीं बंधनीं मोचनीमपि । विद्यां श्रीविजयायादादर्ककीर्तिसुतः स्वयम् ॥ २९५ ॥
रश्मिवेगामितवेगरविवेगार्ककीर्तयः । भानुवेगादित्ययशोभानुचित्ररथा अपि ॥ २९६ ॥
अर्कप्रभोऽथार्करथो रवितेजाः प्रभाकरः । तथा किरणवेगोऽपि सहस्रकिरणोऽपि च ॥ २९७ ॥
इत्यादीनां स्वपुत्राणां शतपंचशतीमथ । समं त्रैपृष्टिना वीरप्रष्ठेन[1] पृतनावृतान्[2] ॥ २९८ ॥
पुर्यां चमरचंचायां तस्मादशनिघोषतः । सद्यः सुतारामादातुं प्राहिणोदहितांतकः[3] ॥ २९९ ॥
॥ चतुर्भिः कलापकम् ॥

ततो विद्याधरबलछन्नाशेषनभस्तलः । दिवि केतुशतानीवोद्भावयन् सुभटायुधैः ॥ ३०० ॥
प्रभूतहयहेषाभिर्हेषयन् भास्वतो हयान् । वितन्वानो गजैर्व्योम्नि मेघमालामिवापराम् ॥ ३०१ ॥
विमानैर्दर्शयन् दीप्रैरर्कानौत्पातिकानिव । जगाम चमरचंचां त्रिपृष्टितनयः क्षणात् ॥ ३०२ ॥
॥ त्रिभिर्विशेषकम् ॥

तं चाधिविद्यमशनिघोषं ज्ञात्वार्ककीर्तिसूः । सहस्ररश्मिना सार्धं सूनुनानूनशक्तिना ॥ ३०३ ॥
परविद्याछेदकरीं महाज्वालाभिधायिकाम् । विद्यां स्वयं साधयितुं हिमवंतं गिरिं ययौ ॥ ३०४ ॥
॥ युग्मम् ॥

१ वीरेषु प्रष्ठेन श्रेष्ठेन । २ सेनासहितान् । ३ शत्रुनाशकः ।

स तत्र च जयंतस्य महर्षेः प्रतिमाजुषः । तथैव धरणेन्द्रस्य पादमूलेऽतिपावने ॥ ३०५ ॥
स्थितो मासिकभक्तेन प्रतिमां साप्तरात्रिकीम् । समुद्वहन् प्रववृते विद्यासाधनकर्मणि ॥ ३०६ ॥
॥ युग्मम् ॥

सहस्ररश्मिः पितरं ररक्ष च तथास्थितम् । एवं च तिष्ठतोर्मासः किंचिदूनस्तयोरभूत् ॥ ३०७ ॥
इतश्च चमरचंचाबहिर्देशे कृतस्थितिः । प्रैषीदशनिघोषाय दूतं श्रीविजयो नृपः ॥ ३०८ ॥
दूतो गत्वाथ निःशंकोऽशनिघोषमभाषत । धिग्ह्रीकरमिदं कर्म काकेनेव त्वया कृतम् ॥ ३०९ ॥
धैर्यवीर्यविहीनानां छलमेव हि पौरुषम् । तेषतामद्य धुर्योऽसि देवीमपहरंस्तथा ॥ ३१० ॥
प्रतारिणीं श्रीविजये विद्यां स्फोरयतस्तदा । प्रेक्षापूर्वककारित्वमहो ते श्मश्रुधारिणः ॥ ३११ ॥
ज्ञातस्त्वया श्रीविजयः प्रतापतपनो न किम् । निष्प्रतापे त्वादृशानां छलानि प्रभवंति हि ॥ ३१२ ॥
स मोघीकृत्य तां विद्यामिहायासीद्यथा तथा । सुतारां नेष्यति बलात्तद्धीमन् स्वयमर्पय ॥ ३१३ ॥
स्वयमर्पयतो देवीं प्रणिपातपुरःसरम् । त्वज्जीवितस्य कुशलं कीनाशः प्रगुणोऽन्यथा ॥ ३१४ ॥
वभाषेऽशनिघोषोऽपि घननिर्घोषघोरगीः । साध्वहो दूत दृष्टोऽसि धृष्टो नेदृक् क्वचिन्मया ॥ ३१५ ॥
यद्यत्रागाच्छ्रीविजयस्तत् किं तेन तपस्विना । सुमेरुमपि गच्छंति खगाः किं तेषु पौरुषम् ॥ ३१६ ॥
ममैकयत्नलेशेन नष्टशक्तिः स यास्यति । न वालुकादेवकुलं सहते सरितो रयम् ॥ ३१७ ॥
पथा यथागतेनैव स प्रयातु निजौकसि । सुतारां याचमानस्तु प्रयास्यति यमौकसि ॥ ३१८ ॥

१ लज्जाकरम् । २ छलवताम् । ३ विफलीकृत्य । ४ यमः । ५ वेगम्

इति ध्यं समालोच्य यातु तिष्ठतु वाद्य सः। गच्छ त्वमपि मद्वाचं समाख्याहि तदग्रतः ॥ ३१९ ॥

एवमुक्तस्तेन दूतो द्रुतं निर्गत्य तत्पुरात्। आख्यत्त्रैपृष्ठये तस्य वाचिकं वंचकात्मनः ॥ ३२० ॥

कोपानलानिलप्रायं श्रुत्वा तत्तस्य वाचिकम्। राजा श्रीविजयः सेनां सज्जितामप्यसज्जयत् ॥ ३२१ ॥

ज्ञात्वा श्रीविजयानीकान्यनीकोत्कंठितान्यथ। आदिदेशाशनिघोषो युद्धातिथ्यकृते सुतान् ॥ ३२२ ॥

अश्वघोषः शतघोषः सहस्रघोष एव च। महाघोषो भीमघोषो घनघोषस्तथापरे ॥ ३२३ ॥

तत्पुत्रा मेघघोषाद्याः सर्वे सर्वाभिसारतः। युद्धाय चमरचंचापुर्या द्वारि विनिर्ययुः ॥ ३२४ ॥

॥ युग्मम् ॥

रणतूर्याण्यवाद्यंत सैन्ययोरुभयोरपि। ध्वनिना शरदंभोदसोदराणि गरीयसा ॥ ३२५ ॥

शरच्छिन्नोच्छलच्छत्रैः शतेंदूभवदंबरम्। कुन्तोत्पतच्छिरोभिश्च संमूर्छद्बहुराह्विव ॥ ३२६ ॥

पतद्भिस्तेजितैः शल्यैः पतदुल्कमिवोच्चकैः। आस्फल्यत्पर्वतमिवास्फलद्भिर्गंधसिन्धुरैः ॥ ३२७ ॥

भुवि विश्रांतसंध्याभ्रमिव कीलालकर्दमैः। मद्यस्येवासृजः पानान्माद्यद्वेतालपेटकम् ॥ ३२८ ॥

महाभटैर्जप्यमानमंत्रास्त्रमिव हुंकृतैः। शल्याहतेभकुंभोत्थमुक्तातारकितांबरम् ॥ ३२९ ॥

सैन्यरेणुभिरुद्भूतप्रदोषमिव सर्वतः। महत् प्रववृते युद्धमुभयोरपि सैन्ययोः ॥ ३३० ॥

॥ पंचभिः कुलकम् ॥

---

१ कोपाग्निवायुसदृशम्। २ युद्धोत्कंठितानि। ३ युद्धसत्काराय। ४ शतचंद्रीभवत् अंबरं यत्र तत्। ५ शोणितकर्दमैः। ६ पेटकः समूहः। ७ शस्त्रैराहता ये गजास्तेषां कुंभेभ्य उत्थिताभिर्मुक्ताभिस्तारकितमाकाशं यत्र तत्।

घोरैर्गदाप्रहरणप्रहारैरतिमूर्छिताः । अंचलान् व्यजनीकृत्य केऽप्यवीज्यंत बन्धुभिः ॥ ३३१ ॥
वल्लभाभिः पयस्कुंभहारिणीभिः पिपासिताः । केऽप्यंभोऽनुपदिनीभिरपाय्यंत मुहुर्मुहुः ॥ ३३२ ॥
पश्यन्तीनां प्रेयसीनामपि केऽप्यमरीजनैः । अयं मेऽयं ममेशस्तान् सोत्कंठमिति वव्रिरे ॥ ३३३ ॥
आदाय कोऽप्यरेर्मौलिं नृत्यति स्म महाभुजः । तत्स्पर्धयेव तद्वैरिकबंधोऽपि ननर्त च ॥ ३३४ ॥
प्रथमस्यंदनाद्भग्नात् कोऽपि च स्यंदनान्तरम् । समुत्पत्य ययौ वृक्षादिव वृक्षांतरं कपिः ॥ ३३५ ॥
कोऽपि युध्ध्वा चिरतरं निष्ठितास्त्रो महाभटः । स्वकेनैव शिरस्केन प्रहृत्यामारयत् परम् ॥ ३३६ ॥
परिक्षीणेषु शस्त्रेषु निखिलेष्वपि केचन । दोर्दण्डाभ्यां युयुधिरे दंताभ्यामिव दंतिनः ॥ ३३७ ॥
अस्त्रैः शस्त्रैर्मायया च सैन्ययोर्युध्यमानयोः । किंचिदूनो व्यतीयाय मास एको द्वयोरपि ॥ ३३८ ॥
सैन्यैः श्रीविजयस्याथ पवनैरिव पादपाः । अभज्यंताशनिघोषकुमारा मारपीडिताः ॥ ३३९ ॥
अथाशनिमिवोद्यम्याशनिघोषो महागदाम् । कुमारांस्तर्जयन् भग्नान् भंजयन्नपि च विद्विषः ॥ ३४० ॥
वराहः पल्वलमिव समुद्रमिव मन्दरः । विशिष्टविद्यादोर्वीर्योऽगाहिष्ट द्विषतां बलम् ॥ ३४१ ॥
मंक्षु तेनाप्यभज्यंत सूनवोऽमिततेजसः । कृते प्रतिकृतं सद्यः कुर्वन्ति हि मनस्विनः ॥ ३४२ ॥
सुताराभ्रातृजान् भग्नान् वीक्ष्य श्रीविजयो नृपः । युद्धे स्वयमढौकिष्ट तिष्ठ तिष्ठेत्यरिं ब्रुवन् ॥ ३४३ ॥
अथ द्वावपि गर्जन्तौ तर्जन्तौ च परस्परम् । शस्त्रशक्तिं दर्शयन्तौ विद्याशक्तिं च तादृशीम् ॥ ३४४ ॥

---

१ तृषिताः । २ अनुपदं गच्छंतीभिः । ३ शीर्षरहितो देहः कबंधः । ४ शस्त्ररहितः । ५ शिरस्त्राणेन । ६ प्रतीकारम् ।

प्रहारान् वंचयमानावन्योऽन्यस्यातिलाघवात् । सुरासुरैर्वीक्ष्यमाणौ युयुधाते महाभुजौ ॥ ३४५ ॥
॥ युग्मम् ॥

अथ श्रीविजयः क्रुद्धः खड्गेनाहत्य विक्रमी । व्यधाद् द्विधाशनिघोषं कदलीकांडलीलया ॥ ३४६ ॥
[1]वटपादादिव वटौ ते च खंडे उभे अपि । अभूतामशनिघोषौ घोषत्रेषितसैनिकौ ॥ ३४७ ॥
तावप्यशनिघोषौ स यावच्चक्रे द्विधा द्विधा । संजज्ञिरेऽशनिघोषाश्चत्वारस्तावदुद्धताः ॥ ३४८ ॥
चतुरोऽपि द्विधा चक्रे तान् यावदवनीपतिः । तावदष्टाशनिघोषा जज्ञिरे समराजिरे ॥ ३४९ ॥
खंडितैरशनिघोषैरेवं तेन मुहुर्मुहुः । सहस्रशोऽशनिघोषाः शालिस्तंबा इवाभवन् ॥ ३५० ॥
बहुशोऽशनिघोषैस्तैर्युगपत् पोतनेश्वरः । अलक्षि वेष्ट्यमानः सन् विन्ध्याद्रिरिव वारिदैः ॥ ३५१ ॥
[2]छेदं छेदं च तान् श्रांतो यावच्छ्रीविजयोऽभवत् । तावत् सिद्धमहाज्वालोऽमिततेजाः समाययौ॥३५२॥
आगच्छतः [3]प्रतापोष्णतेजसोऽमिततेजसः । प्रणेशुरशनिघोषसैन्याः सिंहान्मृगा इव ॥ ३५३ ॥
न नंष्टुमपि दातव्यं द्विषामेषां दुरात्मनाम् । इति विद्यां महाज्वालां विन्ययुंक्तार्ककीर्तिसूः ॥ ३५४ ॥
[4]अहिता मोहिताः सद्यस्ते महाविद्यया तया । शरण्यं शरणायेयुस्तमेवामिततेजसम् ॥ ३५५ ॥
गन्धेभगन्धमाघ्राय करीवामिततेजसम् । अवलोक्याशनिघोषः पलायिष्ट निरर्गलम् ॥ ३५६ ॥
दूरादपि दुरात्मायमानेतव्यस्त्वयेति सा । महाज्वाला महाविद्यादिदिशेऽमिततेजसा ॥ ३५७ ॥
ततश्चाशनिघोषस्य पृष्ठतो रुष्टकालवत् । पर्यधाविष्ट सा विद्या सर्वविद्यांतकारिणी ॥ ३५८ ॥

---

१ वटमूलात् । २ छित्वा छित्वा । ३ प्रतापेन सूर्यसमानस्य । ४ शत्रवः ।

तस्याः पलायमानः सोऽनाप्नुवन् शरणं क्वचित् । अपाग्भरतवर्षार्धं प्राविशच्छरणेच्छया ॥ ३५९ ॥
ततश्च तत्र सीमाद्रौ चैत्ये श्रीऋषभप्रभोः । समवसरणस्थाने स्थापितोऽस्ति गजध्वजः ॥ ३६० ॥
बलदेवमुनिस्तत्राचलः पूर्वाब्धिपारगः[1] । शुक्लध्यानी प्रत्यपादि प्रतिमामेकरात्रिकीम् ॥ ३६१ ॥
कर्मणां घातिनां छेदात्तदा तस्य महामुनेः । उत्पेदे केवलज्ञानं विश्वसंक्रांतिदर्पणः ॥ ३६२ ॥
तस्याथ केवलज्ञानमहिमानं विधित्सवः । सुरासुराः समाजग्मुराहूता इव सत्वरम् ॥ ३६३ ॥
तौ चार्चिनंदनजगन्नंदनौ वह्निजट्यपि । त्रिजटी चार्ककीर्तिश्च पुष्पकेतुरथापरे ॥ ३६४ ॥
विमलमत्यादयोऽपि समेयुश्चारणर्षयः । बलं प्रदक्षिणीकृत्य नत्वा च समुपाविशन् ॥ ३६५ ॥
॥ युग्मम् ॥

महाज्वालापातभीतोऽशनिघोषोऽपि तत्क्षणम् । ययौ शरण्यमचलं प्रशमैकसुधाह्रदम् ॥ ३६६ ॥
सापि मुक्त्वाशनिघोषं महाज्वाला न्यवर्तत । न हीन्द्रकुलिशस्यापि स्फूर्तिः केवलिपर्षदि ॥ ३६७ ॥
अशेषं तं च वृत्तान्तमुपेत्यामिततेजसे । कथयामास सा विद्या निजमोघत्वलज्जिता[2] ॥ ३६८ ॥
तं च वृत्तांतमाकर्ण्य कैलापीव[3] घनध्वनिम् । अमोदतामिततेजा राजा श्रीविजयोऽपि च ॥ ३६९ ॥
इतः पूर्याः समादाय सुतारां द्रुतमानयेः । एवं मारीचिमादिश्योत्कंठापूरितमानसः ॥ ३७० ॥
ससैन्योऽमिततेजाः स च श्रीविजयो नृपः । वायुवद्व्योमयानेन सीमाद्रिं द्रुतमीयतुः ॥ ३७१ ॥
तत्र चर्षभनाथस्य वंदित्वा बिंबमादितः । बलदेवं ववंदाते तदग्रे च निषेदतुः ॥ ३७२ ॥

---

१ चतुर्दशपूर्वाण्येव समुद्रस्तस्य पारगः । २ स्वस्य वैफल्येन लज्जिता । ३ मयूरइव ।

ततः प्रतिनिवृत्तः सन् वने ज्योतिर्वनाभिधे । इमां सुतारामद्राक्षं स्थितां श्रीविजयांतिके ॥ ३८७ ॥
केनापि हेतुनामुष्यां कोऽपि वाचामगोचरः । ममालोकितमात्रायां स्नेहः समुदपद्यत ॥ ३८८ ॥
ततश्चाचिंतयमहं नालं गन्तुं विनानया । मनो मम प्रोत्सहते संदानितमिवोच्चकैः ॥ ३८९ ॥
राज्ञः श्रीविजयस्यास्य दोष्मतः पार्श्ववर्तिनी । न चैषा शक्यते हर्तुं शेषस्येव शिरोमणिः ॥ ३९० ॥
प्रतारण्या विद्यया तन्मोहयित्वा महीपतिम् । एतामहमपाहार्षं चिल्ली हारलतामिव ॥ ३९१ ॥
स्वजनन्याः समीपे चामुंचमेतामनिंदिताम् । चन्द्रस्यापि कलङ्कोऽस्ति न त्वेतस्या मनागपि ॥ ३९२ ॥
न चोक्तं वचसाप्यस्यां मया किंचिदशोभनम् । परमाख्याहि भगवन् किं मेऽस्यां स्नेहकारणम् ॥३९३॥
अथाख्यद्भगवान् सत्यभामाकपिलयोः कथाम् । श्रीषेणस्य शिखिनंदिताभिनंदितयोरपि ॥ ३९४ ॥
स मुनिः पुनरप्याख्यच्छ्रीषेणोऽथाभिनंदिता । सा शिखिनंदिता सत्या मृत्वा युगलिनोऽभवन् ॥३९५॥
ततोऽपि मृत्वा सौधर्मे चत्वारोऽप्यभवन् सुराः । ततोऽपि च्युत्वा श्रीषेणोऽमिततेजा अभूदयम्॥३९६॥
शिखिनंदिताजीवस्तत्पत्नी ज्योतिःप्रभेत्यभूत् । तथाभिनंदिताजीवः सोऽयं श्रीविजयोऽभवत् ॥ ३९७ ॥
जीवस्तु सत्यभामायाः सुतारेयमजायत । मृत्वार्तध्यानी कपिलो बभ्रामानेकयोनिषु ॥ ३९८ ॥
आर्तध्यानोद्भवं कर्माकामनिर्जरया स तु । उत्पद्योत्पद्याक्षपयत्तिर्यङ्नरकवासिषु ॥ ३९९ ॥
भूतरत्नाभिधाटव्यामैरावत्याश्च रोधसि । तापसाग्र्यस्य जटिलकौशिकस्य तपस्विनः ॥ ४०० ॥
पत्न्यां पवनवेगायां धर्मिलो नाम दारकः । उत्पेदे कपिलजीवः शमिलायुगयोगवत् ॥ ४०१ ॥
लाल्यमानस्तापसीभिराश्रमांगणवृक्षवत् । क्रमादासादयामास वृद्धिं धर्मिलदारकः ॥ ४०२ ॥

दीक्षां निजपितुः पार्श्वे गृहीत्वा स जटाधरः । समारेभे बालतपः पैतृकं मातृकं हि तत् ॥ ४०३ ॥
अधिसेहे स हेमंते हिमरात्रीमासु रात्रिषु । गलंत्या वारिसंपातं शैलाश्मा निर्झरादिव ॥ ४०४ ॥
मार्तंडो मूर्ध्नि पार्श्वेषु ज्वलंत्यश्च हसंतिकाः । सहते स्मेति पंचाग्नीन् ग्रीष्ममध्यंदिनेषु सः ॥ ४०५ ॥
पयोदवृष्टिपूर्तेषु स्वयं खातसरस्सु च । अघोरमंत्राद्यजपदाकंठं पयसि स्थितः ॥ ४०६ ॥
वापीः कूपान् सरसीश्च चखानाखानयच्च सः । अप्कायपृथिवीकायजीवबाधानिरर्गलः ॥ ४०७ ॥
आदाय दात्रपरशू कृषीवल इव स्वयम् । चिच्छेद समिधो दर्भान् सोऽर्जवत् स्वल्पबुद्धिकः ॥ ४०८ ॥
स चक्रे धर्मशकटीर्मार्गदीपानदत्त च । घुणदाहपतंगादिपातपातकनिर्भयः ॥ ४०९ ॥
अतिथीनामिव सदा काकादीनां दुरात्मनाम् । पिंडदानं स विदधे भोजनस्यादितोऽपि हि ॥ ४१० ॥
आनर्च च ववंदे च देववद्गोः स गोनिभः । न्यग्रोधपिप्पलारिष्टप्रभृतीनंघ्रिपानपि ॥ ४११ ॥
संपूतरैः स पानीयैः सिषेच स महीरुहान् । पानीयशाला बिभ्ररांचकार च पदे पदे ॥ ४१२ ॥
इत्यादिकं धर्मबुद्ध्या विदधानः स मुग्धधीः । कालं ललंघे भूयांसमायासफलजीवितः ॥ ४१३ ॥
अपरेद्युर्विमानस्थं स गच्छन्तं विहायसा । विद्याधरं ददर्शैकं महर्द्धिकमिवापरम् ॥ ४१४ ॥
फलेन तपसोऽमुष्येदृग्भूयासं भवान्तरे । इत्यकार्षीन्निदानं स क्रमेणाप च पंचताम् ॥ ४१५ ॥
ततश्चमरचंचायां पुर्यां विद्याधरप्रभोः । इंद्राशनेः स आसुर्यां पत्न्यां त्वमुदभूः सुतः ॥ ४१६ ॥

---

१ मेघवृष्टिपूर्णेषु । २ मृतानां जन्मांतरे तत्तल्लाभार्थं शकटी दीयते तथा तन्निमित्तं दीपदानं कुर्वंति । ३ गाः धेनूः । ४ वृषभसदृशः । ५ पूतरा जलजंतुविशेषाः । ६ मृत्युम् ।

ततः प्राग्भवसंबंधात् सुतारायां तवाभवत् । स्नेहोऽयं पूर्वसंस्कारो याति जन्मशतान्यपि ॥ ४१७ ॥
सुतारामिततेजाश्च तथा श्रीविजयोऽशनिः । संवेगं विस्मितं चेयुः प्राग्भवाकर्णनात्ततः ॥ ४१८ ॥
भव्यः किमस्मि यदि वा नास्मीत्यमिततेजसा । पृष्टोऽभाषिष्ट भगवान् बलभद्रमहामुनिः ॥ ४१९ ॥
इतो भवात् त्वं नवमे भवे क्षेत्रेऽत्र भारते द्वात्रिंशद्बद्धमुकुटनृपसहस्रैश्च सेवितः ॥ ४२० ॥
चतुर्दशमहारत्ननाथो नवनिधीश्वरः । समुद्रक्षुद्रहिमवन्मेखलायाः पतिर्भुवः । ४२१ ॥
सेव्यमानो मागधाद्यैरपि देवकुमारकैः । पंचमश्चक्रवर्ती त्वं महाभुज भविष्यसि ॥ ४२२ ॥
भवे तत्र चतुःषष्टिसुरेन्द्रप्रणतक्रम[3]ः । शांतिनाथ इति ख्यातः षोडशोऽर्हन् भविष्यसि ॥ ४२३ ॥
राजा श्रीविजयोऽयं तु तस्मिन्नेव भवे तव । प्रथमस्तनयो भावी प्रथमो गणभृत्तथा ॥ ४२४ ॥
ततो मुनिं प्रणम्य श्रीविजयामिततेजसौ । नरेन्द्रौ द्वादशविधं भेजतुः श्रावकव्रतम् ॥ ४२५ ॥
प्रणम्याशनिघोषस्तु बलभद्रं महामुनिम् । एवं विज्ञपयामास सुमना भक्तिवामनः ॥ ४२६ ॥
सर्वज्ञ त्वन्मुखाच्छ्रुत्वा स्वदुःखं प्राग्भवोद्भवम् । मनो मम तदावेशादिदानीमपि कंपते ॥ ४२७ ॥
भगवन् भवदाख्याते पुरा कपिलजन्मनि । आर्त्तध्यानं चकाराहं यत्प्रियाविप्रयोगतः ॥ ४२८ ॥
नानाविधवधच्छेदभेदभीमासु योनिषु । उत्पद्योत्पद्य बहुशः प्राप्तवानस्मि तत्फलम् ॥ ४२९ ॥
अकामया निर्जरया जीर्णदुष्कर्मकस्ततः । कथंचित्प्राप्तवानस्मि मानुष्यं पूर्वजन्मनि ॥ ४३० ॥

---

१ वैराग्यम् । २ विस्मयम् । ३ क्रमः पादः । ४ भक्त्या नम्रः ।

आयतनेष्वार्हतेषु प्रकृष्टाष्टाह्निकोत्सवान् । कुर्वाणावनणुश्रीकौ शक्रेशानाविवानिशम् ॥ ४४६ ॥
एषणीयकल्पनीयप्रासुकैर्वस्तुभिः सदा । कृतार्थयंतौ स्वामृद्धिं साधूनामुपढौकितैः ॥ ४४७ ॥
अनेकचिंतासंतानग्रीष्मसंतापितात्मनाम् । आर्तिं हरंतावार्तानां पूर्वानिलघनाविव ॥ ४४८ ॥
श्रुतस्कंधरहस्यानि श्रुतानि गुरुसंनिधौ । भावयंतौ सुधीश्रेष्ठावात्मगोष्ठ्यां दिवानिशम् ॥ ४४९ ॥
कुतीर्थिगोष्ठीमुज्झंतौ छायां बिभीतकीमिव । कुपथ्यवत्त्यजंतौ च व्यसनान्यखिलान्यपि ॥ ४५० ॥
सुखान्यनुभवंतौ च क्षणे वैषयिकाण्यपि । राज्यचिंतामप्यनघां विदधानौ यथाक्षणम् ॥ ४५१ ॥
स्वे स्वे पुरेऽवतिष्ठतावेकत्र मनसा पुनः । कालं व्यतीयतुस्तौ श्रीविजयामिततेजसौ ॥ ४५२ ॥
॥ सप्तभिः कुलकम् ॥

अन्येद्युरमिततेजाश्चैत्यांते पौषधौकसि । पौषधी विद्याधराणामाचख्यौ धर्ममार्हतम् ॥ ४५३ ॥
तदा च चारणमुनी धर्मस्येव भुजावुभौ । आजग्मतुस्तत्र चैत्ये जिनबिंबं विवंदिषू ॥ ४५४ ॥
तावापतंतावालोक्यामिततेजा महीपतिः । अभ्युत्थायाभ्यवंदिष्ट हृष्टोऽभीष्टावलोकनात् ॥ ४५५ ॥
तौ त्रिःप्रदक्षिणीकृत्य जिनेन्द्रं मुनिपुंगवौ । ववंदाते बभाषाते इति चामिततेजसम् ॥ ४५६ ॥
मराविवांभः संसारे मानुष्यमतिदुर्लभम् । तत्प्राप्तं न मुधा नेयमविवेकेन जातुचित् ॥ ४५७ ॥
जैने धर्मे विधातव्यो न प्रमादो मनागपि । जिनधर्मं विना नान्यदुत्तरोत्तरकामदम् ॥ ४५८ ॥
इत्युदित्वा जग्मतुस्तौ पुनरेव विहायसा । विश्वेष्टदर्शनौ वृष्टा प्रावृषेण्याविवांबुदौ ॥ ४५९ ॥

१ अनल्पलक्ष्मीकौ । २ सुधीश्रेष्ठौ । ३ अवसरे । ४ पौषधवान् । ५ वर्षाकालसंबंधिनौ ।

मुनी प्रदक्षिणीकृत्य वंदित्वा च नृपोत्तमौ । आसन्नौ[1] शुश्रुवतुर्धर्मदेशनां पुरतस्तयोः ॥ ४७५ ॥
सदा संविधवर्त्येव मृत्युस्तेनेह देहिनाम् । पशूनां सौनिकगृहेष्विव[2] स्याज्जीवितं कियत् ॥ ४७६ ॥
क्षणिकं क्षणिका[3]वत्तज्जानंतोऽपि न कुर्वते । धर्मोद्यमं मानवा यत्तदहो मोहजृंभितम् ॥ ४७७ ॥
मोहः खलु महाशत्रुर्जन्मतो मरणावधि । आत्मनीनं[4] नृणां धर्मं मूलादपि निकृन्तति[5] ॥ ४७८ ॥
हित्वा मोहं सर्वथा तन्मर्त्यजन्मफलेच्छया । कार्यो धर्मः कथंचिद्धि भूयः स्याज्जन्म मानुषम् ॥ ४७९ ॥
इत्याकर्ण्य स्वमायुस्तावत्शिष्टमपृच्छताम् । षड्विंशतिं दिनान्यायुः शेषं चाचख्यतुर्मुनी ॥ ४८० ॥
अमोघं तद्वचो ज्ञात्वा नरविद्याधरेश्वरौ । महानुतापनिर्वेदगर्भमेवमथोचतुः ॥ ४८१ ॥
सदा निद्रालुभिरिव सदापीतमदैरिव । सदा बाह्यवद्भिरिव सदा मूर्छां गतैरिव ॥ ४८२ ॥
सदापस्मारिभिरिव हहास्माभिः प्रमादिभिः । विफलं क्षपितं जन्मारण्यजातीप्रसूनवत् ॥ ४८३ ॥
॥ युग्मम् ॥

अथ तौ चारणमुनी प्रत्यबोधयतामिति । विषादेनालमद्यापि प्रव्रज्या युज्यते हि वाम् ॥ ४८४ ॥
अंतेऽप्यात्ता परिव्रज्या शुभव्रज्या[6]निबन्धनम् । कौमुदी हि निशान्तेऽपि कुमुदामोदकारणम् ॥ ४८५ ॥
एवं ताभ्यां बोधितौ श्रीविजयामिततेजसौ । उपेयतुर्निजनिजं हर्म्यं धर्म्यक्रियोत्सुकौ ॥ ४८६ ॥
तत्र चैत्येषु चक्राते परमष्टाह्निकोत्सवम् । दीनानाथादिजंतूनां ददतश्च यथारुचि ॥ ४८७ ॥

---

१ समीपवर्ती । २ चांडालगृहेषु । ३ विद्युत् । ४ आत्महितम् । ५ छिनत्ति । ६ कल्याणसमूहस्य कारणम् ।

राज्यं स्वपुत्रयोर्न्यस्योपाददाते नरेश्वरौ । ततोऽग्निनंदनजगन्नन्दनयोः पुरो व्रतम् ॥ ४८८ ॥
पादपोपगमं नामानशनं तौ च चक्रतुः । तदानीं च श्रीविजयः सस्मार पितरं निजम् ॥ ४८९ ॥
तद्दर्द्धिमधिकां स्वां तु ऋद्धिं हीनां विचिंतयन् । भूयासं तादृगेवाहं निदानमिति चाकरोत् ॥ ४९० ॥
कृताकृतनिदानौ श्रीविजयामिततेजसौ । विपद्य प्राणते कल्पे बभूवतुरथामरौ ॥ ४९१ ॥
विमाने सुस्थितावर्ते नन्दितावर्तके च तौ । मणिचूलदिव्यचूलनामानौ तस्थतुः सुखम् ॥ ४९२ ॥

अमरौ रतिसागरावगाढावायुर्विंशतिसागरोपमं तौ ।
अतिवाहयतः स्म सौख्यमग्नौ मनसा सिद्धसमीहितार्थलाभौ ॥ ४९३ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये पंचमे पर्वणि
श्रीशांतिनाथदेवस्य श्रीषेणादिकभववर्णनो
नाम प्रथमः सर्गः समाप्तः ॥

१ तस्य पितुर्नर्द्धिम् ।

# द्वितीयः सर्गः ।

इतश्च जंबूद्वीपेऽस्मिन् प्राग्विदेहविभूषणे । विजये रमणीयाख्ये शीताया दक्षिणे तटे ॥ १ ॥
शुभव्यूहकरी भूमेः शुभा च परमर्द्धिभिः । शुभाभिधास्ति नगरी शुभलक्ष्मीनिकेतनम् ॥ २ ॥
स्थैर्येणात्यमर[1]गिरिर्गांभीर्येणाथ सागरः । तस्यामासीन्नरपतिर्नाम्ना स्तिमितसागरः ॥ ३ ॥
तस्याभूतामभिभूताप्सरःसौभाग्यसंपदौ । वसुंधरानुन्धरा च पत्न्यौ शीलधुरंधरे ॥ ४ ॥
च्युत्वा च नंदितावर्तात् स जीवोऽमिततेजसः । श्रीमद्वसुंधरादेव्या उदरे समवातरत् ॥ ५ ॥
चतुरश्च महास्वप्नान् सुखसुप्ता वसुंधरा । स्वमुखे विशतोऽद्राक्षीद्बलजन्माभिसूचकान् ॥ ६ ॥
तदैव परमानंदजनिताभिजवादिव । दूरं गतायां निद्रायां राज्ञी राज्ञे व्यजिज्ञपत् ॥ ७ ॥
दंतावल[2]श्चतुर्दन्तः स्फटिकाद्रिनिभो मया । दृष्टो विशन् स्ववक्त्रांतर[3]भ्रांतरिव चंद्रमाः ॥ ८ ॥
शरदभ्रमिवावर्त्य निर्मितो निर्मलद्युतिः । ककुद्मानुच्चककुदोऽथ गर्जन्नृजुवालधिः[4] ॥ ९ ॥
निशाकरः करांकूरैर्दूरदूरं प्रसारिभिः । कर्णावतंसरचनां चिन्वन्निव दिशामथ ॥ १० ॥
ततश्च पद्मैरुन्निद्रैर्मञ्जुगुञ्जन्मधुव्रतैः । पूर्णं सरः शतमुखीभूय गायदिवोच्चकैः ॥ ११ ॥
स्वामिन्नमीषां स्वप्नानां फलं किमिति शंस मे । प्रष्टुमर्हो न सामान्यजनो हि स्वप्नमुत्तमम् ॥ १२ ॥

---

१ अमरगिरिं मेरुमतिक्रांतः । २ गजः । ३ मेघांतः । ४ ऋजुपुच्छः ।

धूमध्वजश्च निर्धूमो ज्वालापल्लवितांबरः । दृशोः सुखकरालोकः सप्तमश्चेति सप्त ते ॥ २७ ॥
सुप्तोत्थिता च सा देवी स्वप्नान् पत्ये शशंस तान् । विष्णुस्ते तनयो भावीत्याख्यात् स्वप्नफलं च सः ॥२८॥
समये सुषुवे साथ तनयं नयनोत्सवम् । नीलोत्पलदलश्यामं देवी द्यौरिव वारिदम् ॥ २९ ॥
अनंतवीर्य इत्याख्यां महावीर्यस्य भूपतिः । महोत्सवेन विदधेऽनुभ्रातनुजन्मनः ॥ ३० ॥
पद्मात्पद्मे हंस इव सोऽङ्कादङ्के दिवानिशम् । धात्रीणां संचरन् वृद्धिमाससाद शनैः शनैः ॥ ३१ ॥
स वर्धिष्णुः क्रमाद्भ्रात्रा ज्यायसा सवया इव । रमणीयाकृती रेमे रमणीजनवीक्षितः ॥ ३२ ॥
श्वेतश्यामशरीरौ तौ भ्रेजाते भ्रातरावुभौ । एकत्र मिलितौ शरद्घनप्रावृड्घनाविव ॥ ३३ ॥
लीलयैव हि शास्त्राणि तौ सर्वाण्यधिजग्मतुः । विद्या हि प्राग्भवाभ्यस्ताः स्वयमायांति तादृशाम् ॥३४॥
अभ्यस्यतः स्म शास्त्राणि तथा तौ गुरुसन्निधौ । यथोपजीव्यविज्ञानौ गुरोरपि बभूवतुः ॥ ३५ ॥
मंत्रतंत्रादिरहितं कामिनीजनकार्मणम् । प्रपेदाते यौवनं तौ श्रियो वासगृहोपमौ ॥ ३६ ॥
अन्येद्युश्चाययौ तत्र मुनिर्नाम स्वयंप्रभः । नानातिशयसंपन्नस्तस्थौ चोपवने क्वचित् ॥ ३७ ॥
इतश्च निर्ययौ पुर्या राजा स्तिमितसागरः । वाहान् वाहयितुं वाहकेल्यां तत्केलिकोविदः ॥ ३८ ॥
अशूकलान् शूकलांश्च वाहयित्वा तुरंगमान् । स वाहकेली[2]रेवन्तः श्रांतस्तद्वनमभ्यगात् ॥ ३९ ॥
विश्रांत[3]जीमुतमिव बहुलैस्तरुणाघ्रिपैः । कुट्याभिर्निर्झरोद्गारिगिरिप्रस्था[4]नुहारकम् ॥ ४० ॥
तालवृन्तधरमिवाध्वगानां कदलीदलैः । सर्वत्र शाद्वलोर्वीकं बद्धं मरकतैरिव ॥ ४१ ॥

---

१ अग्निः । २ अश्वक्रीडायां रेवन्तसमानः । ३ विश्रांता मेघा यस्मिंस्तदिव । ४ प्रस्थः सानुः ।

एलालवंगकक्कोललवलीगंधवाहिभिः । मरुद्भिः कृतसैरंध्रीकर्मकं शर्मकारिभिः ॥ ४२ ॥
प्रविवेश तदुद्यानं भूमिष्ठमिव नंदनम् । राजा प्रमोद[1]स्तिमितेक्षणः स्तिमितसागरः ॥ ४३ ॥

॥ चतुर्भिः कलापकम् ॥

स व्यश्राम्यत् क्षणं यावदपश्यत्तावदग्रतः । अशोकमूले ध्यानस्थं तं मुनिं प्रतिमाधरम् ॥ ४४ ॥
भक्त्योल्लसितरोमांचोऽतिशैत्यादिव तत्क्षणम् । तं प्रदक्षिणयामास ववंदे च मुनिं नृपः ॥ ४५ ॥
पारयित्वा मुनिर्ध्यानं धर्मलाभाशिषं ददौ । स्वकार्यमारब्धमपि सन्तोऽन्यार्थे त्यजंति हि ॥ ४६ ॥
ततः स्वयंप्रभमुनिर्विदधे धर्मदेशनाम् । तैस्तैर्निदर्शनैः श्रोतुः प्रत्यक्षानुभवामिव ॥ ४७ ॥
श्रुत्वा तां देशनां राजा प्रतिबुद्धः क्षणादपि । धाम्नि गत्वानंतवीर्यं निजराज्ये न्यवीविशत् ॥ ४८ ॥
कृतनिष्क्रमणोऽनंतवीर्येण च बलेन च । उपस्वयंप्रभं गत्वा पर्यव्राजीन्नरेश्वरः ॥ ४९ ॥
परीषहान् सहमानोऽतिमहादुःसहानपि । स सम्यक् पालयामास मूलोत्तरगुणांश्चिरम् ॥ ५० ॥
पर्यन्तकाले मनसा श्रा[2]मण्यं स विराद्धवान् । विपद्य च समुत्पेदे चमरेन्द्रोऽसुराधिपः ॥ ५१ ॥
अनन्तवीर्योऽप्यशिषन्मेदिनीं सापरा[3]जितः । निःसीमपौरुषधनः सुरैरप्यपराजितः ॥ ५२ ॥
अन्येद्युः केनचिद्विद्याधरेण समभूत्तयोः । मैत्री पवित्रा संसर्गः सद्भिरेव सतां यतः ॥ ५३ ॥
ताभ्यां सोऽथ महाविद्यां विद्याधरवरो ददौ । साधयेथामिति चोपदिश्य वैताढ्यमभ्यगात् ॥ ५४ ॥
बर्बरीति किरातीति नाम्नोभे चेटिके तयोः । अभूतां गीतनाट्यादिकलाकौशलशोभिते ॥ ५५ ॥

---

१ प्रमोदेन हर्षेण स्तिमिते निश्चले ईक्षणे नेत्रे यस्य सः । २ चारित्रम् । ३ अपराजितेन भ्रात्रा सहितः ।

गायन्त्यावथ नृत्यन्त्यौ रंभादिभ्योऽपि शोभनम् । रंजयामासतुश्चित्तं ते बलानन्तवीर्ययोः ॥ ५६ ॥
आस्थानीमन्यदास्थाय तालांकगरुडध्वजौ । प्रावर्तेतां कारयितुं ताभ्यां नाटकमुत्तमम् ॥ ५७ ॥
तदानीं च चलच्चूलो[1] वृषीपाणि[2]स्त्रिदंडभृत् । साक्षसूत्रब्रह्मसूत्रः कौपीनी[3] पीनकुक्षिकः ॥ ५८ ॥
श्वेतवर्णो राजहंस इव यायी विहायसा । सौवर्णपादुकान्यस्तपादो धृतकमंडलुः ॥ ५९ ॥
संचरन्नखिले लोके कलहालोककौतुकी । आस्थान्यामाययौ[4] तस्यां नारदोऽस्थैर्यपारदः ॥ ६० ॥
॥ त्रिभिर्विशेषकम् ॥
रामविष्णू बर्बरिकाकिरातीनाटकेक्षणे । व्याक्षिप्तमनसौ तं च नासत्राजयताम्[5] ऋषिम् ॥ ६१ ॥
कुपितो नारदोऽप्येवं चिंतयामास चेतसि । मामप्यभ्यागतं नैवाभ्युदस्थातां मदादिमौ ॥ ६२ ॥
नाटकं बहुमंसातामाश्चेटीमात्रयोरिमौ । आयातं हीनजनवन्मां पुनः पश्यतोऽपि न ॥ ६३ ॥
प्रेष्ठ[6]चेटीकयोश्चेट[7]प्रष्ठयोरिव तद्रुतम् । अवज्ञायाः फलमहं दर्शयिष्यामि संप्रति ॥ ६४ ॥
चिंतयित्वेति सहसा नारदः पवमानवत्[8] । जगाम वैताढ्यगिरौ दमितारिनृपांतिके ॥ ६५ ॥
विद्याधरेन्द्रो दमितारिरपीन्द्र इव स्वश्रिया । विद्याधरधराधीशैः शतशः परिवारितः ॥ ६६ ॥
सिंहासनं पादुके च त्यक्त्वा सद्यः ससंभ्रमः । अभ्युत्तस्थौ समायाते नारदे दूरतोऽपि हि ॥ ६७ ॥
तत्र सिंहासनं तस्मै दमितारिरदापयत् । प्रतिपत्तिस्तादृशानामृषीणां कियतीयती ॥ ६८ ॥

---

१ चलच्छिखः । २ व्रतिनां यदासनं सा वृषीत्युच्यते । ३ कौपीनवान् । ४ सभायाम् । ५ न सत्कारमकुरुताम् । ६ प्रेष्ठेऽतिप्रिये चेट्यौ दास्यौ ययोस्तयोः । ७ श्रेष्ठदासयोरिव । ८ वायुवत् ।

तत्र सिंहासनं त्यक्त्वा स्ववृष्यां स उपाविशत् । भक्तिमेव हि कांक्षंति न हि वस्तूनि तादृशाः ॥६९॥
तं नारदो जगादेवं त्रिखंडविजयेश्वर । विद्याधराधिनाथाय स्वस्ति तुभ्यं महौजसे ॥ ७० ॥
राज्ये राष्ट्रे पुरे गोत्रे संबंधिषु परिग्रहे । अन्यत्रापि भवद्गृहे सर्वत्र कुशलं नृप ॥ ७१ ॥
दमितारिरदोऽवादीत् सर्वत्र कुशलं मम । विशेषतोऽतः परं तु मुने भवदनुग्रहात् ॥ ७२ ॥
भवंतं किं तु पृच्छामि स्वच्छंदं व्योमयायिना । अदृष्टपूर्वं किं दृष्टमाश्चर्यं भवता क्वचित् ॥ ७३ ॥
सिद्धो मनोरथो मेऽसौ चिंतयन्निति नारदः । हर्षोत्फुल्लकपोलाक्षो दमितारिमदोऽवदत् ॥ ७४ ॥
अद्यैव दृष्टमस्माभिः सुरलोकेऽप्यसंभवि । आश्चर्यमेकं धरणीपरिभ्रमणजं फलम् ॥ ७५ ॥
शुभाख्यायां महापुर्यां क्रीडयाद्यगतोऽस्म्यहम् । आस्थानस्थमपश्यं चानन्तवीर्यं महीपतिम् ॥ ७६ ॥
तस्याग्रतो बर्बरिकाकिरातीभ्यां च नाटकम् । तत्राभिनीयमानं स्म पश्याम्याश्चर्यकारणम् ॥ ७७ ॥
उभौ लोकौ संचरामि द्यां भूमिं च कुतूहलात् । न च क्वचिन्मया दृष्टमीदृङ्नाटकमद्भुतम् ॥ ७८ ॥
शक्रो यथा हि सौधर्मे विजयार्धेऽत्र भूपते । आश्चर्यभूतवस्तूनां तथा त्वमसि भाजनम् ॥ ७९ ॥
किं विद्याभिः किमोजोभिः किं तेजोभिः किमाज्ञया । किं राज्येन न यद्यत्र तदानयसि नाटकम् ॥८०॥
इत्युदित्वा नारदमुनिरुप्तबीज[1] इवावनौ । तत्र स्वार्थं संक्रमय्य नभसा रभसाद्ययौ ॥ ८१ ॥
त्रिखंडविजयैश्वर्यगर्वितः प्राहिणोदथ । दमितारिर्नृपो दूतमपराजितबंधवे ॥ ८२ ॥
शुभाख्यां स पुरीं गत्वानंतवीर्यं सहाग्रजम् । नमश्चक्रे चाभाषिष्ट विशिष्टवचनक्रमः ॥ ८३ ॥

१ उप्तं बीजं कलिरूपं येन सः ।

विजयार्धेऽत्र यत्किंचिदद्भुतं वस्तु जायते । तत्सर्वं राजराजस्य दमितारेरसंशयम् ॥ ८४ ॥
उभे नाटककारिण्यौ प्रसिद्धे तव चेटिके । बर्बरी च किराती च प्रेष्यतां दमितारये ॥ ८५ ॥
स्वाधीनं तस्य चेट्यादि सर्वराज्यस्य यः पतिः । दीयमाने हि सदने किं भवत्यश्वकः पृथक् ॥ ८६ ॥
जगादानंतवीर्योऽपि गच्छ त्वं दूत संप्रति । आलोच्य किंचिदचिरात् प्रेषयिष्यामि चेटिके ॥ ८७ ॥
इत्युक्तो विष्णुना दूतो मुदितोऽभ्येत्य सत्वरम् । प्रयोजनं कृतप्रायं शशंस दमितारये ॥ ८८ ॥
कुंभाविव छन्नवह्नी गूढामर्षावितश्च तौ । मंत्रयामासतुरुभावपराजितशार्ङ्गिणौ ॥ ८९ ॥
अस्मानाकाशयानेन विद्यासिद्धिबलेन च । एवमाज्ञापयति स नास्मत्तस्याधिकं परम् ॥ ९० ॥
विद्याधरेण सुहृदा विद्या दत्ताः पुरा हि याः । सांप्रतं साधयावस्तास्ततः को नौ तपस्व्यसौ ॥ ९१ ॥
इत्यचिंतयतां यावद्भुवौ तौ भ्रातरौ रहः[1] । प्रज्ञप्त्याद्यास्तावदागुर्विद्याः संकेतिता इव[2] ॥ ९२ ॥
तरणितेजःसमोद्योता नानालंकारभूषिताः । विचित्रदिव्यवसना जजल्पुः प्राञ्जलीति ताः ॥ ९३ ॥
ता एताः स्मो वयं विद्या याः सिसाधयिषू युवाम् । पूर्वजन्मनि सिद्धास्तदिदानीमप्युपस्थिताः ॥ ९४ ॥
युष्मद्वपुषि संक्रांतिं मंत्रास्त्र[3] इव देवताः । करिष्यामो महाभागौ समादिशतमद्य नः ॥ ९५ ॥
एवमस्त्विति तद्वाचा तदात्मत्वं तदंगयोः । विद्याः प्रपेदिरे पूर्वापराब्ध्योरिव निम्नगाः ॥ ९६ ॥
निसर्गतोऽपि बलिनौ विद्यासिद्ध्या तया पुनः । तावभूतामभ्यधिकं सिंहौ संवर्मिताविव ॥ ९७ ॥
पूजां तासां च विद्यानां गंधैर्माल्यैर्मनोरमैः । चक्रतुस्तौ न लंघंते पूज्यपूजां विवेकिनः ॥ ९८ ॥

१ रहसि । २ कृतसंकेता इव । ३ यथा मंत्रास्त्रे देवताः संक्रमण कुर्वंति तथा ।

वेगादुपेत्य साक्षेपं पर्यभाषिष्ट ताविति ॥ ९९ ॥
अत्रांतरे पुनर्दूतो निर्दिष्टो दमितारिणा । अज्ञानत्वात्समारब्धः कोऽयं स्वामिनि विप्लवः १००
भो भो युवाभ्यां युवभ्यां खङ्गिभ्यामिव संप्रति । मुमूर्षू किं युवां मूर्खौ ज्ञातः सोऽमर्षणो न किम् ॥१०१॥
चेटिके प्रेषयिष्याव इत्युक्त्वा प्रेषिते न यत् । समूर्खौ वामनुन्मूह्य मन्ये न खलु यास्यति ॥ १०२ ॥
कृत्याद्वयमिदं वां हि चेटीव्याजादुपस्थितम् । ग्रहीष्यत्यन्यथा स्वामी ते च राज्यश्रियं च वाम् ॥ १०३ ॥
मा युवां बहुदौ भूतं दत्तमद्यैव चेटिके । स्मितज्योत्स्नास्तबकिताधरः साम्नेत्युवाच तम् ॥ १०४ ॥
गूढकोपः प्रभविष्णुरपि विष्णुस्ततः सुधीः । प्राभृतीकृत्य संतोष्यो दमितारिनृपेश्वरः ॥ १०५ ॥
रत्नैर्महार्घैर्द्रविणैः प्रचुरैः कुंजरैर्हयैः । ते गृहीत्वा तदद्यैव गच्छ त्वमपरेऽहनि ॥ १०६ ॥
दमितारिः स चेदाभ्यां चेटीभ्यामपि तुष्यति । मन्यमानो दूतकलां कृतकृत्यामिवात्मनः ॥ १०७ ॥
इत्युक्तो विष्णुना दत्तावासे दूतो जगाम सः । आरोपयामासतुस्तौ राज्यभारं सुमंत्रिषु ॥ १०८ ॥
गृहभारमिव स्तंभेष्वनोभारमिवोक्षसु । तौ विद्यया बर्बरिका किरात्यभवतां ततः ॥ १०९ ॥
कीदृक्षो दमितारिः स द्रष्टव्य इति कौतुकात् । प्रहिते स्त इति गत्वा पुंश्रेष्ठौ दूतमूचतुः ॥ ११० ॥
अद्यापराजितानंतवीर्याभ्यां दमितारये । उपेत्य वैताढ्यगिरौ दमितारिं व्यजिज्ञपत् ॥ १११ ॥
चेटिकाभ्यां समं ताभ्यां दूतः प्रमुदितो ययौ । पन्नगा धरणस्येव गरुडस्येव पक्षिणः ॥ ११२ ॥
असुराश्चमरस्येव शक्रस्येव दिवौकसः ।

१ सतिरस्कारं यथा तथा । २ अवगानः । ३ कृत्या देवतानामसद्देवताविशेषः राक्षसी । ४ समर्थोऽपि । ५ सामवाक्येन । ६ धनैः । ७ वृषेषु शकटभारमिव । ८ धरणेन्द्रस्य ।

रमणीयस्य विजयस्यार्धेऽत्र वसुधाभुजः । न लंघयंति भवतः शासनं दुष्टशासन ॥ ११३ ॥
॥ युग्मम् ॥

विशेषतोऽपराजितानंतवीर्यौ नतौ त्वयि । सदा धत्तस्तवैवाज्ञां किरीटमिव मूर्धनि ॥ ११४ ॥

इमे च ते बर्बरिका किरात्यौ नाम चेटिके । नटीरत्ने प्राभृते ते ताभ्यां सद्यो ममार्पिते ॥ ११५ ॥

दमितारिश्च ते चेट्यावपश्यत् सौम्यया दृशा । गुणः श्रुतो जनश्रुत्याप्यनुरागाय तद्विदाम् ॥ ११६ ॥

दमितारिरथादिक्षन्नाटकाभिनयाय ते । अपूर्वस्य दिदृक्षा हि कालक्षेपं क्षमेत न ॥ ११७ ॥

ततश्च ते नटीपात्रे रंगे विविशतुः क्षणात् । प्रत्याहारादिकैरंगैः पूर्वरंगं च चक्रतुः ॥ ११८ ॥

रंगाचार्यो रंगपूजां कुसुमाञ्जलिभिर्व्यधात् । यथादिशं न्यषीदच्च गायन्यादिपरिच्छदः ॥ ११९ ॥

नान्दीपाठं नटश्चक्रे नांदीवादनपूर्वकम् । प्रस्तावनामंगयुक्तां नांद्यंतेऽभिनिनाय च ॥ १२० ॥

विचित्रनेपथ्यधरो नेपथ्ये गायनीजनः । जगौ च जातिरागाद्यां पात्रप्रावेशिकां ध्रुवाम् ॥ १२१ ॥

प्रकृत्यवस्थासंध्यंगसंधिसंबंधबन्धुरम् । प्रचक्रमेऽथाभिनेतुं नाटकं रससागरम् ॥ १२२ ॥

संप्रयोगैरथैकान्तसुखपीयूषसिन्धुभिः । विप्रयोगैरपि तत्तदुःखावस्थानिबन्धनैः ॥ १२३ ॥

तत्तत्संघट्टनोपायैरपायपरिहारतः । क्वाप्यभूत् स्मरसाम्राज्यसंधिविग्रहकल्पनम् ॥ १२४ ॥
॥ युग्मम् ॥

तुंदिलैर्[3]दन्तुरैः खंजैः कुब्जैश्चिपिटनासिकैः । विकीर्णकेशैः खल्वाटैः काणैर्व्यंगैरथापरैः ॥ १२५ ॥

---

१ गायकादिपरिच्छदः । २ गीतिम् । ३ बृहत्कुक्षिभिः । ४ अकेशमस्तकैः ।

अपानघंटैर्भस्मांगैः कक्षानासिकवादकैः । कर्णभ्रूनर्तकैरन्यजनभाषानुवादकैः ॥ १२६ ॥
विदूषकविटप्रायैः सद्यः कपटमुग्धकैः । ग्रामीणवदहास्यंत छेकाः[1] पौरा अपि क्वचित् ॥ १२७ ॥

॥ त्रिभिर्विशेषकम् ॥

आकाशभाषणैर्देवोपालंभैरश्रुमोक्षणैः । अस्थानयाचनैर्भूमिलुंठनै रोदनैरपि ॥ १२८ ॥
भृगुपात[2]तरूद्बंधजलवह्निप्रवेशनैः । विषादिभक्षणैः शस्त्रघातैर्हृत्ताडनैरपि ॥ १२९ ॥
ऋद्धिप्रणाशेष्टवधादिजन्मभिरनेकशः । आर्द्रीकृता नृशंसा अप्यमुंचंताश्रु कुत्रचित् ॥ १३० ॥

॥ त्रिभिर्विशेषकम् ॥

दंतोष्ठपीडनैर्नेत्ररागैर्भ्रूकुटिबंधनैः । गंडस्फुरणहस्ताग्रनिष्पेषै[3]र्भूमिपाटनैः ॥ १३१ ॥
आयुधाकर्षणै रक्ताकर्षणै[4]र्वेगधावनैः । संप्रहारैः[5] प्रहारैश्च गात्रकंपाश्रुमोक्षणैः ॥ १३२ ॥
दारापहारभृत्याधिक्षेपप्रभृतिजन्मभिः । क्वापि कंपमवाप्यंत नरा धीरतरा अपि ॥ १३३ ॥

॥ त्रिभिर्विशेषकम् ॥

गांभीर्यधैर्यशौंडीर्य[6]वैशारद्यैस्तथापरैः । अवदाततरैस्तैस्तैस्त्यागप्रभृतिभिर्गुणैः ॥ १३४ ॥
दिग्वर्ति[7]विक्रमनयाध्यवसायादिजन्मभिः । निसर्गभीरवोऽप्यासन् सद्यः संजातपौरुषाः ॥ १३५ ॥

॥ युग्मम् ॥

१ चतुराः । २ भृगुपातः गिरिशिखरात्पतनं । ३ करतलपेषणैः । ४ शोणितकर्षणैः । ५ युद्धैः । ६ शौंडीर्यं शौर्यम् । ७ शत्रवर्तिपराक्रमनयाध्यवसायादिजन्मभिः ।

तालुकंठोष्ठशोषेण चलनेत्रनिरीक्षणैः । करकंपैः स्वरच्छेदैर्वैवर्ण्योष्मजलोक्षणैः ॥ १३६ ॥
प्रेतादिविकृतालोकतत्स्वरश्रवणादिजैः । अनीयत त्रासदशां क्षणं क्वापि सत्राजनः ॥ १३७ ॥
॥ युग्मम् ॥

अंगसंकोचहृल्लासनासामुखविकूणनैः । निष्ठीवनैरोष्ठदलमोटनप्रमुखैरपि ॥ १३८ ॥
पूतिवांतिव्रणकृमिप्रेक्षणश्रवणादिजैः । नितांतमघृणीयंत क्षणं सामाजिकाः क्वचित् ॥ १३९ ॥
॥ युग्मम् ॥

विस्तारणैर्लोचनानां निर्निमेषनिरीक्षणैः । स्वेदाश्रुपुलकोद्भेदैः साधुवादादिकैरपि ॥ १४० ॥
दिव्यालोकेप्सितप्राप्तीन्द्रजालप्रेक्षणादिजैः । विस्माय्यंते स्म सहसा क्वचनापि सत्रासदः ॥ १४१ ॥
॥ युग्मम् ॥

मूलोत्तरगुणध्यानैरध्यात्मग्रंथचिंतनैः । सद्गुरूपासनैर्देवपूजाद्यैरितरैरपि ॥ १४२ ॥
वैराग्यसंसारत्र्यतत्त्वज्ञानादिजन्मभिः । शममीयुः क्वचिदपि विषयास्वादगृध्नवः ॥ १४३ ॥ युग्मम् ॥
यथा यथाऽन्यनीयंत रसाः सर्वे कुशीलवैः । सामाजिकजनः सर्वस्तन्मयोऽभूत्तथा तथा ॥ १४४ ॥
वाचिकाद्यैरभिनयैर्यथावदुपपातितैः । अलक्ष्यंताभिनेतारोऽप्यभिनेया इवागताः ॥ १४५ ॥
तं नाटकविधिं प्रेक्ष्य नृपः प्रेक्षावदग्रणीः । संसाररत्नभूतं तु चेटीद्वयममन्यत ॥ १४६ ॥
अथ नाटकशिक्षायै मायाचेट्योस्तयोर्नृपः । पुत्रीं समर्पयामास नामतः कनकश्रियम् ॥ १४७ ॥

---

१ हृल्लासः हृदयस्य खेदः । २ पूतिर्दुर्गन्धिः । ३ विषयास्वादलोलुपाः । ४ नटैः ।

राकाशशांकवदनां त्रस्यदेणीविलोचनाम् । पक्वबिंबाधरां कंबुकंठीं बिसलताभुजाम् ॥ १४८ ॥
स्वर्णकुंभोपमकुचां वज्रमध्यकृशोदरीम् । वापीगंभीरनाभीकां पुलिनाभकटीतटाम् ॥ १४९ ॥
करभोरू मृगीजंघां पद्मोपमकरक्रमाम् । लावण्यजलमग्नांगीं मधुरालापशालिनीम् ॥ १५० ॥
शिरीषसुकुमारांगीं कुमारीं प्राप्तयौवनाम् । दृष्ट्वा कपटचेट्यौ ते मधुरालापपूर्वकम् ॥ १५१ ॥
भूयो भूयो दर्शयित्वा शिक्षयामासतुर्भृशम् । तन्नाटकं साभिनयं सर्वं निर्वहणावधि ॥ १५२ ॥
॥ पंचभिः कुलकम् ॥
मध्ये मध्ये नाटकस्यानंतवीर्यं महाभुजम् । ते चेट्यौ जगतुः कामं रूपशौर्यादिभिर्गुणैः ॥ १५३ ॥
कनकश्रीरथापृच्छत् क एष पुरुषोत्तमः । हे युवत्यौ युवाभ्यां यो गीयतेऽत्र क्षणे क्षणे ॥ १५४ ॥
मायाचेटी स्मित्वेदमब्रवीत् । शुभानने शुभेत्यस्ति विजयेऽस्मिन् महापुरी ॥ १५५ ॥
अथापराजितो दिवाकरः प्रतापेन बभूव वसुधाधवः ॥ १५६ ॥
तस्यां च नाम्ना स्तिमितसागरो गुणसागरः । ज्येष्ठोऽपराजितो नाम विपक्षैरपराजितः ॥ १५७ ॥
जज्ञे महात्मनस्तस्य तनयो विनयैकभूः । रूपेण जितकंदर्पो विद्वद्दर्पग्रंथिदारणः ॥ १५८ ॥
कनिष्ठोऽनंतवीर्योऽभूदकनिष्ठोऽमलैर्गुणैः । नागराजायतभुजः शिलापृथुभुजांतरः ॥ १५९ ॥
स वदान्यः सत्यसंधः शरणागतवत्सलः । आश्रितांभोजमार्तंडो दाक्षिण्यक्षीरसागरः ॥ १६० ॥
वासागारं श्रिय इव भुवोऽप्याधारभूरिव ।

१ त्रस्यंती या मृगी तत्सदृशे लोचने यस्याः । २ निर्वहणः नाटकस्य पंचमः संधिः । ३ शत्रुभिः । ४ सत्या संधा प्रतिज्ञा यस्य सः ।

कियद्वा वर्ण्यतेऽस्माभिः स महात्माल्पबुद्धिभिः । तत्तुल्यो नापरः कोऽपि सुरासुरनरेष्वपि ॥ १६१ ॥
॥ त्रिभिर्विशेषकम् ॥

कनकश्रीस्तमाकर्ण्य दृष्टेव पुरतः स्थितम् । वाताहतेव सरसी बभूवोत्कलिकावती ॥ १६२ ॥
रोमांचव्याजतो भिन्ना साक्षात् स्मरशरैरिव । पांचालिकेव निःस्पंदा सा दध्याविति चेतसि ॥ १६३ ॥
धन्यः स विषयो धन्या सा पूर्धन्या च सा प्रजा । धन्यः स स्त्रीजनोऽनंतवीर्यो येषां स नायकः ॥ १६४ ॥
कुमुद्वतीं मोदयते दूरस्थोऽपि करैः शशी । शिखंडिनीस्तांरूवयत्यंबरस्थोऽपि वारिदः ॥ १६५ ॥
उपपन्नमिदं तेषां हंत दैवानुकूल्यतः । अनंतवीर्ये मयि च कीदृग्दैवं भविष्यति ॥ १६६ ॥
दूरे तस्य पतिभावो दृष्टव्योऽपि कथं नु सः । सिद्धौ मनोरथस्यास्य सखापि खलु दुर्लभः ॥ १६७ ॥
चिंतां प्रपन्नां तामेवं विलोक्य कनकश्रियम् । इंगिताकारविदुर एवमूचेऽपराजितः ॥ १६८ ॥
श्रुत्वापराजितस्यानुजन्मानं मन्मुखादपि । किं ताम्यसि सशल्येव मुग्धे किं त्वं दिदृक्षसे ॥ १६९ ॥
कनकश्रीरश्रुमुखी पद्मिनीव तुषारिणी । दीनदीनैवमवदत् स्वरभेदक्षताक्षरम् ॥ १७० ॥
आदित्सेयं करेणेन्दौ पद्भ्यां जिगमिषा दिवि । दोर्भ्यां तितीर्षा जलधौ दिदृक्षा तत्र मे खलु ॥ १७१ ॥
शुभाधिनाथः सुभगः स मया मंदभाग्यया । कथं दृग्गोचरीकार्यः कष्टं को मे मनोरथः ॥ १७२ ॥
ज्येष्ठा पुंनव्युवाचैवं भद्रे तं चेद्दिदृक्षसे । तन्मुग्धेऽलं विषादेन दर्शयाम्यद्य तं तव ॥ १७३ ॥
विद्याशक्त्यानंतवीर्यं तं च तं चापराजितम् । अत्रानये वन इव वसंतमलयानिलौ ॥ १७४ ॥

---

१ उत्कंठिता । २ पुरी । ३ मयूरीः । ४ आदातुमिच्छा ।

पारिपार्श्विकयसि यतस्तयोर्गुणसमुद्रयोः ॥ १७५ ॥
कनकश्रीर्वेलापेऽथ सर्वं संभवति त्वयि । त्वन्मुखेऽवातरन्नूनं कापि मे कुलदेवता ॥ १७६ ॥
मन्येऽनुकूलं मे दैवमेवं यदभिलापसे । तादृशां परिवारोऽपि मिथ्या न खलु जायते ॥ १७७ ॥
अनुतिष्ठात्मनो वाचमधुनैव कलावति । सद्योऽपराजितानंतवीर्यौ तुष्टाविवामरौ ॥ १७८ ॥
अथाविश्चक्रतुः स्वं स्वं रूपं रूपमनोभवौ । मज्ज्ञातानंतवीर्योऽयं संवदत्येष वा न हि ॥ १७९ ॥
ऊचेऽपराजितो जज्ञे कीर्तितो यो मयाद्य सः । वाचामगोचरस्तत्तु गोचरीकुरु चक्षुषोः ॥ १८० ॥
स्तोकमेव मयाख्यातमस्य रूपादिवैभवम् । तद्दर्शनाद्दमितारिकन्या युगपदानशे ॥ १८१ ॥
आवेगविस्मयव्रीडाप्रमोदमदचापलैः । उत्तरीयेण नीरंगीं तन्वंगी विदधेऽथ सा ॥ १८२ ॥
अपराजितपादानां सद्यः श्वशुरमानिनी । रोमाञ्चदंतुरवपुः कदंब इव पुष्पितः ॥ १८३ ॥
आसीदनंतवीर्योऽपि स्मरमेघमहोदयात् । स्वयं दूतित्वमालंब्यानंतवीर्यमदोऽवदत् ॥ १८४ ॥
उत्सृज्य सहजं मानं मंदाक्षं च मृगेक्षणा । नारदाच्च क्व तातस्य तच्चेटीनाटकश्रुतिः ॥ १८५ ॥
वैताढ्यपर्वतः क्वार्य शुभाख्या सा पुरी क्व च । चेटिकारूपधरयोर्युवयोः क्वेह चागतिः ॥ १८६ ॥
युष्मत्पार्श्वे च तातेन तच्चेटीयाचनं क्व च । आर्यपुत्र तवार्येण क्व वा त्वद्गुणवर्णनम् ॥ १८७ ॥
क्व वा नाटकशिक्षायै युवयोरर्पितास्म्यहम् । एतत्सर्वमसंभाव्यं मद्भाग्योपचयादभूत् ॥ १८८ ॥
क्व वा युवाभ्यां सद्योऽपि साक्षात्करणमात्मनः । अतः परं ते मद्वत्या न चेत्पासि मनोभवात् ॥ १८९ ॥
नाट्याचार्यो यथा त्वं मे त्वमेव हि पतिस्तथा ।

१ लज्जाम् । २ आगमनम् । ३ उपचयोवृद्धिः । ४ मदघातः ।

गृहीतं श्रुतमात्रेण त्वया मे हृदयं पुरा । गृहाण पाणिमधुना प्रसीदानुगृहाण माम् ॥ १९० ॥
वैताढ्यपर्वतेऽमुष्मिन् दक्षिणोत्तरयोरपि । श्रेण्योर्विद्याधरेन्द्राणां कुमारेषु युवस्वपि ॥ १९१ ॥
भवादृशवराभावादभावो मे भवे ध्रुवम् । दिष्ट्या प्राप्तोऽसि जीवातुर्जीवलोकैकचंद्रमाः ॥ १९२ ॥
अनंतवीर्यो व्याहार्षीत् सुभ्रु यद्येवमिच्छसि । उत्तिष्ठ तर्हि गच्छामः सुभगे नगरीं शुभाम् ॥ १९३ ॥
कनकश्रीरप्यवोचत्त्वं प्राणानामपीशिषे । मम किं तु पिता दुष्टो विद्यासामर्थ्यदुर्मदः ॥ १९४ ॥
करिष्यति महानर्थमनर्थनिलयो ह्ययम् । एकाकिनौ भवन्तौ तु निरस्त्रौ बलिनावपि ॥ १९५ ॥ युग्मम्॥
स्मित्वोचेऽनन्तवीर्योऽपि मा भैषीरयि[1] कातरे । कतरस्ते पिता सर्वाभिसार्यप्यार्यसंगरे[2] ॥ १९६ ॥
अन्यो वा पृष्ठतः कोऽपि युयुत्सुर्यः समेष्यति । तं मृत्युं प्रापयिष्यामः प्रिये निःशंकमेहि तत् ॥ १९७ ॥
इत्युक्तानंतवीर्येण निजदोर्वीर्यशालिना । प्रतस्थे कनकश्रीः श्रीरिव साक्षात् स्वयंवरा ॥ १९८ ॥
अनन्तवीर्योऽप्युद्बाहुः प्रासाद इव सध्वजः । इत्यूचेऽत्युच्चकैर्मेघघोषगंभीरया गिरा ॥ १९९ ॥
भो भोः सर्वे पुराध्यक्षाः सेनाधिपतयश्च भोः । भो मंत्रिणः कुमारा भो भोः सामन्तभटाश्च भोः ॥ २०० ॥
अपरेऽपि दमितारेर्ये केचित् पक्षपातिनः । ते सर्वेऽवहितीभूय[3] शृण्वन्तु वचनं मम ॥ २०१ ॥
असावनन्तवीर्योऽहमपराजितराजितः । दमितारेर्दुहितरं स्ववेश्मनि नयाम्यमूम् ॥ २०२ ॥
अपवादो न दातव्यो नीता चौरिकयेत्यहो[4] । नोपेक्षध्वं निरीक्षध्वं स्वशक्ति शस्त्रधारिणः ॥ २०३ ॥
एवमुद्घोषणां कृत्वा सप्रियः सापराजितः । वैक्रियेण विमानेनानन्तवीर्यश्चचाल खे ॥ २०४ ॥

---

१ अयीति कोमलामंत्रणे । २ अपराजितयुद्धे ३ । सावधानीभूय । ४ चौर्येण ।

ततश्चानन्तवीर्योऽपि स्थैर्यमेरुरमर्षणः । ससर्ज विद्यया सद्यस्तच्चमूद्विगुणां चमूम् ॥ २१९ ॥
प्रावर्त्तंत तया योद्धुं दमितारेस्ततो भटाः । असृक्पंकार्द्रवपुषः सधातव इवाद्रयः ॥ २२० ॥
मम प्रेयानयं भूयात् कबंधो यस्य तांडवी[1] । कुन्तप्रोतः सरति यस्तस्मै पत्येऽहमुत्सुका ॥ २२१ ॥
योऽयं वर्णयति घ्नंतं स कदा रंस्यते मया । मुखे विशंतं यः कुन्तं दंतैर्धत्ते पतिः स मे ॥ २२२ ॥
य एष करिणः कुंभमारोहति स मे धवः । भग्नास्त्रो यः शिरस्केन योद्धा तस्यास्मि किंकरी ॥ २२३ ॥
उत्खातदंतिदंतेन यः शस्त्री सोऽस्तु मे प्रियः । इत्यंबरे सुरस्त्रीणामनुरागोक्तयोऽभवन् ॥ २२४ ॥
॥ चतुर्भिः कलापकम् ॥
दमितारेरपि सैन्या विद्याशक्त्यापि दुर्मदाः । न मनागप्यभज्यंत समरे भद्रदन्तिवत् ॥ २२५ ॥
पांचजन्यं ततो जन्यनाटका[2]भिनये नटः । वादयामास नादेन रोदःकुक्षिंभरिं हरिः ॥ २२६ ॥
तेन विष्णोर्जगज्जिष्णोः शंखनादेन मूर्छिताः । फेनायमाना न्यपतन् सापस्मारा इव द्विषः ॥ २२७ ॥
ततश्च रथमारुह्य दमितारिनृपः स्वयम् । युयुधेऽनंतवीर्येण शस्त्रैः रस्त्रैश्च दैवतैः ॥ २२८ ॥
शार्ङ्गिणं दुर्जयं ज्ञात्वा जनकः कनकश्रियः । सस्मार चक्रं विधुरे प्रियमित्रमिवोद्धुरम् ॥ २२९ ॥
दमितारेः करे तच्च ज्वालाशतसमाकुलम् । समापपात सहसादौर्वानल इवार्णवे ॥ २३० ॥
दमितारिरथावादीदरे तिष्ठन् मरिष्यसि । अद्यापि गच्छ मत्पुत्रीं मुक्त्वा मुक्तोऽसि दुर्मते ॥ २३१ ॥
अनन्तवीर्योऽपीत्यूचे त्वच्चक्रं त्वदसूनपि । त्वत्कन्यकामिवादाय प्रजिष्याम्यन्यथा न तु ॥ २३२ ॥

१ नृत्यवान् । २ जन्यं युद्धं तदेव नाटकं तस्याभिनये ।

एवमुक्तो दमितारिर्ज्वलन् ज्वलनवद्रुषा । भ्रमयित्वामुचच्चक्रमपराजितबंधवे ॥ २३३ ॥
चक्रतुंबाग्रघातेन न्यपतन्मूर्छितो हरिः । प्राक् सुप्त इव चोत्तस्थावपराजितवीजितः ॥ २३४ ॥
तदेव चक्रं पार्श्वस्थमाददे शार्ङ्गपाणिना । शतारमपि तत्पाणौ सहस्रारमजूच्च तत् ॥ २३५ ॥
सोऽर्धचक्रधरः स्मित्वेत्यूचे प्रत्यर्धचक्रिणम् । कनकश्रीपितेति त्वं मुक्तोऽस्यद्यापि गच्छ भोः ॥ २३६ ॥
अवदद्दमितारिस्तं मदस्त्रेण किमरूयसि । उत्तमर्णधनेनेवाधमर्णो धनवानरे ॥ २३७ ॥
चक्रं तन्मुञ्च मुञ्चेदं मुञ्च चाद्यापि पौरुषम् । अनंतवीर्य मद्वीर्यवार्धौ वा लोष्टतां व्रज ॥ २३८ ॥
इत्युक्तोऽनन्तवीर्यस्तच्चक्रं क्रुद्धान्तकोपमः । मुमोच दमितारेश्च चक्रंताबुजवच्छिरः ॥ २३९ ॥
उपर्यनन्तवीर्यस्य तद्वीर्यमुदिताः सुराः । पंचवर्णानि कुसुमान्यवर्षन्निति चोचिरे ॥ २४० ॥
भो भो विद्याधरनृपाः सर्वे शृण्वन्तु तत्पराः । विष्णुरेषोऽनन्तवीर्यो बलोऽयमपराजितः ॥ २४१ ॥
एतत्पादानुपाध्वं तन्निवर्तध्वं रणाजिरात् । यस्योदयः स वन्द्यो हि यथा हीन्दुर्यथा रविः ॥ २४२ ॥
ततो विद्याधरेन्द्रास्ते सर्वे नमितमौलयः । बलदेववासुदेवौ शरण्यं शरणं ययुः ॥ २४३ ॥
सह विद्याधरेन्द्रैस्तैः साग्रजः सप्रियो हरिः । प्रचचाल विमानस्थः शुभ्रां वरपुरीं प्रति ॥ २४४ ॥
गच्छन्नुपकनकगिर्यूचे विद्याधरैर्हरिः । आशातनां मा स्म कार्षीः श्रीमतामर्हतामिह ॥ २४५ ॥
संत्यत्र कनकगिरौ जिनचैत्यान्यनेकशः । यथावत्तानि वंदित्वा वंद्यपादा व्रजंत्वितः ॥ २४६ ॥
विमानादवतीर्याथ शार्ङ्गभृत् सपरिच्छदः । दृशां जनितशैत्यानि तानि चैत्यान्यवंदत ॥ २४७ ॥

१ अग्निवत् । २ कद्धयमोपमः । ३ चिच्छेद । ४ सेवध्वम् । ५ मेरुसमीपम् ।

कौतुकात्तं गिरिं पश्यन् सोऽपश्यदथ चैकतः । वर्षोपवासप्रतिमास्थितं कीर्तिधरं मुनिम् ॥ २४८ ॥
कर्मणां घातिनां घातात्तदैवोत्पन्नकेवलम् । देवारब्धमहिमानं तं दृष्ट्वा मुमुदे हरिः ॥ २४९ ॥
त्रिश्च प्रदक्षिणीकृत्य वंदित्वाग्रे निषद्य च । शुश्राव देशनां तस्मात् प्रांजलिः सपरिच्छदः ॥ २५० ॥
देशनांते कनकश्रीर्नत्वा पप्रच्छ तं मुनिम् । कुतः पितृवधो बंधुविरहश्च ममेदृशः ॥ २५१ ॥
आख्यन्मुनिरिति द्वीपे धातकीखंडनामनि । अस्ति प्राग्भरते शंखपुरग्रामो महर्द्धिकः ॥ २५२ ॥
श्रीदत्ता नाम तत्रासीन्नारी दारिद्र्यपीडिता । परौकः[1]कर्मकरणाजीविकाधृतजीविता ॥ २५३ ॥
कंडनं[2] पेषणं वारिवहनं गृहमार्जनम् । गृहलेपनमित्यादि सकलं दिवसं व्यधात् ॥ २५४ ॥
लंघिते सकलेऽप्यह्नि समपद्यत भोजनम् । आलोकनमिवोलूक्यास्तस्या ही मंदभाग्यता ॥ २५५ ॥
अपरेद्युर्भ्रमंती सा सादयामास पर्वतम् । सुपर्व[3]पर्वतमिव श्रिया श्रीपर्वताभिधम् ॥ २५६ ॥
तथामलशिलासीनं गुप्तित्रयपवित्रितम् । दुःसहैरपराभूतं भूतैरिव परीषहैः ॥ २५७ ॥
अखंडपंचसमितिं मितेतरतपःश्रियम्[4] । निःसंगं निर्ममं शान्तं समकाञ्चनलोष्टुकम्[5] ॥ २५८ ॥
शुक्लध्याने वर्तमानं शैलशृंगमिव स्थिरम् । नामतः सत्ययशसं सेक्षांचक्रे महामुनिम् ॥ २५९ ॥
॥ त्रिभिर्विशेषकम् ॥

कल्पद्रुममिवाप्रेक्ष्य सा प्रीता प्रणनाम तम् । धर्मलाभं ददौ तस्यै सोऽपि श्रेयोद्रु[6]दोहदम् ॥ २६० ॥

---

१ परगृहस्य कर्मकरणेन या आजीविका तया धृतं जीवितं यया सा । २ खंडनम् । ३ देवपर्वतं मेरुमिति यावत् । ४ अमिता तपःश्रीर्यस्य तम् । ५ समौ कांचनलोष्टुकौ यस्य तम् । ६ श्रेय एव वृक्षस्तस्य दोहदम् ।

श्रीदत्ताप्यभ्यधत्तैवमीदृग्दौस्थ्यानुमानतः । पूर्वजन्मन्यहं धर्मं न ह्यकार्षं मनागपि ॥ २६१ ॥
नित्यं दुष्कर्मदग्धाया मम त्वद्धर्मलाभगीः । मेघवृष्टिरिव ग्रीष्मतप्तायाः सानुमद्भुवः[1] ॥ २६२ ॥
यद्यप्यस्मिन्नयोग्याहं मंदभाग्या तथापि हि । अमोघं ते वच इति श्रेयसे किंचिदादिश ॥ २६३ ॥
यथा भवांतरे भूयो नेदृशी स्यां तथा कुरु । त्वादृशे त्रातरि त्रातः[2] किं किं न स्यान्मनीषितम्[3] ॥ २६४॥
इत्याकर्ण्य वचस्तस्या योग्यतां च विचार्य सः । धर्मचक्रवालं नाम तपोऽनुष्ठातुमादिशत् ॥ २६५ ॥
द्वे त्रिरात्रे चतुर्थानि सप्तत्रिंशदिह त्वया । विधातव्यानि गुर्वर्हदाराधननिलीनया ॥ २६६ ॥
प्रभावात्तपसोऽमुष्य न हि भूयो भविष्यति । अपत्यमिव वायस्यास्तवेदृक्[illegible]अन्तरम् ॥ २६७ ॥
तदादृत्य वचो वाचंयमाग्र्यं[4] तं प्रणम्य च । सा जगाम निजं ग्रामं तपस्तच्चोपचक्रमे ॥ २६८ ॥
तत्प्रभावात् पारणके स्वप्नेऽप्यप्राप्तपूर्वकम् । सा प्राप भोजनं स्वादु सुदशानाटकामुखम्[5] ॥ २६९ ॥
ततः प्रभृति सा कर्मवेतनं चाढ्यवेश्मसु । द्विगुणं त्रिगुणं चाप वस्त्राणि प्रवराणि च ॥ २७० ॥
एवं सकिंचना किंचिच्छ्रीदत्ता समजायत । पूजां देवगुरूणां च यथाशक्ति ततोऽकृत ॥ २७१ ॥
तत्सद्मनोऽपरेद्युश्च जीर्णो वातादिताहतः । कुड्यैकदेशो न्यपतत्क्षेत्रे[6] स्वर्णादिकं च सा ॥ २७२ ॥
तपःसमाप्तौ च तयोद्यापनं विदधे महत् । चैत्यपूजासाधुसाध्वीप्रतिलाभादिपूर्वकम् ॥ २७३ ॥
तपोऽन्तपारणदिने यावद्दिग्वीक्षणं व्यधात् । मासक्षपणकं तावत् सुव्रतार्षं ददर्श सा ॥ २७४ ॥
धन्यंमन्या ततः सा च प्रासुकान्नादिना स्वयम् । तं प्रत्यलाभयन्नत्वा धर्मं पप्रच्छ चार्हतम् ॥ २७५ ॥

---

१ पर्वतभुवः । २ हे रक्षक । ३ इच्छितम् । ४ मुनिश्रेष्ठं । ५ सुदशा शोभनावस्थैव नाटकं तस्य प्रस्तावनाम् । ६ सधना ।

मुनिरप्यब्रवीदेवमेष कल्पो न नः शुभे । यन्निशार्थं गतैः क्वापि क्रियते धर्मदेशना ॥ २७६ ॥
यदि ते धर्मशुश्रूषा[1] तद्वसतौ गतस्य मे । आगच्छेः समये भद्रे जल्पित्वेति जगाम सः ॥ २७७ ॥
कृत्वा च पारणं तस्य स्वाध्यायं कुर्वतो मुनेः । वंदनार्थं पौरलोकः श्रीदत्ता च समाययौ ॥ २७८ ॥
वंदित्वा च यथास्थानमुपविष्टेषु तेषु सः । एवं प्रसन्नया वाचा विदधे धर्मदेशनाम् ॥ २७९ ॥
संसारे चतुरशीतियोनिलक्षामटन् भवान् । दैवादाप्नोति मानुष्यमंधः स्थानमिवेप्सितम् ॥ २८० ॥
तत्रापि सर्वधर्मेषु ज्योतिष्केष्विव चंद्रमाः । प्रधानः खलु सर्वज्ञोपज्ञधर्मः सुदुर्लभः ॥ २८१ ॥
तस्मात्तत्रैव कर्तव्यो यत्नः सम्यक्त्वपूर्वकम् । संसारी येन संसारवार्धिं तरति लीलया ॥ २८२ ॥
श्रीदत्तापि नमस्कृत्य पुरः सुव्रतपादयोः । सर्वज्ञोक्तं प्रत्यपादि धर्मं सम्यक्त्वपूर्वकम् ॥ २८३ ॥
वंदित्वा सुव्रतमुनिं पौरलोकोऽखिलोऽपि सः । श्रीदत्ता च प्रमुदिता ययौ निजनिकेतनम् ॥ २८४ ॥
कियंतमपि कालं सा तं धर्मं प्रत्यपालयत् । तस्याः कर्मपरीणामाद्विकल्पः स्वमनस्यभूत् ॥ २८५ ॥
यदिदं जिनधर्मस्य परमं कीर्त्यते फलम् । तत्किं भविष्यति न वा ममेति न हि वेद्म्यहम् ॥ २८६ ॥
तादृग्गुरूपदेशेऽपि विचिकित्सां यदीदृशीम् । श्रीदत्ताकल्पयत्तदा दुर्वारा भवितव्यता ॥ २८७ ॥
अन्यदा सत्ययशसं वंदितुं प्रस्थितांबरे । सा विद्याधरयुगलं विमानस्थितमैक्षत ॥ २८८ ॥
तद्रूपमोहिता सा तु समेत्य निजवेश्मनि । विचिकित्सामनालोच्याप्रतिक्रम्य व्यपद्यत ॥ २८९ ॥
इतश्च जंबूद्वीपेऽस्मिन् प्राग्विदेहस्य मंडने । विजये रमणीयेऽस्ति वैताढ्यो नाम पर्वतः ॥ २९० ॥

---

१ धर्मश्रवणेच्छा ।

तत्रास्ति नगरं शक्रनगर्या इव सोदरम्। शिवानां मंदिरीभूतं नामतः शिवमंदिरम् ॥ २९१ ॥
तत्र चासीन्महर्द्धीनां विद्याधरमहीभुजाम्। पूज्यांघ्रिः कनकपूज्य इति नाम्ना महीपतिः ॥ २९२ ॥
वायुवेगाभिधानायां तस्य पत्न्यामसावहम्। अभूवं तनयः कीर्तिधर इत्यभिधानतः ॥ २९३ ॥
अभूदनिलवेगेति पत्नी मेऽन्तःपुराग्रणीः। तयैकदा सुप्तया तु त्रिस्वप्नी ददृशे निशि ॥ २९४ ॥
कैलासधवलो हस्ती गर्जन् मेघ इवोद्धराट्। निधिकुंभोपमः कुंभः स्वप्नास्तेऽमी त्रयः क्रमात् ॥२९५॥
तत्कालोत्फुल्लवदना पद्मिनीव निशात्यये। महादेवी महास्वप्नानाख्याति स्म ममाग्रतः ॥ २९६ ॥
त्रिखंडविजयस्वामी चक्रवर्त्यर्द्धवैभवः। भावी भवत्यास्तनय इति चाख्यातवानहम् ॥ २९७ ॥
काले च सुषुवे सूनुं सा देवी देवसंनिभम्। सर्वलक्षणसंपूर्णं रत्नमाकरभूरिव ॥ २९८ ॥
गर्भस्थेऽस्मिन् विशेषेण दमिता विद्विषो मया। तेन तस्य दमितारिरित्यभिख्यामहं व्यधाम् ॥ २९९ ॥
क्रमेण ववृधे सोऽथ जग्राह च कलाः क्रमात्। क्रमेण च प्रत्यपादि यौवनं रूपपावनम् ॥ ३०० ॥
अन्यदान्यत्र विजये विजयी विहरन् विभुः। महात्मा समवासार्षीच्छान्तिः शान्तिकरो जिनः ॥ ३०१ ॥
तं वंदित्वा निषण्णोहमश्रौषं धर्मदेशनाम्। सद्यो विरक्तो राज्ये च दमितारिं न्यवीविशम् ॥ ३०२ ॥
श्रीशांतिपादमूले च प्राव्राजिषमहं ततः। ग्रहणासेवनारूपे शिक्षे चाग्राहिषं तदा ॥ ३०३ ॥
अकार्षं वार्षिकीमत्र पर्वते प्रतिमामहम्। घातिकर्मक्षयादस्मि चाद्यैवोत्पन्नकेवलः ॥ ३०४ ॥
उत्पन्नचक्रो विजितत्रिखंडविजयः स च। दमितारिरभूद्राजा प्रतिविष्णुर्महाबलः ॥ ३०५ ॥

---

१ कल्याणानाम्।

प्रियायां मदिरानाम्न्यां दमितारेर्महीभुजः । श्रीदत्ताजीव एव त्वं कनकश्रीसुताभवः ॥ ३०६ ॥
विचिकित्सामनालोच्याप्रतिक्रम्य च यन्मृता । तद्दोषाद्बंधुविरह ईदृक् पितृवधश्च ते ॥ ३०७ ॥
कलंकः खलु धर्मस्य स्तोकोऽप्यत्यंतदुःखदः । विषमल्पमपि प्सातं[1] प्राणनाशाय जायते ॥ ३०८ ॥
ईदृग्भूयो न तत्कार्यमीदृग्भूयो यथा भवेत् । किं तु सम्यक्त्वमादेयं पंचदोषीविवर्जितम् ॥ ३०९ ॥
कनकश्रीस्ततः सद्यो वैराग्यावेगधारिणी । इत्थं विज्ञपयामास चक्रलांगलधारिणौ ॥ ३१० ॥
दुष्कृतेनाल्पकेनापि यद्येवं दुःखमाप्यते । तदलं कामभोगैर्मे दुष्कृतोत्पत्तिखानिभिः ॥ ३११ ॥
स्तोकेनापि हि रंध्रेण यथा मज्जति नौर्जले । दुष्कर्मणाल्पकेनापि तथा दुःखेषु ही जनः ॥ ३१२ ॥
तदा दारिद्र्यभीतायाः कुर्वंत्यास्तादृशं तपः । विचिकित्सा कुतोऽप्यासीदहो मे मन्दभाग्यता ॥ ३१३ ॥
संप्रत्यैश्वर्यमत्ताया मम भोगजुषः[2] खलु । कियती विचिकित्सैका यत्स्युर्दोषान्तराण्यपि ॥ ३१४ ॥
तत्प्रसद्यानुमन्येथां प्रव्रज्याग्रहणाय माम् । ईदृक्फलपरादस्माद्भीतास्मि भवराक्षसात् ॥ ३१५ ॥
विस्मयस्मेरनयनौ ततस्तावित्यवोचताम् । भवत्विदमविघ्नं ते गुरुपादप्रसादतः ॥ ३१६ ॥
किं त्विदानीं शुभां यामो नगरीं धीगरीयसि[3] । यथा तत्र महर्द्ध्या ते कुर्मो निष्क्रमणोत्सवम् ॥ ३१७ ॥
स्वयंप्रभजिनेन्द्रांते गृह्णीयास्तत्र चानघे । संसारवारितरणे तरकांडोपमं[4] व्रतम् ॥ ३१८ ॥
तथेति प्रतिपेदानां तामादायाथ भक्तितः । तं च नत्वा महर्षिं तौ जग्मतुर्नगरीं शुभाम् ॥ ३१९ ॥
तत्रादौ प्रेषितैर्वीरै रणाय दमितारिणा । अनन्तसेनं पुत्रं तौ युध्यमानमपश्यताम् ॥ ३२० ॥

---

१ भक्षितम् । २ भोगान् सेवमानायाः । ३ संबोधनमेतत् । ४ नौसदृशम् ।

अनन्तवीर्यपुत्रं तैः क्रोडं[1] श्वभिरिवावृतम् । निरीक्ष्य भ्रमयन् सीरं सीरी[2] कोपादधावत ॥ ३२१ ॥
दमितारिभटास्तेऽपि बलवातासहिष्णवः । तूलपुञ्जा इव ययुः कांदिशीका दिशो दिशम् ॥ ३२२ ॥
अथ प्राविशत् सपरीवारः स्वपुरीं तां जनार्दनः । शुभेऽहन्यर्धचक्रित्वेऽभ्यषिच्यत नरेश्वरैः ॥ ३२३ ॥
इमां धरित्रीं विहरन् स्वामी तत्रापरे दिने । उपेत्य समवासार्षीत् स्वयंप्रभजिनेश्वरः ॥ ३२४ ॥
श्रीस्वयंप्रभनाथस्यागत्या दिष्ट्याद्य वर्धसे । इत्यूचिरेऽनंतवीर्यं ततश्च द्वारपालकाः ॥ ३२५ ॥
सार्धद्वादश रूप्यस्य कोटीस्तेभ्यः प्रदाय सः । साग्रजः सकनकश्रीः स्वामिनं वंदितुं ययौ ॥ ३२६ ॥
स्वयंप्रभोऽपि भगवान् भव्यानुग्रहकाम्यया । सर्वभाषानुगामिन्या विदधे देशनां गिरा ॥ ३२७ ॥
कनकश्रीर्जगादेवं वेश्मन्यापृच्छ्य शार्ङ्गिणम् । आगमिष्यामि दीक्षार्थं कृपां कुरु जगद्गुरो ॥ ३२८ ॥
न प्रमादो विधातव्य इति तीर्थकृतोदिते । कनकश्रीर्हरिः सीरी जग्मुर्निजनिकेतनम् ॥ ३२९ ॥
सानुज्ञाप्य हरिं[3] तेन कृतनिष्क्रमणोत्सवा । ऋद्ध्या महत्या तत्रैत्य प्राव्राजीदन्तिके प्रभोः ॥ ३३० ॥
तप एकावलिं मुक्तावलिं च कनकावलिम् । भद्रं च सर्वतो भद्रमित्याद्याचरति स्म सा ॥ ३३१ ॥
शुक्लध्यानाग्निनिर्दग्धघातिकर्मैधसोऽन्यदा[4] । अम्लानं केवलज्ञानं तस्याः समुदपद्यत ॥ ३३२ ॥
भवोपग्राहिकर्माणि क्षपयित्वा क्रमेण च । कनकश्रीराससाद पदं तदपुनर्भवम् ॥ ३३३ ॥
भुञ्जानौ विविधान् भोगान् शार्ङ्गसीरधरावपि । गमयामासतुः कालं सुखमग्नौ सुराविव ॥ ३३४ ॥
आसीच्च बलदेवस्य दयिता विरताह्वया । तस्याः कुक्षौ समुत्पेदे सुमतिर्नाम कन्यका ॥ ३३५ ॥

---

१ सुकरम् । २ बलभद्रः । ३ हरिणा । ४ शुक्लध्यानाग्निना निर्दग्धानि घातिकर्माण्येवैधांसि काष्ठानि यया तस्याः ।

बाल्यतोऽपि हि सर्वज्ञोपज्ञधर्मानुसारिणी । जीवाजीवादितत्त्वज्ञा तपोऽनुष्ठानशालिनी ॥ ३३६ ॥
अखंडद्वादशविधश्रावकव्रतधारिणी । अर्हत्पूजागुरूपास्तितत्परा सा सदाप्यभूत् ॥ ३३७ ॥
अन्यदा तूपवासांते पारणाय निषेदुषी । सा यावद् द्वारमैक्षिष्ट कोऽप्यृषिस्तावदागमत् ॥ ३३८ ॥
त्रिगुप्तिं पंचसमितिं धर्मं साक्षादिवागतम् । तं स्थालस्थापितान्नेन प्रतिलाभयति स्म सा ॥ ३३९ ॥
तत्राभूच्च तदा दिव्यं वसुधारादिपंचकम् । महात्मभ्यः प्रदत्तं हि कोटीकोटिगुणं भवेत् ॥ ३४० ॥
ततः स्थानादृषिरपि विहरन्नन्यतो ययौ । स्थानं नैकत्र साधूनां निःसंगानां समीरवत्[1] ॥ ३४१ ॥
आकर्ण्य रत्नवृष्टिं तामेयेतुर्[2] बलशार्ङ्गिणौ । दृष्ट्वा च विस्मयोत्कर्णौ बभूवतुरुभावपि ॥ ३४२ ॥
आश्चर्यभूतमेतस्याश्चरित्रमिति वादिनौ । कोऽनुरूपो वरोऽमुष्या इत्यचिंतयतां च तौ ॥ ३४३ ॥
ततश्च मंत्रयित्वा तावीहानंदेन मंत्रिणा । दृढयामासतुस्तस्याः स्वयंवरमहोत्सवम् ॥ ३४४ ॥
वासुदेवाज्ञया विद्याधरेन्द्रा भूभुजोऽपि च । तत्र स्वयंवरायेयुर्विजयार्धनिवासिनः ॥ ३४५ ॥
सभागृहमिवेन्द्रस्योपेन्द्रायुक्तास्[3] ततो व्यधुः । रत्नस्तंभसहस्रांकं मंडपं क्षितिमंडनम् ॥ ३४६ ॥
फणीन्द्रफणमाणिक्यश्रेणिभ्रांतिप्रदान्यथ । तत्र प्रकल्पयामास रत्नसिंहासनानि ते ॥ ३४७ ॥
वासुदेवाज्ञया तेषूपाविक्षन्नवनीभुजः । विद्याधरकुमाराश्च मारतुल्या[4] वपुःश्रिया ॥ ३४८ ॥
संवीतदिव्यवसना[5] रत्नालंकारधारिणी । विचित्रकल्पिताकल्पा[6] नल्पामोदविलेपना ॥ ३४९ ॥

१ वायुवत् । २ आगच्छतुः । ३ उपेन्द्रस्य वासुदेवस्यायुक्ताः किंकराः । ४ कामदेवतुल्याः । ५ संवीतानि धृतानि दिव्यवसनानि यया सा । ६ विचित्राणि कल्पितान्याकल्पानि भूषणानि यस्याः सा ।

मूर्ध्नि श्वेतातपत्रेण शशिबिंबानुकारिणा । शोभमाना सवयोभिः सखीभिः परिवारिता ॥ ३५० ॥
प्रतीहार्या दर्श्यमानपथा काञ्चनदंडया । वरमालामुद्वहन्ती बलभद्रस्य कन्यका ॥ ३५१ ॥
सुरेष्विवोपस्थितेषु विद्याधरनृपेष्वथ । तं मंडपमलंचक्रे सुमतिः श्रीरिवोदधिम् ॥ ३५२ ॥
॥ चतुर्भिः कलापकम् ॥
नीलोत्पलस्रजमिव सृजन्ती मुग्धया दृशा । ईक्षांचक्रे कुरंगाक्षी सा स्वयंवरमंडपम् ॥ ३५३ ॥
अत्रान्तरे रत्नमयमाणिक्यस्तंभशोभितम् । लंबमानं नभो मध्ये मार्तंडस्येव मंडलम् ॥ ३५४ ॥
अधिष्ठितं देवतया रत्नसिंहासनस्थया । अकस्मादाविरभवद्विमानमधिमंडपम् ॥ ३५५ ॥ युग्मम् ॥
सा कन्या ते च राजानस्ते च विद्याधरेश्वराः । तदीक्षांचक्रिरेऽत्यंतविस्मयस्मेरचक्षुषः ॥ ३५६ ॥
तेषां संपश्यमानानां विमानादवतीर्य सा । अधिसिंहासनं देवी मंडपांतरुपाविशत् ॥ ३५७ ॥
सोत्क्षिप्य दक्षिणं पाणिमूचे सुमतिकन्यकाम् । मुग्धे धनश्रीर्बुध्यस्व बुध्यस्व प्राग्भवं स्मर ॥ ३५८ ॥
पुष्करवरद्वीपार्धेऽस्ति पूर्वभरतस्य च । मध्यखंडे विशालर्द्धि श्रीनंदनपुरं पुरम् ॥ ३५९ ॥
शरणार्थिजनत्राणेष्वतंद्रालुर्दिवानिशम् । महेन्द्र इव तत्रासीन्महेन्द्र इति भूपतिः ॥ ३६० ॥
राज्ञस्तस्य महादेवी प्राणेभ्योऽप्यतिवल्लभा । अनन्तमतिरित्यासीदनन्तगुणभाजनम् ॥ ३६१ ॥
एकदा सा निशाशेषे सुंषुप्ता[1] स्वप्नमैक्षत । निजोत्संगस्थिते पुष्पमाले सुरभिनिर्मले ॥ ३६२ ॥
आख्याते च तया स्वप्ने राजा व्याख्यातवानिति । भविष्यत्यनवद्यं ते निश्चितं दुहितृद्वयम् ॥ ३६३ ॥

---

१ सुखने सुप्ता ।

जज्ञाते समये तस्याः पुत्र्यौ तत्राहमादिमा । कनकश्रीरिति त्वं तु धनश्रीरिति नामतः ॥ ३६४ ॥
समं परस्परप्रीत्या ववृधाते उभे अपि । समं कलाकलापेन प्रापतुर्यौवनं च ते ॥ ३६५ ॥
इतस्ततश्च क्रीडन्त्यौ स्वेच्छयान्येद्युरीयतुः । सुपर्वविश्रामभवं पर्वतं गिरिपर्वतम् ॥ ३६६ ॥
फलानि तत्र स्वादूनि पुष्पाणि सुरभीणि च । विचिन्वंत्यौ भ्रमेतुस्ते वनाद्रेरिव देवते ॥ ३६७ ॥
रहःप्रदेशे चैकस्मिन्नेकान्तशमशालिनम् । ते नंदनगिरिं नामालोकयामासतुर्मुनिम् ॥ ३६८ ॥
विलोक्य मुदिते ते च तं मुनिं त्रिःप्रदक्षिणम् । कृत्वा भक्त्या ववंदाते अवदाते उभे अपि ॥ ३६९ ॥
धर्मलाभाशिषं दत्वा स नंदनमहामुनिः । हृदयानंदनीं धर्मदेशनां विदधे तयोः ॥ ३७० ॥
तां धर्मदेशनां श्रुत्वेत्यूचतुः प्राञ्जली उभे । यदि नौ योग्यता काचिद्धर्मोदेशं प्रयच्छ तत् ॥ ३७१ ॥
विचार्य योग्यतां सोऽपि भगवानुभयोरपि । दिदेश द्वादशविधं धर्मं जगृहतुश्च ते ॥ ३७२ ॥
तं वंदित्वा मुनींद्रं ते जग्मतुर्निजवेश्मनि । सदाप्यवहिते धर्मं पर्यपालयतां च तम् ॥ ३७३ ॥
क्रीडागिरिसरिद्वापीविविधद्रुमसंकुलाम् । एकदाशोकवनिकां जग्मतुस्ते कुतूहलात् ॥ ३७४ ॥
विविधक्रीडया तत्र क्रीडन्त्यौ ते नदीतटे । अहार्षीत् खेचरयुवा वीरांगस्त्रिपुराधिपः ॥ ३७५ ॥
वज्रश्यामलिका नाम तस्य भार्या शुभाशया । त्याजयामास ते तस्मान्मृग्याविव मृगाधिपात् ॥ ३७६ ॥
भीमाटव्यां नदीतीरे वंशजालोपरि क्षणात् । व्योम्नस्ते पेततुर्बाले शापभ्रष्टामरीनिभे ॥ ३७७ ॥

---

१ अमरी देवी ।

अन्यधुर्भूभुजोऽप्येवमेवमस्तु तवानघे । अनुज्ञाता त्वमस्माभिर्निर्विघ्नं स्तात्तवेप्सितम् ॥ ३९१ ॥
सर्वोत्सवशिरोरत्नं तस्या निष्क्रमणोत्सवम् । चक्रतुः परया भक्त्या मुदितौ सीरिशार्ङ्गिणौ ॥ ३९२ ॥
महिष्यो देवराजस्य[1] यक्षराजस्य चैत्य ताम् । आनर्च पूजनीया हि वासवस्यापि तादृशः ॥ ३९३ ॥
सुव्रतार्याङ्घ्रिपद्मांते कन्यानां सप्तभिः शतैः । सहाददे सा प्रव्रज्यां मोक्षपादपसारणिम् ॥ ३९४ ॥
साग्रहीद् द्विविधां शिक्षां तेपे च विविधं तपः । संवेगभाविता[2] तस्थावात्माब्जध्यानषट्पदी[3] ॥ ३९५ ॥
कालांतरेण क्षपकश्रेणिमारूढवत्यसौ । केवलज्ञानमुत्पेदे मोक्षश्रीदूतसन्निभम् ॥ ३९६ ॥
प्रबोध्य भव्यभविनो भवोपग्राहिकर्मणाम् । क्षयं कृत्वा च सुमतिः प्रपेदे पदमव्ययम् ॥ ३९७ ॥
तौ चापराजितानंतवीर्यौ सम्यक्त्वशालिनौ । पर्यपालयतां राज्यं संपृक्तावश्विनाविव ॥ ३९८ ॥
पूर्वलक्षचतुरशीत्यायुरंते जनार्दनः । निकाचितैः कर्मभिस्तैर्ययौ नरकमादिमम् ॥ ३९९ ॥
द्विचत्वारिंशत्सहस्रवर्षायुस्तत्र नारकः । विविधा वेदना लेभे नाशो नार्जितकर्मणाम् ॥ ४०० ॥
आगत्य चमरस्तत्र पिता प्राग्विष्णुजन्मनि । वेदनोपशमं चक्रेऽपत्यस्नेहो बली खलु ॥ ४०१ ॥
अनन्तवीर्यजीवोऽपि संविग्नः सम्यगेव ताः । वेदनाः समधिसेहे स्वं कर्मावधिना स्मरन् ॥ ४०२ ॥
भ्रातृशोकाद्बलभद्रोऽप्यात्मजे न्यस्य मेदिनीम् । जयंधरगणधरपादान्ते व्रतमाददे ॥ ४०३ ॥
तमनुप्राव्रजन्राज्ञां सहस्राणि च षोडश । महतामनुलग्नैर्हि महदासाद्यते फलम् ॥ ४०४ ॥

---

१ इंद्रस्य । २ वैराग्येन भाविता । ३ आत्मैव कमलं तस्य ध्याने भ्रमरीतुल्या ।

तं च चालयितुं ध्यानान्नाशकत् स मनागपि । किं कंपते क्वचिच्छैलो दंतघातेन दंतिनः ॥ ४१९ ॥
वी[1]क्षापन्नो जगामाथ सोऽसुरो मलिनाननः । ध्यानं च पारयामास मेघनादमहामुनिः ॥ ४२० ॥

उपसर्गपरीषहैरकम्प्रः स तपस्तीव्रतरं चिरं चरित्वा ।
अन्तेऽनशनं विधाय मृत्वाच्युतसामानिकदेव[2]भूयमाप ॥ ४२१ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये
पञ्चमे पर्वणि श्रीशांतिनाथदेवीयषष्ठसप्तमभववर्णनो
नाम द्वितीयः सर्गः संपूर्णः ।

---

१ विस्मयं प्राप्तः । २ देवभूयं देवत्वं ।

अनन्तवीर्यजीवोऽपि प्रच्युत्याच्युतकल्पतः । आगाल्लक्ष्मीवतीकुक्षिं खादिवाब्दजलं महीम् ॥ १३ ॥
सुस्वप्नसूचितं सूनुमसूत समयेऽथ सा । सर्वलक्षणसंपूर्णमादित्यमिव तेजसा ॥ १४ ॥
जन्मोत्सवादप्यधिकेनोत्सवेन शुभेऽहनि । सहस्रायुध इत्याख्यां पितरौ तस्य चक्रतुः ॥ १५ ॥
पीयूषदीधितिरिव सोऽपि चावर्धत क्रमात् । कलाकलापसंपूर्णः प्रतिपेदे च यौवनम् ॥ १६ ॥
स राजकन्यां कनकश्रियं नाम वपुःश्रिया । अतिश्रियं पर्यणैषीद्रूपश्रीमकरध्वजः ॥ १७ ॥
तस्यापि तस्यां संजज्ञे संपूर्णनरलक्षणः । सूनुः शतबलिर्नाम महाबल इवौजसा ॥ १८ ॥
अथैकदा पुत्रपौत्रप्रपौत्रैर्मित्रमंत्रिभिः । सामन्तैश्च सहाध्यास्त राजा क्षेमंकरः सभाम् ॥ १९ ॥
तदा चैशानकल्पेऽभूदिति चर्चा दिवौकसाम् । अनुवज्रायुधं धात्र्यां दृढसम्यक्त्वशालिनः ॥ २० ॥
अश्रद्दधानस्तां वाचं चित्रचूलाभिधः सुरः । विचित्ररत्नमुकुटश्चलत्कुंडलमंडलः ॥ २१ ॥
मिथ्यात्वमोहितमना नास्तिकीभूय दुर्मतिः । समाययौ विवंदिषुस्तां क्षेमंकरपर्षदम् ॥ २२ ॥
तत्रालापेषु चित्रेषु जायमानेषु सोऽमरः । आस्तिक्योद्योतमाक्षिप्य सावष्टम्भमदोऽवदत् ॥ २३ ॥
नास्ति पुण्यं न पापं न जीवो लोकः परो न च । आस्तिक्यबुद्ध्या त्वेतेषां मुधा क्लिश्यंति देहिनः ॥२४॥
निर्व्याजसम्यक्त्वधरस्ततो वज्रायुधोऽभ्यधात् । भोः प्रत्यक्षविरुद्धं ते वचस्विन् किमिदं वचः ॥ २५ ॥
त्वं प्रयुज्यावधिं तावत् सम्यक्पश्यात्मनोऽपि हि । प्राग्जन्मधर्मानुष्ठानफलमेतद्धि वैभवम् ॥ २६ ॥
पूर्वजन्मनि मर्त्यस्त्वममर्त्यस्त्वधुनाभवः । न चेद्भवति जीवस्तद्ब्रूहीदं घटते कथम् ॥ २७ ॥

---

१ आकाशात् । २ लक्ष्मीमतिक्रांताम् । ३ विवादं कर्तुमिच्छुः ४ आस्तिक्यस्य प्रकाशं तिरस्कृत्य. ५ पुण्यादीनाम् ।

इह मर्त्यत्वमाप्तस्य देवत्वं च परत्र ते । प्रत्यक्षः परलोकोऽपि तद्धीमन्निहलोकवत् ॥ २८ ॥
क्षेमंकरकुमारेणेत्थंकारं प्रतिबोधितः । चित्रचूलोऽप्युवाचैवं साधु साधु कृतं त्वया ॥ २९ ॥
संसारे निपतन्नेष उद्धृतोऽस्मि कृपालुना । किमुच्यतेऽथवा यस्य साक्षात्तीर्थकरः पिता ॥ ३० ॥
चिरं मिथ्यात्ववानस्मि दृष्टो दिष्ट्येर्ष्ययाप्यसि । सम्यक्त्वरत्नं मे देहि न वंध्यं दर्शनं सताम् ॥ ३१ ॥
वज्रायुधोऽपि तद्भावं ज्ञात्वा मतिमतां वरः । दिदेश तस्मै सम्यक्त्वं सर्वीयस्य[1] सुतः स हि ॥ ३२ ॥
भूयोऽप्यूचे चित्रचूलः कुमाराद्यप्रभृत्यहम् । आदेशकार्यस्मि[2] तव याचस्वाद्यैव किंचन ॥ ३३ ॥
कुमारोऽपि जगादैवं त्वत्तोऽदो याचितं मया । अतः परं त्वया भाव्यं दृढसम्यक्त्वशालिना ॥ ३४ ॥
देवोऽप्यवोचत् केयं ते प्रार्थना स्वार्थ एष मे । तद्ब्रूहि किंचित्कार्यं त्वं यथा स्यामनृणस्तव ॥ ३५ ॥
मत्कार्यमिदमेवेति वक्रे वज्रायुधाय सः । देवायेव निरीहाय दिव्यालंकरणान्यदात् ॥ ३६ ॥
ईशानेन्द्रसभां गत्वा चित्रचूलोऽन्यधादिति । स्थाने वज्रायुधोऽश्लाघि दृढसम्यक्त्ववांस्त्वया ॥ ३७ ॥
अयं महात्मा भगवानर्हन् भावीति संगृणन्[3] । ईशानपतिरस्तावीद्वज्रायुधमनायुधः ॥ ३८ ॥
एवं विचित्रगोष्ठीभिः क्रीडाभिरपि चारुभिः । वज्रायुधः सौख्यमग्नस्तस्थौ सुर इवर्द्धिमान् ॥ ३९ ॥
वसन्तसमयेऽन्येद्युस्तत्पुष्पपटलीधरा[4] । वेश्या सुदर्शना नाम वज्रायुधमजिज्ञपत् ॥ ४० ॥
यूनां क्रीडासखो मीनकेतोर्जयसखः परः । स्वामिन्नद्य वसंतोयमेकछत्रो विजृंभते ॥ ४१ ॥

---

१ सर्वं जानातीति सर्वीयस्तस्य । २ आदेशवर्ती । ३ कथयन् । ४ वसंतपुष्पगुच्छधरा ।

दोलान्दोलनसंसक्ता योषितोऽन्नार्द्रयौवनाः । पतिनामानि पृछ्यंते सखीभिर्यष्टिपाणिभिः ॥ ४२ ॥
स्वयं चिन्वंति पुष्पाणि ग्रथ्नंति स्वयमेव हि । स्वयमर्चैति पुष्पास्त्रं स्वयं मानं त्यजंति च ॥ ४३ ॥
स्वयं दूतीभवन्तीह मनस्विन्योऽपि संप्रति । अनुभावो विजयते ऋतुराजस्य कोऽप्ययम् ॥ ४४ ॥

॥ युग्मम् ॥

पिकीनां कूजितैरत्र भृंगीणां विरुतैरपि । सुप्तस्मरनृपोद्बोधबन्दिकोलाहलायितम् ॥ ४५ ॥
पुष्पोत्तंसाः पुष्पहाराः पुष्पकेयूरकंकणाः । पाखंडमिव पुष्पेषोर्युवान इह बिभ्रति ॥ ४६ ॥
वसंतसखसंकाशवसन्तेऽस्मिन्नुपस्थिते । विज्ञापयति देव त्वां देवी लक्ष्मीवती मया ॥ ४७ ॥
अथ सूरनिपाताख्यमुद्यानं नंदनोपमम् । गत्वा मधुश्रियं नव्यां द्रष्टुं नः कौतुकं प्रभो ॥ ४८ ॥
अस्तुंकारस्तद्वचसः कुमारः सपरिच्छदः । तदैव हि तदुद्यानं जगामानंगधाम सः ॥ ४९ ॥
लक्ष्मीवतीप्रभृतीनि सप्त देवीशतानि च । कुमारमनुयांति स्म तारा इव निशाकरम् ॥ ५० ॥
एकछत्रमिव छायापादपैरतिविस्तृतैः । अद्वैतामोदसाम्राज्यमिव पुष्पितशाखिभिः ॥ ५१ ॥
गलत्परागकणिकापंकिलाबालमंडलम् । फलभारनमच्छाखिशाखानुस्पृष्टभूतलम् ॥ ५२ ॥
क्वाप्युन्नमन्नमन् क्वापि योगीव विवरं विशन् । सांतःपुरस्तदुद्यानं कुमारो विजहार सः ॥ ५३ ॥

॥ त्रिभिर्विशेषकम् ॥

---

१ आर्द्रं नवीनं यौवनं यासां ताः । २ कामदेवम् । ३ सुप्तो यः स्मरनृपस्तस्योद्बोधे बंदिनां कोलाहलमिवाचरितम् । ४ कामदेवस्य । ५ अद्वितीयो य आमोदस्तस्य साम्राज्यमिव । ६ गलंत्यो याः परागकणिकास्ताभिः पंकिलानि अबालानि महांति मंडलानि ।

तेनोद्यानविहारेण श्रांतः श्रांतवधूजनः । जलक्रीडाकृते वापीं स ययौ प्रियदर्शनाम् ॥ ५४ ॥
नंदीश्वरद्वीपवापीमिव वापीं मनोरमाम् । कुमारः श्रमनाशाय सप्रियः स विवेश ताम् ॥ ५५ ॥
प्रेयसीभिः समं तत्र गिरिनद्यामिव द्विपः । प्रावर्तिष्ट जलक्रीडां कर्तुं वज्रायुधस्ततः ॥ ५६ ॥
जलक्रीडाकराघातैरुत्क्षिप्तानामलक्ष्यत । हारमुक्ताकणानां च सीकराणां च नांतरम् ॥ ५७ ॥
अंतःपुरस्त्रीमुखानां हैमानां चांबुजन्मनाम् । वयस्यानामिव चिरादभूदन्योऽन्यसंगमः ॥ ५८ ॥
अंजलिभिः शृंगिकाभिर्गंडूषैश्च मृगीदृशाम् । वारिप्रहरणो जज्ञे मन्ये पुष्पायुधस्तदा ॥ ५९ ॥
लुलंत्यः समलक्ष्यंत कबर्यो वरयोषिताम् । मीना मीनध्वजेनेव ध्वजार्थे प्रगुणीकृताः ॥ ६० ॥
जलकेलिपरिश्रांता विश्राम्यंत्यः पयस्तटे । गौरांग्यः समलक्ष्यंत जलदेव्य इव स्थिताः ॥ ६१ ॥
सापत्नांभोजसंघर्षेणेव नेत्राणि सुभ्रुवाम् । वारिच्छटाच्छोटनेन ताम्रतां प्रतिपेदिरे ॥ ६२ ॥
मृगीदृशामंगरागैर्मार्गनाभैरभूत् पयः । सुगंधिगंधेभमदैरिव वन्यनदीजलम् ॥ ६३ ॥
इत्थं च निर्भरं वारिक्रीडया व्यग्रमानसः । वज्रायुधकुमारोऽस्थादस्थानमसुहृद्भियाम् ॥ ६४ ॥
प्राग्जन्मारेर्दमितारेर्जीवो भ्रान्त्वा भवे चिरम् । देवत्वं प्राप्तवानागाद्विद्युद्दंष्ट्राभिधस्तदा ॥ ६५ ॥
दृष्ट्वा वज्रायुधं विद्युद्दंष्ट्रो दंष्ट्राः कषन्मिथः । आः क यास्यत्यसौ जीवन्निति संचिंतयन्रुषा ॥ ६६ ॥
कुमारं सपरीवारं पेष्टुं चणकमुष्टिवत् । वाप्यास्तस्या उपरिष्टाच्चिक्षेपोत्क्षिप्य पर्वतम् ॥ ६७ ॥

---

१ जलकणानाम् । २ वारियंत्रैः । ३ वार्येव प्रहरणमायुधं यस्य सः । ४ शत्रुभूतानां पंकजानां स्पर्धया । ५ कस्तूरीसंबंधिभिः । ६ शत्रुभयानामस्थानम् । ७ क्रोधेन ।

[1]पाशिपाशोपमैर्नागपाशैः सोऽसुरपांसनः । वज्रायुधं बबंधाधः पदोर्मेरू इव द्विपम् ॥ ६८ ॥
गिरिं वज्रीव वज्रेण मुष्ट्या वज्रायुधोऽपि तम् । पिपेषात्रोटयच्चाथ तान् पाशान् बिसतंतुवत् ॥ ६९ ॥
शेषाहिरिव पातालादद्भुतांगो महाभुजः । तस्याः सांतःपुरो वाप्याः कुमारो निर्ययौ ततः ॥ ७० ॥
तदा नंदीश्वरे यात्रां कर्तुं शक्रो विदेहजान् । जिनान्नत्वा व्रजन् वाप्या निर्गच्छन्तं ददर्श तम् ॥ ७१ ॥
भवेऽत्र चक्र्यसौ भाविन्यर्हन्निति पुरंदरः । तमानर्चोपचारः स्याज्ञाविन्यपि हि भूतवत् ॥ ७२ ॥
धन्योऽसि जंबूद्वीपस्य क्षेत्रे भरतसंज्ञके । तीर्थकृत् षोडशः शान्तिर्भावीत्युक्त्वा ययौ हरिः ॥ ७३ ॥
वज्रायुधोऽपि विविधाः क्रीडाः कृत्वा यदृच्छया । सांतःपुरपरीवारः प्रविवेश निजं पुरम् ॥ ७४ ॥
अथ क्षेमंकरो लोकांतिकदेवैः प्रबोधितः । [3]प्रविव्रजिषुरात्मीये राज्ये वज्रायुधं न्यधात् ॥ ७५ ॥
प्रदाय वार्षिकं दानं प्रव्रज्यामाददे प्रभुः । विविधाभिग्रहपरस्तपस्तेपे च दुस्तपम् ॥ ७६ ॥
कर्मणां घातिनां घाताद्भर्तुर्जज्ञे च केवलम् । केवलज्ञानमहिमा विदधे चामरेश्वरैः ॥ ७७ ॥
यथास्थानं निषण्णेषु वज्रिवज्रायुधादिषु । स्थितः समवसरणे सर्वज्ञो देशनां व्यधात् ॥ ७८ ॥
श्रुत्वा तां देशनां लोकाः प्राज्याः पर्यव्रजन्नथ । स्वं स्वं स्थानं ययुर्वज्रधरवज्रायुधादयः ॥ ७९ ॥
अस्त्रागारे चक्ररत्नमुत्पन्नमिति तारवाक् । तदास्त्रागारिको वज्रायुधस्याकथयन्मुदा ॥ ८० ॥
वज्रायुधस्ततश्चक्रे चक्रपूजां महीयसीम् । अन्यान्यपि महारत्नान्यस्याभूवंस्त्रयोदश ॥ ८१ ॥
चक्ररत्नानुगः सोऽथ स वैताढ्यमहीधरम् । अपि व्यज्येष्ट षट्खंडं विजयं मंगलावतीम् ॥ ८२ ॥

---

१ वरुणपाशोपमैः । २ हस्तिपकः । ३ प्रव्रज्यामादित्सुः । ४ बहवः । ५ उच्चैर्वाक् ।

सहस्रायुधकुमारं यौवराज्ये न्यधत्त च । धरित्रीधरणसहं मूर्त्यंतरमिवात्मनः ॥ ८३ ॥
एकदा राजसामंतामात्यसेनाधिपैर्वृतः । सामानिकैरिव हरिः सोऽध्यास्तास्थानमंडपम् ॥ ८४ ॥
तदानीं चांबरतलादापतन्नवनीतलम् । वेपमानाखिलवपुर्द्विपाहत इव द्रुमः ॥ ८५ ॥
एको विद्याधरयुवा वज्रायुधमहीभुजम् । शरण्यं शरणायागान्मैनाक इव सागरम् ॥ ८६ ॥
॥ युग्मम् ॥
तत्पृष्ठे खड्गफलकधरा विद्याधरांगना । आगात् सुरेखा चार्वंगी विद्यादेवीव मूर्तिभाक् ॥ ८७ ॥
साप्यूचे चक्रिणं देव दुरात्मायं विसृज्यताम् । यथास्य दुर्नयफलं दर्शयाम्यचिरादहम् ॥ ८८ ॥
तत्पृष्ठतश्चोरुगदापाणिर्भ्रूकुटिभीषणः । यमदूत इवैकः कोऽप्यागाद्विद्याधरः क्रुधा ॥ ८९ ॥
विद्याधरं सोऽप्यवोचच्छ्रूयतामस्य दुर्नयः । येनेहेयमहं चागामेतद्वधविधित्सया ॥ ९० ॥
अस्त्यस्य जंबूद्वीपेऽस्य विदेहक्षेत्रभूषणे । सुकच्छनाम्नि विजये वैताढ्यो नाम पर्वतः ॥ ९१ ॥
तस्योपरि पुरश्रेणिशिरोमणितया स्थितम् । पुरं शुक्लपुरं नाम शुल्कं कल्पश्रियामिव ॥ ९२ ॥
शुक्लदंतोऽभवत्तत्र विद्याधरनरेश्वरः । पत्नी यशोधरा तस्य कुलद्वययशोधरा ॥ ९३ ॥
तयोरभूवं पवनवेगो नामाहमात्मजः । क्रमात् कलाकलापं च यौवनं च प्रपन्नवान् ॥ ९४ ॥
तत्रैव वैताढ्यगिरावुत्तरश्रेणिमंडने । पुरे किन्नरगीतेऽभूद्दीप्तचूलो महीपतिः ॥ ९५ ॥

१ सभामंडपम् । २ महती गदा पाणौ यस्य सः ।

तस्य पत्न्यां चन्द्रकीर्तौ सुकांता नाम पुत्र्यभूत् । सर्वलक्षणसंपूर्णा सा मया पर्यणीयत ॥ ९६ ॥
अथावयोः समभवद्रूपशीलविराजिनी । पुत्री शांतिमती नाम पुरस्तादस्ति या तव ॥ ९७ ॥
इयं हि साधयंत्यासीन्महाविद्यां यथाविधि । प्रज्ञप्तिकां भगवतीं पर्वते मणिसागरे ॥ ९८ ॥
विद्याधरेणामुनेयं विद्यासाधनतत्परा । व्योमन्युच्चिक्षिपेऽथास्या विद्यासिध्यत्तदैव च ॥ ९९॥
अस्याः पलायितः सद्यः शरणं क्वाप्यनाप्नुवन् । त्वत्पादमूलं प्राप्तोऽयं दुरात्मा खेचराधमः ॥ १०० ॥
प्रज्ञप्तिविद्यापूजार्थं गृहीत्वा बलिमागमम् । न चापश्यमहं तत्र गिरौ दुहितरं निजाम् ॥ १०१ ॥
आभोगिन्या[1] ततो ज्ञात्वा स्वामिन्नहमिहागतः । दोषाणामाकरः सोऽयं त्यज्यतां दुष्टशासक ॥ १०२ ॥
नालिकेरीफलमिव यथैनं गदयानया । दलयित्वा प्रापयामि प्रेतराज[2]निकेतनम् ॥ १०३ ॥
अथ ज्ञात्वावधिज्ञानाच्चक्री वज्रायुधोऽवदत् । भो भोः प्राग्भवसंबंध एतेषां श्रूयतामयम् ॥ १०४ ॥
अस्यैव जंबूद्वीपस्य क्षेत्र ऐरावताभिधे । पुरे विंध्यपुरे विंध्यदत्तो नामाभवन्नृपः ॥ १०५ ॥
पत्न्यां सुलक्षणाख्यायां संपूर्णनरलक्षणः । बभूव तस्य नलिनकेतुरित्याख्यया सुतः ॥ १०६ ॥
आसीत्तत्रैव नगरे सार्थवाहशिरोमणिः । मित्राब्जाना मित्र[3] इव धर्ममित्रोऽभिधानतः ॥ १०७ ॥
श्रीदत्तायां तस्य पत्न्यां दत्तो नामाभवत् सुतः । दत्तस्याप्यभवत् पत्नी दिव्यरूपा प्रभंकरा ॥ १०८ ॥
एकदा स वसंततौ समं दयितया तया । जगाम रंतुमुद्याने रत्येव मकरध्वजः ॥ १०९ ॥
राज्ञश्च सूनुर्नलिनकेतुः सोऽपि तदागतः । प्रभंकरामपश्यत्तां जघ्ने च स्मर[4]पत्रिभिः ॥ ११० ॥
श्लाघ्यमस्या अहो रूपं श्लाघ्यः सोऽपि च योऽनया । रमेतेति विचिंत्यांतस्तां सोऽहार्षीत्स्मरातुरः॥१११

---

१ तन्नाम्न्या विद्यया । २ यमराजगृहम् । ३ मित्राण्येव कमलानि तेषां विकासे मित्रः सूर्य इव । ४ कामबाणैः ।

क्रीडोद्यानसरिद्वाप्यादिषु नित्यं तया सह । स्वछंदं नलिनकेतुरक्रीडन्मीनकेतुवत्[1] ॥ ११२ ॥

उन्मत्त इव दत्तोऽपि तद्वियोगानलार्दितः । उद्याने तत्र बभ्राम ध्यायन् विष्वक् प्रभंकराम् ॥ ११३ ॥

तत्र पर्यटता तेन दृक्सुधांजनदर्शनः[2] । ईक्षांचक्रे वरमुनिः सुमना इति नामतः ॥ ११४ ॥

मुनेः सुमनसस्तस्य घातिकर्मक्षयात्तदा । उत्पेदे केवलज्ञानमज्ञानध्वान्तवासरः[3] ॥ ११५ ॥

चक्रिरे केवलज्ञानमहिमानं दिवौकसः । मुनेस्तस्य पदाम्भोजद्वंद्वं दत्तोऽप्यवंदत ॥ ११६ ॥

पीत्वा तस्मान्मुनेर्धर्मदेशनां रूपिणीं सुधाम् । दत्तः प्राक्तापवैधुर्यमुज्झति स्म क्षणादपि ॥ ११७ ॥

उपशान्तो दानधर्मरतोऽनारतमेव सः । अतिवाह्य शुभ्रध्यानी प्रकृष्टं पुरुषायुषम् ॥ ११८ ॥

जंबूद्वीपे प्राग्विदेहे सुकच्छे विजयोत्तमे । वैताढ्यपर्वते स्वर्णतिलके प्रवरे पुरे ॥ ११९ ॥

महेन्द्रविक्रमार्कस्य विद्याधरमहीपतेः । पत्न्यामनिलवेगायां सुतत्वेनोदपद्यत ॥ १२० ॥

॥ त्रिभिर्विशेषकम् ॥

तस्याजितसेन इति नामधेयं पिता व्यधात् । ददौ विद्याश्च विधिवत्तेषां मूलधनं हि ताः ॥ १२१ ॥

उद्यौवनः पर्यणैषीत् स विद्याधरकन्यकाः । रेमे च ताभिर्विहरन् व्योम्ना गिरिवनादिषु ॥ १२२ ॥

विन्ध्यदत्ते विपन्ने तु पुरे विन्ध्यपुरेऽभवत् । राजा नलिनकेतुः स तार्क्ष्यकेतुरिवोद्भटः[4] ॥ १२३ ॥

स प्रभंकरया सार्धं दत्तपत्न्यापनीतया[5] । कांदर्पिकः सुर इवाभुंक्त वैषयिकं सुखम् ॥ १२४ ॥

---

१ कामदेववत् । २ दृशोः नेत्रयोः सुधांजनमिव दर्शनं यस्य सः । ३ अज्ञानमेव तमस्तस्य नाशने दिवसतुल्यम् । ४ विष्णुरिव । ५ अपहृतया ।

प्रासादमन्यदारोहत् सप्रभंकरया समम् । वैमानिकः समं देव्या विमानमिव भासुरम् ॥ १२५ ॥
गिरीन्द्रशिखराकारानञ्जनद्युतितस्करान् । गर्जितर्जितदिक्चक्रानुक्रान्तानिव दिग्गजान् ॥ १२६ ॥
विद्युदुद्योतितव्योम्न ऋजुरोहितधारिणः । अकस्मादुन्नतान्मेघान्ददर्श मुमुदे च सः ॥ १२७ ॥युग्मम्॥
तांश्च प्रचंडवातेन पोतानिव[2] दिशो दिशम् । आद्राक्षीन्नीयमानांश्च कुहकोत्पादितानिव[3] ॥ १२८ ॥
इत्युत्पत्तिं विपत्तिं[4] च क्षणार्धेऽपि पयोमुचाम् । निरीक्ष्य नलिनकेतुर्वैराग्यादित्यचिन्तयत् ॥ १२९ ॥
यथामी वारिदा व्योम्नि क्षणादुदयमासदन् । क्षणादस्तमपि तथा संसारे सुखमीदृशम् ॥ १३० ॥
युवा वृद्धो धनी रोरः[5] पतिः पत्तिर्विरुक् सरुक् । एकजन्मन्यपि जनो धिक् सर्वं क्षणिकं भवे ॥ १३१ ॥
एवं विमृश्य पुत्रं स्वं राज्ये न्यस्य स तत्क्षणात् । प्रव्रज्यामाददे क्षेमंकरतीर्थकरांतिके ॥ १३२ ॥
उग्रैस्तपोभिर्ध्यानेन घाततो[6] घातिकर्मणाम् । केवलज्ञानमुत्पेदे तस्य कालक्रमेण तु ॥ १३३ ॥
भवोपग्राहिकर्माणि हत्वा चत्वार्यपि क्षणात् । जगाम नलिनकेतुर्महर्षिः पदमव्ययम् ॥ १३४ ॥
ऋजुर्भद्रस्वभावा च सापि राज्ञी प्रभंकरा । सुव्रतागणिनीपार्श्वेऽचरच्चान्द्रायणं तपः ॥ १३५ ॥
फलेन तपसस्तस्य सम्यक्त्वादि विनापि हि । विपद्य दुहिता जज्ञे सेयं शान्तिमती तव ॥ १३६ ॥
दत्तजीवोऽजितसेनस्त्वेष विद्याधरोऽभवत् । पूर्वस्नेहादनेनेयमुत्क्षिप्ता तेन मा कुपः ॥ १३७ ॥
एनं क्षमयतं त्यक्त्वाऽनुबंधं[7] बंधुवत् परम् । कषाया नरकायैव यतोऽनन्तानुबंधिनः ॥ १३८ ॥
एवं वज्रायुधगिरा मुक्तवैरास्त्रयोऽपि हि । अन्योऽन्यं क्षमयामासुः संवेगावेगभाजिनः[8] ॥ १३९ ॥

---

१ ऋजुरोहितमिन्द्रधनुः । २ नाव इव । ३ माययोत्पादितानिव । ४ नाशम् । ५ निर्धनः । ६ नाशात् । ७ आग्रहम् । ८ वैराग्यावेशवन्तः ।

चक्रभृत् पुनराचख्यौ क्षेमंकरजिनान्तिके । त्रयोऽपि यूयमचिरात् परिव्रज्यां ग्रहीष्यथ ॥ १४० ॥
करिष्यति तपो रत्नावलीं शांतिमती पुनः । मृत्वा चानशनेनासावीशानेन्द्रो भविष्यति ॥ १४१ ॥
तदैव केवलज्ञानं घातिकर्मपरिक्षयात् । युवयोः पवनवेगाजितसेनौ भविष्यति ॥ १४२ ॥
युवयोः केवलज्ञानमहिमानं महोत्सवात् । एत्य स्वदेहपूजां च स ईशानः करिष्यति ॥ १४३ ॥
कालेन च ततश्च्युत्वेशानेन्द्रः प्राप्य मर्त्यताम् । उत्पन्नकेवलज्ञानः सिद्धिमासादयिष्यति ॥ १४४ ॥
त्रिकालज्ञानविषयं तच्छ्रुत्वा चक्रिणो वचः । व्यस्मयंत स्मेरदृशः सर्वे तत्र सभासदः ॥ १४५ ॥
राजा पवनवेगस्तत्सुता शान्तिमती च सा । विद्याधरोऽजितसेनस्तं प्रणम्यैवमूचिरे ॥ १४६ ॥
पिता स्वामी गुरुर्देवस्त्वमस्माकं जगत्पते । मिथोऽपायैप्रसक्तानां को नस्त्रातापरो भवेत् ॥ १४७ ॥
आहत्यान्योऽन्यमद्यैवाया स्याम नरके वयम् । अस्माकं नाभविष्यच्चेत्तद्द्वारे त्वद्वचोऽर्गला ॥ १४८ ॥
तत्स्वामिन्ननुमन्यस्वाद्यैव संसारभीरवः । शरणाय व्रजिष्यामः क्षेमंकरजिनेश्वरम् ॥ १४९ ॥
इति विज्ञपयन्तस्तेऽनुज्ञाताश्चक्रवर्तिना । उपेत्य प्राव्रजन् क्षेमंकरतीर्थकरांतिके ॥ १५० ॥
ते तपस्तेपिरेऽत्युग्रमनुग्रमनसश्चिरम् । कृशीभवद्भिः शरीरैः परिहारभयादिव ॥ १५१ ॥
तत्र शान्तिमती मृत्वेशानकल्पाधिपोऽभवत् । तदैव केवलज्ञानमभूदितरयोः पुनः ॥ १५२ ॥
तयोश्च केवलज्ञानमहिमानमुपेत्य सः । ईशानेन्द्रोऽकरोत्तस्य निजदेहस्य चार्चनम् ॥ १५३ ॥

---

१ संबोधनमेतत् । २ स्वमृतदेहसंस्कारम् । ३ प्रफुल्लदृष्टयः । ४ घातकरण आसक्तानाम् । ५ नरकद्वारे । ६ अनुग्रं कोमलं मनो येषां ते । ७ नाशभयात् ।

ततश्च्युत्वा स ईशानो जन्मन्यन्यत्र सिद्धवान् । आयुःक्षयेऽपरौ तौ च तद्भवेऽपीयतुः शिवम् ॥ १५४ ॥
स तु वज्रायुधश्चक्री ससहस्रायुधो भुवम् । सहस्राक्षः सजयन्त इव द्यां पर्यपालयत् ॥ १५५ ॥
सहस्रायुधपत्नी तु जयनेत्यन्यदा निशि । स्वप्ने ददर्श कनकशक्तिं किरणदन्तुराम् ॥ १५६ ॥
तया च प्रातराख्याते पतिर्व्याख्यातवानिति । तव पुत्रो महाशक्तिर्नूनं देवि भविष्यति ॥ १५७ ॥
तदैव देवी सा गर्भमुद्वाह सुदुर्वहम् । कालेऽजनिष्ट तनयरत्नं सस्यमिवोर्वरा[1] ॥ १५८ ॥
पिता च जयना देवी दृष्टस्वप्नानुसारतः । तस्य बालस्य कनकशक्तिरित्यभिधां व्यधात् ॥ १५९ ॥
स क्रमात् समतिक्रांतशैशवो नवयौवनः । सुमंदिरपुरे तस्य तनयां मेरुमालिनः ॥ १६० ॥
मल्लादेवीकुक्षिभवां रूपलावण्यशालिनीम् । नामतः कनकमालामुपयेमे यथाविधि ॥ १६१ ॥ युग्मम् ॥
इतश्च मशकासारे श्रीसारे प्रवरे पुरे । समभूदजितसेन इति नाम्ना महीपतिः ॥ १६२ ॥
तस्य चासीत् प्रियसेनादेवीकुक्षिभवा सुता । वसन्तसेना कनकमालायाः सा सखी वरा ॥ १६३ ॥
पिता वसन्तसेनाया अपश्यन्नुचितं वरम् । प्रैषीत् स्वयंवरां तां तु पुत्रीं कनकशक्तये ॥ १६४ ॥
ततः कनकशक्तिस्तामुपायंस्त यथाविधि । तस्याश्च पैतृष्वस्रीयो रुरोषोद्वाहतस्ततः ॥ १६५ ॥
उद्याने कनकशक्तिर्विहरन्नेकदैककम् । उत्पतंतं पतन्तं चापश्यत् कुर्कुटवन्नरम् ॥ १६६ ॥
ऊचे कनकशक्तिस्तं किं त्वमुत्पातपातकृत् । पतंग इव भोः शंस रहस्यं भवतो न चेत् ॥ १६७ ॥
सोऽप्युवाच पुमानेवं त्वादृशानां महात्मनाम् । रहस्यमप्याख्यातव्यं तदाख्यातं गुणाय हि ॥ १६८ ॥

१ पृथ्वी धान्यमिव ।

धर्मलाभं ततः प्राप्य देवीभ्यां सममेव सः । अश्रौषीद्भवदावाग्निप्रावृषं धर्मदेशनाम् ॥ १८२ ॥
ततः प्रबुद्धः कनकशक्तिर्देव्यावुभे अपि । राज्यश्रीवद्गृहे मुक्त्वा प्रवव्राज महामतिः ॥ १८३ ॥
देव्यौ ते अपि संविग्ने विवेकिन्यौ शुभाशये । आर्याया विमलमतेः पार्श्वे जगृहतुर्व्रतम् ॥ १८४ ॥
विहरन् कनकशक्तिर्गत्वा सिद्धिपदे गिरौ । शिलायामेकरात्रिक्या तस्थौ प्रतिमया स्थिरः ॥ १८५ ॥
तथा च तं स्तम्भमिव स्थिरं दृष्ट्वा दुराशयः । हिमचूलसुरः कर्तुमुपसर्गान् प्रचक्रमे ॥ १८६ ॥
तस्योपसर्गान् कुर्वाणं तं च गीर्वाणपांसनम् । क्रुधा न्यत्रासयन् विद्याधराः पक्षे सतां जनः ॥ १८७ ॥
प्रतिमां पारयित्वा तां विहरन्नगमत्ततः । स तपःसंचयगिरिर्नगरीं रत्नसंचयाम् ॥ १८८ ॥
अथ सूरनिपाताख्ये तत्रैवोपवने मुनिः । चक्रे गिरिरिवाकम्पः प्रतिमामेकरात्रिकीम् ॥ १८९ ॥
तस्य च क्षपकश्रेणिमारूढस्य क्षणादपि । घातिकर्मक्षयाज्जज्ञे केवलज्ञानमुज्ज्वलम् ॥ १९० ॥
तस्य केवलमहिमामुपेत्य विदधुः सुराः । हिमचूलस्तु तद्दृष्ट्वा भीतस्तं शरणं ययौ ॥ १९१ ॥
वज्रायुधोऽपि तस्यर्षेर्यथावन्महिमां व्यधात् । श्रुत्वा च देशनां तस्माज्जगाम स्वपुरीं पुनः ॥ १९२ ॥
अन्यदा समवासार्षीत्तत्र क्षेमंकरः प्रभुः । कोटिसंख्यैः सेव्यमानः सुरासुरनरेश्वरैः ॥ १९३ ॥
वज्रायुधाय चाचख्युरुपेत्यायुक्तपूरुषाः । स्वामिनं समवसृतं क्षेमंकरजिनेश्वरम् ॥ १९४ ॥
स्वर्णस्य द्वादश सार्धाः कोटीस्तेभ्यः प्रदाय सः । क्षेमंकरं तीर्थकरं जगाम सपरिच्छदः ॥ १९५ ॥
तं त्रिः प्रदक्षिणीकृत्य नमस्कृत्य च भक्तितः । उपविश्यानुशक्रं च सोऽश्रौषीद्धर्मदेशनाम् ॥ १९६ ॥

---

१ अधमदेवम् । २ तपसां संचयस्य समूहस्य गिरिः ।

देशनान्ते प्रभुं नत्वा चक्री वज्रायुधोऽवदत् । स्वामिन् भीतोऽस्मि संसारार्णवादस्माद्दुरुत्तरात् ॥१९७॥
स्वे सहस्रायुधं राज्ये यावन्न्यस्यापताम्यहम् । तावदागमयस्वेह दीक्षां दातुं मम प्रभो ॥ १९८ ॥
न प्रमादो विधातव्य इत्युक्तः स्वामिना नृपः । गत्वा पुरीं निजे राज्ये सहस्रायुधमादधौ ॥ १९९ ॥
स सहस्रायुधेनाथ कृतनिष्क्रमणोत्सवः । आरुह्य शिबिकां गत्वा क्षेमंकरजिनांतिके ॥ २०० ॥
चतुःसहस्र्या राज्ञीनां भूभुजां च किरीटिनाम् । सुतानां सप्तशत्या च सहितो व्रतमाददे ॥ २०१ ॥
विविधाभिग्रहपरः सहमानः परीषहान् । वज्रायुधर्षिर्विहरन्नगमत् सिद्धिपर्वतम् ॥ २०२ ॥
उपसर्गान् सहिष्येऽहमिति बुद्ध्या स शुद्धधीः । स्थाने विरोचने तत्र प्रतिमां वार्षिकीं दधौ ॥ २०३ ॥
इतश्चाश्वग्रीवसुतौ चिरं भ्रान्त्वा भवाटवीम् । मणिकुंभो मणिकेतुः कृत्वा बालतपोऽन्यदा ॥ २०४ ॥
उत्पन्नावसुरत्वेन प्रारब्धस्वैरचर्यया । तदा तत्र समायातौ तं महर्षिमपश्यताम् ॥ २०५ ॥
॥ युग्मम् ॥

ततस्तावमिततेजोभववैरेण तं मुनिम् । प्रारेभाते उपद्रोतुं महाद्रुं महिषाविव ॥ २०६ ॥
सिंहीभूयोभयोस्तस्य पार्श्वयोस्तावुभावपि । नखरैश्चक्षतुर्देहं खरैर्वज्रांकुरैरिव ॥ २०७ ॥
अथ तं कुंजरीभूयांतर्वेदिमिव जघ्नतुः । करघातैर्दन्तघातैः पादघातैश्च दुःसहैः ॥ २०८ ॥
भूयश्च भुजगीभूय तस्यर्षेः पार्श्वयोर्द्वयोः । दृढबंधं ललंबाते योक्त्रपाशाविवानसः ॥ २०९ ॥
दधानौ कर्त्रिकां तीक्ष्णां निजदंष्ट्रासहोदराम् । उपद्रुद्रुवतुरथ राक्षसीभूय तं मुनिम् ॥ २१० ॥

---

१ आगच्छामि । २ प्रतीक्षस्व । ३ प्रारब्धा या स्वैरचर्या स्वेच्छागमनं तया । ४ योक्त्र "जोतर" इति भाषायाम् । ५ शकटस्य ।

इत्थं च नानौ तौ यावत्तमुपाद्रवतां मुनिम् । तावद्वंदितुमर्हन्तं चेलुः पद्मयो विभ्रौजसः ॥ २११ ॥
रंभातिलोत्तमाद्यास्तास्ततस्त्रिदशयोषितः । मुनौ तत्रोपसर्गास्तौ कुर्वाणौ ददृशुः सुरौ ॥ २१२ ॥
आः पापौ किमिहारब्धं युवाभ्यां मुनिपुंगवे । इति ब्रुवाणा वेगात्ता अवतेरुर्नभस्तलात् ॥ २१३ ॥
तत्र चावतरंतीस्ताः प्रेक्ष्य तौ क्षुभितौ सुरौ । त्रेसतुः सूर्यभालोके कियत्तिष्ठन्ति कौशिकाः ॥ २१४ ॥
इन्द्रस्येव मुनीन्द्रस्य पुरस्तात्तस्य भक्तितः । नाट्यं प्रपंचयामासू रंभाद्याः सुरयोषितः ॥ २१५ ॥
ततः पवित्रमानिन्यस्तं वंदित्वा महामुनिम् । देव्यस्ताः सपरीवाराः स्वं स्वं स्थानं पुनर्ययुः ॥ २१६ ॥
प्रतिमां पारयित्वा तां महर्षिः सोऽपि वार्षिकीम् । अतुल्ययमनियमो विजहार वसुंधराम् ॥ २१७ ॥
सहस्रायुधराजोऽपि राजश्रेणीविराजितः । राजपुत्रीमिवोढूढां राज्यश्रियमभुक्त सः ॥ २१८ ॥
एकदा समवासार्षीन्नानामुनिगणावृतः । तस्य पुर्यां गणधरो नामतः पिहिताश्रवः ॥ २१९ ॥
तं सहस्रायुधोऽभ्येत्य ववन्दे भक्तिभावितः । अश्रौषीत् कर्णपीयूषवृष्टिं तस्य च देशनाम् ॥ २२० ॥
इन्द्रजालमिवासारं संसारं तत्क्षणाद्विदन् । सद्यः स राजा स्वे राज्ये पुत्रं शतबलिं न्यधात् ॥ २२१ ॥
पिहिताश्रवपादान्ते प्रव्रज्यां स्वयमाददे । आदाय द्विविधां शिक्षां विजहार वसुंधराम् ॥ २२२ ॥
विहरन्नपरेद्युश्च स सहस्रायुधो मुनिः । वज्रायुधस्य राजर्षेः सोमस्येव बुधोऽमिलत् ॥ २२३ ॥
संयुक्तौ तौ पितापुत्रौ तपोध्यानपरौ सदा । परीषहसहौ स्वांगेऽप्यनपेक्षौ क्षमाधनौ ॥ २२४ ॥

---

१ विविधप्रकारेण । २ उल्काः । ३ आत्मानं पवित्रं मन्यंते ताः । ४ चंद्रस्येव ।

विहरन्तौ पुरग्रामारण्यादिष्वनवस्थितौ । गमयामासतुः प्राज्यं कालमेकाहवत्सुखम् ॥ २२५ ॥
तत ईषत्प्राग्भाराख्यं गिरिमारुह्य तौ मुनी । प्रपेदाते अनशनं पादपोपगमाभिधम् ॥ २२६ ॥

आयुःक्षये वपुरपास्य महामुनीन्द्रौ ग्रैवेयकेऽथ परमर्द्धिपदे तृतीये ।
सद्योऽहमिन्द्रपदमद्भुतमाप्य पंचविंशत्यर्णवोपममितस्थिति तस्थतुस्तौ ॥ २२७ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये
पंचमे पर्वणि श्रीशांतिनाथदेवीयाष्टमनवमभववर्णनो
नाम तृतीयः सर्गः ।

---

१ एकदिनवत् ।

# अथ चतुर्थः सर्गः ।

अथास्य जंबूद्वीपस्य प्राग्विदेहेषु विस्तृते । विजये पुष्कलावत्यां सीतायाः सरितोऽन्तिके ॥ १ ॥
मध्यखंडस्य मध्येऽस्ति नगरी पुंडरीकिणी । श्रियो निधानमस्त्येतं सरोऽन्तः पुंडरीकवत्[1] ॥ २ ॥
॥ युग्मम् ॥

तस्यां घनरथो राजा खंडितारिमनोरथम् । अजून्महारथप्रेष्ठो[2] जूमिष्ठ इव वासवः ॥ ३ ॥
तस्याजूतामुन्ने पत्न्यौ गंगासिंधू इवांबुधेः । एका प्रियमतिर्नाम द्वितीया तु मनोरमा ॥ ४ ॥
वज्रायुधस्य जीवोऽपि च्युत्वा ग्रैवेयकादथ । प्रियमत्या महादेव्या उदरे समवातरत् ॥ ५ ॥
तदा च रजनीशेषे स्वप्नांतर्ददृशे तया । वर्षन् गर्जंस्तडिन्माली[3] मेघोऽन्तर्वदनं विशन् ॥ ६ ॥
तया तं प्रातराख्यातं स्वप्नं व्याख्यन्महीपतिः । पृथ्वीसंतापहृन्मेघ इव जावी तवात्मजः ॥ ७ ॥
सहस्रायुधजीवोऽपि च्युत्वा ग्रैवेयकात्ततः । मनोरमामहादेव्याः कुक्षौ समवतीर्णवान् ॥ ८ ॥
तयापि ददृशे स्वप्ने स्वमुखान्तर्विशन् रथः । सौवर्णकिंकिणीमाली पैताकी[4] लोहनेमिकः[5] ॥ ९ ॥
तयापि स्वप्नमाख्यातं व्याचख्याविति जूपतिः । सूनुर्महारथप्रष्ठस्तव देवि जविष्यति ॥ १० ॥
समये सुषुवाते ते क्रमेण तनयावुजौ । मूर्त्यन्तरमिव प्राप्तौ दिवाकरनिशाकरौ ॥ ११ ॥

---

१ कमलवत् । २ प्रष्ठः श्रेष्ठः । ३ विद्युतां मालाः संत्यस्य । ४ ध्वजयुक्तः । ५ नेमिश्चक्रधारा ।

अथ प्रियमतीसूनोः शुभेऽहनि महीपतिः । स्वप्नानुसारतो मेघरथ इत्यभिधां व्यधात् ॥ १२ ॥
राज्ञीस्वप्नानुसारेण द्वितीयस्यापि भूपतिः । सूनोर्दृढरथ इति नामधेयमकल्पयत् ॥ १३ ॥
मेघरथदृढरथौ दृढसौभ्रात्र[1]शालिनौ । क्रमेण ववृधाते तौ सीरिशार्ङ्गधराविव ॥ १४ ॥
राज्यस्थानमनंगस्य कामिनीजनकार्मणम् । तौ रूपोत्कर्षजनकं यौवनं प्रापतुः क्रमात् ॥ १५ ॥
राज्ञोऽथ निहतशत्रोः सुमंदिरपुरेशितुः । एत्यामात्यो घनरथं प्रणम्यैवं व्यजिज्ञपत् ॥ १६ ॥
तैस्तैर्गुणैरुपेता वः कीर्तिः कुंदोज्वला प्रभो । प्रभेव हरिणांक[2]स्य प्रमोदयति कं न हि ॥ १७ ॥
दूरस्थितोऽपि निहतशत्रुर्युष्मासु सौहृदी[3] । संबंधात्सन्निधीभूय विशेषस्नेहमिच्छति ॥ १८ ॥
तिष्ठंति कन्या निहतशत्रोस्तस्य महीपतेः । पृथग्जगत्त्रयस्त्रीणां स्वामितायामिव स्थिताः ॥ १९ ॥
तत्र मेघरथस्य द्वे एकां दृढरथस्य च । दित्सते[4] निहतशत्रुर्भूयास्तं सुहृदौ युवाम् ॥ २० ॥
राजा घनरथोऽप्यूचे घनध्वनितधीरवाक् । घनीभवतु नौ स्नेहः संबन्धेनामुनाधुना ॥ २१ ॥
प्रवाहैरिव संबंधैरापतद्भिः[5] पुरः पुरः । सतां स्नेहाः प्रवर्धन्ते नद्यः सानुमतामिव ॥ २२ ॥
सोऽप्यमात्यो जगादैवं देव दैवज्ञपुंगवम् । आहूयादिश लग्नं मे कल्यं[6] कल्याणकर्मसु ॥ २३ ॥
प्रस्थापय कुमारौ तन्मारतुल्यौ[7] वपुःश्रिया । कन्योद्वाहमिषात् स्वामिन्नस्मत्स्वाम्यनुगृह्यताम् ॥ २४ ॥
ज्ञानिना लग्नमासूत्र्यागमनं च कुमारयोः । प्रतिपद्य नरेन्द्रोऽथ सचिवं विससर्ज तम् ॥ २५ ॥

१ सुभ्रातुर्भावः सौभ्रात्रम् । २ चंद्रस्य । ३ सुहृदो भावः सौहृदं तदस्त्यस्य । ४ दातुमिच्छति । ५ आगच्छद्भिः । ६ शुभम् । ७ कामदेवसमानौ ।

सुहृष्टः सचिवः शीघ्रं सुमंदिरपुरं ययौ । नृपं निहतशत्रुं च तदाख्यानादहर्षयत् ॥ २६ ॥
प्रैषीद्घनरथो मेघरथं दृढरथान्वितम् । सवसन्तं स्मरमिव सुमंदिरपुरं प्रति ॥ २७ ॥
सामंतामात्यसेनानीसेनापरिवृतौ ततः । सरिदोघाविवाविघ्नं कुमारौ तौ प्रचेलतुः ॥ २८ ॥
गत्वा प्रयाणैरव्यग्रैर्मर्यादापालनार्णवौ । सुरेन्द्रदत्तनृपतेर्देशसीमन्यथोषतुः ॥ २९ ॥
राज्ञा सुरेन्द्रदत्तेन दत्तशिक्षोऽभ्युपेत्य तम् । ऊचे मेघरथं दूतः सावष्टंभ[1]मिदं वचः ॥ ३० ॥
सुरेन्द्रदत्तो नः स्वामी सुरेन्द्र इव विक्रमी । अस्मद्देशस्य मध्येन मा गास्त्वमिति वक्ति सः ॥ ३१ ॥
अस्मत्सीमानमुत्सृज्य त्वं गच्छान्येन वर्त्मना । संमृगेन्द्रे[2] गतिर्मार्गे मृगस्य कुशलाय न ॥ ३२ ॥
स्मित्वा मेघरथोऽप्येवमवदद्वदतां वरः । अस्माकमयमेवाध्वा ऋजुः स त्यज्यतां कथम् ॥ ३३ ॥
पूरयन्त्यवटान्[3] वृक्षानुत्खनन्ति खनंति च । स्थलीस्तुंगा न चाध्वानं त्यजंति सरितोऽपि हि ॥ ३४ ॥
एते वयमनेनैव यास्यामो वर्त्मनर्जुना । अनृजुः स तु ते स्वामी स्वशक्तिं दर्शयत्वहो ॥ ३५ ॥
इति मेघरथेनोक्तमशेषमपि तत्क्षणम् । गत्वा सुरेन्द्रदत्ताय राज्ञे दूतो न्यवेदयत् ॥ ३६ ॥
श्रुत्वा सुरेन्द्रदत्तस्तच्छ्रुतहक्क[4] इव द्विपः । आध्मातताम्रताम्रास्यो[5] रणत्त्रामवीवदत् ॥ ३७ ॥
निषादिनां सादिनां च पत्तीनां रथिनामपि । तस्यापेतुः समीकार्थान्य[6]थानीकान्यनेकशः ॥ ३८ ॥
भटोद्भटकरास्फोटैर्धनुष्टंकारडंबरैः । अश्वस्यन्दनमातंगहेषाचीत्कारबृंहितैः ॥ ३९ ॥

---

१ सगर्वम् । २ सिंहसहिते मार्गे । ३ गर्तान् । ४ गजाह्वानशब्दो हक्कः । ५ तप्तताम्रवद्रक्तमुखः । ६ युद्धार्थीनि ।

ते कुर्वाणाः करास्फोटं तर्जयन्तः परस्परम् । दोर्युद्धेनान्ययुध्यन्त बंधज्ञाः पन्नगा इव ॥ ५३ ॥
ते चत्वारः क्षणं रेजुर्युद्धे तस्मिन्महौजसः । तिर्यगुत्क्षिप्तदोःश्रृंगा गजदंता इवाद्रयः ॥ ५४ ॥
मेघरथदृढरथकुमाराभ्यामथ क्षणात् । खेदयित्वा बबंधाते वन्येभाविव तावुभौ ॥ ५५ ॥
देशे तस्मिन्निजामाज्ञां भ्रमयित्वा स्वदेशवत् । कुमारावीयतुः प्रीतौ सुमंदिरपुरं ततः ॥ ५६ ॥
अन्याजगाम निहतशत्रू राजकुमारयोः । अन्यत्राप्यतिथावभ्युत्थेयं तादृक्षु किं पुनः ॥ ५७ ॥
तावालिलिंग नृपतिश्चुचुंब च शिरस्तले । सुखाद्वैतमनुभवन्नहमिन्द्र इवामरः ॥ ५८ ॥
सुलग्ने मेघरथेन प्रियमित्रामनोरमे । ज्यायस्यौ कन्यके राजा विधिना पर्यणाययत् ॥ ५९ ॥
कन्यां सुमतिनामानं तृतीयां तु कनीयसीम् । उपयेमे दृढरथो राजधौतपदांबुजः ॥ ६० ॥
ऋद्ध्या महत्या विवाहे यथावद्विहितेऽथ तौ । विसृष्टौ गौरवाद्राज्ञा चेलतुः स्वां पुरीं प्रति ॥ ६१ ॥
सुरेन्द्रदत्तं स्वे राज्ये युवराजसमन्वितम् । तथैव स्थापयित्वा तौ जग्मतुर्नगरीं निजाम् ॥ ६२ ॥
सह प्रियाभिस्तौ भोगान् बुभुजाते महाभुजौ । इंद्रोपेन्द्राविवैकत्र मिलितौ प्रीतियोगतः ॥ ६३ ॥
प्रियमित्रा नंदिषेणं मेघसेनं मनोरमा । सुषुवाते मेघरथपत्न्यौ पुत्रद्वयं क्रमात् ॥ ६४ ॥
पत्नी दृढरथस्यापि प्रासूत सुमतिः सुतम् । रथसेनाभिधं चारुगुणरत्नैकरोहणम् ॥ ६५ ॥
राजा घनरथोऽन्येद्युरंतरंतःपुरं सुखम् । कलत्रैः पुत्रपौत्रैश्च यूथद्विप इवावृतः ॥ ६६ ॥

---

१ तिर्यक् उत्क्षिप्तानि दोषाणो बाहव एव श्रृंगाणि यैस्ते । २ राज्ञा धौतं पादपद्मं यस्य सः । ३ चारुगुणा एव रत्नानि तेषामेकरोहणाचलम् । ४ अंतःपुरस्य मध्ये ।

विनोदैर्विविधैरस्थाद्यावत्तावत् सुसेनया । व्यज्ञप्येवं गणिकया चरणायुधहस्तया ॥ ६७ ॥ युग्मम् ॥
देवायं ताम्रचूडो मे चूडारत्नं स्वजातिषु । कस्यापि ताम्रचूडेन जीयते जातुचिन्नहि ॥ ६८ ॥
जीयते यदि कस्यापि कुर्कुटेनैष कुर्कुटः । दीनाराणां तदा लक्षं पणे तस्य ददाम्यहम् ॥ ६९ ॥
अपरस्यापि कस्यापि यद्यस्ति चरणायुधः । मत्प्रतिज्ञापणममुं स उत्क्षिपतु तत्प्रभो ॥ ७० ॥
देवी मनोरमाथोचे पणितेनामुनैव मे । ताम्रचूडस्ताम्रचूडेनामुना युध्यतामिह ॥ ७१ ॥
एवमस्त्विति राज्ञोक्ते राज्ञी सद्यो मनोरमा । आनाययच्चेटिकया वज्रतुंडाख्यकुर्कुटम् ॥ ७२ ॥
तावप्युत्तारितौ भूमावंकपत्ती इवाथ तौ । विचित्रपादगतिकौ प्रनृत्यंतौ प्रजह्रतुः ॥ ७३ ॥
उत्पेततुः पेततुश्च सस्रतुश्चापसस्रतुः । ददतुः प्रतीपतुश्च तौ प्रहारान् परस्परम् ॥ ७४ ॥
प्रचंडचंचुचरणप्रहारोद्भूतशोणितैः । ताम्रापि ताम्राभूच्चूडा ताम्रचूडाग्रयोस्तयोः ॥ ७५ ॥
पक्षिरूपाविव नरौ सायुधौ चरणायुधौ । नखान् परस्परस्यांगे तीक्ष्णांश्चिक्षिपतुर्मुहुः ॥ ७६ ॥
जयत्ययं महादेव्याः सुसेनाया जयत्ययम् । इति क्षणं जयभ्रांतिरभून्नो कस्यचिज्जयः ॥ ७७ ॥
आयुध्यमानयोरित्थं तयोर्घनरथोऽवदत् । द्वयोरप्यनयोर्मध्यान्नैकोऽप्येकेन जेष्यते ॥ ७८ ॥
ऊचे मेघरथोऽप्येवमनयोर्युध्यमानयोः । किमित्येकस्य न जयो नैकस्य च पराजयः ॥ ७९ ॥
ततो ज्ञानत्रयधरो राजा घनरथोऽब्रवीत् । श्रूयतामनयोः पूर्वभववृत्तमशेषतः ॥ ८० ॥
अस्मिन्नेव जंबूद्वीपे क्षेत्र ऐरावताभिधे । अस्ति रत्नपुरं नाम नानारत्नोत्करं पुरम् ॥ ८१ ॥

---

१ कुर्कुटहस्तया । २ कुर्कुटः । ३ अंकश्चिन्नयुद्धम् तस्मिन् पत्ती समौ । ४ श्रेष्ठकुर्कुटयोः ।

अभूतां वणिजौ तत्र द्वौ मिथो मैत्र्यशालिनौ । एको धनवसुर्नाम दत्तो नामापरः पुनः ॥ ८२ ॥
अनिवृत्तधनाशौ[1] तौ तृषितौ चातकाविव । भांडैर्नानाविधैर्भृत्वा शकटीशकटादिकम् ॥ ८३ ॥
ग्रामाकरपुरद्रोणमुखादिषु सदा युतौ । भ्रेमतुर्व्यवहाराय दारिद्र्यपितराविव ॥ ८४ ॥
तृषितान् क्षुधितान् श्रांतान्मंदान्व्यंगान् कृशानपि । शीतालूष्णालुतृष्णालूनति[2]भाराधिरोपणैः ॥ ८५ ॥
प्रतोदैर्यष्टिघातैश्च लांगूलोन्मोटनैरपि । वाहयामासतुर्गास्तौ परमाधार्मिकाविव ॥ ८६ ॥
क्षुरैस्ततक्षतुः पृष्ठान्युल्लूनानि[3] च तौ गवाम् । प्राग्वेधे त्रुटिते नासात्वचं विविधतुः पुनः ॥ ८७ ॥
कालेऽप्यमुंचतां नोक्ष्णो[4] मंक्ष्वीप्सितयियासया । बुभुजाते च गच्छन्तौ विलंबस्यासहौ स्वयम् ॥ ८८ ॥
कूटतुलाकूटमानकूटनाणककर्मभिः । कूटार्थकथनैश्चापि तावमोहयतां जनम् ॥ ८९ ॥
अवञ्चयेतां तौ विश्वं गोमायू[5] इव मायिनौ । एकद्रव्याभिलाषाच्च युध्येते स्म परस्परम् ॥ ९० ॥
मिथ्यात्वमोहितमती निर्दयौ पुरुषौ सदा । लोभाघ्रातौ न धर्मस्य तौ वार्तामपि चक्रतुः ॥ ९१ ॥
इत्थं प्रपन्नार्तध्यानौ तौ गजायुर्बबंधतुः । आर्तध्यानस्य हि फलं तिर्यग्योनिषु संभवः ॥ ९२ ॥
अन्यदा श्रीनदीतीर्थे रागद्वेषवशंवदौ । तौ मिथो जातकलहौ युध्वा पंचत्वमापतुः ॥ ९३ ॥
तत्रैवैरवते स्वर्णकूलाकूले[6] बभूवतुः । तौ गजौ ताम्रकलशकांचनकलशाभिधौ ॥ ९४ ॥
क्रमादुद्यौवनौ तौ च सप्तधा प्रक्षरन्मदौ । तटद्रुमांश्च निघ्नंतौ नदीतीरे विजह्रतुः ॥ ९५ ॥

---

१ न निवृत्ता धनाशा ययोस्तौ । २ शीतोष्णतृष्णार्तान् । ३ सशोफानि । ४ वृषान् तूर्णमिष्टस्थानं गंतुमिच्छया न मुमुचतुः । ५ शृगालौ । ६ स्वर्णकूलानदीतीरे ।

उद्यानावेकदा तौ जग्मतुर्मेरुमूर्धनि । प्रतिमाश्च ववंदाते श्रीमतां शाश्वतार्हताम् ॥ १११ ॥
भ्रमन्तौ कौतुकात्तौ तु तत्र स्वर्णशिलास्थितम् । नंदने सागरचंद्रं चारणर्षिमपश्यताम् ॥ ११२ ॥
प्रदक्षिणापूर्वकं तौ तं नमश्चक्रतुर्मुनिम् । कृताञ्जली शुश्रुवतुः पुरोभूय च देशनाम् ॥ ११३ ॥
देशनान्ते नमस्कृत्य मुनिं तावेवमूचतुः । अज्ञानतिमिरार्ताभ्यां दिष्ट्या प्राप्तोऽसि दीपवत् ॥ ११४ ॥
आवयोः प्राक्तनान् सम्यगाख्याहि भगवन् भवान् । सूर्योदय इवान्योपकृत्यै[१] ज्ञानं भवादृशाम् ॥११५॥
आख्यन्मुनिरपि द्वीपे धातकीखंडनामनि । वर्षे पूर्वैरवतेऽस्ति नाम्ना वज्रपुरं पुरम् ॥ ११६ ॥
तस्मिन्नार्ताभयघोषो[२]ऽभयघोषोऽभवन्नृपः । सुवर्णतिलका नाम प्रेयसी तस्य चाभवत् ॥ ११७ ॥
विजयो वैजयन्तश्च संजज्ञातेऽनयोः सुतौ । क्रमात् कलाकलापं च प्रापतुर्यौवनं च तौ ॥ ११८ ॥
इतश्च तत्रैरवते पुरे स्वर्णद्रुमेऽभवत् । शंखोज्ज्वलगुणः शंख इति नाम्ना महीपतिः ॥ ११९ ॥
उत्संगस्थितपुष्पस्रक्स्वप्नदर्शनसूचिता । पृथ्वीदेव्यां तस्य पुत्री पृथ्वीसेनेत्यजायत ॥ १२० ॥
रूपप्रकर्षवैदग्ध्यविशेषपरिपोषकौ । क्रमेण यौवनकलाकलापावाससाद सा ॥ १२१ ॥
अनुरूपो वरोऽमुष्या अयमेवेति चिन्तयन् । कन्यामभयघोषाय शंखराजोऽथ तां ददौ ॥ १२२ ॥
पृथिवीसेनया सार्धं स पृथ्वीनाथपुंगवः । नवोढया तया रेमे रमयेव रमापतिः ॥ १२३ ॥
अपरेद्युर्वसन्ततौ वैसन्तसुमनोधरा[३] । काप्यागाच्चेटिका राज्ञोऽभयघोषस्य सन्निधौ ॥ १२४ ॥
तां प्रेक्ष्य स्वर्णतिलका देव्येवं नृपमभ्यधात् । अमंड्यत वसन्तेनोद्यानं षड्तुकाभिधम् ॥ १२५ ॥

---

१ अन्येषामुपकाराय । २ दीनानां प्राणिनामभयं घोषयतीति तथा । ३ वसंतपुष्पधरा ।

प्रवृत्तिस्ते परार्थैव स्वामिन् विज्ञप्यसे ततः । प्रतीक्षस्व क्षणं विश्वप्रतीक्ष्य करुणानिधे ॥ १४१ ॥
विश्वं विश्वंभराभारं निधाय तनये निजे । यावदायामि दीक्षायै त्वत्पादकमलान्तिके ॥ १४२ ॥
॥ युग्मम् ॥
नैव प्रमादिना भाव्यमित्युक्तः स्वामिना नृपः । गृहे गत्वा सुतावेवमभाषिष्ट पृथक् पृथक् ॥ १४३ ॥
हे वत्स विजयादत्स्व राज्यमेतत् क्रमागतम् । यौवराज्यं वैजयन्त त्वमस्य परिपालय ॥ १४४ ॥
अहं तु प्रव्रजिष्यामि व्रजिष्यामि जिनांतिके । आव्रजेयं न हि यथा भूयोऽपि भवगह्वरे ॥ १४५ ॥
तावपीत्यूचतुस्तात भवभीतो यथा भवान् । भवभीतौ तथैवावां त्वदीयौ ननु नंदनौ ॥ १४६ ॥
अप्यावां प्रव्रजिष्यावः प्रव्रज्याया शुभे फले । इह त्वत्पादशुश्रूषा मोक्षप्राप्तिः परत्र च ॥ १४७ ॥
साधु वत्साविति वदन् वदान्यो मेदिनीपतिः । ददौ कस्मैचिदन्यस्मै राज्यं प्राज्यमपि स्वयम् ॥ १४८॥
ताभ्यां सह तनूजाभ्यां गत्वानंतजिनान्तिके । प्राव्राजीदभयघोषः श्रीमत्संघस्य पश्यतः ॥ १४९ ॥
त्रयोऽपि तेपिरेऽत्युग्रं ते तपो भूपतिस्तु सः । विंशत्या स्थानकैरर्हन्नामगोत्रमुपार्जयत् ॥ १५० ॥
त्रयोऽपि काले ते कालं कृत्वा प्रययुरच्युते । देवा बभूवुर्द्वाविंशत्यर्णवोपमजीविताः ॥ १५१ ॥
इतश्च जंबूद्वीपेऽस्मिन् प्राग्विदेहविभूषणे । विजये पुष्कलावत्यामस्ति पूः पुंडरीकिणी ॥ १५२ ॥
तस्यां हेमांगदो नाम बभूव वसुधाधवः । शचीव वज्रिणो वज्रमालिनी तस्य च प्रिया ॥ १५३॥
च्युत्वा ततोऽभयघोषस्तस्याः कुक्षाववातरत् । चतुर्दशमहास्वप्नसूचितार्हतवैभवः ॥ १५४ ॥

१ विश्वस्य प्रतीक्ष्योऽर्च्यस्तत्संबोधनम् । २ समग्रम् । ३ पृथ्वीभारम् । ४ आगच्छेयम् ।

प्राग्जन्मावधिना ज्ञात्वा तौ विमानं विकृत्य च । उपेयतुर्मेघरथं पूर्वजन्मोपकारिणम् ॥ १७० ॥
भक्तिभाजौ मेघरथं तौ प्रणम्यैवमूचतुः । अद्यैवावां त्वत्प्रसादादभूव व्यंतरेश्वरौ ॥ १७१ ॥
मर्त्याविभौ[1] सैरिभौ[2] च मेषौ तदनु कुर्कुटौ । एतत्प्रकर्ष[3]जन्मानावभूवावां स्वकर्मभिः ॥ १७२ ॥
कुर्कुटत्वे त्वहरहर्निःसंख्यकृमिभोजनौ । आप्स्यावः कां गतिं नाथाभविष्यः शरणं न चेत् ॥ १७३ ॥
प्रसीदानुग्रहाणैतद्विमानमधिरुह्य च । विश्वां विश्वंभरां पश्य ज्ञानेन ज्ञातपूर्व्यपि ॥ १७४ ॥
इत्थमभ्यर्थितस्ताभ्यां दाक्षिण्यक्षीरसागरः । तदारोहन्मेघरथो विमानं सपरिच्छदः ॥ १७५ ॥
उत्पपात विमानं तच्चचाल च मनोगति[4] । अंगुल्या दर्शयन्तौ तौ दृश्या[5]न्येनमशंसताम् ॥ १७६ ॥
वैडूर्यमय्यसौ भाभिर्दूर्वांकुरितदिङ्मुखा । चत्वारिंशद्योजनोच्चा चूला मेरुमहागिरेः ॥ १७७ ॥
अस्याः प्रतिदिशं चार्धचंद्राकाराः शिला इमाः । अर्हज्जन्माभिषेकांभःपुण्याः सिंहासनांकिताः ॥१७८॥
इमान्यायतनान्युच्चैः स्वामिनां शाश्वतार्हताम् । तदर्चाचरितार्थद्रुपुष्पमेतच्च पांडकम् ॥ १७९ ॥
अमी वर्षधराः शैलाः षट्सु षडमी ह्रदाः । चतुर्दशमहासिन्धुसीमंतितमहीतलाः ॥ १८० ॥
अद्र्योऽमी च वैताढ्या आढ्या विद्याधरर्द्धिभिः । स्वस्वक्षेत्रार्धमर्यादाशिलाभित्तिसहोदराः ॥ १८१ ॥
अमीषामपि कूटेषु सिद्धचैत्यान्यमूनि च । प्रतिमाभिः सनाथा[6]नि श्रीमतां शाश्वतार्हताम् ॥ १८२ ॥
इयं च जगती[7] जंबूद्वीपस्य वलयाकृतिः । उत्तुंगजालकटकैर्विद्याधरविलासभूः ॥ १८३ ॥

---

१ गजौ । २ महिषौ । ३ एतद्व्यंतरेश्वररूपं प्रकृष्टं जन्म ययोस्तौ । ४ मनोवद्गमनं यस्य तत् । ५ दृश्यवस्तूनि । ६ सहितानि । ७ दुर्गः ।

भुजंगभूषणाः केचित्केचिन्नकुलभूषणाः । दीपित्व[1]ग्वसनाः केऽपि व्याघ्रत्वग्वाससोऽपरे ॥ १९८ ॥
भस्मांगरागाः केचिच्च केचिद्रक्त[2]विलेपनाः । उलूकोत्तंसिनः केचित्केचिद्गृध्रावतंसिनः ॥ १९९ ॥
आखुस्रग्मालिनः केचित्केचित् सरटमौ[3]लिनः । मुंडमालाधराः केऽपि केऽपि कंकाल[4]पाणयः ॥ २०० ॥
कृताट्टहासाः केचिच्च केचित्तुमुलकारिणः । हेषाविधायिनः केचित्केचिद्बृंहितकारिणः ॥ २०१ ॥
करास्फोटकराः केऽपि केऽपि तालप्रदायिनः । मुखा[5]तोद्यकराः केऽपि कक्षावाद्यकृतोऽपरे ॥ २०२ ॥
दलयंत इव क्षोणिं स्फोटयंत इवांबरम् । चारीप्रचारैरुद्दंडं प्रारभन्ताथ तांडवम् ॥ २०३ ॥
॥ अष्टभिः कुलकम् ॥
एवं नरेन्द्रतोषाय यावत्ते ताण्डवं व्यधुः । प्रादुरासीत्तावदेकं विमानवरमंबरे ॥ २०४ ॥
रत्या मनोभव इव युवत्या युत एकया । अन्तस्तस्य पुमानेको ददृशे सुंदराकृतिः ॥ २०५ ॥
प्रियमित्रा ततो देवी जगादैवं महीपतिम् । कोऽयं केयं कुतो हेतोरिह चापततः प्रभो ॥ २०६ ॥
अथ मेघरथोऽशंसज्जंबूद्वीपेऽत्र भारते । वैताढ्यस्योत्तरश्रेण्यामलकेत्यस्ति पूर्वरा ॥ २०७ ॥
तत्र विद्युद्रथो नाम विद्याधरनरेश्वरः । तस्य मानसवेगेति प्रिया चासीत् प्रियंवदा ॥ २०८ ॥
सिं[6]हरथ्यरथस्वभात् कृतसिंहरथाभिधः । तस्यां तस्याभवत्सूनुर्विक्रमोत्फुल्लदोर्द्रुमः ॥ २०९ ॥
कन्यां वेगवतीं नाम प्रकृष्टकुलसंभवाम् । स्वानुरूपामुपायंस्त स चंद्र इव रोहिणीम् ॥ २१० ॥

---

१ चित्रकचर्मवस्त्राः । २ रुधिरविलेपनाः । ३ कृकलासमालावंतः । ४ कंकालमस्थिपंजरः । ५ मुखमेव वादित्रं तस्य कराः । ६ सिंहा एव रथ्यास्तद्युक्तो रथस्तस्य स्वभात् ।

यौवराज्ये निजे राजा तं च विद्युद्रथो न्यधात् । पुत्रे हि कवचहरे युक्तमेतन्महीभुजाम् ॥ २११ ॥

लीलोपवनवाप्यादिस्थानेषु ललनासखः[1] । वने सिंह इव स्वैरं रेमे सिंहरथः सुखम् ॥ २१२ ॥

विद्युद्रथोऽपरेद्युश्च विद्युल्लोलस्वभावकम् । संसारे सकलं ज्ञात्वा परं वैराग्यमासदत् ॥ २१३ ॥

राज्ये सिंहरथं न्यस्य सद्यो विद्युद्रथो नृपः । सर्वसावद्यविरतिं गुरुपादांतिकेऽग्रहीत् ॥ २१४ ॥

संवेगातिशयापन्नः संयमैर्नियमैरपि । ध्यानेन च विधायाष्टकर्मक्षयमगाच्छिवम् ॥ २१५ ॥

राजा सिंहरथोऽप्युद्यत्प्रतापस्तपनोपमः[2] । स विद्याधरचक्रित्वमाससाद दुरासदम् ॥ २१६ ॥

निशायां सोऽन्यदा दध्यौ विनिद्र इव योगवित् । अरण्ये मालतीपुष्पस्येव जन्म मुधा मम ॥ २१७ ॥

अर्हतः समवसृतान् केवलज्ञानिनः प्रभून् । भवांभोधिमहापोतान्नापश्यं तान्न चार्चयम् ॥ २१८ ॥

पावयामि तदात्मानं दृष्ट्वा साक्षाज्जिनेश्वरम् । तद्दर्शनं ह्येकदापि सुस्वप्न इव कामधुक् ॥ २१९ ॥

इत्थं विचिंत्य स द्वीपे धातकीखंडनामनि । पश्चिमेषु विदेहेषु सीतोदोत्तररोधसि ॥ २२० ॥

सूत्राभिधाने विजये पुरे खड्गपुराभिधे । गत्वार्हन्तं समं पत्न्या ददर्शामितवाहनम् ॥ २२१ ॥

॥ युग्मम् ॥

प्रणम्य भगवन्तं तं सोऽश्रौषीन्मेदिनीपतिः । भवांभोधितरीकल्पामनल्पां[3] धर्मदेशनाम् ॥ २२२ ॥

आकर्ण्य देशनां तां च दुःखानलजलच्छटाम् । नत्वाचार्हन्तमचलत् स निजां नगरीं प्रति ॥ २२३ ॥

अत्रोर्ध्वं गच्छतश्चास्य बभूव स्खलनं गतेः । दृढवेत्रवनाकीर्णे पोतस्येव पयोनिधौ ॥ २२४ ॥

---

१ ललनासहचरः । २ सूर्योपमः । ३ भवसागरे नौसदृशीम् ।

गतिर्मे स्खलिता केनेत्यथ ज्ञातुमधो दृशम् । न्यधाद्यावदसौ तावदद्राक्षीन्मामिह स्थितम् ॥ २२५ ॥
सकोपाटोपमेषोऽथ मामुद्धेतुमुपासरत् । आक्रम्यत मया चायं वामो वामेन पाणिना ॥ २२६ ॥
ररास विरसं चैष सिंहाक्रान्त इव द्विपः । तन्नार्या सपरीवारा प्रपन्ना शरणं च माम् ॥ २२७ ॥
ततो मयामुच्यतायं मुक्तश्च पुरतो मम । विकृत्य नाना रूपाणि संगीतमकरोदिदम् ॥ २२८ ॥
भूयोऽपि प्रियमित्रोचे प्रिय पूर्वभवेऽमुना । किं कृतं कर्म येनैषा ऋद्धिरस्य महीयसी ॥ २२९ ॥
आख्यन्मेघरथोऽप्येवं पुष्करार्धस्य भारते । पूर्वस्मिन् विद्यते संघपुरं नाम महापुरम् ॥ २३० ॥
राज्यगुप्तोऽभिधानेन तत्रासीत् कुलपुत्रकः । दुःस्थः सदा परकर्मकरणोत्पन्नभोजनः ॥ २३१ ॥
शंखिका नाम तस्यानुरक्ता भक्ता च पत्न्यभूत् । उभावपि हि चक्राते कर्माणि परवेश्मसु ॥ २३२ ॥
अन्येद्युश्च फलार्थं द्वावपि नानाद्रुमाकुलम् । संभूय जग्मतुः संघगिरिं नाम महागिरिम् ॥ २३३ ॥
तस्मिन् वनफलार्थं तौ पर्यटन्तावपश्यताम् । कुर्वाणं देशनां सर्वगुप्तं नाम महामुनिम् ॥ २३४ ॥
विद्याधरसभामध्यमध्यासीनमुपेत्य तम् । तौ नमश्चक्रतुर्भक्त्या पुरतश्च निषेदतुः ॥ २३५ ॥
तयोर्विशेषतो धर्मं दिदेश स मुनीश्वरः । दुःस्थितेषु हि महतां वात्सल्यमतिरिच्यते ॥ २३६ ॥
देशनांते महर्षिं तं तौ प्रणम्यैवमूचतुः । पापयोरपि नौ पुण्यमेतद्दृष्टोऽसि यत्प्रभो ॥ २३७ ॥
स्वयं विश्वजनीनोऽसि तथाप्यार्तैस्त्वमर्थ्यसे । अस्मदर्थं तपः किंचिज्जगदर्ह्य समादिश ॥ २३८ ॥
तद्योग्यतानुसारेण सर्वगुप्तो महामुनिः । द्वात्रिंशत्कल्याणकाख्यमादिदेश तपस्तयोः ॥ २३९ ॥

१ अधमः । २ दुरवस्थः । ३ विश्वहितः । ४ जगत्पूज्य ।

तथेति प्रतिपद्योभौ गत्वा स्वौकसि चक्रतुः । द्वे त्रिरात्रे चतुर्थानि द्वात्रिंशदिति तत्तपः ॥ २४० ॥
पारणस्य च समये द्वारे प्रक्षिप्य चक्षुषी । गवेषयामासतुस्तौ कंचिदप्यतिथिं मुनिम् ॥ २४१ ॥
साधुं धृतिधरं नाम प्रविशंतमपश्यताम् । प्रत्यलाभयतां चोभौ भक्त्या भक्तोदकादिना ॥ २४२ ॥
अन्यदा विहरंस्तत्र सर्वगुप्तमुनिः पुनः । स आजगाम तत्पार्श्वे धर्मं शुश्रुवतुश्च तौ ॥ २४३ ॥
आददाते परिव्रज्यां सर्वगुप्तमुनेः पुरः । फलं मानुषकल्पद्रोस्तौ विवेकपरायणौ ॥ २४४ ॥
ततश्च राज्यगुप्तर्षिर्विदधे गुर्वनुज्ञया । आचामाम्लवर्धमानाभिधानं दुस्तपं तपः ॥ २४५ ॥
अन्ते चानशनं चक्रे चतुःशरणमाश्रितः । विपद्य ब्रह्मलोकेऽभूद्दशसागरजीवितः ॥ २४६ ॥
ब्रह्मलोकात् परिच्युत्य विद्युद्रथनृपात्मजः । अयं सिंहरथो नाम जज्ञे विद्याधरेश्वरः ॥ २४७ ॥
शंखिका सापि तद्भार्या विधाय विविधं तपः । ब्रह्मलोके सुरो जज्ञे च्युत्वासावस्य पत्न्यभूत् ॥ २४८ ॥
इतः स्वनगरं गत्वा पुत्रं राज्ये विधाय च । पादान्ते मत्पितुर्दीक्षामयमादास्यते सुधीः ॥ २४९ ॥
तपोध्यानादिभिः कृत्वा कर्माष्टकपरिक्षयम् । उत्पन्नकेवलज्ञानः सिद्धिमेष व्रजिष्यति ॥ २५० ॥
श्रुत्वा तद्वचनं मेघरथं नत्वा च भक्तितः । गत्वा च स्वपुरे पुत्रं राज्ये सिंहरथो न्यधात् ॥ २५१ ॥
श्रीमद्धनरथस्वामिपादांते दांतमानसः । परिव्रज्य चरित्वा च तपःसिद्धिमियाय सः ॥ २५२ ॥
राजा मेघरथो देवरमणोद्यानतस्ततः । प्राविशत् सपरीवारो नगरीं पुंडरीकिणीम् ॥ २५३ ॥
अपरेद्युर्मेघरथः पौषधौकसि पौषधी । धर्ममाख्यातुमारेभे जिनाख्यातं विपश्चिताम् ॥ २५४ ॥

---

१ शुद्धमानसः । २ विदुषाम् ।

तस्योत्संगे तदानीं च संजातजयवेपथुः । पारापतः पपातैको मुमूर्षुरिव दीनदृक् ॥ २५५ ॥
अजयं याचमानं तं खगं मानुषजाषया । मा स्म जैषीर्मा स्म जैषीरित्यजाषिष्ट जूपतिः ॥ २५६ ॥
एवमाजाषितस्तस्थौ सुस्थः पारापतस्ततः । बालः पितुरिवोत्संगे राज्ञः कारुण्यवारिधेः ॥ २५७ ॥
जक्ष्यं ममेदं मुंचाशु राजन्निति वदन्नथ । तस्यानुमार्गमेवागाछ्येनोऽहेरिवं पक्षिराट् ॥ २५८ ॥
श्येनमूचे नृपोऽप्येवं नार्पयिष्याम्यमुं तव । क्षत्रियाणां न धर्मोऽयं शरणार्थी यदर्प्यते ॥ २५९ ॥
अपरं च तथापीदं युज्यते न हि धीमतः । परप्राणापहारेण स्वप्राणपरिपोषणम् ॥ २६० ॥
उत्खन्यमाने पिछेऽपि यथा ते जवति व्यथा । अन्यस्यापि जवत्येवं मार्यमाणस्य का कथा ॥ २६१ ॥
जग्धेनाप्यमुना तृप्तिर्जाविनी क्षणमेव ते । सर्वजन्मापहारस्तु पक्षिणोऽस्य जविष्यति ॥ २६२ ॥
पंचेन्द्रियप्राणिवधात्तन्मांसस्य च जक्षणात् । नरके जंतवो यांति सहंते दुःसहां व्यथाम् ॥ २६३ ॥
परत्रात्यंतदुःखाय क्षणमत्र सुखाय च । विवेकवान् कथं हन्यात् प्राणिनं क्षुधितोऽपि हि ॥ २६४ ॥
अपरेणापि जोज्येन क्षुत्पीडा हंत शाम्यति । पित्ताग्निः शर्कराशम्यः पयसा किं न शाम्यति ॥ २६५ ॥
न च प्राणिवधप्राप्तनरकप्रजवा व्यथाः । केनापि हि प्रकारेण शाम्यंति सहनं विना ॥ २६६ ॥
ततः प्राणिवधं मुंच धर्ममेकं समाचर । जवे जवे येन सुखं प्राप्नोषि त्वमसंशयम् ॥ २६७ ॥
मनुष्यजाषया श्येनोऽप्यजाषत महीपतिम् । जवंतं मद्भयादेष कपोतः शरणं ययौ ॥ २६८ ॥

---

१ मर्तुमिच्छुः । २ पक्षिविशेषः "बाज" इति भाषायाम् । ३ गरुडः । ४ खादितेन । ५ शर्करया शम्यते यः पित्ताग्निः स दुग्धेनापि शम्यत इत्यर्थः । ६ विना भोगम् ।

क्षुत्पीडयादतोऽहं तु कं यामि शरणं वद । सर्वेष्वप्यनुकूला हि महान्तः करुणाधनाः ॥ २६९ ॥
यथैनं त्रायसे राजंस्तथा त्रायस्व मामपि । इमे गच्छंति ही प्राणा बुभुक्षाबाधितस्य मे ॥ २७० ॥
धर्माधर्मविमर्शो हि सुस्थितानां शरीरिणाम् । धर्मप्रियोऽपि किं पापं न करोति बुभुक्षितः ॥ २७१ ॥
तद्धर्मवार्तयालं मे भक्ष्यभूतोऽयमर्प्यताम् । क एष धर्मस्त्रातव्य एको मार्यस्तथापरः ॥ २७२ ॥
तृप्तिर्भवेन्महीपाल न च भोज्यांतरैर्मम । सद्यः स्वयंहतप्राणिस्फुरन्मांसाशनो ह्यहम् ॥ २७३ ॥
राजाप्येवमवोचत्तं स्वमांसं ते ददाम्यहम् । तुलयित्वा कपोतेन सुहितीभव मा मृथाः ॥ २७४ ॥
आमेत्युक्तवति श्येने तुलायामेकतो नृपः । कपोतं निदधेऽन्यत्र छित्वा छित्वा स्वमामिषम् ॥ २७५ ॥
उत्कृत्योत्कृत्य मांसं स्वं राजाक्षैप्सीद्यथा यथा । तथा तथा कपोतः स भारेण ववृधेतराम् ॥ २७६ ॥
भारेण वर्धमानं तं कपोतं प्रेक्ष्य भूपतिः । स्वयमेवाध्यारुरोह तुलामतुलसाहसः ॥ २७७ ॥
तुलाधिरूढं राजानं प्रेक्ष्य हाहारवाकुलः । सर्वोऽपि संशयतुलामारुरोह परिच्छदः ॥ २७८ ॥
सामन्तामात्यमुख्याश्चाभ्यधुरेवं महीपतिम् । एतदस्मद्भाग्येन किमारब्धं त्वया प्रभो ॥ २७९ ॥
अनेन हि शरीरेण त्रातव्या सकला मही । एकस्य पक्षिमात्रस्य त्राणे त्यजसि तत्कथम् ॥ २८० ॥
किं च कोऽप्येष मायावी त्रिदशो दानवोऽथवा । न हीदृक् पक्षिमात्रस्य भारः संभवति क्वचित् ॥ २८१ ॥
जगद्भर्यावदेवं ते तावदाविरभूत् पुरः । किरीटी कुंडली स्रग्वी तेजोराशिरिवामरः ॥ २८२ ॥
नृदेवं देव इत्यूचे त्वमेकः पुरुषेष्वसि । न चाल्यसे पौरुषाद्यत् स्वस्थानादिव मंदरः ॥ २८३ ॥

---

१ भोज्यरूपः । २ तृप्तो भव ।

सज्ञायां वर्णयामास त्वामीशानदिवस्पतिः । अहं त्वसहमानस्तत्त्वत्परीक्षार्थमागमम् ॥ २८४ ॥
प्राग्जन्मवैराद्युद्धायोपस्थितौ पक्षिणाविमौ । अपश्यं चाध्यतिष्ठं चाकार्षं चैतत्सहस्व तत् ॥ २८५ ॥
इत्युदित्वा नृपं कृत्वा सज्जं देवो दिवं ययौ । सामन्ताद्याश्च राजानं पप्रच्छुरिति विस्मयात् ॥ २८६ ॥
श्येनपारापतावेतौ कीदृशौ पूर्वजन्मनि । किंहेतु वानयोर्वैरं देवोऽयं प्राग्भवे च कः ॥ २८७ ॥
राजाप्याख्यज्जंबूद्वीपैरवतक्षेत्रमंडनम् । पद्मिनीखंडमित्यस्ति पुरं श्रीपद्मखंडवत् ॥ २८८ ॥
तत्र सागरदत्तोऽभूत् संपदा सागरोपमः । भार्या विजयसेनेति तस्य चासीदनिंदिता ॥ २८९ ॥
संजज्ञाते तयोः पुत्रौ नामतो धननंदनौ । यौवनं च प्रपेदाते वर्धमानौ क्रमेण तौ ॥ २९० ॥
क्रीडाभिर्विविधाभिस्तौ विहरन्तावुभावपि । गमयामासतुः कालं पितृऋद्धिसमुद्धतौ ॥ २९१ ॥
अन्यदा सागरदत्तं तौ प्रणम्यैवमूचतुः । देशान्तरे वणिज्यार्थमावां तात समादिश ॥ २९२ ॥
पित्रापि समनुज्ञाते मुदितेन तदैव तौ । सूनोः पुरुषकारो हि हर्षाय प्रथमं पितुः ॥ २९३ ॥
आदाय विविधं भांडं तौ सार्थेन प्रचेलतुः । प्रापतुश्च क्रमान्नागपुरं नाम महापुरम् ॥ २९४ ॥
तत्र व्यवहरन्तौ तौ श्वानौ भक्ष्यमिवैककम् । किंचिदेकं महामूल्यं महारत्नमवापतुः ॥ २९५ ॥
तौ च शंखनदीतीरे तस्य रत्नस्य हेतुना । युयुधाते मिथः क्रुद्धौ दुर्दान्तौ वृषभाविव ॥ २९६ ॥
युध्यमानौ पेततुस्तावगाधे तन्महाह्रदे । विपेदाते च सद्योऽपि लोभः कस्य न मृत्यवे ॥ २९७ ॥
विपद्य तावुभौ बंधू उत्पेदाते इमौ खगौ । प्राग्जन्मवैरादेवं च वैरायेते इहापि हि ॥ २९८ ॥

१ को हेतुर्यस्य तद्वैरविशेषणम् ।

अन्यच्च जंबूद्वीपेऽस्मिन् प्राग्विदेहविभूषणे । सीताया दक्षिणतटे विजये रमणीयके ॥ २९९ ॥
शुभाख्यायां पुरि नृपोऽभवत्स्तिमितसागरः । तस्येतः[1] पंचमभवेऽभूवं पुत्रोऽपराजितः ॥ ३०० ॥
तदा हि बलदेवोऽहं वासुदेवोऽपि मेऽनुजः । अनन्तवीर्य इत्यासीदयं दृढरथोऽस्ति यः ॥ ३०१ ॥
प्रतिविष्णुस्तदानीं च दमितारिर्महाभुजः । कनकश्रीकन्यकार्थेऽस्माभिर्युधि निपातितः ॥ ३०२ ॥
स भ्रान्त्वा भवकांतारे जंबूद्वीपस्य भारते । अष्टापदगिरेर्मूले निकृत्याः सरितस्तटे ॥ ३०३ ॥
सोमप्रभाभिधानस्य तापसस्य सुतोऽभवत् । बालं तपश्चरित्वाभूत्सुरूपो नामतः सुरः ॥ ३०४ ॥
॥ युग्मम् ॥

सोऽयं सुरोऽस्मत्प्रशंसामीशानेन्द्रेण निर्मिताम् । असहिष्णुः समागच्छद्युधाच्चैतत्परीक्षणम् ॥ ३०५ ॥
तच्छ्रुत्वा वचनं राज्ञो जातजातिस्मृती उभौ । श्येनपारापतौ सद्यो मूर्छया पेततुर्भुवि ॥ ३०६ ॥
राजलोककृतैस्तालवृंतानिलजलोक्षणैः[2] । भूयोऽपि संज्ञां लेभाते तौ प्रसुप्तोत्थिताविव ॥ ३०७ ॥
तौ स्ववाचोचतुर्भूपं साध्वावां ज्ञापितौ त्वया । प्राग्जन्मदुःकृतं स्वामिन्नीदृग्योनिनिबन्धनम् ॥ ३०८ ॥
स्वामिन् शुल्का तदावाभ्यां रत्नं नाम न केवलम् । अतिलोभाभिभूताभ्यां मर्त्यजन्मापि हारितम् ॥ ३०९ ॥
इदानीं नारकं जन्माभवन्निकटमावयोः । निषिद्धावंधवत् कूपात् परमावां ततस्त्वया[3] ॥ ३१० ॥
अतः परमपि स्वामिन्नुन्मार्गाद्रक्ष रक्ष नौ । सन्मार्गमादिश शुभस्थानं येन लभावहे ॥ ३११ ॥
तयोश्च योग्यतां ज्ञात्वावधिज्ञानोर्मिवारिधिः । समादिदेशानशनं कालप्राप्तं महीपतिः ॥ ३१२ ॥

---

१ इतोऽस्माद्भवात् पूर्वं पंचमे भवे । २ उक्षणं सेचनम् । ३ नारकात् ।

प्रपद्य तावनशनं शुभचित्तौ विपद्य च । उत्पेदाते सुरवरौ मध्ये भुवनवासिनाम् ॥ ३१३ ॥
पौषधं पारयित्वा तं राजा मेघरथोऽपि हि । यथावत्पालयन्नुर्वीं तस्थौ न्याय इवांगवान् ॥ ३१४ ॥
कपोतश्येनवृत्तांतमन्यदानुस्मरन्नृपः । परं वैराग्यमापेदे बीजं प्रशमशाखिनः ॥ ३१५ ॥
कृत्वाष्टमतपः सोढुमुपसर्गपरीषहान् । तस्थौ प्रतिमया शैल इव सर्वांगनिश्चलः ॥ ३१६ ॥
ईशानेन्द्रस्तदानीं च मध्येशुद्धांतमासितः । नमो भगवते तुभ्यमिति जल्पन्नमोऽकरोत् ॥ ३१७ ॥
महिष्यस्तस्य पप्रच्छुः कस्मै स्वामिन्नमस्क्रिया । त्वया जगन्नमस्येन विदधेऽत्यंतभक्तितः ॥ ३१८ ॥
ईशानेन्द्रः शशंसैवमर्हद् घनरथात्मजः । नगर्यां पुंडरीकिण्यां सरस्यां पुंडरीकवत् ॥ ३१९ ॥
अयं मेघरथो नाम कृताष्टमतपोनृपः । विशुद्धध्यानमापन्नो महाप्रतिमया स्थितः ॥ ३२० ॥
भावी तीर्थकरश्चैष भरतक्षेत्रमंडनम् । दृष्ट्वा तदेनमेतस्मै नमोऽकार्षमिह स्थितः ॥ ३२१ ॥
ध्यानादस्मादमुं धीरं न हि चालयितुं क्षमाः । सुरासुरगणाः सेन्द्रा अपि मर्त्यादयस्तु के ॥ ३२२ ॥
ईशानेन्द्रमहिष्यौ च सुरूपा चातिरूपिका । असहिष्णू प्रशंसां तां राज्ञः क्षोभार्थमीयतुः ॥ ३२३ ॥
युवतीस्ते विचक्राते लावण्यांभस्तरंगिणीः । दुर्गं वा जंगमं जैत्रमस्त्रं वा मीनलक्ष्मणः ॥ ३२४ ॥
विकारैर्विविधैस्तैस्तैः स्मरोज्जीवनभेषजैः । अनुकूलानुपसर्गानुपचक्रमिरेऽथ ताः ॥ ३२५ ॥
कापि मिथ्या परिक्षिप्तधम्मिल्लोद्बंधनछलात् । आविश्चक्रे भुजामूलं स्मरमूलनिकेतनम् ॥ ३२६ ॥
अर्धस्रंसितसंव्यानं जघनं काप्यदर्शयत् । पिधानपटनिर्यातमिव दर्पणमंडलम् ॥ ३२७ ॥

---

१ अंतःपुरमध्ये । २ इवार्थे वा शब्दः । ३ जयनशीलम् । ४ कामदेवस्य । ५ धम्मिल्लः केशपाशः । ६ संव्यानं वस्त्रम् ।

काचिदालीजनालापव्यपदेशान्मुहुर्मुहुः । भ्रूलतोत्क्षेपमकरोत् स्मरास्त्रोत्क्षेपसन्निभम् ॥ ३२८ ॥
स्मरेतिवृत्तसंदब्धं गांधारग्रामबंधुरम् । मुखदृष्टिविकाराढ्यं जगौ काप्यनुरागिणी ॥ ३२९ ॥
कामशास्त्रकथालापं कापि लीलावती मुहुः । स्वानुभूतरतक्रीडाप्रस्तावनपराकरोत् ॥ ३३० ॥
पित्तादीनां प्रकृतीनामनुरूपाणि धातुना । रतोपज्ञानि करणान्यालिलेखापरा पुनः ॥ ३३१ ॥
ययाचे काचिदालापं करस्पर्शं च काचन । दृष्टिप्रसादं काचिच्च काचिदालिंगनं पुनः ॥ ३३२ ॥
कलाप्रकारान् विविधान् व्यधुरेवं महीपतेः । विज्ञावर्यामाविर्ज्ञातं विकृत्य सुरयोषितः ॥ ३३३ ॥
टंकप्रहारवद्वज्रे मोघीभूतानि भूभुजि । तानि वैक्रियरूपाणि देव्यौ संजह्रतुस्ततः ॥ ३३४ ॥
क्षमयित्वा मेघरथं नत्वा चानुशयान्विते । ईशानेंद्रमहिष्यौ ते निजधामनि जग्मतुः ॥ ३३५ ॥
राजाप्यपारयत्प्रीतः प्रतिमामथ पौषधम् । स्मारं स्मारं निशावृत्तं परं संवेगमासदत् ॥ ३३६ ॥
महादेवी प्रियमित्रा प्रियमालोक्य तादृशम् । सापि संवेगमापेदे सत्यो हि पतिवर्त्मगाः ॥ ३३७ ॥
अथापरेद्युर्विहरन्नर्हन् घनरथः स्वयम् । तत्रेत्य समवासार्षीत् पूर्वोत्तरदिशि प्रभुः ॥ ३३८ ॥
स्वाम्यागमनमाचख्यू राज्ञे चायुक्तपूरुषाः । स पारितोषिकं तेभ्यो दत्त्वागात्सानुजः प्रभुम् ॥ ३३९ ॥
आयोजनविसर्पिण्या सर्वभाषानुयातया । सग्रामरागया वाचा देशनां विदधे विभुः ॥ ३४० ॥
देशनांते जिनपतिं नत्वा भूपतिरब्रवीत् । विश्वत्राणोद्यतोऽसि त्वं नाथ त्रायस्व मामपि ॥ ३४१ ॥

१ फागवृत्तांतग्रथितं । २ रवस्य कामक्रीडाया उपज्ञा प्राथम्यमीदृशानि करणानि चित्राणि । ३ प्रातःकालपर्यंतम् । ४ पति-
मार्गानुसारिण्यः ।

सर्वं जानासि सर्वस्य हितोऽसि च जगत्पते । तथापि प्रार्थये स्वामिन् स्वार्थे क इव नोत्सुकः ॥३४२॥
यावत्कुमारं स्वे राज्ये निधायेहापताम्यहम् । दीक्षादानाय मे नाथ त्वया तावत्प्रतीक्ष्यताम् ॥ ३४३ ॥
न प्रमादो विधातव्य इति शिष्टोऽर्हता स्वयम् । ययौ मेघरथो वेश्मावरजं[1] चेत्यवोचत ॥ ३४४ ॥
आदत्स्व वत्स भूभारं यथा हि प्रव्रजाम्यहम् । भवभ्रमणतोऽमुष्मान्निर्विण्णोऽस्म्येष पान्थवत् ॥३४५॥
ततो दृढरथोऽप्येवं जगाद रचितांजलिः । दुःखैः[2] खल्वेष संसारस्त्याज्य एव विवेकिभिः ॥ ३४६ ॥
अस्मिन्नेवंविधेऽपारे कूपार[3] इव दुस्तरे । आरोप्य धरणीभारं कथं मुंचसि मां प्रभो ॥ ३४७ ॥
आत्माभेदेन[4] मामद्य यावद्दृष्ट्वाधुना पृथक् । किं करोषि प्रसीदेश मामप्यात्मवदुद्धर ॥ ३४८ ॥
अद्यैव तातपादान्ते भवत्पादैः सहैव हि । प्रव्रजिष्याम्यहं स्वामिन्नन्यस्मै दीयतां मही ॥ ३४९ ॥
ततो मेघरथो राज्यं मेघसेने निजात्मजे । यौवराज्यं रथसेने न्यधाद् दृढरथात्मजे ॥ ३५० ॥
ततश्च मेघसेनेन कृतनिष्क्रमणोत्सवः । समं दृढरथेनात्मजन्मनां[5] सप्तभिः शतैः ॥ ३५१ ॥
राज्ञां चतुःसहस्र्या च गत्वा भगवतोऽन्तिके । सर्वसावद्यविरतिं राजा मेघरथोऽग्रहीत् ॥ ३५२ ॥
॥ युग्मम् ॥

परीषहानुपसर्गान् सहमानोऽतिदुःसहान् । त्रिगुप्तिः पंचसमितिर्निराकांक्षो वपुष्यपि ॥ ३५३ ॥
विविधाभिग्रहतपःपरो दृढरथान्वितः । एकादशांगीधरणो धरणीं विजहार सः ॥ ३५४ ॥
॥ युग्मम् ॥

१ अनुजम् । २ दुःखरूपः । ३ समुद्रः । ४ आत्मसदृशेन । ५ पुत्राणाम् ।

विंशत्या स्थानकैरर्हद्भक्तिप्रभृतिभिः शुभैः । कर्मार्हन्नामगोत्रं स दुरुपार्जमुपार्जयत् ॥ ३५५ ॥
सिंहनिःक्रीडितं नाम स कृत्वा दुस्तपं तपः । श्रामण्यं पालयित्वा च पूर्वलक्षमखंडितम् ॥ ३५६ ॥
आरुह्यांबरतिलकं गिरिं गिरिरिव स्थिरः । महात्मा विधिवत् प्रायं चक्रे मेघरथो मुनिः ॥ ३५७ ॥

पूर्णायुरापदथ मेघरथो विमानं सर्वार्थसिद्धिमनुजेन समन्वितोपि ।
तत्रापितामनुबभूवतरां त्रयस्त्रिंशद्यायुरव्ययपदोपपथे सुखानि ॥ ३५८ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये पंचमे पर्वणि
श्रीशांतिनाथदेवीयदशमैकादशभववर्णनो
नाम चतुर्थः सर्गः समाप्तः ॥

---

१ प्रायमनशनम् । आत्रा सहैवानशनं चक्रे मेघरथो मुनिः इति पाठांतरम् ।

# अथ पंचमः सर्गः ।

अथास्य जंबूद्वीपस्य वर्षे भरतनामनि । महर्द्धि कुरुदेशेऽस्ति नगरं हस्तिनापुरम् ॥ १ ॥
शातकुंभमयाः[1] कुंभास्तत्र प्रासादमूर्धसु । कलयंति सदोद्भूतस्थलांभोजवनश्रियम् ॥ २ ॥
तस्मिंश्च परितो भाति दीर्घिका वलयाकृतिः । विमलस्वच्छसलिला प्राकारस्येव दर्पणः ॥ ३ ॥
तत्रोद्यानेषु राजंते सारणीनां[2] तटे तटे । स्निग्धद्रुमा जलादानावतीर्णा इव वारिदाः ॥ ४ ॥
निशि तत्रौकसां रत्नवलभीषु निशाकरः । लिह्यते प्रतिबिंबस्थो दधिपिंडधियौतुभिः[3] ॥ ५ ॥
तच्चैत्येषु प्लुष्यमाणागरुधूमलतास्तताः[4] । खेचरीणां प्रयच्छंति पटवासमयत्नजम् ॥ ६ ॥
तत्राट्टपंक्तौ लक्ष्यंते रत्नमालाः प्रलंबिताः । रत्नसर्वस्वमानीतं सर्वरत्नाकरादिव ॥ ७ ॥
तत्र चैत्येषु भूमिष्ठा ध्वजच्छायाश्चलाचलाः । भांति धर्मनिधानस्य रक्षा[5]विषधरा इव ॥ ८ ॥
इन्द्रनीलावनीकानि[6] वासवेश्मानि तत्र च । दर्शयंति पयःपूर्णक्रीडावापीसमानताम् ॥ ९ ॥
तस्मिन्निक्ष्वाकुवंशाब्धिसुधांशुर्नयनोत्सवः । यशोज्योत्स्नाधौतविश्वो विश्वसेनोऽभवन्नृपः ॥ १० ॥
वज्रागारं शरण्यानामर्थिनां कल्पपादपः । सख्यसंकेतभूः श्रीवाग्देव्यो[7]रपि बभूव सः ॥ ११ ॥

---

१ सुवर्णमयाः । २ क्षुद्रनदीनां । ३ बिडालैः । ४ विस्तृताः । ५ रक्षाकारिणः सर्पा इव । ६ इंद्रनीलमणीनां पृथ्वी येषु तानि । ७ लक्ष्मीसरस्वत्योः ।

विकस्वरैः सुरभिभिः सुंदरं सरसीरुहैः । सरोवरं पयःपूर्णं पद्महृद इवापरः ॥ ३७ ॥
समालिलिंगिषुरिवाभ्रमालामंबरस्थिताम् । उदंचयन्वीचिहस्तानपारो मकराकरः ॥ ३८ ॥
विचित्ररत्नकलशं पताकामालभारि च । विमानं चाप्रतिमानं व्योम्नः प्रासादसन्निभम् ॥ ३९ ॥
सूर्यादिज्योतिषां सृष्टिपुञ्जानामिवोच्चयः । रत्नपुंजोऽम्बरतलं लिंपन्नुरुमरीचिभिः ॥ ४० ॥
अभ्रंलिहाभिः कीलाभिर्जिह्वाभिरिव भूरिभिः । तमःपूरं कवलयन्निर्धूमश्च विभावसुः ॥ ४१ ॥
सुप्तोत्थिता तु सा देवी विश्वसेनाय भूभुजे । तान् स्वप्नान् कथयामास व्याचख्याविति सोऽपि हि ॥
लोकोत्तरगुणः श्रीमांस्त्रैलोक्यत्राणकर्मठः । एभिः स्वप्नैर्महादेवि तव सूनुर्भविष्यति ॥ ४३ ॥
नैमित्तिकैरपि प्रातः पृष्टैरूचे तवात्मजः । चक्री वा धर्मचक्री वा स्वप्नैरेभिर्भविष्यति ॥ ४४ ॥
स्वप्नार्थावेदकान्राजा सत्कृत्य विससर्ज तान् । देवी च रत्नगर्भेव गर्भरत्नं बभार सा ॥ ४५ ॥
प्रागुत्पन्नान्यशिवानि तदा चासन्ननेकशः । उद्वेगरोगमार्यादिकारीणि कुरुमंडले ॥ ४६ ॥
तत्प्रशांत्यै जनश्चक्रे नानोपायानुपायवित् । तानीषदपि नाशाम्यन्नंभोभिर्वाडवाग्निवत् ॥ ४७ ॥
भगवत्यचिराद्देव्याः प्राप्तमात्रेऽपि गर्भताम् । अशाम्यन्नशिवान्यर्हत्प्रभावस्यावधिर्न हि ॥ ४८ ॥
ततो नवसु मासेषु दिनेष्वर्धाष्टमेषु च । ज्येष्ठकृष्णत्रयोदश्यां भरणीस्थे निशाकरे ॥ ४९ ॥
ग्रहेषु चोच्चसंस्थेषु मृगांक इव पूर्वदिक् । मृगांकं कांचनरुचिमचिरा सुषुवे सुतम् ॥ ५० ॥
तदा च क्षणमुद्योतस्त्रिजगत्यप्यजायत । अपि नारकजंतूनां सुखं चाभूतपूर्व्यभूत् ॥ ५१ ॥

---

१ मेघमालाम् । २ कल्लोला एव हस्तास्तानुदंचयन्नूर्ध्वीकुर्वन् । ३ ज्वालाभिः । ४ अग्निः । ५ अशुभानि ।

ततश्च दिक्कुमारीणामासनानि चकंपिरे । अर्हज्जन्मावधिज्ञानादजानन् जहृषुश्च ताः ॥ ५२ ॥
अधोलोकादथाष्टेयुर्दिक्कुमार्योऽर्हदोकसि । नेमुर्जिनेन्द्रं विधिवज्जिनेन्द्रजननीं च ताः ॥ ५३ ॥
देव्यै स्वं ज्ञापयित्वा ता मा भैषीरित्युदीर्य च । संवर्तकानिलेनापनिन्युरायोजनं रजः ॥ ५४ ॥
जिनेंद्रजिनजनन्योरनत्यासन्नदूरतः । गायंत्यस्तद्गुणांस्तस्थुर्गायिन्य इव तास्ततः ॥ ५५ ॥
अष्टोर्ध्वलोकादीयुर्दिग्देव्यः प्राग्विधिपूर्वकम् । विकृत्याब्दान् सिषिचुः क्ष्मां गायंत्योऽस्थुस्तथैव ताः ५६
अष्टेयुः पूर्वरुचकाद्देव्यो दर्पणपाणयः । जिनं जिनांबां नत्वास्थुर्गायंत्यः पूर्वदिश्यथ ॥ ५७ ॥
देव्योऽपाग्रुचकादेयुरष्टौ भृंगारपाणयः । नत्वार्हंतं तदंबां च गायंत्योऽस्थुरपाग्दिशि ॥ ५८ ॥
प्रत्यग्रुचकतोऽष्टेयुर्देव्यो नत्वा जिनाचिरे । गायंत्यस्तद्गुणांस्तस्थुः प्रतीच्यां व्यजनांचिताः ॥ ५९ ॥
उदग्रुचकतोऽप्येत्य देव्योऽष्टौ तौ प्रणम्य च । उदीच्यां चामरभृतस्तस्थुस्तद्गुणगायिकाः ॥ ६० ॥
विदिग्रुचकतोऽप्येत्य चतस्रो दिक्कुमारिकाः । प्राग्वन्नत्वा विदिक्ष्वस्थुर्गायंत्यो दीपपाणयः ॥ ६१ ॥
चतस्रो रुचकद्वीपांतःस्था एत्य प्रणम्य तौ । नालं जिनेंद्रस्य चतुरंगुलोत्कर्षमच्छिदन् ॥ ६२ ॥
खनित्वा विवरं द्रव्यं निधाय तत्र तच्चयधुः । रत्नैर्वज्रैस्तदापूर्याबध्नन् पीठं च दुर्वया ॥ ६३ ॥
सूतिकावेश्मनस्तस्य पूर्वोदग्दक्षिणासु ताः । सचतुःशालानि रंभासदनानि विचक्रिरे ॥ ६४ ॥
नीत्वार्हदम्बिरादेव्यौ दक्षिणे कदलीगृहे । रत्नसिंहासने मध्ये चतुःशालं निवेश्य च ॥ ६५ ॥
दिव्यैः सुरभिभिस्तैलैरभ्यानंजुरुभावपि । ततश्चोद्वर्तयामासुर्गंधद्रव्यैः सुगंधिभिः ॥ ६६ ॥

१ गानकारिण्यः । २ विवरं गर्त्तं । ३ अभ्यंगं चक्रुः ।

प्राग्रंभासदने नीत्वा न्यस्य सिंहासने च तौ । ता देव्योऽस्नपयन् गंधपुष्पशुभ्रोदकैस्ततः ॥ ६७ ॥
द्वावप्यामोच्य दिव्यानि वस्त्रालंकरणानि ताः । उदग्रंभागृहे नीत्वा रत्नसिंहासने न्यधुः ॥ ६८ ॥
गोशीर्षचंदनं क्षुद्रहिमाद्रेराभियोगिकैः । आनाय्याप्लुष्य चावध्नन् रक्षाग्रंथिं द्वयोरपि ॥ ६९ ॥
पर्वतायुर्भवेत्युच्चैर्वदंत्यो जिनकर्णयोः । ताः समास्फालयामासू रत्नपाषाणगोलकौ ॥ ७० ॥
जिनेंद्रजिनजनन्यौ निन्युस्ताः सूतिकागृहे । पर्यंके न्यस्य तस्थुश्च गायंत्यो भगवद्गुणान् ॥ ७१ ॥
तदा चासनकंपेन ज्ञात्वार्हज्जन्म वज्रभृत् । पालकेन विमानेन तत्रागात्सपरिच्छदः ॥ ७२ ॥
नमस्तुभ्यं रत्नकुक्षिधारिणीति वदन्नधात् । शक्रोऽवस्वापनीं देव्या रूपान्तरमथार्हतः ॥ ७३ ॥
पंचरूपस्ततो भूत्वा चतुर्भिरिव दर्पणैः । तत्र चैकेन रूपेण पाणिभ्यां प्रभुमुद्दधे ॥ ७४ ॥
दधानश्चामरे द्वाभ्यां छत्रमेकेन चोज्ज्वलम् । एकेन च पुरो वल्गु वज्रमुल्लालयन् ययौ ॥ ७५ ॥
क्षणाद्गत्वा मेरुशैलेऽतिपांडुकंबलां शिलाम् । सिंहासने निषसाद शक्रांकारोपितप्रभुः ॥ ७६ ॥
तदैवासनकंपेनाच्युताद्या अपि वासवाः । त्रिषष्टिरपि तत्राद्रौ ससंकेता इवाययुः ॥ ७७ ॥
ह्रदिनीनाथह्रदिनीह्रदादिभ्यः समाहृतैः । पयोभिः पूरितैः कुंभैरच्युतोऽस्नपयत् प्रभुम् ॥ ७८ ॥
तं षोडशं तीर्थकरं तीर्थांभः कुंभपाणयः । अन्येऽपि स्नपयामासुर्द्वाषष्टिरपि वासवाः ॥ ७९ ॥
पंचमूर्तिरथेशानो दधौ मूर्त्यैकया प्रभुम् । तिसृभिश्चामराद्यग्रे तस्थौ शूलभृदन्यया ॥ ८० ॥
भर्तुश्चतुर्षु पार्श्वेषु स्फाटिकांश्चतुरो वृषान् । शक्रो विचक्रे सपदि कैकुभ्भासानिवामलान् ॥ ८१ ॥

---

१ परिधाप्य । २ दग्ध्वा । ३ आदिशब्देन छत्रम् । ४ दिक्प्रकाशान् ।

तद्विषाणाग्रनिर्यातैर्वारिभिः स्वामिनं हरिः । स्नपयामास विमलैर्धारायंत्रोत्थितैरिव ॥ ८२ ॥
ममार्ज देवदूष्येण गोशीर्षैर्विलिलेप च । दिव्यालंकारमालाभिरानर्च च हरिः प्रभुम् ॥ ८३ ॥
आरात्रिकमथोत्तार्य स्वामिनो विधिपूर्वकम् । पवित्रं स्तोत्रमारेभे हर्षगद्गदया गिरा ॥ ८४ ॥
भगवन् भवते विश्वजनीनायाद्भुतर्द्धये । संसारमरुमार्गैकच्छायाविटपिने नमः ॥ ८५ ॥
संचितैर्नस्तमस्विन्याः प्रभातसमयो मया । त्वदीयं दर्शनं दिष्ट्याधिगतं परमेश्वर ॥ ८६ ॥
लोचनान्यपि धन्यानि यैर्दृष्टोऽसि जगत्पते । तेभ्योऽपि पाणयो धन्यास्त्वत्संस्पर्शोऽन्वभावि यैः ॥८७॥
विद्याधराणां महर्द्धिश्चक्रवर्ती कदाप्यसि । प्रकृष्टोऽस्येकदा देवो बलदेवोऽसि चैकदा ॥ ८८ ॥
एकदाप्यच्युतेंद्रोऽसि ज्ञानी चक्रभृदेकदा । एकदा त्वं महेंद्रोऽसि ग्रैवेयकविभूषणम् ॥ ८९ ॥
महासत्वोऽवधिज्ञानधरो राजासि चैकदा । सर्वार्थसिद्धालंकारोऽहमिंद्रः पुनरेकदा ॥ ९० ॥
क्व क्व जन्मनि नाभूस्त्वमुत्कृष्टः परमेश्वर । तीर्थकृज्जन्मना त्वद्य पर्याप्ता वर्णना गिरः ॥ ९१ ॥
नेशोऽस्मि त्वद्गुणान् वक्तुं स्वमर्थं किं तु वच्म्यहम् । भवे भवे भवतु मे भक्तिस्त्वत्पादपद्मयोः ॥९२॥
इति स्तुत्वेशमीशानात् पुनरादाय वज्रभृत् । आशु गत्वाचिरादेव्याः पार्श्वेऽमुंचद्यथास्थितिः ॥ ९३ ॥
स्वामिनो दृग्विनोदायोपरि श्रीदामगंडुकम् । देवदूष्ये कुंडले चोच्छीर्षके तु न्यधाद्धरिः ॥ ९४ ॥
अथेत्थं घोषयामास मोघवाग्मघवामरैः । अमरेष्वथ दैत्येषु मानवेष्वपि दुर्मतिः ॥ ९५ ॥

---

१ संचितपापान्येव रात्रिस्तस्याः ।

राजकन्या नरपतिः शांतिना पर्यणाययत् । पुत्रोत्साहोत्सवानां हि न तृप्यंति महत्त्वेयः ॥ ११०॥
पंचविंशत्यब्दसहस्रांते शांतिं महीपतिः । राज्ये न्यधान्निजं कार्यमन्वतिष्ठत् स्वयं पुनः ॥१११॥
यथावत् पालयामास वसुधां विश्वसेनसूः । महतामवतारो हि विश्वपालनहेतवे ॥ ११२ ॥
रेमे पाणिगृहीतीभिरचिरानंदनोऽपि हि । निकाचितं भोगफलं भोग्यं कर्मार्हतामपि ॥ ११३ ॥
सर्वान्तःपुरमूर्धन्या तस्य पत्नी यशोमती । स्वप्नेऽपश्यन्मुखे चक्रं विशदस्रोन्तरकेयत् ॥ ११४ ॥
तदा विमानात् सर्वार्थात् पूरयित्वायुरात्मनः । जीवो दृढरथस्यैतस्याः कुक्षावथावातरत् ॥ ११५ ॥
तदानीमेव सा सुप्तोत्थिता देवी यशोमती । नाथाय शांतिनाथाय तमाख्यत् स्वप्नमात्मनः ॥ ११६ ॥
ज्ञानत्रयधरः शांतिस्वामी व्याख्यादिदं ततः । आसीद्दृढरथो नाम मम जन्मांतरेऽनुजः ॥ ११७ ॥
च्युत्वा विमानात् सर्वार्थात् स इदानीं तवोदरे । अवातारीत्तनूजं तं समये प्रसविष्यसे ॥ ११८ ॥
तदानीवं वचः पत्युः प्रगेऽब्दस्येव गर्जितम् । श्रुत्वा प्रमुदिता देवी सद्यो गर्भं बभार तम् ॥ ११९ ॥
काले च सुषुवे पुत्रं पवित्रं पूर्णलक्षणम् । देवी यशोमती पत्युः प्रतिबिंबमिवाद्भुतम् ॥ १२० ॥
गर्भस्थेऽस्मिन् यशोमत्या स्वप्ने यच्चक्रमीक्षितम् । तेन चक्रायुध इति तस्य नामाकरोत् पिता ॥ १२१ ॥
चक्रायुधोऽपि ववृधे करिपोत इव क्रमात् । धात्रीभिर्लाल्यमानः सन्नृलोकतिलकोपमः ॥ १२२ ॥
यौवनं युवतीवर्गविलोचनविमोहनम् । अनंगक्रीडोपवनं प्राप चक्रायुधः क्रमात् ॥ १२३ ॥
स्वयंवराः श्रिय इव रूपलावण्यशालिनीः । अनेकशो राजपुत्रीः पिता तेनोदवाहयत् ॥ १२४ ॥

---

१ मार्याभिः । २ मेघांतः सूर्यवत् । ३ वत्सम् । ४ प्रातःकाले ।

श्रीमतः शांतिनाथस्य राज्यं पालयतः सतः । व्यतियांति स्म वर्षाणां सहस्राः पंचविंशतिः ॥ १२५ ॥
शांतेरथास्त्रशालायां विशालज्योतिराजितम् । अभूच्चक्रमुपपादशय्यायामिव निर्जरः ॥ १२६ ॥
तस्य चाकारयत् स्वामी चक्रस्याष्टाह्निकोत्सवम् । पूजामाचारपूज्यस्य पूज्या अपि हि कुर्वते ॥ १२७ ॥
तच्चक्रमस्त्रशालायाः पयोराशेरिवार्यमा । चचाल पूर्वाभिमुखं मुखं दिग्विजयश्रियः ॥ १२८ ॥
अरैरिव सहस्रेण यक्षैस्तत्समधिष्ठितम् । अन्वचालीन्महीपालः सैन्यच्छन्नमहीतलः ॥ १२९ ॥
दिने दिने योजनं तद्गत्वा चक्रमवास्थित । द्वादशयोजनायामं कृत्वा च शिबिरं प्रभुः ॥ १३० ॥
एवं दिने दिने गच्छन्नछिन्नं[1] विश्वसेनसूः । आसदन्मागधं तीर्थं पूर्वाब्धिमुखमंडनम् ॥ १३१ ॥
स्कन्धावारं दृढस्कंधः श्रीशान्तिस्तस्य रोधसि । अलब्धमध्यमंभोधिमिव सद्यो न्यवीविशत् ॥ १३२ ॥
ततो मागधतीर्थाभिमुखं सिंहासनोत्तमे । जिगीषुरप्यनाबद्धविकारो[2] न्यषदत् प्रभुः ॥ १३३ ॥
तदा द्वादशयोजन्यां तस्थुषो मागधेशितुः । सिंहासनं तदा सद्यः खंजपादमिवाचलत् ॥ १३४ ॥
अथ संचिन्तयामास मनसा मागधेश्वरः । किमपूर्वमिदमहो चलितं यन्ममासनम् ॥ १३५ ॥
किं नु च्यवनकालो मे संप्रत्ययमुपस्थितः । ऋद्धिं ममासहिष्णुः किं कोऽप्यचालयदासनम् ॥ १३६ ॥
एवमुत्पन्नसंदेहः प्रयुक्तावधिनाथ सः । अज्ञासीदागतं शांतिं चक्रिणं धर्मचक्रिणम् ॥ १३७ ॥
भूयो मागधतीर्थाधिपतिरेवमचिंतयत् । अज्ञानचिंतितमिदं धिगहो मे शिशोरिव ॥ १३८ ॥
अयं हि षोडशस्तीर्थकरश्चक्री च पंचमः । मां प्रत्यस्त्येवमासीनोऽनुकंपागलितः[3] प्रभुः ॥ १३९ ॥

१ सततप्रयाणेनेत्यर्थः । २ निर्विकारः । ३ कृपापूर्णः ।

त्रि[1]जगत्त्राणसंहारक्षमदोष्णो जगत्पतेः । पुरस्तादस्य कोऽस्म्येष खद्योत इव भास्वतः ॥ १४० ॥
अच्युतेन्द्रादयो यं च पदातिवदुपासते । तस्मिन् भक्तिं करिष्यामि कीदृशीमहमीदृशः ॥ १४१ ॥
तथापि हि जगन्नाथममुं स्वयमिहागतम् । वाससो दशे[2]येन्दुमर्चयामि स्वसंपदा ॥ १४२ ॥
इति निश्चित्य मनसा गृहीत्वोपायनं महत् । नाथो मागधतीर्थस्य शांतिनाथमुपास्थित ॥ १४३ ॥
सोऽन्तरिक्षस्थितो नाथं प्रणम्यैवमवोचत । दिष्ट्या मां त्रिजगन्नाथान्वग्रहीः पत्तिमात्रकम् ॥ १४४ ॥
एषोऽस्मि शासनधरः पूर्वदिक्पालकस्तव । दुर्गपाल इवादेश्यस्त्वया स्वामिन्नहर्निशम् ॥ १४५ ॥
एवमुक्त्वा नमस्कृत्य सोऽर्पयामास भक्तितः । दिव्यालंकारवस्त्राणि शय्यापाल इव प्रभोः ॥ १४६ ॥
श्रीशांतिरपि सत्कृत्य गीर्वाणं विससर्ज तम् । प्रतस्थे चक्ररत्नं च दक्षिणाभिमुखं ततः ॥ १४७ ॥
दक्षिणांभोनिधेरोधस्यरुद्धप्रसरः प्रभुः । चक्रमार्गानुगोऽथागादगाधभुजविक्रमः ॥ १४८ ॥
उद्दिश्य वरदामानमनाक्षेपो जगत्पतिः । तीरे नीरनिधे रत्नसिंहासन उपाविशत् ॥ १४९ ॥
ज्ञात्वा चावधिनायातं वरदामपतिः प्रभुम् । गृहीतोपायनोपायोऽपा[3]यरक्षार्थमाययौ ॥ १५० ॥
सोऽपि नाथं नमस्कृत्य तस्यासेवां प्रतीक्ष्य च । उपायनमुपानैषीद्दिव्यालंकरणादिकम् ॥ १५१ ॥
सप्रसादं तमालप्य विससर्ज जगत्पतिः । चक्ररत्नमचालीच्च प्रति प्राचे[4]तरां दिशम् ॥ १५२ ॥
नागवल्लीवनाबद्धपूगद्रुमसमाकुले । प्रतीच्यजलधेः सै[5]कंधे स्कंधावारं न्यधाद्विभुः ॥ १५३ ॥

---

१ त्रिजगतां रक्षणे नाशे च समर्थबाहोः । २ वस्त्रस्योभयप्रांततंतुर्दशेत्युच्यते । ३ अपायात् नाशाद्रक्षायै रक्षसेति यावत् गृहीतमुपायनं तद्रूप उपायो येन सः । ४ पश्चिमायाम् । ५ तीरे ।

चलितासनः प्रभासपतिः सिंहासनस्थितम् । एत्य श्रीशांतिमानर्च प्रतीयेष च शासनम् ॥ १५४ ॥
सिंधुदेवीमथोद्दिश्य पश्चिमोत्तरवर्त्मना । चक्रं प्रतस्थे तन्मार्गानुगः शांतिरपि प्रभुः ॥ १५५ ॥
निकषा[2] सिंधुं सदनं दक्षिणे सिंधुरोधसि । स्वामी न्यधत्त शिबिरं चलन्नगरसंनिभम् ॥ १५६ ॥
सिंहासनमथाध्यास्य सिंधुं मनसिकृत्य च । तस्थौ तत्संमुखः स्वामी योगीवाकृष्टितत्परः[3] ॥ १५७ ॥
आयातं स्वामिनं ज्ञात्वावधिना सिंधुदेव्यपि । उपात्तोपायना सद्यो भक्तितस्तमुपाययौ ॥ १५८ ॥
सा शांतिस्वामिनं नत्वा जगादैवं कृतांजलिः । आदेशकारिणी देशेऽस्मिन्नस्मि पृतनेव[4] ते ॥ १५९ ॥
इत्युक्त्वा सार्पयामास भक्तिप्रह्वा[5] जगत्पतेः । रत्नस्वर्णस्नानपीठकलशान् भूषणादि च ॥ १६० ॥
ततश्चचाल तच्चक्रं सानीकैः[6] शांतिचक्र्यपि । दिशोदक्पूर्वयापच्च वैताढ्योपत्यकाभुवम् ॥ १६१ ॥
श्रीशांतिस्वामिनस्तत्र वैताढ्याद्रिकुमारकः । प्राभृतान्यर्पयामास बभूव च वशंवदः ॥ १६२ ॥
चक्रमार्गानुगः स्वामी तमिस्रां निकषा गुहाम् । जगाम विदधे चाशु कृतमालामरं वशे ॥ १६३ ॥
श्रीशांतिशासनात् सिंधुनदीमुत्तीर्य चर्मणा । सेनानीः साधयामास सिंधोर्दक्षिणनिष्कुटम् ॥ १६४ ॥
ततश्चोद्घाटयामास तमिस्रां पृतनापतिः । कपाटौ ताडयन् दंडरत्नेनामोघशक्तिना ॥ १६५ ॥
गजरत्नं समारूढः प्ररूढप्रौढविक्रमः । तस्यां गुहायां सबलस्वामी सिंह इवाविशत् ॥ १६६ ॥
दक्षिणे कुंभिनः कुंभे मणिरत्नं तमश्छिदे[7] । उदयाज्ञाविवादित्यं विदधे विश्वसेनसूः ॥ १६७ ॥

---

१ अंगीचकार । २ समीपे । ३ आकर्षणतत्परः । ४ सेना । ५ भक्तिनम्रा । ६ ससैन्यः । ७ तमसश्छेदार्थं ।

काकिणीरत्नमादाय पाणिनोन्नयतः प्रभुः । क्रमादेकोनपंचाशन्मंडलान्यालिखन् ययौ ॥ १६८ ॥
ततो वर्धकिरत्नेन गुहारथ्यांतरस्थयोः । स्वाम्युन्मग्नानिमग्नाख्यनद्योः[1] पद्यामबंधयत् ॥ १६९ ॥
उत्ततार तरंगिण्यौ दुस्तरे अपि पद्यया । शांतिनाथः ससैन्योऽपि सर्वमप्यृजु दोष्मताम् ॥ १७० ॥
गुहाया उत्तरद्वारं स्वयमुद्घघटे क्षणात् । प्रभावात् स्वामिनः प्रातः पद्मिनीकोशवद्भवेः ॥ १७१ ॥
तस्या गुहाया द्वारेण ससैन्यस्तेन निर्ययौ । सर्वत्रास्खलितो मार्गः प्रभूणां श्रोतसामिव ॥ १७२ ॥
गुहाया निःसृतं तस्याः ससैन्यं प्रेक्ष्य चक्रिणम् । म्लेच्छाः संभूय संभूय सोपहासमदोऽवदन् ॥ १७३ ॥
अरे रे कोऽयमायातोऽप्रार्थितप्रार्थकोऽधुना[2] । अस्मद्देशे सिंहयूथाक्रांतारण्य इव द्विपः ॥१७४ ॥
यथेष्टमुड्डीकमाना[3] उटंमन्याः पदातयः । धूलीधूसरसर्वांगाः के त्वमी रासभा इव ॥ १७५ ॥
आरूढकरिणः केऽमी वृक्षस्थाः प्लवगा[4] इव । केऽमी च तुरगारूढास्तरंगस्था इवाटयैः[5] ॥ १७६ ॥
अमी किं पंगव इवाधिरूढाः स्यंदनेषु च । अंगारशकटीप्रायमयःखंडमिदं च किम् ॥ १७७ ॥
अहो एषामनालोच्यकारित्वमसुमेधसाम्[6] । संभूयैर्निर्यदारेभ्ने शृगालैरिव जागरः ॥ १७८ ॥
अथवैतानुपेक्ष्यालं विषं वैरी ह्युपेक्षितः । वयमेतान् हनिष्यामः काकोलाः[7] शलभानिव ॥ १७९ ॥
एवमन्योऽन्यमुक्त्वा ते विविधायुधपाणयः । प्रावर्तताग्रसैन्येन योद्धुं श्रीशांतिचक्रिणः ॥ १८० ॥
निजघ्नुः परिघैः केऽपि वल्मीकानिव कुंजरान् । गदाभिः स्यंदनानेकेऽपिंषन् घटकपालवत् ॥ १८१ ॥

---

१ सेतुम् । २ अप्रार्थितस्य मृत्योः प्रार्थयिता । ३ उत्प्लुत्यमानाः । ४ वानराः । ५ मत्स्याः । ६ अशोभना बुद्धिर्येषां ते मूर्खा इत्यर्थः । ७ काकविशेषाः ।

शरशूलैः केऽपि विद्धाश्वान् श्वाविध[1] इव न्यधुः । शल्यैरकीलयन् पत्तीन् केऽपि मंत्रैः परेतवत्॥१८२॥
इत्थं विचित्रं निघ्नंतस्तन्वंतस्तुमुलं महत् । वारंवारं करास्फोटं कुर्वाणाः सिंहनादिनः ॥ १८३ ॥
उच्छलंतो दुर्ललिताः किराताः प्लवगा इव । अग्रसैन्यं वनमिवाभांक्षुस्ते चक्रवर्तिनः ॥ १८४ ॥
सैन्यानां जातभंगेन श्रीशांतेः पृतनापतिः । हुताशन इवाहुत्या दीप्यमानोऽतित्विषः ॥ १८५ ॥
कृतांत इव संनद्धः खड्गरत्नं करेऽदधत् । अश्वरत्नं समारुह्य किरातान् प्रत्यधावत ॥ १८६ ॥
॥ युग्मम् ॥

सेनानीवाजिनिस्त्रिंशास्त्रीणि रत्नानि तानि तु । संयुक्ताः समलक्ष्यंत त्रयोऽग्नय इवैकतः ॥ १८७ ॥
गरुडः पादचारीव पाटयन्निव भूतलम् । सेनान्यो मनसा तुल्यं प्रससार स वाजिराट् ॥ १८८ ॥
सादिनः पत्तयो वापि किराताः स्थातुमग्रतः । न ह्यलंभूष्णवोऽभूवन्नघोघस्येव शाखिनः ॥ १८९ ॥
रंध्रेषु केऽप्यडुर्कंपां केऽपि कुंजेषु लिह्यिरे । गिरिषु प्राविशन् केऽपि दुडुवुः[2] केऽपि वारिषु ॥ १९० ॥
तत्यजुः केचिदस्त्राणि स्ववस्त्राण्यपरे जहुः । मृतीभूयेव केऽप्यस्थुर्निश्चेष्टं लुठिता भुवि ॥ १९१ ॥
केषांचिद्बाहवः पेतुः शाखा इव महीरुहाम् । शिरांसि च फलानीव दलानीव करा अपि ॥ १९२ ॥
दंता निपेतुः केषांचित् केषांचिच्चरणाः पुनः । केषांचित् पुस्फुटुस्तुच्छपात्रवच्च करोटयः[3] ॥ १९३ ॥
सेनान्यामश्वरत्नेन गाहमाने रणार्णवम् । किं किं विपत्तये नासीद्विद्विषां यादसामिव ॥ १९४ ॥
एवमालोकितास्तेन ते किराताः क्षणादपि । जग्मुर्दिशो दिशं सर्वे पवनोद्धूततूलवत् ॥ १९५ ॥

१ भाषायां "शाहुडी" इति । २ निममज्जुः । ३ करोटिः शिरोऽस्थि ।

ते योजनानि भूयांसि गत्वैकत्रामिलन्नथ । मंत्रयांचक्रिरे चैवममर्षव्रीडपीडिताः ॥ १९६ ॥
अहो किमिदमस्माकमाकस्मिकमुपस्थितम् । यत्कश्चिदेष वैताढ्यं लंघित्वेह समाययौ ॥ १९७ ॥
तत्रापि चातिमात्रेण सैन्येनानन्यसन्निभः । छादयामास नः पृथ्वीमुद्वेल इव वारिधिः ॥ १९८ ॥
पदातिमात्रं तस्यापि कोऽप्येकांगोऽयमुद्भटः । भटोऽस्मान् कुट्टयामास चिरं सुभटमानिनः ॥ १९९ ॥
अन्योऽन्यस्यापि जिह्रीमः प्राक्शौर्यो[1]च्छूनबाहवः । अतः परं मुखमपि न स्वं दर्शयितुं क्षमाः ॥२००॥
अधुना प्रविशामः किं दीप्यमानहुताशनम् । झंपां दद्मोऽथवा मर्तुं गिरिशृंगाद्गरीयसः ॥ २०१ ॥
स्वयं कवलयामः किं कालकूटं समुत्कटम् । दोलावल्लंबयामः किं बद्ध्वा स्वं शाखिमूर्धसु ॥ २०२ ॥
स्वोदरं दारयामः किं शस्त्री[3]भिर्जीर्ण[4]चीरवत् । दशनैः खंडयामः किं जिह्वामैर्वारु[5]खंडवत् ॥ २०३ ॥
येन तेन प्रकारेण मरणं शरणं हि नः । एवं पराभवाक्रांतः को मानी जीवितुं क्षमः ॥ २०४ ॥
यदि वैक उपायोऽस्ति परेषां साधनाय नः । आह्वयामो वयं मेघ[6]मुखान् स्वकुलदेवताः ॥ २०५ ॥
क्षीणोपायविशेषाणां क्षीणपौरुषसंपदाम् । परैराक्रम्यमाणानां शरणं कुलदेवताः ॥ २०६ ॥
इति निश्चित्य सर्वेऽपि सिंधो रोधसि ते ययुः । चक्रिप्रतापसंतप्ता मिमंक्षव[7] इवांभसि ॥ २०७ ॥
दीना दिग्वासस[8]ः सर्वे ते तत्रोत्तानशायिनः । तस्थुर्हारितसर्वस्वा द्यूतकारनरा इव ॥ २०८ ॥
एवं स्थितास्ते संभूय प्रसादाय पयोमुचाम् । अकार्षुरष्टमतपो भक्तिग्राह्या हि देवताः ॥ २०९ ॥

---

१ पीनबाहवः । २ अंझः । ३ छुरिकाभिः । ४ जीर्णवस्त्रवत् । ५ इर्वारुः भाषायां "काकडी" इति ख्यातः । ६ मेघादीन् । ७ मंक्तुमिच्छवः । ८ नग्नाः ।

तपोऽन्तेऽब्दमुखा देवाः प्रादुर्भूता दिवि स्थिताः । ऊचुर्मा भैष्ट मा भैष्ट वत्साः का वोऽर्तिरुच्यताम् ॥ २११ ॥
म्लेछा अप्यूचिरे चक्री कश्चिदेष निहंति नः । तद्भयादिह नष्टाः स्मः काकनाशमिमे वयम् ॥ २१२ ॥
त्रायध्वं भगवन्तोऽब्दास्त्रातारो यूयमेव नः । उन्मूढे हि प्लुते प्रायेणैकः शरणमर्यमा ॥ २१३ ॥
म्लेछानप्यादिशन् देवा मेधास्या अद्य वो रिपून् । आप्लाव्याब्भिर्दनिष्यामः शीतलेनापि मृत्युना ॥ २१४ ॥
शांतिसैन्येऽम्बुधाराभिरार्थैसैर्मुसलैरिव । कर्तुमारेभिरेऽथाब्दा महीमेकार्णवामिव ॥ २१५ ॥
आप्लाव्यमानं सलिलेनालोक्य शिबिरं निजम् । चक्रभृत् पंचमश्चर्मरत्नं पस्पर्श पाणिना ॥ २१६ ॥
तच्चर्मरत्नं ववृधे सद्यो द्वादशयोजनीम् । सेवालजालडिंडीरैर्पिंरूवच्चातरत्तराम् ॥ २१७ ॥
श्रीशांतिशासनात्तत्र चर्मरत्नेऽखिलं बलम् । आरुरोहोडुप इव निकीलित इव स्थिरे ॥ २१८ ॥
चर्मवत् पाणिना स्पृष्ट्वा कृत्वा द्वादशयोजनीम् । सैन्योपरि छत्ररत्नमतनोच्छांतिचक्रभृत् ॥ २१९ ॥
छत्रस्य दंडमूले च गवाक्ष इव दीपकम् । मणिरत्नं न्यधाद्ध्वांतध्वंसाय नृशिरोमणिः ॥ २२० ॥
उप्ताः प्रभाते मध्याह्ने निष्पन्नास्तत्र शालयः । सैन्यैर्बुभुजिरे गेहिरत्नस्य महिमा ह्ययम् ॥ २२१ ॥
तस्थावहानि सप्तैवं ससैन्यः शांतिचक्रभृत् । सांयात्रिक इवांभोधौ तस्मिन्नेकजलेऽपि हि ॥ २२२ ॥
तस्याथ किंकरसुराः कुपिताः शस्त्रधारिणः । इत्यूचिरे मेघमुखकुमारांस्त्रिदिवौकसः ॥ २२३ ॥
अरे किमेतदारब्धमविमृश्य विधायिनः । स्वशक्तिं परशक्तिं च न जानीथ हताशयाः ॥ २२४ ॥
अभ्रंलिहाग्रशिखरः सुवर्णशिखरी क्व च । जानुदघ्ना वामलूराः क्व च मृद्वाखुकामयाः ॥

१ नष्टे । २ मेघमुखाः । ३ लोहमयैः । ४ डिंडीरः समुद्रफेनम् । ५ नौकायाम् । ६ मेरुः । ७ वल्मीकाः ।

जगद्द्योती क्क मार्तंडः क्क च खद्योतपोतकाः । क्क स्थामधाम गरुडो निःसाराः शलभाः क्क च ॥२२५॥
क्क नागराजो भूधर्ता वराकाः क्क च राजिलाः । स्वयंभूरमणः क्वाब्धिः क्क च श्रोतांसि वेश्मनाम् ॥२२६॥
क्वैष चक्रधरस्तीर्थकृच्च त्रैलोक्यवंदितः । वराकाः क्क भवन्तश्च जय्या अस्मादृशामपि ॥ २२७ ॥
चतुर्भिः कलापकम् ॥

यात यात द्रुतं तस्मादपराधमतः परम् । न सहिष्यामहे हंत वयं श्रीशांतिकिंकराः ॥ २२८ ॥
इति साटोपमुक्तास्तैर्ययुर्मेघमुखाः सुराः । म्लेच्छानबोधयंस्तांश्च शरणं शांतिरेव वः ॥ २२९ ॥
शिष्टा मेघमुखैस्तेऽपि म्लेच्छा निःश्वस्य किंचन । पर्यशाम्यन् गतामर्षा द्विपा गतमदा इव ॥ २३० ॥
वाहनानि विचित्राणि चित्राण्याभरणानि च । वासांसि च महार्घाणि रूप्यस्वर्णोत्करानपि ॥ २३१ ॥
प्रभोरुपायनीकृत्य किराताः शरणार्थिनः । सर्वांगलुठनैर्भूमिं मृजन्तस्ते समाययुः ॥ २३२ ॥ युग्मम् ॥
समर्प्योपायनं शांतेस्ते प्रणम्यैवमब्रुवन् । सदाप्यदान्ताः स्मः स्वामिन्नरण्यवृषभा इव ॥ २३३ ॥
ततोऽस्माभिरजानद्भिस्त्वां स्वामिनमिहागतम् । रभसादपराद्धं यत्तत्सहस्व प्रसीद नः ॥ २३४ ॥
स्वाम्यस्यतः परं त्वं नः शाधि साधितभूतलः । स्थास्यामस्तावकीभूय भूयः किं ब्रूमहे वयम् ॥ २३५ ॥
एवमुक्त्वा स्थितान् म्लेच्छान् स्वीकृत्यान्वग्रहीत्प्रभुः । असाधयच्च सेनान्या सिंधोरुत्तरनिष्कुटम् ॥२३६॥
गादयन्नंतरं गंगासिंध्वोः सैन्यैर्निरंतरैः । सोऽभ्युर्द्धृतनः क्षुद्रहिमाद्रिमगमत्ततः ॥ २३७ ॥
गोशीर्षचंदनैः पद्महृदांभोभिरथापरैः । रत्नैरानर्च हिमवत्कुमारः शांतिचक्रिणम् ॥ २३८ ॥

---

१ निर्विषसर्पाः । २ उद्धताः । ३ प्राभृतमंगीकृत्येत्यर्थः । ४ बृहत्सैन्यः ।

गत्वा ऋषभकूटाद्रौ समादाय च काकिणीम् । शांतिश्चक्रीत्यक्षराणि कद्पें इत्यलिखत्प्रभुः ॥ २३९ ॥
ततो रथस्थो ववले शांतिः शांतारिपौरुषः । प्राप क्रमेण वैताढ्यपर्वतोपत्यकाभुवम् ॥ २४० ॥
विद्याधरनृपैस्तत्र श्रेणिद्वितयवर्तिभिः । सच्चक्रे चक्रवर्ती स इहामुत्र च शर्मणे ॥ २४१ ॥
अथ गंगातटे गत्वा गंगां स्वयमसाधयत् । सेनान्या साधयामास गांगं चोत्तरनिष्कुटम् ॥ २४२ ॥
गुहां खंडप्रपाताख्यामापपात ततः प्रभुः । नाट्यमालामरं तत्र चकार च वशंवदम् ॥ २४३ ॥
सेनानीर्दंडरत्नेनोद्घाटयामास तां गुहाम् । चक्ररत्नानुगः शांतिचक्रभृत् प्रविवेश च ॥ २४४ ॥
पूर्ववन्मणिरत्नेन काकिणीमंडलैरपि । गुहागृहे ध्वांतशांतिं शांतिर्दीपैरिव व्यधात् ॥ २४५ ॥
लीलयोन्मग्ननिमग्नजले नद्यौ स पद्यया । उत्ततार ससैन्योऽपि दुष्करं नास्ति दोष्मताम् ॥ २४६ ॥
स्वयमुद्घटितेनापाग्द्वारेण पृतनान्वितः । गुहाया निरगात्तस्याः पंचानन इव प्रभुः ॥ २४७ ॥
न्यधत्त विपुले गंगापुलिने शिबिरं प्रभुः । गंगातरंगतरलैस्तुरंगैः समलंकृतम् ॥ २४८ ॥
नैसर्पप्रमुखास्तत्र गंगामुखनिवासिनः । नवापि निधयः शांतेरेत्याभूवन् वशंवदाः ॥ २४९ ॥
स्वछंदं म्लेछभूयिष्ठं गांगं दक्षिणनिष्कुटम् । साधयामास सेनान्या पल्लिमात्रमिव प्रभुः ॥ २५० ॥
इत्थं भरतषट्खंडीमरिषड्वर्गवत्प्रभुः । साधयित्वाष्टभिर्वर्षशतैर्निववृते ततः ॥ २५१ ॥
प्रयाणैरनवच्छिन्नैर्भिंदन् मार्गं दिने दिने । आजगाम श्रियां धाम नृहस्ती हस्तिनापुरम् ॥ २५२ ॥
पौरैर्ग्राम्यैश्च सोत्कंठैर्निर्निमेषैः सुरैरिव । वीक्ष्यमाणः शांतिनाथो ययौ निजनिकेतनम् ॥ २५३ ॥

१ आचारः ।

अमरैर्बद्धमुकुटैर्नरेंद्रैरपरैरपि । विदधे चक्रवर्तित्वाभिषेकः शांतिचक्रिणः ॥ २५४ ॥
अभिषेकोत्सवश्चाभून्नगरे हस्तिनापुरे । अदंडशुल्कभटप्रवेशो द्वादशाब्दिकः ॥ २५५ ॥
ततः पृथक् पृथग्यक्षसहस्राधिष्ठितात्मभिः । स चतुर्दशभी रत्नैर्निधिभिर्नवभिः श्रितः ॥ २५६ ॥
चतुःषष्ट्या सहस्रैश्चावृतोऽन्तःपुरयोषिताम् । लक्षैश्चतुरशीत्येभरथाश्वस्य च भूषितः ॥ २५७ ॥
ग्रामाणां पैदिकानां च कोटिषण्णवतेः प्रभुः । द्वात्रिंशतः सहस्राणां भूभुजां नीवृतामिव ॥ २५८ ॥
सेवितः सूपकाराणां त्रिषष्ट्यग्रैस्त्रिभिः शतैः । श्रेणिप्रश्रेणिभिश्चाष्टादशभिः शोभमानभूः ॥ २५९ ॥
महापुरसहस्राणां पाता द्वासप्ततेस्तथा । एकसहस्रोनद्रोणमुखलक्षस्य शासिता ॥ २६० ॥
पत्तनाष्टाचत्वारिंशत्सहस्राणामधीश्वरः । चतुर्विंशसहस्राणां कर्पटानां मडंबवत् ॥ २६१ ॥
रत्नाद्याकरसहस्रविंशतेरप्यधीशिता । षोडशानां तथा खेटसहस्राणां च शासकः ॥ २६२ ॥
चतुर्दशानां संबाधसहस्राणामपि प्रभुः । पंचाशतं षडधिकांस्त्रायमाणोऽन्तरोदकान् ॥ २६३ ॥
पंचाशतः कुराज्यानामेकोनायाश्च नायकः । किमन्यदुपभुंजानः षट्खंडमपि भारतम् ॥ २६४ ॥
गीतैर्लास्यैस्तांडवैश्च नाटकाभिनयैरपि । पुष्पोच्चयजलक्रीडादिभिश्चानुभवन् सुखम् ॥ २६५ ॥
आरभ्य चक्रवर्तित्वादष्टवर्षशतोनिताम् । गमयामास सोऽब्दानां सहस्रान् पंचविंशतिम् ॥ २६६ ॥
ब्रह्मलोके तदानीं च लोकांतिकदिवौकसाम् । आसनानि स्म कंपंते दोलितानीव केनचित् ॥ २६७ ॥

---

१ दंडकरभटप्रवेशै रहितः । २ पत्तीनाम् । ३ देशानाम् । ४ रक्षकः । ५ पर्वतविशेषाणाम् । ६ खेटो लघुग्रामः । ७ द्वीपान् । ८ किमन्यद्वक्तव्यमिति शेषः ।

पच्चेलिमफलोद्भ्रांतकीरपिञ्छैर्निरंतरैः । द्विगुणीभूतमाकंददलश्रद्ध्यातिबंधुरम् ॥ २८३ ॥
अंधिवापि जलक्रीडारसव्याकुलनागरम् । ययौ सहस्राम्रवणमचिरानंदनप्रभुः ॥ २८४ ॥
षड्भिः कुलकम् ॥
शिबिकायास्ततस्तस्याः समुत्तीर्य जगत्पतिः । उज्झांचकार रत्नालंकारमाल्यादि राज्यवत् ॥ २८५ ॥
ज्येष्ठकृष्णचतुर्दश्यां भरण्यां पश्चिमेऽहनि । कृतसिद्धनमस्कारः कृतषष्ठतपाः प्रभुः ॥ २८६ ॥
समं नृपसहस्रेण परिव्रज्यामुपाददे । तदैव चासदज्ज्ञानं मनःपर्यवसंज्ञकम् ॥ २८७ ॥
ततश्च मंदिरपुरे सुमित्रनृपमंदिरे । पारणं परमान्नेन द्वितीयेऽह्नि व्यधाद्विभुः ॥ २८८ ॥
विदधे विबुधैस्तत्र वसुधारादिपंचकम् । रत्नपीठं सुमित्रेण स्वामिपादपदे पुनः ॥ २८९ ॥
अनासीनोऽशयानश्च निःसंगो निर्ममः प्रभुः । मूलोत्तरगुणाधारो विजहार वसुंधराम् ॥ २९० ॥
अथ द्वादशमासांते विहरन् परमेश्वरः । आगात् सहस्राम्रवणं नगरे हस्तिनापुरे ॥ २९१ ॥
नंदिवृक्षतले तत्र षष्ठेन तपसा प्रभोः । शुक्लध्यानांतरस्थस्य घातिकर्माणि तुत्रुटुः ॥ २९२ ॥
पौषस्य शुद्धनवम्यां चंद्रे च भरणीस्थिते । उत्पेदे शांतिनाथस्य केवलज्ञानमुज्ज्वलम् ॥ २९३ ॥
ज्ञात्वा चासनकंपेन केवलज्ञानमीशितुः । एयुरिंद्रादयो देवास्तं देशं स्वामिपावितम् ॥ २९४ ॥
संमार्जनीभूत इव देवाः संवर्तकानिलैः । आयोजनमपानैषू रजःकाष्ठतृणादिकम् ॥ २९५ ॥
गंधोदकं च ववृषू रजःशमनहेतवे । पंचवर्णा जानुदघ्नीर्दिव्याः सुमनसश्च ते ॥ २९६ ॥

---

१ वाप्याम् । २ पुष्पाणि ।

भुवं स्वर्णशिलाभिस्तां बबंधुः संधिबंधुरम् । तोरणानि च रम्याणि चक्रुः पूर्वादिदिक्षु ते ॥ २९७ ॥
मध्ये कृत्वा मणीपीठं चतुर्गोपुरसुंदरान् । प्राकारांस्त्रीन् क्रमाद्रूप्यस्वर्णरत्नैर्विचक्रिरे ॥ २९८ ॥
तत्रोपरितने रत्नवप्रे मध्यावनौ व्यधुः । तेऽशीत्यग्रचतुर्धन्वशतोच्चं चैत्यपादपम् ॥ २९९ ॥
तस्याधश्छंदकं चक्रुरप्रतिछंदकं सुराः । छंदकांतः पूर्वदिशि रत्नसिंहासनं च ते ॥ ३०० ॥
चतुस्त्रिंशदतिशयैर्भ्राजिष्णुर्भगवानपि । पूर्वद्वारेण समवसरणं प्रविवेश तत् ॥ ३०१ ॥
तत्र प्रदक्षिणीकृत्य चैत्यवृक्षं जगद्गुरुः । तीर्थाय नम इत्यूचे जिनेंद्राणां स्थितिर्ह्यसौ ॥ ३०२ ॥
पूर्वसिंहासने तत्र प्राङ्मुखो न्यषदत्प्रभुः । दिक्ष्वन्यासु विचक्रुश्च तद्रूपत्रितयं सुराः ॥ ३०३ ॥
यथाद्वारं प्रविश्याथ सुरासुरनृणां गणः । अवतस्थे यथास्थानं स्वाम्यास्यमवलोकयन् ॥ ३०४ ॥
विरोधिनोऽपि तिर्यंचो मध्यवप्रेऽवतस्थिरे । प्राकारेऽधस्तने त्वस्थुर्वाहनान्यखिलान्यपि ॥ ३०५ ॥
तदा चक्रायुधनृपं हर्षोत्फुल्लविलोचनाः । सहस्राम्रवणोद्यानपाला एत्य व्यजिज्ञपन् ॥ ३०६ ॥
दिष्ट्याद्य वर्धसे देव यच्छांतिस्वामिनोऽधुना । उत्पेदे केवलज्ञानं सहस्राम्रवणस्थितेः ॥ ३०७ ॥
इत्याकर्ण्य गिरं हृष्टः सद्यश्चक्रायुधो नृपः । पारितोषिकमेतेभ्यो दत्वा स्वामिनमाययौ ॥ ३०८ ॥
तत्र प्रदक्षिणीकृत्य शांतिनाथं प्रणम्य च । विनयी निषसादानुशक्रं चक्रायुधो नृपः ॥ ३०९ ॥
भूयश्च स्वामिनं नत्वा शक्रश्चक्रायुधोऽपि च । प्रचक्रमे स्तोतुमेवं हर्षगद्गदया गिरा ॥ ३१० ॥
श्रेयो[1]दशाप्रवेशोऽद्य जगतोऽपि जगत्पते । ज्ञानादित्येन भवता सुदिनोत्सवकारिणा ॥ ३११ ॥

---

१ कल्याणदशायां प्रवेशः ।

पुण्यैरस्माद्दशामेते तव कल्याणकोत्सवाः । कल्याणचिंतामणयः प्रभवंति जगद्गुरो ॥ ३१२ ॥
कषायादिमलालीढं मनः सर्वशरीरिणाम् । क्षालयंति जगन्नाथ त्वद्दर्शनजलोर्मयः ॥ ३१३ ॥
कर्मच्छिदे बध्नयत्नस्तीर्थकृत्कर्म यत् पुरा । आर्जयस्तत्तव स्वार्थानपेक्षान्योपकारिता ॥ ३१४ ॥
घोरसंसारभीतानां महादुर्गमिव प्रभो । जगत्यदस्ते समवसरणं शरणं नृणाम् ॥ ३१५ ॥
जानासि सर्वं सर्वेषां भावं सर्वहितोऽसि च । प्रार्थनीयं न तत् किंचित्तथापि प्रार्थ्यसे मया ॥ ३१६ ॥
यथा हि विहरन्नुर्व्यां ग्रामाकरपुरादिकम् । क्षणे क्षणे त्वं त्यजसि मा त्याक्षीर्मन्मनस्तथा ॥ ३१७ ॥
त्वत्पादपंकजध्यानषट्पदीभूतचेतसः । व्यतिक्रामतु मे कालो भगवंस्त्वत्प्रसादतः ॥ ३१८ ॥
स्तुत्वेति सति तूष्णीके शक्रे चक्रायुधेऽपि च । श्रीशांतिनाथो भगवानारेभे देशनामिति ॥ ३१९ ॥
अनेकदुःखसंताननिदानं दववह्निवत् । अहो खल्वेष संसारश्चतुर्गत्यात्मकः सदा ॥ ३२० ॥
क्रोधमानमायालोभाः कषायास्तस्य चोच्चकैः । आधारभूताश्चत्वारस्तंभा इव महौकसः ॥ ३२१ ॥
तत्क्षीणेषु कषायेषु संसारः क्षीयते स्वयम् । मूलेषु हि विशुष्केषु शुष्क एव महीरुहः ॥ ॥ ३२२ ॥
विनेंद्रियजयं नैव कषायान् जेतुमीश्वरः । हन्यते हैमनं[1] जाड्यं न विना ज्वलितानलम् ॥ ३२३ ॥
अदांतैरिंद्रियहयैश्चलैरपथगामिभिः । आकृष्य नरकारण्ये जंतुः सपदि नीयते ॥ ३२४ ॥
इंद्रियैर्विजितो जंतुः कषायैरभिभूयते । वीरैः[2] कृष्टेष्टकः[3] पूर्वं वप्रः कैः कैर्न खंड्यते ॥ ३२५ ॥
कुलघाताय पाताय बंधाय च वधाय च । अनिर्जितानि जायंते करणानि[4] शरीरिणाम् ॥ ३२६ ॥

---

१ सुवर्णसंबंधि जाड्यं मलम् । २ अदमितैः । ३ कृष्टा इष्टका यस्य वप्रस्य । ४ इंद्रियाणि ।

इंद्रियैः स्वार्थविवशैः कस्को नैव विडंब्यते । अपि विज्ञातशास्त्रार्थाश्चेष्टंते बालका इव ॥ ३२७ ॥
किमतोऽपि घृणा[1]स्थानमिंद्रियाणां प्रकाश्यते । यद्बंधौ बाहुबलिनि भरतोऽप्यस्त्रमक्षिपत् ॥ ३२८ ॥
जयो यद्बाहुबलिनि भरते च पराजयः । जिताजितानां तत्सर्वमिंद्रियाणां वि[2]जृंभितम् ॥ ३२९ ॥
यच्छस्त्राशस्त्रि युध्यंते चरमेऽपि भवे स्थिताः । दुरन्तानामिंद्रियाणां महिमानेन लभ्यते ॥ ३३० ॥
दंड्यंतां चंडचरितैरिंद्रियैः पशवो नराः । [3]शांतमोहाः पूर्वविदो दंड्यंते यत्तदद्भुतम् ॥ ३३१ ॥
जिता हृषीकैरत्यंतं देवदानवमानवाः । जुगुप्सितानि कर्माणि [4]ह्री तन्वंति तपस्विनः ॥ ३३२ ॥
अखाद्यमपि खादंति चाप्यपेयं पिबंति च । अगम्यं चापि गच्छंति [5]हृषीकवशगा नराः ॥ ३३३ ॥
वेश्यानां नीचकर्माणि दास्यान्यपि च कुर्वते । कुलशीलोज्झितास्त्यक्तकरुणैः करणैर्हताः ॥ ३३४ ॥
परद्रव्ये परस्त्रीषु मोहान्धमनसां नृणाम् । या प्रवृत्तिः सैंद्रियाणामत[6]ंद्राणां विजृंभितम् ॥ ३३५ ॥
पाणिपादेन्द्रियच्छेदमरणानि शरीरिभिः । प्राप्यंते यद्वशात्तेषां करणानां किमुच्यते ॥ ३३६ ॥
विनयं ग्राहयंत्यन्यैर्ये स्वयं करणैर्जिताः । पिधाय पाणिना वक्त्रं तान् हसंति विवेकिनः ॥ ३३७ ॥
आ देवेंद्रादा च कीटाद्ये केचिदिह जंतवः । विमुच्यैकं वीतरागं ते सर्वेऽपींद्रियैर्जिताः ॥ ३३८ ॥
वशास्पर्शसुखास्वादप्रसारितकरः करी । आलानबंधनक्लेशमासादयति तत्क्षणात् ॥ ३३९ ॥
पयस्यगाधे विचरन् गिलन् गलगतामिषम् । मै[7]निकस्य करे दीनो मीनः पतति निश्चितम् ॥ ३४० ॥

१ लज्जास्थानम् । २ विलासः । ३ उपशांतमोहनाम्नि गुणस्थाने वर्तमानाः । ४ हीति खेदे । ५ इंद्रियवशगाः । ६ जागरूकाणाम् । ७ धीवरस्य ।

निपतन्मत्तमातंगकपोले गंधलोलुपः । कर्णतालतलाघातान्मृत्युमाप्नोति षट्पदः ॥ ३४१ ॥
कनकच्छेदसंकाशशिखालोकविमोहितः । रभसेन पतन् दीपे शलभो लभते मृतिम् ॥ ३४२ ॥
हरिणो हारिणीं[1] गीतिमाकर्णयितुमुद्धुरः । आकर्णाकृष्टचापस्य याति व्याधस्य वेध्यताम् ॥ ३४३ ॥
एवं विषय एवैकः पंचत्वाय[2] निषेवितः । कथं हि युगपत् पंच पंचत्वाय भवंति न ॥ ३४४ ॥
तदिंद्रियजयं कुर्यान्मनःशुद्ध्या महामतिः । यां विना यमनियमैः कायक्लेशो वृथा नृणाम् ॥ ३४५ ॥
अनिर्जितेंद्रियग्रामो यतो दुःखैः प्रबाध्यते । तस्माज्जयेदिंद्रियाणि सर्वदुःखविमुक्तये ॥ ३४६ ॥
न चेंद्रियाणां विजयः सर्वथैवाप्रवर्तनम् । रागद्वेषविमुक्तानां प्रवृत्तिरपि तज्जयः ॥ ३४७ ॥
अशक्यो विषयो स्प्रष्टुमिंद्रियैः स्वसमीपगः । रागद्वेषौ पुनस्तत्र मतिमान् परिवर्जयेत् ॥ ३४८ ॥
हताहतानींद्रियाणि सदासंयमयोगिनाम्[3] । अहतानि हितार्थेषु हतान्यहितवस्तुषु ॥ ३४९ ॥
जितान्यक्षाणि मोक्षाय संसारायाजितानि तु । तदेतदंतरं ज्ञात्वा यद्युक्तं तत्समाचरेत् ॥ ३५० ॥
स्पर्शे मृदौ च तूलादेरुपलादेश्च कर्कशे । भवेद्रत्यरती हित्वा जेता स्पर्शनमिंद्रियम् ॥ ३५१ ॥
रसे स्वादे च भक्ष्यादेरितरस्मिन्नथापि वा । प्रीत्यप्रीती विमुच्योच्चैर्जिह्वेंद्रियजयी भवेत् ॥ ३५२ ॥
घ्राणदेशमनुप्राप्ते शुभे गंधे परत्र वा । ज्ञात्वा वस्तुपरीणामं जेतव्यं घ्राणमिंद्रियम् ॥ ३५३ ॥
मनोज्ञं रूपमालोक्य यदि वा तद्विलक्षणम् । त्यजन् हर्षं जुगुप्सां च निर्जयेच्चक्षुरिंद्रियम् ॥ ३५४ ॥
स्वरे श्रव्ये च वीणादेः खरोष्ट्रादेश्च दुःश्रवे । रतिं जुगुप्सां च जयन् श्रोत्रेंद्रियजयी भवेत् ॥ ३५५ ॥

१ मनोहराम् । २ मृत्यवे । ३ सदासंयमधारिणां योगिनाम् ।

कोऽपि नास्तीह विषयो मनोज्ञ इतरोऽपि वा। य इन्द्रियैर्नोपभुक्तस्तत्स्वास्थ्यं किं न सेव्यते ॥ ३५६ ॥
शुभा अप्यशुभायंते शुभायंतेऽशुभा अपि। विषयास्तत्क रज्येत विरज्येत क चेंद्रियैः॥ ३५७ ॥
स एव रुच्यो द्वेष्यो वा विषयो यदि हेतुतः। शुभाशुभत्वं भावानां तन्न तत्त्वेन जातुचित् ॥ ३५८ ॥
जितेंद्रियो मनःशुद्ध्या ततः क्षीणकषायकः। अचिरान्मोक्षमाप्नोति जंतुरक्षीणशर्मकम् ॥ ३५९ ॥
आकर्ण्य कर्णपीयूषवृष्टिमेवं च देशनाम्। चक्रायुधः ससंवेगो भगवंतं व्यजिज्ञपत् ॥ ३६० ॥
स्वामिन् भीतोऽस्मि संसारादस्मात् क्लेशैकवेश्मनः। न पौरुषाभिमानोऽत्र दोष्मतोऽपि विवेकिनः ३६१
दीप्यमाने यथा गेहे पोते स्फुटति वा यथा। तन्नेता किंचिदादाय सारवस्त्वन्यतो व्रजेत् ॥ ३६२ ॥
तथा भवे जन्मजरामरणादिकरालिते। एकमात्मानमादाय त्वां शरण्यं श्रितोऽस्म्यहम् ॥ ३६३ ॥
स्वामिन् मा मामुपेक्षस्व निपतंतं भवार्णवे। तस्योत्तरणनावं मे दीक्षामद्यैव देहि तत् ॥ ३६४ ॥
युक्तं विवेकिनस्तेऽद इत्युक्तः स्वामिना ततः। तनये कवचहरे राज्यं चक्रायुधो न्यधात् ॥ ३६५ ॥
सहितो राजभिः पंचत्रिंशता स्वामिनोऽन्तिके। स्वामिसूनुरुपादत्त प्रव्रज्यां संघसाक्षिकम् ॥ ३६६ ॥
चक्रायुधादिगणभृत्षट्त्रिंशत उपादिशत्। उत्पादविगमध्रौव्यलक्षणां त्रिपदीं प्रभुः ॥ ३६७ ॥
तत्रिपद्यनुसारात्ते द्वादशांगीमसूत्रयन्। अनुयोगगणानुज्ञे[3] स्वामी तेषामदत्त च ॥ ३६८ ॥
नरा नार्यश्च भूयांसः स्वाम्यंते प्राव्रजंस्तदा। जगृहुः श्रावकत्वं च केचित्सम्यक्त्वपूर्वकम् ॥ ३६९ ॥
पूर्णायामादिपौरुष्यामुत्थाय परमेश्वरः। देवछंदे विशश्राम मध्यप्राकारमंडने ॥ ३७० ॥

---

१ वैराग्यसहितः। २ नावि त्रुटंत्यां सत्यां। ३ अनुयोगानुज्ञां गणानुज्ञां च।

स्वाम्यंघ्रिपीठाध्यासीनः संघे तत्रैव तस्थुषि । विदधे देशनां चक्रायुधो गणधराग्रणीः ॥ ३७१ ॥
पूर्णद्वितीयपौरुष्यां व्यसृजत् सोऽपि देशनाम् । नत्वाथ स्वामिनं जग्मुः स्वं स्वं स्थानं सुरादयः ॥३७२॥
तत्तीर्थजन्मा गरुडयक्षो गजरथोऽसितः[1] । क्रोडास्यो[2] बीजपूर[3]ाब्जभृद्दक्षिणकरद्वयः ॥ ३७३ ॥
वामौ दधानो नकुलाक्षसूत्रसहितौ करौ । श्रीशांतिस्वामिपादानां जज्ञे शासनदेवता ॥ ३७४ ॥
तत्तीर्थजन्मा निर्वाणी गौरांगी कमलासना । पुस्तकोत्पलसंयुक्तौ बिभ्रती दक्षिणौ करौ ॥ ३७५ ॥
सकमंडलुकमलौ वामौ च दधती करौ । अजायत जगद्भर्तुस्तथा शासनदेवता ॥ ३७६ ॥
अमुक्तसंनिधिस्ताभ्यां भगवाननन्यतत्परः । बोधाय भव्यभविनां विजहार वसुंधराम् ॥ ३७७ ॥
विहरन्नन्यदा तत्र नगरे हस्तिनापुरे । उपेत्य समवासार्षीद्भगवान् करुणानिधिः ॥ ३७८ ॥
पौरजानपदोपेतः स्वामिनं तत्पुरेश्वरः । उपतस्थे कुरुचंद्रश्चंद्रोऽर्कमिव पर्वणि[4] ॥ ३७९ ॥
यथास्थानं स्थिते चाथ श्रीमत्संघे चतुर्विधे । संसारवैराग्यकरीं विदधे देशनां प्रभुः ॥ ३८० ॥
देशनांते विभुं नत्वा कुरुचंद्रोऽब्रवीदिदम् । प्राग्जन्मकर्मणा केन स्वामिन् राज्यमिहासदम् ॥ ३८१ ॥
ढौकने मम ढौकंतेऽद्भुतानि प्रतिवासरम् । पंचवस्तुफलादीनि केन प्राग्जन्मकर्मणा ॥ ३८२ ॥
इष्टेभ्यस्तानि दास्यामीत्युपभुंजे न हि स्वयम् । न चान्यस्मै प्रयच्छामि भगवन् केन कर्मणा ॥ ३८३ ॥
प्रभुरप्याख्यदेतद्धि साधवे दानतस्तव । राज्यश्रीरन्वहं चेदं ढौकनं पंचवस्तुनः ॥ ३८४ ॥
अदानाभोग्यते[5] चैषां पुण्यसाधारणत्वतः । वस्त्वधीनं बहूनां हि न खल्वेकेन भुज्यते ॥ ३८५ ॥

---

१ कृष्णवर्णः । २ वराहमुखः । ३ बीजपूरं भाषायां "बीजोरु" इति प्रसिद्धं । ४ अमावास्यायाम् । ५ अदानत्वमभोग्यतां च ।

अभीष्टेभ्यः प्रदास्येऽहमिति चिंतापि ते ततः । पूर्वकर्मानुसारेण जायते जन्मिनां हि धीः ॥ ३८६ ॥

अस्यैव जंबूद्वीपस्य क्षेत्रे चात्रैव भारते । कोसलाख्ये जनपदे नगरे श्रीपुरेऽभवत् ॥ ३८७ ॥

सुधनो धनपतिश्च धनदश्च धनेश्वरः । वणिक्पुत्राः सवयसश्चत्वारः सोदरा इव ॥ ३८८ ॥

अन्यदार्थोपार्जनार्थं ते चत्वारोऽपि संहताः । रत्नद्वीपं प्रत्यचलन् [1]द्रोणकोदूढशंबलाः ॥ ३८९ ॥

महाटवीं प्राविशंस्ते तीर्णप्राया कृता च सा । क्षीणप्रायं च पाथेयं तेषामजनि बह्वपि ॥ ३९० ॥

तदा चैकं ददृशुस्ते मुनिं प्रतिमया स्थितम् । अस्मै किंचित् प्रयच्छाम इति चाचिंतयन् क्षणम् ॥ ३९१ ॥

तं च द्रोणकनामानमूचुः शंबलवाहिनम् । भो भद्र किंचिदप्यस्मै द्रोण देहि महर्षये ॥ ३९२ ॥

तेभ्योऽधिकश्रद्धया स तं मुनिं प्रत्यलाभयत् । महाभोगफलं कर्म तेन [2]निर्वर्तितं तदा ॥ ३९३ ॥

रत्नद्वीपं च तेऽपीयुर्व्यवहारं च चक्रिरे । उपार्ज्यार्थं समाजग्मुर्भूयोऽपि नगरं निजम् ॥ ३९४ ॥

तेनैव पुण्यबीजेन ननंदुः सर्वदापि ते । जीवंत्यप्येकदासेन धान्यानि स्वातिवारिणा ॥ ३९५ ॥

धनेश्वरधनपती किं तु मायापरौ मनाक् । अधिकं शुद्धवृत्तिस्तु तेषु च द्रोणकोऽभवत् ॥ ३९६ ॥

आयुःक्षये च प्रथमं विपद्य द्रोणकः स तु । दानप्रभावात् पुत्रोऽभूस्त्वं हास्तिनपुरेशितुः ॥ ३९७ ॥

जनन्या च मुखे विशच्चंद्रस्वप्नावलोकनात् । पितृभ्यां नामधेयं ते कुरुचंद्र इतीरितम् ॥ ३९८ ॥

सुधनो धनदश्चोभौ मृत्वाभूतां वणिक्सुतौ । कांपील्यनगरे पूर्वो द्वितीयः कृत्तिकापुरे ॥ ३९९ ॥

वसंतसेनो नामाद्यः कामपालोऽपरः पुनः । विपेदाते धनपतिः कालात् स च धनेश्वरः ॥ ४०० ॥

---

१ द्रोणकेन उदूढं पाथेयं येषांते । २ बद्धम् ।

मदिराकेसरानाम्न्यौ वणिक्पुत्र्यौ बभूवतुः । एका शंखपुरेऽन्या तु जयंत्यां तावुभावपि ॥ ४०१ ॥
क्रमेण वर्धमानास्ते समतिक्रम्य शैशवम् । नव्यमासादयामासुश्चत्वारोऽपि हि यौवनम् ॥ ४०२ ॥
वसंतदेवः कांपील्याद्व्यवहारेण सोऽन्यदा । जयंत्यां प्रययौ पुर्यामर्थं च समुपार्जयत् ॥ ४०३ ॥
अन्यदा सोऽष्टमीचंद्रोत्सवेऽगच्छद्यदृच्छया । रतिनंदनमुद्यानं तत्राद्राक्षीच्च केसराम् ॥ ४०४ ॥
तया वसंतदेवोऽपि ददृशे स्निग्धया दृशा । तयोः प्राग्जन्मजूः स्नेहः प्रादुरासीत्परस्परम् ॥ ४०५ ॥
जयंतीवासिनं तत्र वणिक्पुत्रं प्रियंकरम् । वसंतदेवः पप्रच्छ केयं कस्य सुतापि वा ॥ ४०६ ॥
सोऽप्याख्यदेषा दुहिता श्रेष्ठिनः पंचनंदिनः । स्वसा जयंतिदेवस्य केसरा नाम कन्यका ॥ ४०७ ॥
वसंतदेवो जयंतिदेवेन सह सौहृदम् । समारेभे मिथो वेश्मगतागतनिबंधनम् ॥ ४०८ ॥
वसंतदेवो जयंतिदेवेन स्वगृहेऽन्यदा । न्यमंत्रि तत्प्रकारो हि मैत्र्यङ्कोरेष दोहदः ॥ ४०९ ॥
अर्चंतीं केसरां तत्र कुसुमैः कुसुमायुधम् । वसंतदेवः प्रैक्षिष्ट नेत्रकैरवकौमुदीम् ॥ ४१० ॥
जयंतिदेवहस्ताद्भात् प्रतीच्छन्[1] कुसुमस्रजम् । तया वसंतदेवोऽपि ददृशे सानुरागया ॥ ४११ ॥
अदोऽनुकूलं शकुनमिति हर्षोऽत्यभूत्तयोः । अन्योऽन्यशुभचेष्टा हि शुभोदर्का[2] द्वयोरपि ॥ ४१२ ॥
द्वयोश्चालक्षयद्भावं धात्रीपुत्री प्रियंकरा । सुलक्ष्यं हि परस्वांतमिंगिताकारवेदिभिः ॥ ४१३ ॥
वसंत इव वसंत[3]सखस्य सुहृदोऽकरोत् । पूजां वसंतदेवस्य केसरासोदरोऽथ सः ॥ ४१४ ॥
ऊचे प्रियंकरा तां च केसरे तव सोदरः । करोत्यर्चामसावस्य त्वमप्युचितकृद्भव ॥ ४१५ ॥

१ गृह्णन् । २ शुभपरिणामा । ३ कामदेवस्य ।

केसरा युगपदपि व्रीडाभीहर्षधारिणी । ऊचे त्वमेव जानासि कुरुष्वास्य यथोचितम् ॥ ४१६ ॥
प्रियंकराप्यंगणस्थप्रियंगुतरुमंजरीम् । कक्कोलादीनि चादाय वसंतमिदमब्रवीत् ॥ ४१७ ॥
स्वामिनी मे स्वहस्ताग्रोच्चितान्येतानि सुंदर । इष्टदेयानि ते दत्ते पुष्पाणि च फलानि च ॥ ४१८ ॥
अभीष्टोऽस्म्यहमेतस्या इति हृष्टः स्वपाणिना । वसंतदेवो जग्राह पुष्पाणि च फलानि च ॥ ४१९ ॥
नाममुद्रां स दत्वोच्चैस्त्वयेदं शोभनं कृतम् । वर्तितव्यं सदापीष्टानुरूपमिति तां ददे ॥ ४२० ॥
गत्वा च तद्वचोऽशंसत् केसरायै प्रियंकरा । दृढानुरागकंदस्योद्भेदने वारिसेकवत् ॥ ४२१ ॥
पश्चिमे यामिनीयामे सुप्ता स्वप्नेऽथ केसरा । वसंतदेवेनात्मानमुह्यमानमुदैक्षत ॥ ४२२ ॥
तदा वसंतदेवोऽपि स्वप्ने परिणिनाय ताम् । स्वप्नदर्शनमप्यासीद्विवाहादधिकं तयोः ॥ ४२३ ॥
प्रियंकरायै तं स्वप्नं कथयामास केसरा । सद्यो रोमांचितवपुः प्रतीयंती[१] तमेव हि ॥ ४२४ ॥
भविष्यत्येवमेवेदमिति स्वार्थप्रसाधकम् । पुरोधसा निजगदे तदानतिदवीयसा[२] ॥ ४२५ ॥
वसंतदेवस्ते भर्ता स्वप्नेन शकुनेन च । बध्यतां शकुनग्रंथिरित्यूचे तां प्रियंकरा ॥ ४२६ ॥
गत्वा वसंतदेवस्याप्याख्यत् स्वप्नं प्रियंकरा । सोऽपि स्वस्वप्नसंवादात् सिद्धमर्थममन्यत ॥ ४२७ ॥
प्रियंकरोचे स्वामिन्या तुभ्यमात्मा प्रकल्पितः । कल्प्यतां निर्विकल्पं तत्सर्वं वैवाहिकं त्वया ॥ ४२८ ॥
वसंतदेवोऽप्यवदद्व्यधायि विधिनैव तत् । प्रायो मनुष्यघटितं[३] कार्यं विघटते क्वचित् ॥ ४२९ ॥

---

१ प्रतीतिं कुर्वंति । २ समीपस्थेनेत्यर्थः । ३ परं दैवघटितं कार्यं कदापि न विघटत इति तात्पर्यम् ।

एवं वसंतदेवस्तां नियतिं रूपिणीमिव । आलप्य च सत्कृत्य च व्यसृजत् कृत्यकोविदः ॥ ४३० ॥
इत्थं प्रत्यहमन्योऽन्योदंतपीयूषपायिनोः । कियानप्यगमत् कालस्तयोर्वर्षशतोपमः ॥ ४३१ ॥
वसंतदेवेनान्येद्युः स्वगृहे तस्थुषा सता । मंगल्यतूर्यमश्रावि सदने पंचनंदिनः ॥ ४३२ ॥
सुदत्तश्रेष्ठिपुत्राय कन्यकुब्जनिवासिने । प्रदत्ता वरदत्ताय केसरा पंचनंदिना ॥ ४३३ ॥
वर्धापनकृते तेन तूर्यमेतद्धि वाद्यते । इति प्रवृत्तिं स प्राप प्रेषितैः पूरुषैर्निजैः ॥ ४३४ ॥
॥ युग्मम् ॥

एवमाकर्ण्य सोऽसूद्गन्मुज्वरेणेव ताडितः । एवमाश्वासयांचक्रे झाक् प्रियंकरया ततः ॥ ४३५ ॥
त्वां केसरा संदिशति खेदः कार्यस्त्वया न हि । गुरूपक्रांतमाकर्ण्य विवाहामि मम प्रियम् ॥ ४३६ ॥
गुरवो मदनिप्रायानभिज्ञाः किंचिदीदृशम् । चिकीर्षंति विधित्संतु न विधास्याम्यहं त्विदम् ॥ ४३७ ॥
त्वमेव भर्ता भावी मे भावि वा मरणं ध्रुवम् । बोद्धव्यं नान्यथा नाथ न हि मिथ्या कुलीनवाक् ॥ ४३८
प्रीतो वसंतोऽपीत्यूचे तादृशं स्वप्नदर्शनम् । प्रतिज्ञा च कुलीनानां न मुधा जातु जायते ॥ ४३९ ॥
प्रतिज्ञास्माकमप्येषा केसरामुद्वहामि वा । येन केनाप्युपायेन यामि वा यममंदिरम् ॥ ४४० ॥
एवमुक्ता विसृष्टा सा प्रययावुपकेसरम् । तदुक्तदयितोदंतान्मुमुदे केसराप्यथ ॥ ४४१ ॥
तयोरन्योऽन्यसंबंधोपायचिंताजुषोर्ययौ । कालः कियानप्यसुखं रजनीव रथांगयोः ॥ ४४२ ॥
अर्थस्तयोरसंपन्न एवोपायकृतोरपि । जन्ययात्रायया प्रातः केसरोद्वाहहेतवे ॥ ४४३ ॥

---

१ दैवम् । २ गुरुणा पित्रादिनोपक्रांतमारब्धम् । ३ विधातुं कर्तुमिच्छंति । ४ चक्रवाकयोः ।

वसंतदेवस्तच्छ्रुत्वा निर्गत्य नगराद्बहिः । उद्यानमेकमगमत्त्वरमाणः समीरवत् ॥ ४४४ ॥
वसंतदेवो दध्यौ च सान्योद्वाहेन निश्चितम् । अंगुलीदर्शनेनेव कूष्मांडं हा विपत्स्यते[1] ॥ ४४५ ॥
यथार्हयोगाविज्ञाभ्यां[2] पितृभ्यां खेदिता चिरम् । मदुद्वाहनिराशा सानूढापि हि मरिष्यति ॥ ४४६ ॥
तस्याः पुरस्तात्तन्मृत्वा शांतदुःखो भवाम्यहम् । कः श्रोष्यति प्रियामृत्युं दग्धे पिटकसंनिभम् ॥ ४४७ ॥
वसंतश्चिंतयित्वैवमशोकतरुमूर्धनि । पाशग्रंथिं गले दत्वोद्बबंध स्वं निषंगवत्[3] ॥ ४४८ ॥
ईषद्बद्धे च तत्पाशे निकुंजात् कोऽपि पूरुषः । मा मा भोः साहसं कार्षीरिति जल्पन् समाययौ ॥ ४४९ ॥
आरुह्याशोकवृक्षं स तत्पाशग्रंथिमच्छिदत् । विरुद्धमाकृतेरस्याः कृतं किमिति चाब्रवीत् ॥ ४५० ॥
वसंतोऽपि जगादेवं दैवदग्धस्य मेऽनया । किमिंद्रवारुणस्येवाकृत्या भ्रांतोऽसि सुंदर ॥ ४५१ ॥
प्रियाविरहदुःखांतहेतुमृत्युं ममेप्सतः । किं त्वया विहितो विघ्नः पाशग्रंथिं निकृंतता ॥ ४५२ ॥
ततश्च दयितोदंतं वसंतस्तस्य पृच्छतः । शशंस शस्यमानं हि दुःखं प्रायः प्रशाम्यति ॥ ४५३ ॥
स पुमानप्युवाचैवं यद्यप्येवमुपस्थितम् । तथापि युज्यते नेत्थं प्राणत्यागो विवेकिनः ॥ ४५४ ॥
उपाया एव युज्यंतेऽभीष्टार्थप्राप्तिहेतवः । उपेये[4] त्वत्र ते संति पशुवन्मा मृथास्ततः ॥ ४५५ ॥
यस्मिन्नुपेये नोपायो मर्तुं तत्रापि नोचितम् । मृतो न तदवाप्नोति याति कर्मोचितां गतिम् ॥ ४५६ ॥
उपायाभावतोऽप्राप्येऽभीष्टे वस्तुनि पर्यटन् । एष जीवामि जीवन् हि नरो भद्राणि पश्यति ॥ ४५७ ॥
कृत्तिकापुरवास्तव्यः कामपालोऽस्मि नामतः । निरगां यौवनोन्मत्तो देशांतरदिदृक्षया ॥ ४५८ ॥

---

१ विनंक्ष्यति । २ यथायोग्यसंबंधकरणेऽज्ञाभ्याम् । ३ तूणीरवत् । ४ प्राप्ये वस्तुनि ।

पर्यटंश्चासदं शंखपुरं नाम महापुरम् । तत्रेक्षितुं शंखपालयक्षोत्सवमगामहम् ॥ ४५९ ॥
तत्र चूतनिकुंजांतः स्मरांतःपुरिकोपमाम् । अपश्यं कन्यकामेकामेकान्तशुभ्रदर्शनाम् ॥ ४६० ॥
सानुरागः सानुरागं तयाप्यहमुदीक्षितः । तादृक्पाशैर्बद्ध इव चिरं तत्र स्थितोऽस्मि च ॥ ४६१ ॥
सखीहस्तेन मेऽदत्त सा तांबूलमनिंदिता । ओष्ठरागस्येव मनोरागस्यापि निबन्धनम् ॥ ४६२ ॥
तांबूलमाददानस्तद्युज्यते मम किं त्विह । [1]कृतप्रतिकृतिचिकीरिति यावदचिंतयम् ॥ ४६३ ॥
तावदालानमुन्मूल्य परितस्त्रो[2]टितान्दुकः । प्रससार महासारः कोऽप्येको [3]व्यालकुंजरः ॥ ४६४ ॥
॥ युग्मम् ॥
प्रतीकारासहैर्दूरात् प्रतिकारैः समुज्झितः । [4]अतिमात्राकुलैर्धावन् [5]महामात्रैरुदीक्षितः ॥ ४६५ ॥
[6]आराहस्तान् हस्तिपकान् विहस्तानपहस्तयन् । हस्ती चूतनिकुंजं तं क्षणादप्याससाद सः ॥ ४६६ ॥
॥ युग्मम् ॥
तस्याः सर्वः पलायिष्ट कन्यकायाः परिच्छदः । आत्मैवोपरि सर्व[7]स्य प्रायेणोपस्थिते भये ॥ ४६७ ॥
आपतत्यपि तत्रेभे सा पलायितुमक्षमा । हरि[8]णारौ हरिणीव तस्थौ तत्रैव वेपिनी ॥ ४६८ ॥

---

१ कृतस्य प्रत्युपकर्तुमिच्छन् । २ अंदुकः पादशृंखला । ३ मत्तो गजः । ४ अत्यंताकुलैः । ५ हस्तिपकैः । ६ आरा शस्त्रविशेषो करे येषां तान् पुनः विहस्तान् व्याकुलान् हस्तिपकानपसारणार्थं हस्तं शुंडादंडं ऊर्ध्वीकुर्वन् । ७ सर्वस्योपरि सर्वस्मादधिकः स्वस्यात्मैव । ८ हरिणानां शत्रुः सिंहस्तस्मिन्नागच्छति सतीत्यर्थः ।

यावदादत्त हस्तेन तां कन्यां सामि सामजः[1] । लकुटेन मया तावत् पेचके[2] स न्यहन्यत ॥ ४६९ ॥
कन्यां मुक्त्वा सोऽवलिष्ट पुच्छस्पृष्ट इवोरगः । तं गजं वंचयित्वा च तां चादायान्यतोऽगमम् ॥ ४७० ॥
विमुक्ता सा मयैकस्मिन् प्रदेशे निरुपद्रवे । सा तु वारितैवामेव[3] हृदयान्न मुमोच माम् ॥ ४७१ ॥
तस्याः परिजनस्तत्र भूयोऽपि हि समाययौ । त्रातां च मदिरां ज्ञात्वा बंदीवावर्णयच्च माम् ॥ ४७२ ॥
पुनश्चूतवने तस्मिन् सा सखीभिरनीयत । दैवादापतन्ननिलाकृष्टाश्च करिशीकराः ॥ ४७३ ॥
भीता दिशो दिशं यातास्ततः सर्वेऽपि सा पुनः । गता क्वापीत्यजानानः पर्यटं तद्दिदृक्षया ॥ ४७४ ॥
तामदृष्ट्वा चिरेणापि शून्यस्वांत इहागमम् । न म्रिये निरुपायोऽपि किं तु जीवामि पश्य माम् ॥ ४७५ ॥
केसरायास्तु संप्राप्तावुपाया अपि संत्यहो । तत्तुल्यदुःखं मित्रं त्वां वच्म्यज्ञानेन मा मृथाः ॥ ४७६ ॥
प्रातर्विवाह इत्यद्य स्मरं रतिसमन्वितम् । कल्पोऽयमिति सैकैव पूजयिष्यति केसरा ॥ ४७७ ॥
ततोऽनागतमेवावां स्मरदेवकुलांतरे । सखे प्रविश्य तिष्ठावो निभृतं[4] साधकाविव ॥ ४७८ ॥
तस्यां तत्र प्रविष्टायां तद्वेषग्रहणादहम् । सेव यास्यामि तज्जेहं मोहयंस्तत्परिच्छदम् ॥ ४७९ ॥
मयि दूरमपक्रांते तामादाय त्वमन्यतः । गच्छेः स्वच्छंदमिच्छा ते सेत्स्यत्येवमशंकिता ॥ ४८० ॥
वचसा मुदितस्तेन वसंतोऽप्येवमब्रवीत् । ममात्र योगः क्षेमं च पश्यामि व्यसनं तव ॥ ४८१ ॥
तदा च वृद्धब्राह्मण्येष्टदेव्येव कृतं क्षुतम् । ऊचे च कामपालेन ममेह व्यसनं न हि ॥ ४८२ ॥
त्वत्कार्येऽस्मिन् प्रसक्तस्य[5] प्रत्युताभ्युदयो मम । प्रयाति सात्विकानां हि दैवमप्यनुकूलताम् ॥ ४८३ ॥

---

१ गजः । २ पुच्छाग्रभागे । ३ वारितानि वाणानि दूषणानि यया सा । ४ गुप्तं यथा तथा । ५ लग्नस्य ।

अत्रांतरे ब्राह्मणेन वृद्धेन स्वार्थसंगतम् । एवमेतन्न संदेह इत्यूचे हृष्टचेतसा ॥ ४८४ ॥
निबध्य शकुनग्रंथिं प्रतिपद्य च तद्वचः । वसंतदेवः सुहृदा सह तेनाविशत् पुरीम् ॥ ४८५ ॥
तत्राशनादि कृत्वा तौ सायं निर्गत्य वेश्मनः । स्मरदेवकुलं गत्वा तस्थतुः स्मरपृष्ठतः ॥ ४८६ ॥
तत्र स्थिताभ्यां ताभ्यां तु मंगल्यस्तूर्यनिःस्वनः । आयाति केसरा नूनमिति हर्षेण शुश्रुवे ॥ ४८७ ॥
सापि स्मरणमात्रेण साध्यमंत्रं मुहुर्मुहुः । प्रेयःसमागमं नाम स्मरंती तत्र चाययौ ॥ ४८८ ॥
याप्ययानात् समुत्तीर्य विमानादिव नाकिनी । प्रियंकराकरात् स्वर्णमयीं पूजामुपाददे ॥ ४८९ ॥
एकाकिनी प्राविशत् सा स्मरदेवकुलं ततः । आचार इत्यपिदधे तद्द्वारं निजपाणिना ॥ ४९० ॥
भूतले पुष्पपत्रार्थं प्रक्षिप्योद्दिश्य मन्मथम् । मन्मथाक्रांतहृदया प्रांजलिः सैवमब्रवीत् ॥ ४९१ ॥
चित्ते भवसि सर्वेषां सदा वससि तत्र च । तेन जानासि तद्भावं भगवन् मकरध्वज ॥ ४९२ ॥
सर्वभावविदस्तत्किमेतद्युक्तं तव प्रभो । अनभीष्टेन यत् पत्या नियोजयसि मां बलात् ॥ ४९३ ॥
विना वसंतदेवं मे नान्यत्र रमते मनः । विषकन्या पत्युरिवान्यः पतिर्मरणाय मे ॥ ४९४ ॥
वसंतदेवो मे भर्ता भूयाज्जन्मान्तरेऽपि हि । नमस्कृतोऽसि सुचिरं नमस्कारोऽयमंतिमः ॥ ४९५ ॥
इत्युक्त्वा यावदात्मानं तोरणे प्रोद्बबंध सा । तावद्वसंतो धावित्वा पाशग्रंथिं व्यसूत्रयत् ॥ ४९६ ॥
कुतोऽयमिति साश्चर्या सव्रीडा सभया च सा । एवं वसन्तदेवेन जगदे कुमुदेक्षणा ॥ ४९७ ॥
असौ वसन्तदेवोऽस्मि प्रिये प्राणप्रियस्तव । मनोभवाद्याचसे यं परलोकेऽप्यधीश्वरम् ॥ ४९८ ॥

सखि किं चासि धन्या त्वं यस्यास्ते प्रेयसा समम् । अब्रूवन् दर्शनालापप्रभृतीनि मुहुर्मुहुः ॥ ५१४ ॥
वृत्तांतो दारुणो मे तु दुःश्रवः श्रूयतां सखि । शंखपालोत्सवेऽहं हि समं परिजनैरगाम् ॥ ५१५ ॥
तत्राशोकद्रुमस्याधो मनःसर्वस्वतस्करम् । युवानमेकमद्राक्षं प्रत्यक्षमिव मन्मथम् ॥ ५१६ ॥
सखीहस्तेन तांबूलं तस्मै च प्रेषितं मया । रक्षितास्मि च तेनाहं व्यालेभादन्तकादिव ॥ ५१७ ॥
पुनश्च हस्तिशंकायां त्रस्ताहं ससखीजना । भूयोऽपि च विमार्गन्ती नापश्यं तं क्वचिद्गतम् ॥ ५१८ ॥
अलिदष्टा मर्कटीव सर्वत्रारतिभाजनम् । तदाप्रभृति जीवामि वराक्येषा कथंचन ॥ ५१९ ॥
अद्ययावत्तमद्राक्षं स्वप्न एव मनोरमम् । यदि दैवप्रसादेन स प्रत्यक्षो भविष्यति ॥ ५२० ॥
तं च दुःखं लघूकर्तुं रहस्यं शस्यते मया । अन्यं हि दुःखितं दृष्ट्वा समाश्वसिति दुःखितः ॥ ५२१ ॥
तदलं सखि खेदेनानुकूले हि विधौ स्वयम् । प्रेयःसमागमो भावी कातरे धैर्यभाग्भव ॥ ५२२ ॥
अथापसार्य नीरंगीं कामपालोऽब्रवीदिदम् । त्वया यक्षोत्सवे दृष्टपूर्वोऽस्म्येष स ते प्रियः ॥ ५२३ ॥
दैवानुकूल्यादधुनैवावयोरिव संगमः । अभवत् कांते वसंतदेवकेसरयोरपि ॥ ५२४ ॥
अलमालापविघ्नेन विमुंच भयनिघ्नताम्[1] । किंचिन्निर्गमनद्वारं दर्शयानिंद्यदर्शने ॥ ५२५ ॥
एवमुक्त्वा गृहोद्याने पश्चिमद्वारवर्त्मना । मदिरादर्शितेनागात् समं मदिरयैव सः ॥ ५२६ ॥
पूर्वं पुरेऽस्मिन् वसंतदेवकेसरयोस्तयोः । आयातयोः संयुयुजे कामपालोऽथ सप्रियः ॥ ५२७ ॥

१ भयाधीनत्वम् ।

पूर्वस्नेहेन ते नित्यं ढौकनं पंचवस्तुकम् । अद्भुतं विदधाते तौ राजञ्जानीहि ते त्वमी ॥ ५२८ ॥
अमीभिः सह तद्भोक्तुं त्वमिष्टैरीशिषे नृप । नेयत्कालमभुंक्थास्त्वमभीष्टानविदन्नमून् ॥ ५२९ ॥
श्रुत्वा प्रभोर्वचांस्येवं राज्ञस्तेषां च तत्क्षणम् । जातिस्मरणमुत्पेदे प्राक्स्नेहोद्योतदीपकः ॥ ५३० ॥
भगवंतं ततो नत्वा कुरुचंद्रमहीपतिः । तान् सोदर्यानिव स्नेहादनैषीन्निजवेश्मनि ॥ ५३१ ॥
देवा अपि प्रभुं नत्वा स्थानं निजनिजं ययुः । भगवानप्यतोऽथागादनुगृह्णन्महीतलम् ॥ ५३२ ॥
श्रमणानां सहस्राणि द्वाषष्टिर्नैष्ठिकात्मनाम् । साध्वीनामेकषष्टिस्तु सहस्राः षट् शतानि च ॥ ५३३ ॥
चतुर्दशपूर्वभृतां शतान्यष्टौ महात्मनाम् । तथा सहस्रत्रितयमवधिज्ञानधारिणाम् ॥ ५३४ ॥
चत्वारि च सहस्राणि मनःपर्यवशालिनाम् । केवलज्ञानभाजां त्रिचत्वारिंशच्छतानि च ॥ ५३५ ॥
जातवैक्रियलब्धीनां सहस्राणि षडेव हि । वादलब्धिमतां द्वे तु सहस्रे सचतुःशते ॥ ५३६ ॥
श्रावकाणामुभे लक्षे सहस्रा नवतिस्तथा । सहस्रत्रिनवत्यग्रा श्राविकाणां त्रिलक्ष्यपि ॥ ५३७ ॥
आरभ्य केवलाद्वर्षसहस्रान् पंचविंशतिम् । एकाब्दोनां विहरतः परिवारोऽभवत् प्रभोः ॥ ५३८ ॥
निर्वाणकालं ज्ञात्वा च संमेताद्रिं प्रभुर्ययौ । प्रपेदेऽनशनं सार्धं मुनीनां नवभिः शतैः ॥ ५३९ ॥
मासांते च ज्येष्ठकृष्णत्रयोदश्यां निशाकरे । भरणीस्थे ययौ स्वामी मोक्षं तैर्मुनिभिः सह ॥ ५४० ॥
कौमारे मंडलीकत्वे चक्रभृत्त्वे व्रतेऽपि च । प्रत्येकं लक्षतुर्यांशोऽब्दलक्षायुरिति प्रभुः ॥ ५४१ ॥
श्रीधर्मनाथनिर्वाणाच्छ्रीशांतिस्वामिनिर्वृतिः । पादोनपल्यन्यूनेषु सागरेष्वभवत्रिषु ॥ ५४२ ॥

चक्रे शांतिजिनस्य मोक्षमहिमा तत्रेंद्रमुख्यैः सुरैः कालेनार्जितकेवलो गणधरश्चक्रायुधः सोऽपि च ।
भव्योद्बोधकृते विहृत्य सुचिरं संन्यस्य चायुःक्षये तीर्थे कोटिशिलाभिधे शिवमगात्प्राज्यैः समं साधुभिः॥५५३

षट्खंडोर्वीतलजयविधावप्यनायासभाजस्त्यक्त्वा लक्ष्मीं तृणमिव च तामप्युपात्तव्रतस्य ।
चक्रित्वेन प्रथितयशसस्तीर्थकृत्त्वेन चोच्चैर्धीरोदात्तं जयति चरितं धीरशांतं च शांतेः ॥ ५५४ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये
पंचमे पर्वणि श्रीशांतिनाथचरमभववर्णनो
नाम पंचमः सर्गः ।

---

# ॥ समाप्तं चेदं पंचमं पर्व ॥

॥ श्री ॥

# ॥ श्रीत्रिषष्टिशलाकापुरुषचरिते ॥

## षष्ठं पर्व ।

## प्रथमः सर्गः ।

## ॥ श्रीकुंथुस्वामिचरितम् ॥

जयंति जयिनः[1] कुंथुस्वामिनो देशनागिरः । महामोहदृषद्भेदसरित्पूरसहोदराः[2] ॥ १ ॥
त्रैलोक्यस्वामिनः कुंथोश्चरित्रं वच्मि पावनम् । संसारांभोधिमथने मंथनाचलसन्निभम्[3] ॥ २ ॥
अस्यैव जंबूद्वीपस्य प्राग्विदेहेषु सुंदरे । आवर्तनाम्नि विजये कृतस्वर्विजये[4] श्रिया ॥ ३ ॥
महापुर्यां खड्गिनाम्न्यां निःसीमगुणभाजनम् । सीमा धर्मधुरीणानां राजा सिंहावहोऽभवत् ॥ ४ ॥
आधार इव धर्मस्य कुगार इव पाप्मनः । न्यायस्य कुलवेश्मेव सुधियां जन्मभूरिव ॥ ५ ॥
तस्य मंत्रो मन इव दुर्लक्षो विदुषामपि । शक्रस्येव प्रभुत्वं चोत्साहश्चाभूद्धरेरिव ॥ ६ ॥
अनुल्लंघितमर्यादः समुद्र इव स स्वयम् । मर्यादायां जगदपि धारयामास शक्तिमान् ॥ ७ ॥

---

१ जयशीलस्य । २ महामोह एव पाषाणस्तस्य भेदे नदीपूरसमानाः । ३ मंदराचलसदृशम् । ४ कृतः स्वर्गस्य जयो येन तस्मिन्।

कृष्टिमंत्र इव श्रीणां भेदमंत्र इव द्विषाम् । रक्षामंत्र इवावन्यास्तस्य रेजे धनुर्ध्वनिः ॥ ८ ॥
धर्मायैव शशासोर्वीं न पुनर्द्रविणाय सः । सर्वदा धर्मनिष्ठानां फलं तद्ध्यानुषंगिकम्[३] ॥ ९ ॥
अनासक्त्योपभुंजानो भोगान् योगीव भोजनम् । किंचिदप्यतिचक्राम कालं तत्त्वविदग्रणीः ॥ १० ॥
वेलामब्धेरिवान्येद्युर्वैराग्यमधिकं दधत् । संवराचार्यपादांते गत्वा दीक्षां स आददे ॥ ११ ॥
व्रतं प्रपालयंस्तीव्रमर्हदाराधनादिभिः । स्थानकैरर्जयामास तीर्थकृन्नाम कर्म सः ॥ १२ ॥
स मृत्वा कालयोगेन सम्यग्दृष्टिः समाहितः । देवो विमाने सर्वार्थसिद्धनामन्यजायत ॥ १३ ॥
इतश्च जंबूद्वीपस्य द्वीपस्यास्यैव भारते । क्षेत्रेऽस्ति हास्तिनपुरमिति ख्यातं महापुरम् ॥ १४ ॥
तत्र चैत्येषु विशदपताकाव्यपदेशतः । नित्यं प्रमुदितो धर्म इव नृत्यति निर्भरम् ॥ १५ ॥
तद्गृहेष्वभितो रत्नबद्धप्रांगणभूमिषु । नामाप्यभूत् कर्दमस्य केवलं यक्षकर्दमे ॥ १६ ॥
तद्वप्रे रत्नघटिते स्वैरेव प्रतिबिंबितैः । परेभबुद्ध्या गंधेभा दन्तघातान् वितन्वते ॥ १७ ॥
नृपौकस्सु जनौकस्सु गोपुरेष्वपरत्र च । तत्सर्वमार्हतैर्बिंबैर्व्याप्तं व्योम ग्रहैरिव ॥ १८ ॥
तेजसाभिनवः सूर्यः शूरो नाम महीपतिः । बभूव तस्मिन्नलकापुर्यामिव धनेश्वरः ॥ १९ ॥
द्वैतीयिकोऽन्तरात्मेव हृदि तस्यावसत् सदा । धर्म एवार्थकामौ तु बहिःस्थौ बहिरात्मवत् ॥ २० ॥
प्रतापाक्रांतदिक्कस्य तस्य शस्त्राणि जज्ञिरे । दोष्णोर्विभूषणायैव केयूरकटकादिवत् ॥ २१ ॥
न चुकोप स कस्मैचिज्जुगोप च महीमिमाम् । विनापि तीव्रतां विश्वं प्रकाशयति चंद्रमाः ॥ २२ ॥

१ वशीकरणमंत्रः । २ द्रविणम् । ३ आनुषंगिकं अवांतरफलम् । ४ अन्यगजशंकया । ५ सूर्यरूप इत्यर्थः ।

रूपलावण्यपुण्यांगी शीलनैर्मल्यशालिनी । श्रीदेवीव हरेस्तस्य नाम्ना श्रीरिति पत्न्यभूत् ॥ २३ ॥
किं सुधासारणिः किं वा सुधांशोरधिदेवता । सुधां क्षरंती वचसा शुशुभे सा शुभानना ॥ २४ ॥
मंदमेवानवद्यांगी जगाम च जगाद च । हंसीव राजहंसस्य तस्य सा प्राणवल्लभा ॥ २५ ॥
तया देव्या समं भोगान् बुभुजे शूरपार्थिवः । निर्विघ्नसुखनिर्मग्नो वैमानिक इवामरः ॥ २६ ॥
इतश्च सर्वार्थसिद्धे विमाने पूरयन्निजम् । जीवः सिंहावहस्यायुस्त्रयस्त्रिंशार्णवप्रमम् ॥ २७ ॥
श्रावणासितनवम्यां कृत्तिकास्थे निशाकरे । च्युत्वा ततस्तस्य जीवः श्रियः कुक्षाववातरत् ॥ २८ ॥
चतुर्दन्तो गजः श्वेतः ककुद्मान्[1] कुमुदद्युतिः । केसर्युत्केसरो लक्ष्मीरभिषेकमनोरमा ॥ २९ ॥
पंचवर्णं पुष्पदाम पार्वणो[2] रजनीकरः । प्रद्योतनः[3] कृतद्योतः सपताको महाध्वजः ॥ ३० ॥
शातकौम्भः[4] पूर्णकुम्भः पद्मपूर्णं सरोवरम् । सरितां पतिरुद्वीचिर्विमानं रत्ननिर्मितम् ॥ ३१ ॥
रत्नपुंजोऽभ्रंलिहरुग्निर्धूमश्च विभावसुः । एते चतुर्दश स्वप्नास्तदा ददृशिरे तया ॥ ३२ ॥
देव्या च कथितान् स्वप्नान् व्याचख्यौ नृपतिः प्रगे[5] । स्वप्नैरेभिः सुतो भावी चक्रभृत्तीर्थकृच्च ते ॥ ३३ ॥
ततो नवसु मासेषु दिनेष्वर्धाष्टमेषु च । राध[6]कृष्णचतुर्दश्यां कृत्तिकास्थे निशाकरे ॥ ३४ ॥
ग्रहेषु चोच्चसंस्थेषु छागांकं कांचनच्छविम् । सर्वलक्षणसंपूर्णं श्रीदेवी सुषुवे सुतम् ॥ ३५ ॥
नारकाणां क्षणं सौख्यमुद्योतश्च जगत्त्रये । अभूत्तदा चासनानि शक्रादीनां चकंपिरे ॥ ३६ ॥
उपेत्यासनकंपेन कर्मकर्य[7] इव क्षणात् । षट्पंचाशद्दिक्कुमार्यः सूतिकर्माणि चक्रिरे ॥ ३७ ॥

---

१ वृषः । २ पूर्णिमासंबन्धी । ३ सूर्यः । ४ सौवर्णः । ५ प्रातःकाले । ६ वैशाखकृष्णचतुर्दश्याम् । ७ किंकर्यः ।

शक्रः पंचवपुर्भूत्वा मेरुशैलेऽनयत् प्रभुम् । इन्द्राश्च स्नपयामासुस्त्रिषष्टिरतीर्थवारिभिः ॥ ३८ ॥
ईशानांके निवेश्येशं शक्रोऽप्यस्नपयत्ततः । कृत्वा पूजादिकं चोच्चैरिति स्तोतुं प्रचक्रमे ॥ ३९ ॥
अद्य नीराणि क्षीरोदप्रभृतीनामुदन्वताम् । पद्मप्रभृतिह्रदानां पद्मानि च पयांसि च ॥ ४० ॥
अद्य नीराणि क्षीरोदप्रभृतीनां महीभृताम् । भद्रशालप्रभृतीनां वनानां कुसुमान्यपि ॥ ४१ ॥
ओषध्यः क्षुद्रहिमवत्प्रभृतीनां महीभृताम् । भद्रशालप्रभृतीनां वनानां कुसुमान्यपि ॥ ४१ ॥
मलयाधित्यकादीनां भूमीनां चंदनानि च । युष्मत्स्नात्रोपयोगेन कृतार्थानि जगत्पते ॥ ४२ ॥
॥ त्रिभिर्विशेषकम् ॥

कृतार्थमिदमैश्वर्यमखिलानां दिवौकसाम् । देव त्वज्जन्मकल्याणमहोत्सवविधानतः ॥ ४३ ॥
उत्कृष्टो भूभृतामद्य तीर्थभूतोऽयमद्य च । प्रासाद इव बिंबेन त्वया मेरुरलंकृतः ॥ ४४ ॥
अद्य चक्षूंषि चक्षूंषि पाणयश्चाद्य पाणयः । दर्शनेन स्पर्शनेन भवतो भुवनेश्वर ॥ ४५ ॥
अद्य नः सफलं नाथावधिज्ञानं निसर्गजम् । जिन ते जन्म विज्ञाय जन्मोत्सवमकृष्महि ॥ ४६ ॥
यथाद्य हृदयद्वारे स्नात्रकाले ममाभवः । तथैव हृदयस्यांतरपि भूयाश्चिरं प्रभो ॥ ४७ ॥
जगन्नाथमिति स्तुत्वा गृहीत्वाशु पुरंदरः । गत्वा च हास्तिनपुरं श्रीदेव्याः पार्श्वतोऽमुचत् ॥ ४८ ॥
चक्रे जन्मोत्सवः सूनोः शूरेणापि महीभुजा । यद्घोत्पन्ने तीर्थनाथे सदोत्सवमयं जगत् ॥ ४९ ॥
दृष्टो देव्या गर्भगेऽस्मिन् कुंथ्वाख्यो रत्नसंचयः । कुंथुरित्यभिधां तेन स्वामिनो विदधे पिता ॥ ५० ॥
शक्रसंक्रमितांगुष्ठपीयूषं भगवान् पिबन् । क्रमेण वर्धमानोऽभूत् पंचत्रिंशद्धनून्नतः ॥ ५१ ॥

पित्राज्ञया पर्यणैषीत् स काले राजकन्यकाः । कर्मभोगफलं भेत्तुं चान्यथा शक्यते न हि ॥ ५२ ॥
त्रयोविंशत्यब्दसहस्रेष्वर्धाष्टमशतेषु च । गतेषु जन्मतो राज्यं प्रभुः पित्राज्ञयाग्रहीत् ॥ ५३ ॥
गतेष्वब्देषु तावत्सु भर्तुर्मण्डलिकस्थितौ । मध्येऽस्त्रसदने[1] चक्ररत्नं समुदपद्यत ॥ ५४ ॥
चक्रेऽर्चां[2] चक्ररत्नस्य जगदर्च्योऽपि शूरसूः । महात्मानो हि कुर्वंति सेवकेष्वपि सत्कृतिम् ॥ ५५ ॥
मागधेशं वरदामप्रभासाधिपती अपि । क्रमेण साधयामास चक्ररत्नानुगः प्रभुः ॥ ५६ ॥
सिन्धुदेवीं वैताढ्याद्रिकुमारं कृतमालकम् । स्वयं सोऽसाधयदथ सेनान्या सिन्धुनिष्कुटम् ॥ ५७ ॥
सेनान्योद्घाटितद्वारा प्रविश्य च तमिस्रया । निर्गत्य चापातनाम्नो म्लेच्छान् प्रभुरसाधयत् ॥ ५८ ॥
सेनान्या च वशीचक्रे द्वितीयं सिन्धुनिष्कुटम् । गत्वा च क्षुद्रहिमवत्कुमारं स्वाम्यसाधयत् ॥ ५९ ॥
केऽस्य इत्यृषभकूटे निजं नाम लिलेख च । ववले च ततः स्थानाच्चक्ररत्नानुगः प्रभुः ॥ ६० ॥
आगतश्चोप[3]वैताढ्यं तच्छ्रेणिद्वयवर्तिभिः । विद्याधरेन्द्रैरानर्चे विविधोपायनैः प्रभुः ॥ ६१ ॥
गंगादेवीं नाट्यमालं स्वयं प्रभुरसाधयत् । गांगं तु निष्कुटं सैन्यपतिना म्लेच्छसंकुलम् ॥ ६२ ॥
सेनान्योद्घाटितखंडप्रपातागुहया प्रभुः । प्रविश्य वैताढ्यगिरेर्निर्ययौ सपरिच्छदः ॥ ६३ ॥
नैसर्पप्रमुखास्तत्र नवापि निधयः प्रभोः । सिध्यंति स्म स्वयमपि गंगामुखनिवासिनः ॥ ६४ ॥
द्वितीयं निष्कुटं गांगं सेनान्यासाधयत् प्रभुः । विजिग्ये भरतक्षेत्रं षड्भिर्वर्षशतैरिति ॥ ६५ ॥
संपूर्णचक्रभृत्संपन्नरामरनिषेवितः । ततो निवृत्तः श्रीकुंथुराययौ हस्तिनापुरम् ॥ ६६ ॥

---

१ अस्त्रशालायाम् । २ आचारः इति हेतोः । ३ वैताढ्यसमीपम् ।

चक्रे चक्रित्वाभिषेकः प्रभोर्देवैर्नरैरपि । उत्सवश्च द्वादशाब्दीं पुरे तस्मिन्नजायत ॥ ६७ ॥
त्रयोविंशत्यब्दसहस्राः सार्धाष्टमशता ययुः । श्रीकुंथुस्वामिनश्चक्रवर्तिवैभवशालिनः ॥ ६८ ॥
तीर्थं प्रवर्तय स्वामिन्निति लोकांतिकैः प्रभुः । विज्ञप्तो वार्षिकं दानं ददौ राज्यं च सूनवे ॥ ६९ ॥
स्वामी नृपैश्च देवैश्च कृतनिष्क्रमणोत्सवः । विजयाशिबिकारूढः सहस्राम्रवणं ययौ ॥ ७० ॥
चुंबता चंपकलताश्चूतयष्टीर्विधुन्वता । वासंतिका नर्तयता निर्गुंडीरभिमृद्नता ॥ ७१ ॥
आलिंगिता च लवलीः स्पृशता नवमल्लिकाः । पाटलीश्च पाटयता पद्मिनीश्चाभिसर्पता ॥ ७२ ॥
आक्रामताशोकलताः कदलीरनुगृह्णता । यूनेव पवमानेन दक्षिणेन मनोरमम् ॥ ७३ ॥
दोलांदोलनसंसक्तललनाललटभीकृतम् । कुसुमावचयक्रीडाव्यग्रपौरेभ्यदारकम् ॥ ७४ ॥
उन्मत्तकोकिलालापैर्मधुरैश्चालिकूजितैः । विहितस्वागतमिवोद्यानं तत्प्राविशत्प्रभुः ॥ ७५ ॥
॥ पंचभिः कुलकम् ॥
शिबिकायाः समुत्तीर्य त्यक्त्वालंकरणादिकम् । वैशाखकृष्णपंचम्यां कृत्तिकास्वह्नि पश्चिमे ॥ ७६ ॥
समं राजसहस्रेण षष्ठेन प्राव्रजत्प्रभुः । चतुर्थं प्राप च ज्ञानं मनःपर्ययसंज्ञकम् ॥ ७७ ॥
पुरे चक्रपुरे व्याघ्रसिंहपार्थिववेश्मनि । द्वितीयेऽह्नि व्यधात् स्वामी परमान्नेन पारणम् ॥ ७८ ॥
विदधे वसुधारादिपंचकं तत्र नाकिभिः । रत्नपीठं व्याघ्रसिंहेनांघ्रिस्थाने पुनः प्रभोः ॥ ७९॥
निःसंगोऽप्रतिबद्धश्च समीरण इव प्रभुः । छद्मस्थः षोडशाब्दानि विजहार वसुंधराम् ॥ ८० ॥

---

१ आम्रलताः । २ वायुना । ३ दोलांदोलने संसक्ताश्च ता ललनाश्च ताभिः सुंदरीकृतम् । ४ देवैः ।

अन्येद्युर्विहरन्नागात् सहस्राम्रवणं प्रभुः । कृतषष्ठस्तिलकाद्धौ तस्थौ च प्रतिमाधरः ॥ ८१ ॥
चैत्रशुक्लतृतीयायां कृत्तिकास्थे निशाकरे । घातिकर्मक्षयात्तत्र संजज्ञे केवलं प्रभोः ॥ ८२ ॥
सेन्द्रैश्चतुर्विधैर्देवनिकायैरेत्य तत्क्षणम् । चक्रे समवसरणं प्राकारत्रयमंकितम् ॥ ८३ ॥
सुरैः संचार्यमाणेषु स्वर्णाब्जेषु ददत् क्रमौ । पूर्वद्वारेण समवसरणं प्राविशद्विभुः ॥ ८४ ॥
विंशत्यग्रचतुर्धन्वशतोच्चं चैत्यपादपम् । तत्र प्रदक्षिणीचक्रे धर्मचक्री जगद्गुरुः ॥ ८५ ॥
तस्याधश्छंदके जहत्पंस्तीर्थाय नम इत्यथ । पूर्वसिंहासने पूर्वाभिमुखः स्वाम्युपाविशत् ॥ ८६ ॥
स्वामिनः प्रतिरूपाणि दिक्ष्वन्यास्वपि तत्क्षणम् । तादृंशि तत्प्रभावेण विचक्रुर्व्यंतरामराः ॥ ८७ ॥
अवतस्थे यथास्थानं श्रीमान् संघश्चतुर्विधः । मध्यवप्रे तु तिर्यंचोऽधस्तने वाहनानि तु ॥ ८८ ॥
ज्ञात्वा च समवसृतं प्रभुमागात्कुरूद्वहः । नमस्कृत्यानुशक्रं च निषसाद कृतांजलिः ॥ ८९ ॥
भूयोऽपि स्वामिनं नत्वा सौधर्मेन्द्रकुरूद्वहौ । उद्वहन्तौ हृदि मुदं प्रारेभाते इति स्तुतिम् ॥ ९० ॥
चतुर्धा धर्मदेष्टारं चतुर्गात्रं चतुर्मुखम् । चतुर्थपुरुषार्थेशं त्वां स्तुमः परमेश्वरम् ॥ ९१ ॥
चतुर्दशमहारत्नीं[1] निःसंगत्वात्त्वमत्यजः । रत्नत्रयीं त्वनवद्यां दधासि जगदीश्वर ॥ ९२ ॥
मनो हरसि विश्वस्य निर्मनस्कस्तथाप्यसि । उत्तप्तस्वर्णवर्णस्त्वं ध्यायसे चेन्दुसन्निभः ॥ ९३ ॥
निःसंगोऽपि महर्द्धिस्त्वं ध्येयोऽपि ध्यातृतास्पदम् । कोटिशोऽप्यावृतो देवादिभिः कैवल्यभागसि[2]॥९४॥
विश्वस्य रागं तनुषे वीतरागोऽसि च स्वयम् । अकिंचनोऽपि भवसि जगतः परमर्द्धये ॥ ९५ ॥

---

१ चतुर्दशानां महारत्नानां समाहारः । २ कैवल्यं एकाकित्वमिति विरोधः केवलज्ञानमिति तत्परिहारः ।

अविज्ञेयप्रभावायाज्ञेयरूपाय तायिने । नमो भगवते सप्तदशाय भवतेऽर्हते ॥ ९६ ॥
प्रणामोऽपि त्वयि विभोऽचिन्त्यचिन्तामणिर्नृणाम् । किं पुनर्मनसा ध्यानं स्तवनं वचसापि वा ॥ ९७ ॥
प्रणामे स्तवने ध्याने प्रभो त्वद्विषये मम । प्रवृत्तिः सर्वदाप्यस्तु कृतमन्यैर्मनोरथैः ॥ ९८ ॥
स्तुत्वैवं दिविषन्नाथे कुरुराजे च तस्थुषि । श्रीकुन्थुनाथो भगवान् विदधे धर्मदेशनाम् ॥ ९९ ॥
योनिलक्षचतुरशीत्यावर्तापातभीषणः । अयं खलु भवांभोधिर्महादुःखनिबन्धनम् ॥ १०० ॥
तरणे च भवांभोधेरलंभूष्णुर्विवेकिनाम् । यानपात्रं मनःशुद्धिरिन्द्रियोर्मिजयोर्जिता ॥ १०१ ॥
दीपिका खल्वनिर्वाणा[2] निर्वाणपथदर्शिनी[3] । एकैव मनसः शुद्धिः समाम्नाता मनीषिभिः ॥ १०२ ॥
सत्यां हि मनसः शुद्धौ सन्त्यसंतोऽपि यद्गुणाः[4] । संतोऽप्यसत्यां नो सन्ति सैव कार्या बुधैस्ततः ॥१०३॥
मनःशुद्धिमबिभ्राणा ये तपस्यंति मुक्तये । त्यक्त्वा नावं भुजाभ्यां ते तितीर्षंति महार्णवम् ॥ १०४ ॥
तपस्विनो मनःशुद्धिं विनाभूतस्य सर्वथा । ध्यानं खलु मुधा चक्षुर्विकलस्येव दर्पणः ॥ १०५ ॥
तप्यमानांस्तपो मुक्तौ गन्तुकामान् शरीरिणः । वात्येव तरलं चेतः क्षिपत्यन्यत्र कुत्रचित् ॥ १०६ ॥
मनःक्षपाचरो[5] भ्राम्यन्नपशंकं[6] निरंकुशः । प्रपातयति संसारावर्तगर्ते जगत्रयीम् ॥ १०७ ॥
अनिरुद्धमनस्कः सन् योगश्रद्धां दधाति यः । पद्भ्यां जिगमिषुर्ग्रामं स पंगुरिव हस्यते ॥ १०८ ॥
मनोरोधे निरुध्यन्ते कर्माण्यपि समंततः । अनिरुद्धमनस्कस्य प्रसरंति हि तान्यपि ॥ १०९ ॥

---

१ रक्षित्रे । २ अनपायिनी । ३ मोक्षमार्गप्रकाशिनी । ४ यद्यस्मात्कारणान्मनसः शुद्धौ सत्यामविद्यमाना अपि गुणा भवन्ति, मनःशुद्धौ चासत्यां विद्यमाना अपि गुणा न भवन्ति । ५ मन एव क्षपाचरो राक्षसः । ६ निःशंकम् ।

मनःकपिरयं विश्वपरिभ्रमणलंपटः । नियंत्रणीयो यत्नेन मुक्तिमिच्छुभिरात्मनः ॥ ११० ॥
तदवश्यं मनःशुद्धिः कर्तव्या सिद्धिमिच्छता । तपःश्रुतयमप्रायैः किमन्यैः कायदंडनैः ॥ १११ ॥
मनःशुद्ध्यैव कर्तव्यो रागद्वेषविनिर्जयः । कालुष्यं येन हित्वात्मा स्वस्वरूपेऽवतिष्ठते ॥ ११२ ॥
श्रुत्वेति देशनां भर्तुर्बहवः प्राव्रजञ्जनाः । स्वयंभूप्रमुखाः पंचत्रिंशद्गणभृतोऽभवन् ॥ ११३ ॥
पूर्णायामादिपौरुष्यां देशनाविरते प्रभौ । स्वयंभूर्देशनां स्वामिपादपीठस्थितोऽकरोत् ॥ ११४ ॥
पूर्णद्वितीयपौरुष्यां व्यसाक्षीत् सोऽपि देशनाम् । नत्वा श्रीकुन्थुमीयुश्च स्वं स्वं स्थानं सुरादयः ॥ ११५ ॥
तत्तीर्थभूश्च गंधर्वयक्षो हंसरथोऽसितः । दधानो दक्षिणौ बाहुदंडौ वरदपाशिनौ ॥ ११६ ॥
मातुलिंगांकुशधरौ धारयन् दक्षिणेतरौ । श्रीमतः कुन्थुनाथस्य जज्ञे शासनदेवता ॥ ११७ ॥
तत्तीर्थभूर्बलादेवी गौरांगी केकिवाहना । बिभ्राणा दक्षिणौ बाहू बीजपूरकशूलिनौ ॥ ११८ ॥
मुषंढीपंकजभृतौ बिभ्रती दक्षिणेतरौ । सदा सन्निहिता जज्ञे प्रभोः शासनदेवता ॥ ११९ ॥
ताभ्यामभुक्तसान्निध्यस्ततः स्थानादथान्यतः । भव्यजन्तूपकाराय विजहार जगद्गुरुः ॥ १२० ॥
षष्टिसहस्री[2] साधूनां सा साध्वीनां सषट्शता । चतुर्दशपूर्वभृतां सप्तत्यधिकषट्शती ॥ १२१ ॥
सहस्रद्वितयं सार्धमवधिज्ञानशालिनाम् । चत्वारिंशत्त्रयस्त्रिंशच्छती चापि मनोविदाम् ॥ १२२ ॥
केवलज्ञानिनां त्रीणि सहस्राणि शतद्वयम् । शतानि चैकपंचाशद्वैक्रियलब्धिशालिनाम् ॥ १२३ ॥
संजातवादलब्धीनां सहस्रद्वितयं पुनः । श्रावकाणां लक्षमेकं न्यूनाशीतिसहस्रयुक् ॥ १२४ ॥

१ कृष्णवर्णः । २ षड्भिः शतैः सह वर्तमाना सा षष्टिसहस्री ।

# द्वितीयः सर्गः ।

## ॥ श्रीअरनाथचारितम् ॥

इक्ष्वाकुवंशतिलकश्चारुगोरोचनाद्युतिः । चतुर्थारसरोहंसः[1] पायादरजिनेश्वरः ॥ १ ॥

त्रिजगत्कुमुदानंदचंद्रस्य परमेष्ठिनः । श्रीमतोऽरजिनेन्द्रस्य वक्ष्ये चरितमुज्ज्वलम् ॥ २ ॥

अस्यैव जंबूद्वीपस्य प्राग्विदेहेषु विस्तृते । सीतानद्युत्तरतटे विजये वत्सनामनि ॥ ३ ॥

सुसीमायां महापुर्यां निःसीमा[2] शौर्यसंपदाम् । नृपो धनपतिर्नामान्वर्द्धमयशोधनः ॥ ४ ॥

वंधनं ताडनं चांगखंडनं दंडनादि च । नाभूत् कस्यापि तत्राज्ञासारे[3] शासति मेदिनीम् ॥ ५ ॥

मिथोऽसंजातकलहैर्वत्सलैश्च मिथो जनैः । सकलापि मही तस्मिन् यत्याश्रम इवाभवत् ॥ ६ ॥

मनःसरोवरे तस्य दयावारितरंगिते । चिक्रीड निर्भरं हंस इव धर्मो जिनोदितः ॥ ७ ॥

विरक्तः सोऽथ संसारादसाराद्विश्वसारधीः । अन्तिके संवरमुनेः प्राव्राजीदात्तसंवरः[4] ॥ ८ ॥

स व्रतं पालयंस्तीव्रं तप्यमानस्तपांसि च । विजहार महीमात्तविविधाभिग्रहः सुधीः ॥ ९ ॥

चतुर्मासोपवासांतपारणे प्रत्यलाभयत् । श्रेष्ठिपुत्रो जिनदासः श्रद्धया तं महामुनिम् ॥ १० ॥

अर्हदाराधनाद्यैश्च स्थानैर्धनपतिर्मुनिः । आर्जयत्तीर्थकृन्नाम कर्म कर्मद्विषन्नपि[5] ॥ ११ ॥

---

१ चतुर्थार एव सरस्तस्मिन् हंससदृशः । २ नितरां सीमारूपः । ३ आज्ञैव सारो यस्य तस्मिन् तत्र राज्ञि । ४ गृहीतसंवरः । ५ कर्मशत्रुरपि ।

परमर्द्धिकः ॥ १२ ॥
विपद्य कालयोगेन समाहितमनाः स तु । नवमग्रैवेयकेऽभूदमरः परमर्द्धिकम् ॥ १३ ॥
इतश्च जंबूद्वीपस्यास्यैव क्षेत्रे च भारते । समस्ति हास्तिनपुरं पुरं परमर्द्धिकम् ॥ १४ ॥
राजानोऽपि प्रजायन्ते तत्र सेवार्थमागताः । दिव्यवाहननेपथ्या राजायंते प्रजाः पुनः ॥ १५ ॥
विभाति तत्र परिखा परितो वलयाकृतिः । श्रियः स्थैर्यकृते दत्ता स्वाज्ञालेखेव वेधसा ॥ १६ ॥
हैमस्फाटिकनैलानि तत्र चैत्यान्यनेकशः । शृंगाणि मेरुकैलासांजनाद्रीणामिवाबभुः ॥ १७ ॥
सुदर्शनश्चंड इव तत्र नाम्ना सुदर्शनः । अभूद्भूमिभुजां प्रेष्ठः सुराणामिव वृत्रहा ॥ १८ ॥
तस्यासने वा तल्पे वा गृहे वा बहिरेव वा । धर्मोऽनुज्झितसान्निध्यः प्रियमित्रमिवाभवत् ॥ १९ ॥
सिद्धमंत्रोपमे तस्य प्रतापे परिसर्पति । प्रक्रियामात्रमेवासीच्चतुर्धा सैन्यसंग्रहः ॥ २० ॥
गृहांगणरजस्तस्य शमयामासुरन्वहम् । घनैर्मदजलासारैर्नृपोपायनदन्तिनः ॥ २१ ॥
देवी नाम महादेवी कापि देवीव चागता । अंतःपुरशिरोरत्नमभवत्तस्य वल्लभा ॥ २२ ॥
न कोपं प्रणयेनापि पत्यौ जातु चकार सा । सपत्नीष्वपि मात्सर्यं प्रकृत्यार्या दधार न ॥ २३ ॥
पतिप्रसादसौभाग्यादीनि तस्या मदाय न । सा तथापि हि संजज्ञे प्रमदासु शिरोमणिः ॥ २४ ॥
तस्याश्च निरवद्यांग्या लावण्यसरितः खलु । अदृश्यत प्रतिच्छंदो दर्पणेष्वेव नान्यतः ॥ २५ ॥

---

१ प्रजा इवाचरन्ति । २ नैलानि नीलमणिमयानि । ३ मेरुशृंगसादृश्यं हैमचैत्यानामेवमनुक्रमेण ज्ञेयम् । ४ शोभनं दर्शनं यस्य सः । ५ श्रेष्ठः । ६ प्रकृष्टो मदो यासां तासु शिरोमणिरिति विरोधः । प्रमदासु युवतिष्विति तत्परिहारः ।

तया च भोगान् भुंजानः सुभुजो भूभुजां वरः । सुदर्शनो व्यतीयाय कालं कमपि नाकिवत् ॥ २५ ॥
इतश्च ग्रैवेयकस्थो जीवो धनपतेः स तु । एकान्तसुखनिर्मग्नो निजमायुरपूरयत् ॥ २६ ॥
स च्युत्वा फाल्गुनशुक्लद्वितीयायां निशाकरे । रेवतीस्थे महादेव्या देव्याः कुक्षाववातरत् ॥ २७ ॥
चतुर्दश महास्वप्नांस्तीर्थकृज्जन्मसूचकान् । सुखसुप्ता निशाशेषे महादेवी ददर्श सा ॥ २८ ॥
तस्याः पीनामतन्वानस्तन्वानश्च तनुश्रियम् । ज्ञानत्रितयसंयुक्तो गर्भो गूढमवर्धत ॥ २९ ॥
सा मार्गशुद्धदशम्यां रेवत्यां कनकद्युतिम् । संपूर्णलक्षणं नंद्यावर्ताकं सुषुवे सुतम् ॥ ३० ॥
षट्पंचाशद्दिक्कुमार्यः सूतिकर्माणि चक्रिरे । अभिषेकश्चतुःषष्ट्या मेरौ चक्रे च वासवैः ॥ ३१ ॥
विलिप्य पूजयित्वा च कृत्वा चारात्रिकादिकम् । स्वामिनं तमिति स्तोतुं सौधर्मेन्द्रः प्रचक्रमे ॥ ३२ ॥
नष्टाष्टादशदोषायाष्टादशायार्हते प्रभो । अष्टादशविधब्रह्मभृतां ध्येयाय ते नमः ॥ ३३ ॥
ज्ञानत्रयं गर्भतोऽपि यथैवायतने तव । तथैवाखिलमप्येतत्तीर्थनाथ जगत्त्रयम् ॥ ३४ ॥
मोहावस्वापिनीं दत्वा रागद्वेषादिदस्युभिः । चिरं जगदवस्कन्नं स्वामिंस्त्रायस्व संप्रति ॥ ३५ ॥
पथि श्रांतैरिव रथस्तृष्णाक्रांतैरिवापगा । तप्तैरिव तरुच्छाया निमज्जद्भिरिवोडुपः ॥ ३६ ॥
रोगिभिरिव भैषज्यं ध्वान्तान्धैरिव दीपकः । हिमार्तैरिव मार्तण्डो मार्गमूढैरिवाग्रगः ॥ ३७ ॥

---

१ शोभनपाणिः । २ देववत् । ३ शरीरशोभां विस्तारयन् । ४ नंद्यावर्तस्सांकं लांछनं यस्य तम् । ५ नष्टा अष्टादश दोषा यस्य तस्मै । ६ हृदयरूपे भवने । ७ ब्रुडद्भिः समुद्र इति शेषः । उडुपः प्लवः । ८ अग्रगामी मार्गदर्शक इति यावत् ।

क्रीडन्नागरनारीणां केशपाशावलोकनात् । ह्रीतै[1]रिवोन्मुक्तबर्हैर्बर्हिणैः शरणीकृतम् ॥ ५१ ॥
पुन्नागकुसुमामोदप्रमोदितमधुव्रतम्[2] । कर्कन्धूनागरंगीणां फलैः पिंजरितांबरम् ॥ ५२ ॥
लवलीफलिनीकुंदमुचुकुन्दाग्रकुड्मलैः । समन्ततः शोभमानं हेमन्त[3]हसितैरिव ॥ ५३ ॥
रजोघ्नी रोध्रपुष्पाणां निर्मलीकृतदिङ्मुखम् । प्रविवेश तदुद्यानं नंद्यावर्त[4]ध्वजो जिनः ॥ ५४ ॥
॥ पंचभिः कुलकम् ॥

वैजयन्त्याः समुत्तीर्य मार्ग[5]स्यैकादशीदिने । शुक्ले पौष्णगते[6] चेन्दावह्नो भागे च पश्चिमे ॥ ५५ ॥
समं राजसहस्रेण षष्ठेन प्राव्रजत् प्रभुः । मनःपर्ययसंज्ञं च तदैव ज्ञानमासदत् ॥ ५६ ॥
पुरे राजपुरे सद्मन्यपराजितभूपतेः । चक्रे स्वामी द्वितीयेऽह्नि परमान्नेन पारणम् ॥ ५७ ॥
अमरैर्विदधे तत्र वसुधारादिपंचकम् । रत्नपीठं तेन राज्ञा स्वामिपादपदे पुनः ॥ ५८ ॥
अनासीनोऽशयानश्च विविधाभिग्रहः प्रभुः । छद्मस्थस्त्रीणि वर्षाणि विजहार वसुन्धराम् ॥ ५९ ॥
अन्येद्युर्विहरन्नागात् सहस्राम्रवणं पुनः । सहकारतरोर्मूले चास्थात्प्रतिमया प्रभुः ॥ ६० ॥
कार्तिकशुक्लद्वादश्यां शशांके रेवतीगते । उत्पेदे केवलं तत्र घातिकर्मक्षयात् प्रभोः ॥ ६१ ॥
सद्यश्च देवैः समवसरणं तत्र निर्ममे । तत्र द्वारेण पूर्वेण प्रविवेश जगद्गुरुः ॥ ६२ ॥
चैत्यद्रुं तत्र षष्ट्यग्रकार्मुकत्रिशतोन्नतम् । प्रदक्षिणीकृत्य नमस्तीर्थायेत्यवदद्विभुः ॥ ६३ ॥

---

१ लज्जितैरिव ईदृशैर्मुक्तपिच्छैर्मयूरैः शरणीकृतं वनम् । हेमन्ततौ मयूराः पिच्छानि त्यजंतीति स्वभावोक्तिः । २ मधुव्रता भ्रमराः । ३ हेमन्तर्तोर्हास्यैरिव । ४ ध्वजश्चिह्नम् लांच्छनम् । ५ मार्गशीर्षस्य । ६ रेवत्यां गते ।

पूर्वसिंहासने तत्रोपाविशत् प्राङ्मुखः प्रभुः । व्यंतरास्तत्प्रतिच्छंदान् दिक्ष्वन्यास्वपि चक्रिरे ॥ ६४ ॥
अवास्थित यथास्थानं संघोऽपि भगवानथ । ज्ञात्वेशं समवसृतं तत्रागाच्च कुरूद्वहः ॥ ६५ ॥
भगवन्तं नमस्कृत्य सोऽनुशक्रमुपाविशत् । प्रारेभाते इति स्तोतुमथ शक्रकुरूद्वहौ ॥ ६६ ॥
जय त्रिभुवनाधीश जय विश्वैकवत्सल । जय कारुण्यजलधे जयातिशयशोभित ॥ ६७ ॥
विश्वप्रकाशनं भानोरमोघैर्भानुभिः[1] सदा । विश्वसंतापहरणं ज्योत्स्नया च हिमद्युतेः ॥ ६८ ॥
जगज्जीवनमंभोभिः प्रावृरंभोधरस्य च । जगदाश्वासनं वायोर्गत्या संततयापि च ॥ ६९ ॥
यथा निष्कारणमिह तथा ते परमेश्वर । जगत्रयोपकाराय प्रवृत्तिर्जयति प्रभो ॥ ७० ॥
अंधकारमयं चासीदंधं वा जगदप्यदः । सप्रकाशं सेक्षणं वा त्वया जज्ञेऽधुना पुनः ॥ ७१ ॥
नरकाणां खिलः[3] पंथा भवितातः परं प्रभो । तिर्यग्योनावपि गतिः स्तोकस्तोका भविष्यति ॥ ७२ ॥
सीमग्रामांतराणीव स्वर्गाश्च प्राणिनाममी । प्रत्यासन्ना भविष्यन्ति मुक्तिरप्यदवीयसी[4] ॥ ७३ ॥
त्वयि विश्वोपकाराय विहरत्यवनीमिमाम् । भावि किं किं न कल्याणमसंभाव्यमपि प्रभो ॥ ७४ ॥
इति स्तुत्वा सौधर्मेन्द्रे कुरुराजे च तस्थुषि । अरनाथः स भगवान् विदधे धर्मदेशनाम् ॥ ७५ ॥
चतुर्वर्गाग्रणीर्मोक्ष एकान्तसुखसागरः । तत्साधकतमं ध्यानमधीनं मनसश्च तत् ॥ ७६ ॥
आत्मायत्तमपि स्वान्तं कुर्वतामत्र योगिनाम् । रागादिभिः समाक्रम्य परायत्तं विधीयते ॥ ७७ ॥
रक्ष्यमाणमपि स्वान्तं समादाय मनाग्मिषम् । पिशाचा इव रागाद्याश्छलयंति मुहुर्मुहुः ॥ ७८ ॥

१ पूज्यः । २ किरणैः । ३ शून्यः । ४ नातिदूरा ।

रागादितिमिरध्वस्तज्ञानेन[1] मनसा जनः । अंधेनांधे[2] इवाकृष्टः पात्यते नरकावटे ॥ ७९ ॥

द्रव्यादिषु रतिप्रीती राग इत्यभिधीयते । तेष्वेवारतिमप्रीतिं चाहुर्द्वेषं मनीषिणः ॥ ८० ॥

उभावेतौ दृढतरौ बन्धनं सर्वजन्मिनाम् । सर्वदुःखानोकहानां[3] मूलकन्दौ प्रकीर्तितौ ॥ ८१ ॥

कः सुखे विस्मयस्मेरो दुःखे कः कृपणो भवेत् । मोक्षं को नाप्नुयाद्रागद्वेषौ स्यातां न चेदिह ॥ ८२ ॥

रागेण[4] ह्यविनाभावी द्वेषो द्वेषेण चेतरः । तयोरेकतरत्यागे परित्यक्तावुभावपि ॥ ८३ ॥

दोषाः स्मरप्रभृतयो रागस्य परिचारिकाः[5] । मिथ्याभिमानप्रमुखा द्वेषस्य तु परिच्छदः ॥ ८४ ॥

तयोर्मोहः पिता बीजं नायकः परमेश्वरः । ताभ्यामभिन्नस्तद्रक्ष्यः सर्वदोषपितामहः[6] ॥ ८५ ॥

एवमेते त्रयो दोषा नातो दोषान्तरं क्वचित् । तैरमी जन्तवः सर्वे भ्रम्यन्ते भववारिधौ ॥ ८६ ॥

स्वभावेन हि जीवोऽयं स्फटिकोपलनिर्मलः । उपाधिभूतैरेतैस्तु तादात्म्येनावभासते ॥ ८७ ॥

अराजकमहो विश्वं यदेभिः पश्यतोहरैः । ह्रियते ज्ञानसर्वस्वं स्वरूपमपि जन्मिनाम् ॥ ८८ ॥

ये जन्तवो निगोदेषु येऽपि चासन्नमुक्तयः । सर्वत्रास्पृष्टकरुणा पतत्येषां पताकिनी[7] ॥ ८९ ॥

मुक्त्या वैरं किमेतेषां मुक्तिकामैः[8] सहाथवा । येनोभयसमायोगस्तैर्भवन् प्रतिषिध्यते ॥ ९० ॥

व्याघ्रव्यालजलाग्निभ्यो न बिभेति तथा मुनिः । लोकद्वयापकारिभ्यो रागादिभ्यो भृशं यथा ॥ ९१ ॥

---

१ रागादय एवान्धकारं तेन ध्वस्तं ज्ञानं यस्य तत् । २ यथान्धेनाकृष्टोऽन्धोऽवटे कूपे पात्यते तद्वत् । ३ अनोकहो वृक्षः । ४ रागं विना द्वेषो न भवेत् द्वेषं च विना रागोऽपि न भवेदित्यर्थः । ५ सेवकाः । ६ सर्वदोषाणां पितरौ रागद्वेषौ तयोरपि पिता मोह इत्यर्थः । ७ सेना । ८ मुमुक्षुभिः ।

वर्त्मातिसंकटमहो योगिभिः समुपाश्रितम् । रागद्वेषौ व्याघ्रसिंहौ पार्श्वतो यस्य तिष्ठतः ॥ ९२ ॥
[1]अस्ततंद्रैरतः पुंभिर्निर्वाणपदकांक्षिभिः । विधातव्यः समत्वेन रागद्वेषद्विषज्जयः ॥ ९३ ॥
भूयांसः प्राव्रजञ्जनाः प्रभोर्देशनयानया । कुंभादयो गणभृतस्त्रयस्त्रिंशच्च जज्ञिरे ॥ ९४ ॥
पूर्णायामादिपौरुष्यां व्यसृजद्देशनां प्रभुः । कुंभस्तत्पादपीठस्थो गणभृद्देशनां व्यधात् ॥ ९५ ॥
द्वितीयस्यां तु पौरुष्यां व्यसृजत् सोऽपि देशनाम् । शक्राद्याश्च प्रभुं नत्वा जग्मुर्निजनिजं पदम् ॥ ९६ ॥
यक्षेन्द्रः षण्मुखस्त्र्यक्षः श्यामः शंखरथो भुजैः । मातु[2]लिंगिबाणिखड्गिमुद्गरिपाशयभीप्रदैः ॥ ९७ ॥
दक्षिणैः षड्भिरन्यैश्च नकुलीष्वासिचर्मिभिः । शूलांकुशाक्षसूत्राढ्यैर्युक्तस्तत्तीर्थभूस्तथा ॥ ९८ ॥
देवी च धारिणी नाम नीलांगी कमलासना । मातुलिंगोत्पलधरदक्षिणोभयबाहुका ॥ ९९ ॥
पद्माक्षसूत्रभृद्वामोभयबाहुररप्रभोः । सन्निधिस्थे सदाभूतामुभे शासनदेवते ॥ १०० ॥
ताभ्यामधिष्ठिताभ्यर्णो भगवान्विहरन्महीम् । अन्येद्युः समवासार्षीत् पद्मिनीखंडपत्तने ॥ १०१ ॥
तत्रापि देशनां कृत्वा विरते सत्यरे प्रभौ । स्वामीव विदधे कुंभो देशनां संशयच्छिदाम् ॥ १०२ ॥
तत्रैको वामनोऽभ्येत्य धर्मं श्रोतुमुपाविशत् । श्रेष्ठी सागरदत्तोऽथ कुंभं नत्वैवमब्रवीत् ॥ १०३ ॥
भवप्रकृत्या भगवन् दुःखिनो भविनोऽखिलाः । विशेषदुःखितश्चास्मि सुखलेशोऽपि नास्ति यत् ॥ १०४ ॥
भार्यायां जिनमत्यां मे नामतः प्रियदर्शना । उत्पन्ना दुहिता रूपाधरीकृतसुरांगना ॥ १०५ ॥
प्राप चानन्यसामान्यं सा कलास्वतिकौशलम् । द्वि[3]तीयं च वयो रूपवैदग्ध्यश्रीविशेषकम् ॥ १०६ ॥

१ आलस्यरहितैः । २ मातुलिंगमस्यास्तीत्येवं सर्वत्रास्त्यर्थे इनिः । ३ यौवनाख्यं ।

अनुरूपं वरं तस्या अपश्यन् दुःखितोऽभवम् । उक्तोऽस्मि जिनमत्या च चिंतामाप्नोसि नाथ किम्॥१०७
अनुरूपं त्वद्दुहितुर्वरमन्वेषयन्नपि । न प्राप्नोमि क्वचिदपि तेन ताम्यामि सुंदरि ॥ १०८ ॥
इत्युक्तं जिनमत्यापि श्रेष्ठिन् श्रेष्ठस्त्वया वरः । आद्यः स कोऽपि येन स्यान्नानुतापः प्रियावयोः ॥ १०९॥
अवोचमहमप्येवं प्रमाणं दैवमत्र हि । आत्मनीनो हि सर्वोऽपि लोकेषुः कोऽपि नात्मनः ॥ ११० ॥
इत्युक्त्वा विपणौ गच्छंस्तामजिह्याः समागतम् । अज्ञासमृषभदत्तं सार्थवाहं महर्द्धिकम् ॥ १११ ॥
साधर्मिकत्वात् सस्नेहा वाणिज्योदन्तगर्भिताः । अभूवन् पूर्वसुहृदेवालापाः सह तेन मे ॥ ११२ ॥
अन्यदा स ममागारमागात् केनापि हेतुना । ईक्षते स्म च सुचिरं मत्पुत्रीं प्रियदर्शनाम् ॥ ११३ ॥
कस्य कन्येयमिति तु तेन पृष्टोऽहमब्रवम् । ममेयं हेतुना केन सुचिरं वीक्ष्यते त्वया ॥ ११४ ॥
आह स्मर्षभदत्तोऽपि वीरभद्रोऽभिधानतः । संप्राप्तयौवनः श्रेष्ठिन्नस्ति मे तनयो नयी ॥ ११५ ॥
स रूपेणातिकंदर्पोऽतिकविः काव्यशक्तितः । अतिवाचस्पतिर्वाचा विज्ञानेनातिवर्धकिः ॥ ११६॥
अतिहूहूश्च गीतेन वीणया चातितुंबरुः । नाट्येषु चातिभरतो विनोदेष्वतिनारदः ॥ ११७ ॥
कामरूपः सुर इव गुटिकादिप्रयोगतः । किं चान्यत्सा कला नास्ति यां स्रष्टेवं न वेत्ति सः ॥ ११८ ॥
कन्यां तस्यानुरूपां तु नापश्यं क्वचिदप्यहम् । इयं तु कन्यका दृष्टा चिरात्तदुचिता मया ॥ ११९ ॥
मयाप्युक्तं ममाप्येषा कलाकौशलशालिनी । अनुरूपवरार्थेऽस्याश्चिरं ग्रस्तोऽस्मि चिन्तया ॥ १२० ॥

---

१ आत्मने हित आत्मनीनः आत्महितेच्छुरित्यर्थः । २ पूर्वमित्रेण सह यथालापा भवन्ति तथेत्यर्थः । ३ कविं शुक्राचार्यमतिक्रान्त इति समास एवं सर्वत्र । ४ हूहूर्गन्धर्वविशेषः । ५ ब्रह्मेव ।

साप्यूचे समयेऽत्रापि यत्ते वैदग्ध्यवागियम् । सोऽवोचन्मा कुपः कांते करिष्ये नेदृशं पुनः ॥ १३६ ॥
तां साभिप्रायमित्युक्त्वा रमयामास सोऽधिकम् । साप्यस्वाप्सीद्रतिश्रांता तां वक्रोक्तिमजानती ॥१३७॥
सत्यसुप्तेति तां मुक्त्वा दृढामुक्तांतरीयकः[1] । वीरवद्वीरभद्रोऽथ निर्जगाम निजागृहात् ॥ १३८ ॥
स्वं श्यामवर्णं गुटिकाप्रयोगेण चकार सः । याति वर्णपरावृत्त्या[2] रूपं काव्यवदन्यताम् ॥ १३९ ॥
कलाकलापविज्ञानातिशयं दर्शयंश्च सः । विद्याधर इवाभ्राम्यत् स्वैरं ग्रामपुरादिषु ॥ १४० ॥
सापृच्छ्य श्वशुरौ तातगृहेऽगात् प्रियदर्शना । विना पतिं कुलस्त्रीणां वासो ह्यन्यत्र नोचितः ॥ १४१ ॥
एकदा सिंहलद्वीपे रत्नाकरनृपाश्रितम्[3] । पुरं रत्नपुरं नाम वीरभद्रो ययावटन् ॥ १४२ ॥
स हट्टे श्रेष्ठिशंखस्य शंखोज्ज्वलगुणश्रियः[4] । न्यषीदत्तेन पृष्टश्च कुतो भद्र त्वमागमः ॥ १४३ ॥
बभाषे वीरभद्रोऽपि तामलिप्त्याः स्ववेश्मतः । रुषित्वा निःसृतो भ्राम्यन्निह ताताहमागमम् ॥ १४४ ॥
शंखः श्रेष्ठ्यप्यभाषिष्ट न सुष्ठु भवता कृता । कुमार सुकुमारेण विदेशगतिरीदृशी ॥ १४५ ॥
कर्मेदं वक्रमपि ते दैवेन सरलीकृतम् । अक्षतांगो यदत्रागास्त्वं वत्स मम सन्निधौ ॥ १४६ ॥
इत्युक्त्वा तं गृहे नीत्वा शंखश्रेष्ठी स्वपुत्रवत् । स्नपयित्वा भोजयित्वा सस्नेहमिदमभ्यधात् ॥ १४७ ॥
ममानुत्पन्नपुत्रस्य पुत्र पुत्रस्त्वमेव हि । स्वामी भूत्वा मद्विभवमुपभुंक्ष्व च देहि च ॥ १४८ ॥
कुरुष्व मद्दृशोः प्रीतिं विलसन्नमरर्द्धिकः[5] । धनं हि सुलभं वत्स तद्भोक्ता दुर्लभः सुतः ॥ १४९ ॥

---

१ दृढं आमुक्तं बद्धमांतरीयवस्त्रं येन सः । २ कवितापक्षे वर्णानामकारादीनां परावर्तनेनान्यार्थतां प्राप्नोति । ३ रत्नाकरनाम्ना नृपेणाश्रितम् । ४ शंख इवोज्ज्वला गुणाः श्रीश्च यस्य सः । ५ अमरस्येव ऋद्धिर्यस्य सः ।

पक्षावुत्पतनासहाविमौ ॥ १६५ ॥
प्रम्लानं वदनं चंचूः श्लथोपात्तमृणालिका । ग्रीवा च शिथिला पक्षावुत्पतनासहाविमौ ॥ १६५ ॥
शून्यं चेदमवस्थानमवस्थां विरहाकुलाम् । आख्याति व्यक्तमेतस्या अनाख्यातामपि स्वयम् ॥ १६६ ॥
कलाविदीदृशी कस्मादियत्कालं सखि त्वया । नानीतेयं गृहे क्षिप्त्वा रहस्यमिव किं धृता ॥ १६७ ॥
वीरभद्रोऽप्युवाचैवं गुरूणामभिशंकया । नानीताहमिह स्वस्रा नान्यत् किमपि कारणम् ॥ १६८ ॥
अनंगसुंदरीत्यूचेऽतः परं प्रत्यहं त्वया । आगन्तव्यं सह स्वस्रा किं चास्या नाम सुंदरि ॥ १६९ ॥
वीरभद्रो झगित्यूचे नाम वीरमतीति मे । भूयोऽप्यूचे राजपुत्र्या वेत्स्यन्या अपि किं कलाः ॥ १७० ॥
ऊचे विनयवत्यैवमचिराज्ज्ञास्यसि स्वयम् । न प्रत्ययः पराख्यातेष्वत्यद्भुतगुणेष्वपि ॥ १७१ ॥
एवमस्त्वित्युदित्वाथ मुदितानंगसुंदरी । सत्कृत्य विनयवतीं विससर्ज तदन्विताम् ॥ १७२ ॥
वीरभद्रो वधूवेषं गृहे मुक्त्वा ययौ पुनः । आपणे श्रेष्ठिनः पार्श्वे पितृभक्तिनियंत्रितः ॥ १७३ ॥
श्रेष्ठी तमूचे सस्नेहं वत्स क्वास्था इयच्चिरम् । इह त्वां पृच्छतां नृणां निर्विण्णोऽस्म्युत्तरं ददत् ॥ १७४ ॥
बभाषे वीरभद्रोऽपि तातोद्याने गतोऽस्म्यहम् । श्रेष्ठ्यप्यभाषतैवं च यद्येवं शोभनं कृतम् ॥ १७५ ॥
तथैवाह्नि द्वितीयेऽपि तत्र सोऽगात् कलानिधिः । अनंगसुंदरीं वीणां वादयंतीं ददर्श च ॥ १७६ ॥
इत्यूचे वीरभद्रस्तां तंत्रीरेषा न सुस्वरा । मनुष्यवालोऽमुष्यां यदनुस्यूतोऽस्ति सुंदरि ॥ १७७ ॥
कथं नु ज्ञायत इति तयोक्तः सोऽब्रवीदिदम् । ज्ञायते त्वदुपक्रांतरागनिर्वाहदर्शनात् ॥ १७८ ॥
ततश्च सार्पयामास वीरभद्रस्य वल्लकीम् । तदिदुत्कीलयामास तत्तंत्रीं सोऽपि तत्क्षणात् ॥ १७९ ॥

---

१ उड्डयनेऽक्षमौ ।

मनुष्यवालं तन्मध्यात् स शल्यं हृदयादिव । आकृष्य दर्शयामास तस्या विस्मयमादधत् ॥ १८० ॥
तत्तंत्रीं सज्जयित्वाथ भूयो दंडे निबध्य च । वादयामास तां वीणां प्रावीण्यजिततुंबरुः ॥ १८१ ॥
स्वरानुत्पादयामास सारण्या सुस्फुटश्रुतीन् । तानांश्च कूटतानांश्च व्यक्तव्यंजनधातुकान् ॥ १८२ ॥
वाद्यप्रकारमाश्रित्य सकलं निष्कलं च सः । रागं प्रपंचयामास विपंच्यां श्रवणामृतम् ॥ १८३ ॥
सानंगसुंदरी सा च पर्षदुत्कर्षहर्षभाक् । आलेख्यलिखितेवऽस्थाद्गीतहार्या मृगा अपि ॥ १८४ ॥
तद्वीणागीतमाकर्ण्य दध्यौ सा राजकन्यका । ईदृशं गुणवत्पात्रं देवानामपि दुर्लभम् ॥ १८५ ॥
निरर्थकं किं च मम जन्मापि ह्यनया विना । शोभते पुष्पदाम्नेव प्रतिमा सकलापि हि ॥ १८६ ॥
तस्या अवसरप्राप्तमन्यास्वपि कलासु सः । प्रावीण्यं दर्शयामास तन्मनोवित्ततस्करः ॥ १८७ ॥
वीरभद्रः स्वानुरक्तां विज्ञायानंगसुंदरीम् । अन्यदा श्रेष्ठिनं शंखं रहस्येवमवोचत ॥ १८८ ॥
पृष्ठतो विनयवत्यास्तात प्रत्यहमप्यहम् । गच्छाम्यनंगसुंदर्याः पार्श्वे युवतिवेषभृत् ॥ १८९ ॥
तद्युष्माभिर्न भेतव्यं करिष्येऽहं तथा यथा । न कोऽप्यनर्थो भावी वो भावि प्रत्युत गौरवम् ॥१९०॥
मह्यं दातुं निजां कन्यां चेद्वः प्रार्थयते नृपः । तदादौ नानुमंतव्यं मान्यमत्याग्रहे सति ॥ १९१ ॥
श्रेष्ठ्यपि व्याजहारैवं त्वं वेत्स्यभ्यधिको धिया । एकं तु ब्रूमहे वत्स कार्यं कुशलमात्मनः ॥ १९२ ॥
वीरभद्रः प्रत्युवाच विमनास्तात मा स्म भूः । पश्याचिराच्छुभोदर्कं[1] स्वसूनोः कर्म शोभनम् ॥ १९३ ॥
वत्स वेत्सि त्वमित्युक्त्वा स श्रेष्ठी मौनमाश्रयत् । रत्नाकरनृपास्थाने[2] वार्तेति च तदाभवत् ॥ १९४ ॥

१ शुभपरिणामम् । २ आस्थानं सभा ।

ताम्रलिप्त्याः कश्चिदागाल्लंखश्रेणिगृहे युवा । पुरे कलाभिश्चित्राभिरचित्रीयत सोऽन्वहम् ॥ १९५ ॥
तस्य वैदेशिकत्वाच्च ज्ञातिर्विज्ञायते न हि । महाकुलोत्पन्न इति व्याचष्टे तु तदाकृतिः ॥ १९६ ॥
अथेत्थं नृपतिर्दध्यौ युवायं रूपमन्मथः । सदाचारः सदाकारः कलारत्नाकरः सुधीः ॥ १९७ ॥
अनुरूपो मद्दुहित्रे यद्ययं रोचते वरः । न ह्यवद्यं तदा धातुर्युक्तसंबंधकारिणः ॥ १९८ ॥
वीरभद्रस्तदावोचद्विजनेऽनंगसुंदरीम् । इयत्यामपि सामग्र्यां किं भोगविमुखा सखि ॥ १९९ ॥
अनंगसुंदरीत्यूचे भोगाः कस्य न वल्लभाः । वल्लभो दुर्लभः किं तु स्वानुरूपः कुलोद्भवः ॥ २०० ॥
वरं मणिः केवलैव न तु काचांगुलीयगा[2] । वरं सरिज्जलरिक्ता न तु यादः[3]समाकुला ॥ २०१ ॥
शून्यैव हि वरं शाला न तु तस्करपूरिता । अद्रुमैव वरं वाटी विषद्रुममयी न तु ॥ २०२ ॥
[4]अनुदूढा वरं नारी रूपयौवनवत्यपि । निष्कलेनाकुलीनेन न तु पत्या विडंबिता ॥ २०३ ॥
॥ त्रिभिर्विशेषकम् ॥

न हीयत्कालमद्राक्षमनुरूपं वरं सखि । वरमल्पगुणं वृत्वा कथं स्यां हास्यभाजनम् ॥ २०४ ॥
वीरभद्रोऽब्रवीदेवमनुरूपो वरो वरः[6] । मम नास्तीति नावादीर्बहुरत्ना हि भूरियम् ॥ २०५ ॥
अनुरूपं वरं किं तेऽद्यैव संपादयाम्यहम् । [7]अरोचकिनि भोगास्ते रोचिष्यंते परं न हि ॥ २०६ ॥
जगदेऽनंगसुंदर्याप्येवमाशाप्रदानतः । किं कर्षयसि मे जिह्वामथ मिथ्या वदस्यदः ॥ २०७ ॥

---

१ दोषः । २ काचस्यांगुलीयके वर्तिनीति मणिविशेषणम् । मणिशब्दः स्त्रीलिंगेऽप्यस्ति । ३ यादो जलजंतुः । ४ अपरिणीताः । ५ कलारहितेन । ६ श्रेष्ठः । ७ हे अरुचिवति ।

यद्यमिथ्या दर्शय त्वमनुरूपं वरं ततः । कलायौवनरूपादि कृतार्थी मे यथा भवेत् ॥ २०८ ॥
वीरभद्रस्तयेत्युक्तो निजरूपमदीदृशत् । साप्यूचे त्वदधीनास्मि तर्ह्यहं त्वं पतिर्मम ॥ २०९ ॥
अथ सोऽवोचदस्त्वेवं मापवादः स्म भूदिति । एष्याम्यतः परं नेह विज्ञप्यस्तत्त्वया नृपः ॥ २१० ॥
यथायं श्रेष्ठिनं शंखं सोपरोधं वदत्यदः । अनंगसुंदरी वीरभद्राय प्रतिगृह्यताम् ॥ २११ ॥
आमित्युक्तं तया वीरभद्रो निजगृहं ययौ । आहूय जननीं सद्यः सापि चैवमवोचत ॥ २१२ ॥
अनुरूपवराभावात् पित्रोः खेदाय केवलम् । अभूवमहमंबेयत्कालं शल्यमिवोरसि ॥ २१३ ॥
कलारूपादिभिः स्वस्यानुरूपोऽस्ति निरूपितः । वीरभद्राभिधः शंखश्रेष्ठिसूनुर्मया वरः ॥ २१४॥
अद्यैव देहि मां तस्मै ततो विज्ञप्यतां स्वयम् । तं तातः श्रेष्ठिनं शंखं मदर्थेऽर्थयते यथा ॥ २१५ ॥
इत्युक्त्या मुदिता राज्ञी नृपं गत्वैवमभ्यधात् । दिष्ट्याद्य वर्धसे वत्सानुरूपवरलाभतः ॥ २१६ ॥
स्वयं ह्यनंगसुंदर्या स्वानुरूपः परीक्षितः । शंखश्रेष्ठिसुतो वीरभद्रो नाम वरो युवा ॥ २१७ ॥
राजाप्यूचे चिंतयतो ममेदमिति वादिनी । चिन्तामणिरिवागास्त्वं कामधेनुरिवाथवा ॥ २१८ ॥
स्थैर्यं दाक्ष्यं च वत्साया अहो वरपरीक्षणे । इयत्कालमपि स्थित्वा यद्वव्रे वर ईदृशः ॥ २१९॥
सद्योऽप्याह्वायितो राज्ञा बहीश्वरवणिग्वृतः । शंखश्रेष्ठ्याययौ तत्र राजानं प्रणनाम च ॥ २२०॥
ततश्च श्रेष्ठिनं शंखमित्यभाषिष्ट भूपतिः । कोऽप्यायातस्तामलिप्त्या युवास्ति तव वेश्मनि ॥ २२१ ॥
स श्रूयते च सकलकलाजलधिपारगः । अद्भुतरूपसौन्दर्यो वर्यो गुणगणेन च ॥ २२२ ॥

---

१ साग्रहम् । २ आत्मार्थकत्वात् स्वस्येति पुंस्त्वम् ।

शंखोऽप्युवाच देवैवं गुणान् वेत्ति जनः पुनः । राजापि व्याजहाराथ स त्वदाज्ञावशो न वा ॥ २२३ ॥
शंखश्रेष्ठयप्यभाषिष्ट स्वामिन् किमिदमुच्यते । तस्यैव हि गुणक्रीतो वशवर्ती जनोऽखिलः ॥ २२४ ॥
अन्यथाद्भूपतिर्भूयस्तत्कृतेऽनंगसुन्दरी । अद्यैव गृह्यतां श्रेष्ठिंश्चिराद्योगोऽस्तु योग्ययोः ॥ २२५ ॥
श्रेष्ठ्यूचे त्वं हि नः स्वामी पाल्यास्तव वयं प्रजाः । संवन्धश्च सखित्वं च समयोरेव शोभते ॥ २२६ ॥
राजापीत्यादिशत् किं मां प्रत्यादिशसि भंगितः । कुर्वाज्ञां मे निर्विचारं गत्वा सज्जीभव द्रुतम् ॥२२७॥
आदृत्य शंखो राजाज्ञामुपेत्य च निजे गृहे । आचख्यौ वीरभद्राय तत्सर्वं राजशासनम् ॥ २२८ ॥
अनंगसुंदरीवीरभद्रयोर्ववृते ततः । महाविभूत्या विवाहः शुभे लग्ने शुभे दिने ॥ २२९ ॥
परस्परं तयोः प्रीतिरवर्धत दिने दिने । सा[3] स्यात् स्वयंवरवधूवरयोर्ह्युत्तरोत्तरा ॥ २३० ॥
जैनं धर्मं दिशन् वीरभद्रस्तां श्राविकां व्यधात् । आस्तामत्र सतां संगः परलोकेऽपि शर्मणे ॥ २३१ ॥
पटेऽर्हत्प्रतिमां संघं चतुर्विधमपि स्वयम् । स लिखित्वार्पयत्तस्यै सम्यग्ज्ञापयच्च ताम् ॥ २३२ ॥
वीरभद्रोऽन्यदा दध्यौ मयि स्निग्धेयमीक्ष्यते । स्त्रीणां प्रकृतिलोलानां परं स्थैर्ये न निश्चयः ॥ २३३ ॥
भवत्वाशयमेतस्या ज्ञास्यामीति विमृश्य सः । वैदग्ध्यसुंदरोऽनंगसुन्दरीमित्यभाषत ॥ २३४ ॥
त्वत्तः प्रियतमे किंचिदन्यत् प्रियतमं न मे । स्वदेशगमनायाहं त्वामापृच्छे तथापि हि ॥ २३५ ॥
यतश्चिरं मत्पितरौ मद्वियोगकदर्थितौ । अतीव दुःखमासाते तद्गत्वाश्वासयामि तौ ॥ २३६ ॥
इहैव तिष्ठेः सुभ्रु त्वं भूयोऽप्येष्याम्यहं द्रुतम् । न खलु त्वां विनान्यत्राहमपि स्थातुमीश्वरः ॥ २३७ ॥

१ वचनरचनया । २ अंगीकृत्य । ३ प्रीतिः । ४ बोधयामास ।

अपसंज्ञेव[1] पतिता निसर्गकरुणाजुषा । सा तापसकुमारेण ददृशेऽत्यार्द्रया दृशा ॥ २५२ ॥

॥ त्रिभिर्विशेषकम् ॥

तामुत्थाप्याश्रमपदे सोऽनैषीद्भगिनीमिव । विश्रब्धा पुत्रि तिष्ठेहेत्यूचे कुलपतिश्च ताम् ॥ २५३ ॥
पाल्यमाना तापसीभिर्दिनैः कतिपयैरपि । समजायत सा स्वस्था स्थिता पितुरिवौकसि ॥ २५४ ॥
तस्याः कुलपती रूपातिशयादित्यचिंतयत् । अत्रस्थेयं तापसानां स्यात्समाधिच्छिदे ध्रुवम् ॥ २५५ ॥
ततस्तापसवृद्धस्तामित्यूचेऽनंगसुन्दरीम् । इतोऽस्त्यदूरतो वत्से पद्मिनीखंडपत्तनम् ॥ २५६ ॥
वसंति सन्तः प्रायेण जनास्तत्र महाधनाः । भवत्यास्तत्र तिष्ठंत्याः स्वास्थ्यमुत्पत्स्यतेतमाम् ॥ २५७ ॥
अवश्यं तत्र भावी ते भर्त्रा च सह संगमः । तत्तत्र गच्छ वत्से त्वं जरद्भिस्तापसैः समम् ॥ २५८ ॥
इत्याज्ञया कुलपतेः सा जरत्तापसैर्वृता । हंसीव पद्मिनीखंडं पद्मिनीखंडमन्वगात् ॥ २५९ ॥
पुरे प्रवेशो नास्माकमर्ह इत्यभिधाय ताम् । पुराद्बहिरपि त्यक्त्वा जग्मुर्व्यावृत्त्य तापसाः ॥ २६० ॥
विदधाना दिवं दृष्टिपातैः सकुमुदामिव । वीक्षमाणा दिशो यूथपरिभ्रष्टैणिकेव[2] सा ॥ २६१ ॥
कार्यंचिन्तार्थमायांतीं[3] व्रतिनीभिः समावृताम् । गणिनीं सुव्रतानाम्नीं ददर्शांबां निजामिव ॥ २६२ ॥

॥ युग्मम् ॥

सस्मार च यदेतास्ताः पत्या मे निजपाणिना । अनवद्या जगद्वंद्या लिखित्वा दर्शिताः पटे ॥ २६३ ॥
इति संस्मृत्य सा पूर्वाभ्यस्तेन विधिना द्रुतम् । उपेत्य सुव्रतापादान् ववंदे व्रतिनीश्च ताः ॥ २६४ ॥

१ मूर्छिता । २ मृगीव । ३ स्थंडिलार्थम् ।

सिंहलद्वीपचैत्यानि मातर्वंदस्व मद्गिरा । रचितांजलिरित्यूचे सुव्रतां तां महाव्रताम् ॥ २६५ ॥
सुव्रताप्यन्यधत्तैवं सिंहलादागतासि किम् । कथमेकाकिनी नैषा ह्याकृतिर्निष्परिछदा ॥ २६६ ॥
सर्वं सुस्था कथयिष्याम्येवमुक्त्वा तया सह । सुव्रतागणिनी शीघ्रं जगाम स्वं प्रतिश्रयम्[1] ॥ २६७ ॥
वंदमाना साथ साध्वीरसाधारणभक्तितः । प्रियदर्शनया तत्र दृष्टा च सुतया तव ॥ २६८ ॥
पृष्टा च सा सुव्रतया प्रियदर्शनयापि च । सुव्रतादर्शनप्रांतमाख्यद्वृत्तांतमात्मनः[2] ॥ २६९ ॥
प्रियदर्शनया सोचे वीरभद्रस्य सुंदरि । सर्वं कलादि संवादि[3] वर्णेन तु स कीदृशः ॥ २७० ॥
तया चोक्ते श्याम इति जगाद प्रियदर्शना । विसंवदति मद्भर्तुरेको वर्णस्तु वर्णिनि[4] ॥ २७१ ॥
गणिन्युवाच ते धर्मस्वसेयं प्रियदर्शना । वत्से सहानया तिष्ठ धर्मानुष्ठानतत्परा ॥ २७२ ॥
एवं सुव्रतया सोक्ता प्रियदर्शनयापि च । दर्शनात्यंतवात्सल्यास्थात्तत्रानंगसुंदरी ॥ २७३ ॥
इतश्च वीरभद्रोऽपि भग्ने प्रवहणे तदा । एकस्मिन् फलके लग्नस्ताड्यमानो महोर्मिभिः ॥ २७४ ॥
रतिवल्लभसंज्ञेन विद्याधरवरेण सः । सप्तमे दिवसेऽदर्शि निन्ये वैताढ्यमूर्ध्नि च ॥ २७५ ॥
स्ववल्लभाया मदनमंजुकायाश्च सोऽर्पितः । पुत्रत्वेन स्वयं तेनापुत्रेण परया मुदा ॥ २७६ ॥
ताभ्यां पृष्टश्च सोऽम्भोधिपातवृत्तांतमादितः । आत्मनः सकलत्रस्य कथयित्वैवमब्रवीत् ॥ २७७ ॥
अहं तात त्वयाकृष्टो यमास्यादिव[5] सागरात् । कथं सा वर्ततेऽनंगसुंदरीति न वेद्मि तु ॥ २७८ ॥
आभोगिन्या विद्यया च ज्ञात्वाख्यद्रतिवल्लभः । वल्लभे भवतोऽनंगसुंदरीप्रियदर्शने ॥ २७९ ॥

---

१ उपाश्रयम् । २ सुव्रताया दर्शनं यावत् । ३ समानम् । ४ हे व्रतिनि । ५ यममुखात् ।

पत्तने पद्मिनीखंडे सुव्रतायाः प्रतिश्रये । धर्मानुष्ठाननिरते भगिन्याविव तिष्ठतः ॥ २८० ॥

॥ युग्मम् ॥

उभयोरपि पत्न्योस्तु तया कल्याणवार्तया । सर्वांगीणं सिक्त इव सुधया श्वसिति स्म सः ॥ २८१ ॥

अब्धेरुत्तीर्णमात्रोऽपि गुटिकां श्यामिकाकरीम् । सोऽपनीयाददे वर्णं सहजं गौरलक्षणम् ॥ २८२ ॥

वज्रवेगवतीकुक्षिभवां डुहितरं निजाम् । रत्नप्रभाख्यां तेनोदवाहयद्रतिवल्लभः ॥ २८३ ॥

बुद्धदास इति नामात्मीयं तत्राशशंस सः । समं च रत्नप्रभयान्वभूद्वैषयिकं सुखम् ॥ २८४ ॥

संभूय गच्छतो विद्याधरान् सोऽन्येद्युरैक्षत । क्वैते वेगेन गच्छंतीत्यपृच्छच्च निजां प्रियाम् ॥ २८५ ॥

आख्यद्रत्नप्रभाप्येवमत्राद्रौ शाश्वतार्हताम् । यात्रां कर्तुं प्रयांत्येते वेगाद्विद्याधराः प्रिय ॥ २८६ ॥

एवमाकर्ण्य स श्राद्धो बुद्धदासाभिधः सुधीः । वैताढ्यशैलशिखरमारुरोह तया सह ॥ २८७ ॥

ववंदे तत्र चैत्यानि स भक्त्या शाश्वतार्हताम् । देवाग्रे गीतनृत्तादि चक्रे रत्नप्रभापि च ॥ २८८ ॥

सोऽथाब्रवीदपूर्वोऽयं देवो मम यतः प्रिये । सिंहलद्वीपवास्यस्मि बुद्धोऽस्मत्कुलदेवता ॥ २८९ ॥

साप्यूचे नाथ तेनैव हेतुना निगदस्यदः । अपूर्वो मम देवोऽयं देवदेवो ह्ययं प्रभुः ॥ २९० ॥

सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः । यथास्थितार्थवादी च देवोऽर्हन्परमेश्वरः ॥ २९१ ॥

देवा न बुद्धब्रह्माद्याः संसारावर्तपातिनः । स्वस्य मोहादिपिशुनमक्षसूत्रादिबिभ्रतः ॥ २९२ ॥

ततो विचित्रक्रीडाभिः क्रीडतोरन्वहं तयोः । कियानपि ययौ कालो रतिसागरमग्नयोः ॥ २९३ ॥

---

१ मोहादिसूचकम् ।

सोऽन्यदोषे निशाशेषे प्रिये रत्नप्रभेऽचिरात् । दक्षिणे भरतार्धेऽद्य गच्छामः क्रीडितुं सुखम् ॥ २९४ ॥

आमेत्युक्तवती सा च स च द्वावपि विद्यया । जग्मतुः पद्मिनीखंडे सुव्रतायाः प्रतिश्रयम् ॥ २९५ ॥

स्थित्वा प्रतिश्रयद्वारे वीरभद्रो जगाद ताम् । आचम्य यावदायामि तिष्ठेस्तावदिहैव हि ॥ २९६ ॥

इत्युक्त्वाऽपां भुवं गत्वा तद्रक्षणकृते पुनः । तस्थौ निलीय तत्रैव राजकीय इव स्पशः[१] ॥ २९७ ॥

साप्येकिका[२] क्षणादूर्ध्वं चक्रवाकीव निष्प्रिया । तारं रोदितुमारेभे स्त्रीस्वभावोऽयमीदृशः ॥ २९८ ॥

श्रुत्वा च करुणं शब्दं गणिनी करुणासरित् । स्वयमुद्घाटयामास कपाटौ तां ददर्श च ॥ २९९ ॥

इत्यन्वयाच्च गणिनी वत्से का त्वं कुतोऽन्यगाः । कथमेकाकिनी चासि कुतो हेतोश्च रोदिषि ॥ ३०० ॥

नत्वा सोवाच वैताढ्यात् पत्या सममिहागमम् । आचांत्यै स गतोऽद्यापि चिरयत्येव मे पतिः ॥ ३०१ ॥

मुहूर्तमपि स स्थातुं सहते मां विना न हि । आशंके कारणं तेन सुमहन्मातरातुरा ॥ ३०२ ॥

मन्मानसमवतप्से नकुलस्थितवत्ततः । अस्मि धारयितुं प्राणानपि संप्रत्यलं न हि ॥ ३०३ ॥

सानुकंपं सुव्रतोचे मा स्म भैषीः पतिव्रते । स्वस्था प्रतिश्रये तिष्ठ यावदायाति ते पतिः ॥ ३०४ ॥

गणिन्या बोधिता सैवं प्रविवेश प्रतिश्रयम् । जायां स्थाने गतां दृष्ट्वा वीरभद्रोऽप्यपासरत् ॥ ३०५ ॥

स्वेच्छावामनरूपः स क्रीडया पर्यटन् पुरे । मनो जहार पौराणां विचित्रा दर्शयन्कलाः ॥ ३०६ ॥

सोऽथ राजानमीशानचंद्रमप्यत्यरंजयत् । एकापि हि हरेच्चित्तं किं पुनः सकलाः कलाः ॥ ३०७ ॥

सापि चानंगसुंदर्या प्रियदर्शनयापि च । रत्नप्रभैवं जगदे कीदृशः कश्च ते पतिः ॥ ३०८ ॥

---

१ राज्ञो गूढचरः । २ एकैव एकिका ।

सारव्यस्सिंहलवास्तव्यो गौरोऽखिलकलानिधिः । बुद्धदासाभिधानश्च भर्ता रूपस्मरो मम ॥ ३०९ ॥
प्रियदर्शनयाथोचे संवदत्येव मे पतिः । न तु सिंहलवासित्वं बुद्धदासाभिधा न च ॥ ३१० ॥
ऊचे चानंगसुंदर्या वर्णः सिंहलवासिता । बुद्धदासाभिधा चेति विसंवदति मत्पतेः ॥ ३११ ॥
भगिन्य इव तिस्रोऽपि तपःस्वाध्यायतत्पराः । पुंवार्तामप्यकुर्वन्त्यः संति तास्तत्प्रतिश्रये ॥ ३१२ ॥
तिस्रोऽपि प्रेयसीस्तत्र स मायावामनोऽन्वहम् । निरीक्षते मोदते च तासां शीलेन हारिणा ॥ ३१३ ॥
अन्यदेशानचंद्रस्य राज्ञः पर्षद्यभूत्कथा । पुरे यदस्मिन्नार्यायाः सुव्रतायाः प्रतिश्रये ॥ ३१४ ॥
रूपवत्यो युवतयस्तिस्रः संति महात्मिकाः । तस्यास्त्रीणीव रत्नानि धात्रीपावित्र्यकारणम् ॥ ३१५ ॥
सतीमतल्लिकास्ताश्च सतीः पथि कुलोचिते । न हि कश्चिदलंभूष्णुरपि भाषयितुं पुमान् ॥ ३१६ ॥
स मायावामनोऽथोचे भाषयिष्याम्यहं क्रमात् । मम पश्यत सामर्थ्यं कर्मण्यत्रापि दुष्करे ॥ ३१७ ॥
प्रधानै राजपुरुषैर्वृतः कतिपयैरपि । पौरैरन्वीयमानोऽगात् स गणिन्याः प्रतिश्रयम् ॥ ३१८ ॥
स्थित्वा प्रतिश्रयद्वारे सोऽशात् सहचरानिति । प्रष्टव्यं तत्र युष्माभिः कथां कथय कामपि ॥ ३१९ ॥
स विविक्तपरीवारः प्राविशत्तं प्रतिश्रयम् । ववन्दे सुव्रतामन्या व्रतिनीश्चामलव्रताः ॥ ३२० ॥
निर्गत्योपाविशद् द्वारमंडपे कूटवामनः । तिस्रोऽप्येयुः सव्रतिन्यस्तास्तद्दर्शनकौतुकात् ॥ ३२१ ॥
अथोचे वामनो यावद्राज्ञो नावसरं किल । स्थास्यामस्तावदत्रैव विनोदाक्षिप्तचेतसः ॥ ३२२ ॥

---

१ रूपेण कामदेवः । २ एतावद्भिन्नत्वमन्यत्सर्वं कलादिकं समानमित्यर्थः । ३ मायया वामनरूपधर इत्यर्थः । ४ पतिव्रतासु मतल्लिकाः श्रेष्ठाः । ५ वर्तमानाः । ६ उपादिशत् । ७ अल्पपरिवारः ।

स्माह राजपुमान् कांचित्कथां शंस सकौतुकाम् । किं कथां वृत्तकमथ वच्मीत्यूचे च वामनः ॥ ३२३ ॥
कथावृत्तकभेदं तु पृष्टः प्रोवाच वामनः । वृत्तकं स्वानुभूतं स्यात् प्राक्पुंसां चरितं कथा ॥ ३२४ ॥
वृत्तकं कथ्यतां तर्हीत्युक्ते वामनकोऽवदत् । अस्तीह भरते नाम्ना ताम्रलिप्ती महापुरी ॥ ३२५ ॥
तस्यामृषभदत्तोऽस्ति श्रेष्ठी श्रेष्ठतरो गुणैः । वाणिज्यया सोऽन्यदागात् पद्मिनीखंडपत्तनम् ॥ ३२६ ॥
तत्र सागरदत्तस्य कन्यकां प्रियदर्शनाम् । दृष्ट्वोदवाहयत्स्वेन वीरभद्रेण सूनुना ॥ ३२७ ॥
सार्धं तया वीरभद्रोऽन्वभूद्वैषयिकं सुखम् । निशीथेऽलीकसुप्तां तामुदस्थापयदन्यदा ॥ ३२८ ॥
मा कदर्थय मां जातशिरोऽर्तिमिति सावदत् । किंदोषेणेति[1] तेनोक्ते त्वद्दोषेणेति सावदत् ॥ ३२९ ॥
स्वं दोषं तेन सा पृष्टा जगाद प्रियदर्शना । किमीदृशोऽपि समये विदग्धोक्तिस्तव प्रिय ॥ ३३० ॥
भूयो नैवं करिष्यामीत्युक्त्वा सोऽरमयच्च ताम् । सद्भावसुप्तां मुक्त्वाथ विदेशं तत्पतिर्ययौ ॥ ३३१ ॥
आख्यायैवं वामनस्तु मम राजकुलेऽधुना । सेवाक्षणोऽतियातीति समुत्तस्थौ ससंभ्रमः ॥ ३३२ ॥
प्रियदर्शनयोत्तिष्ठन् स भूयोऽभाषि सादरम् । क्व गतो वीरभद्रोऽस्ति ब्रूहि वेत्स्येव वामन ॥ ३३३ ॥
व्याहरद्वामनोऽप्येवं नाहं परमहिलया[2] । सहालपामि स्वकुलकलंकचकितः सदा ॥ ३३४ ॥
साप्युवाच कुलार्हं हि तव शीलं किमुच्यते । दाक्षिण्याच्छंसतस्[3]तद्धि कुलीनस्यादिमो गुणः ॥ ३३५ ॥
तर्हि श्वः शंसितास्मीति गदित्वा वामनो ययौ । स्वै[4]राख्याते तदुदंते नरेन्द्रोऽपि विसिष्मिये ॥ ३३६ ॥
द्वितीयेऽह्नि तथैवागात् स गणिन्याः प्रतिश्रयम् । अत्यादृतानां तासां च भूयोऽप्याख्यत्कथामिति ३३७

१ कस्य दोषः किंदोषस्तेन । २ परस्त्रिया । ३ कथयतः । ४ आप्तपुरुषैः ।

पुर्या निर्गत्य भूत्वा च कृष्णो गुटिकयाथ सः । पर्यटन् विविधान् देशान् सिंहलद्वीपमासदत् ॥ ३३८ ॥
तत्र रत्नपुरे श्रेष्ठिशंखहट्टे निषेदिवान् । श्रेष्ठिना ज्ञातवृत्तांतो निन्ये च निजवेश्मनि ॥ ३३९ ॥
पुत्रत्वेन प्रत्यपादि श्रेष्ठिश्रेष्ठेन तेन सः । सुखं चास्थात् पुरे तत्र कलाभिः कृतविस्मयः ॥ ३४० ॥
समं विनयवत्याथ श्रेष्ठिपुत्र्या जगाम सः । स्त्रीवेषोऽनंगसुंदर्या राजपुत्र्या निकेतने ॥ ३४१ ॥
कलाभिर्हृतचित्तां तां ज्ञापितात्मा क्रमेण सः । पितृदत्तामुपायंस्त चिरं भोगानभुंक्त च ॥ ३४२ ॥
तां गृहीत्वा गच्छतश्च ताम्रलिप्तिं पुरीं प्रति । भग्नं प्रवहणं तस्य दैवात्तत्रैव वारिधौ ॥ ३४३ ॥
संप्रत्यहं व्रजिष्यामि राजसेवाक्षणो ह्ययम् । सेवकानां विना सेवां भज्यते खलु जीविका ॥ ३४४ ॥
ततश्चानंगसुंदर्या सोपरोधमभाणि सः । भद्र क्व वीरभद्रोऽस्ति सोऽधुनाख्याहि सर्वथा ॥ ३४५॥
आख्यातास्मि श्व इत्युक्त्वा राजवेश्म जगाम सः । राज्ञे तमपि वृत्तांतं शशंसू राजपूरुषाः ॥ ३४६ ॥
तृतीयेऽप्यह्नि तत्रैत्य शशंसेति स वामनः । वीरभद्रस्तत्र दैवादेकं फलकमासदत् ॥ ३४७ ॥
ततो विद्याधरश्चागान्नामतो रतिवल्लभः । तं ददर्श च निन्येऽथ वैताढ्याद्रौ स्ववेश्मनि ॥ ३४८ ॥
अब्धेरुद्धृतमात्रोऽपि गुटिकां श्यामिकाकरीम् । अपकृष्याभवद्गौरस्ताम्रलिप्त्यामिव स्थितः ॥ ३४९ ॥
स्वं च सिंहलवास्तव्यं बुद्धदासं च नामतः । पृष्टः शशंस स रतिवल्लभस्यातिवल्लभः ॥ ३५० ॥
पुत्रीं रत्नप्रभाख्यां स तेनोक्तः परिणीतवान् । रमयंश्च सुखं तस्थौ विलासोपवनादिषु ॥ ३५१ ॥
तया सह क्रीडितुं च सोऽन्यदात्र समाययौ । मुक्त्वेह तामाचमनव्याजाच्चागमदन्यतः ॥ ३५२ ॥
यास्याम्यहमपीदानीमित्युक्त्वा स समुत्थितः । ऊचे च रत्नप्रभया बुद्धदासः क्व सोऽधुना ॥ ३५३ ॥

इतो भवे तृतीये मे प्राग्विदेहेषु पुष्कलम् । राज्यं त्यक्त्वा व्रतभृतः पृथ्व्यां विहरतः सतः ॥ ३७० ॥
चतुर्मासोपवासांते पुरे रत्नपुराभिधे । श्रेष्ठिसूर्जिनदासाख्यो भक्त्या भिक्षां ददावसौ ॥ ३७१ ॥
तेन पुण्येन देवोऽभूद्ब्रह्मलोके ततश्च्युतः । जंबूद्वीपस्थैरवते कांपील्येऽभून्महेभ्यभुक् ॥ ३७२ ॥
तत्रापि परमर्द्धिः सन् श्रावकत्वं प्रपाल्य च । मृत्वाच्युतेऽभवद्देवस्ततश्च्युत्वा त्वभूदसौ ॥ ३७३ ॥
पुण्यानुबन्धिना तेन पुण्येनेह भवेऽप्ययम् । भुंक्ते भोगान्यत्र तत्र पुण्यं ह्यनुचरं नृणाम् ॥ ३७४ ॥
भगवानेवमाख्याय प्रतिबोध्य बहूञ्जनान् । जगन्मोहमपहरन् विहरन्नन्यतो ययौ ॥ ३७५ ॥
भुक्त्वा भोगांश्चिरं वीरभद्रः प्रव्रज्य च क्रमात् । दृढपुण्यरथारूढो देवलोकं जगाम सः ॥ ३७६ ॥
सहस्राण्यथ पंचाशच्छ्रमणानां महात्मनाम् । तीव्रव्रतानां साध्वीनां पुनः षष्टिसहस्र्यपि ॥ ३७७ ॥
चतुर्दशपूर्वभृतां दशाग्राणि शतानि षट् । अवधिज्ञानभाजां तु द्वे सहस्रे सषट्शते ॥ ३७८ ॥
सार्धे सहस्रे द्वे एकपंचाशच्च मनोविदाम् । द्वे सहस्रे साष्टशते केवलज्ञानधारिणाम् ॥ ३७९ ॥
जातवैक्रियलब्धीनां त्रिसप्ततिशती पुनः । संजातवादलब्धीनां सहस्रं षट् शतानि च ॥ ३८० ॥
श्रावकलक्षे षोडशसहस्रोने ऊर्जे पुनः । तिस्रो लक्षाः श्राविकाणां द्वासप्ततिसहस्र्यपि ॥ ३८१ ॥
आ केवलात्त्रिवर्षोनाब्दसहस्रैकविंशतिम् । वसुंधरां विहरतः परिवारोऽभवत् प्रभोः ॥ ३८२ ॥
निर्वाणकालं ज्ञात्वा च स्वामी संमेतमभ्यगात् । समं मुनिसहस्रेणानशनं प्रत्यपादि च ॥ ३८३ ॥

---

१ व्रतं बिभर्ति तस्य । २ महश्च तदिभ्यं धनं च तद्भुनक्तीति विग्रहः ।

मासांते च मार्गशुद्धदशम्यां पौष्णगे विधौ । समं तैर्मुनिभिः स्वामी जगाम पदमव्ययम् ॥ ३०४ ॥
कौमारराज्यचक्रित्वव्रतेषु समभागकम् । आयुश्चतुरशीत्यब्दसहस्राण्यभवत् प्रभोः ॥ ३०५ ॥
वर्षकोटिसहस्रोने पल्यतुर्यांशके गते । श्रीकुंथुमोक्षान्मोक्षोऽभूच्छ्रीमतोऽरजिनेशितुः ॥ ३०६ ॥

तत्रारनाथस्य मुनीश्वरैस्तैः शिवं सहोपेयुष एत्य भक्त्या ।
शरीरसंस्कारपुरस्सरं ते निर्वाणकल्याणमकार्षुरिन्द्राः ॥ ३०७ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये
षष्ठे पर्वणि श्रीअरनाथवर्णनो नाम द्वितीयः सर्गः ।

---

१ पल्योपमस्य चतुर्थांशे गते सति । २ प्रासस्य ।

## ॥ तृतीयः सर्गः ॥

### आनंदपुरुषपुंडरीकबलिचरित्रम्

अथ तीर्थेऽरनाथस्य षष्ठयोर्बलशार्ङ्गिणोः । प्रतिविष्णोर्बलेश्चाभूद्यच्चरित्रं तदुच्यते ॥ १ ॥
पुरेऽभूद्विजयपुरे नृपो नाम्ना सुदर्शनः । सुदर्शन[1]श्चंद्र इव जगदानंददायकः ॥ २ ॥
मुनेर्दमधराज्जैनं श्रुत्वा धर्मं विरक्तधीः । स प्रव्रज्य तपस्तप्त्वा सहस्रारेऽभवत्सुरः ॥ ३ ॥
तथेह भरतक्षेत्रे पोतने नगरे नृपः । प्रियमित्रोऽभवन्मित्राब्जेषु[2] मित्रो[3]दयोपमः ॥ ४ ॥
सुकेतुस्तत्प्रियां जह्रे विरक्तस्तत्पराभवात् । वसुभूतिमुनेः पार्श्वे स प्रव्रज्यामुपाददे ॥ ५ ॥
प्रियाहरणदुःखार्तः स तेपे दुस्तपं तपः । निदानं चाकरोत्पत्नीहारकस्य वधं प्रति ॥ ६ ॥
स निदानमनालोच्य विहितानशनो मृतः । समजायत माहेन्द्रे कल्पे देवो महर्द्धिकः ॥ ७ ॥
इतश्च वैताढ्यगिरौ पुरेऽरिञ्जयनामनि । सुभूमचक्रिणादत्तश्रेणिद्वितयवैभवः ॥ ८ ॥
तस्यैव चक्रभृत्पत्न्या नाम्ना पद्मश्रियः पिता । मेघनाद इति ख्यातो विद्याधरनृपोऽभवत् ॥ ९ ॥
स सुकेतोर्भवं भ्रान्त्वा जीवस्तत्रैव पत्तने । अन्वये मेघनादस्य प्रतिविष्णुरभूद्बलिः ॥ १० ॥
स पंचाशद्वर्षसहस्रायुः श्वेतेतरद्युतिः । षाड्विंशतिधनूत्तुंगस्त्रिखंडक्ष्माधरोऽभवत् ॥ ११ ॥
अथास्य जंबूद्वीपस्य भरतार्धेऽत्र दक्षिणे । पुरमस्ति चक्रपुरं महीमंडलमंडनम् ॥ १२ ॥

---

१ सुष्ठु दर्शनं यस्य सः । २ मित्राण्येव कमलानि तेषु । ३ मित्रः सूर्यः ।

नाम्ना महाशिरो नम्रीकृतराजमहाशिराः[1] । तत्राभूदवनीपालो लोकपाल इवापरः ॥ १३ ॥
तस्याद्भुतचरित्रस्य धात्रीपतिशिरोमणेः । धिषणा विक्रमेणेव श्रीर्विवेकेन भूषिता ॥ १४ ॥
सा कापि हि कला नास्ति या तस्मिन्न व्यदृश्यत । जीवजातिरिवाम्भोधौ स्वयंभूरमणाभिधे ॥ १५ ॥
नाभूद्वार्तापि चौराणां तस्मिन् शासति मेदिनीम् । केवलं चोरयामास स स्वयं तु सतां मनः ॥ १६ ॥
एकेषां जनयन् प्रीतिमपरेषां पुनर्भयम् । नह्युत्ततार हृदयात् स सतामसतामपि ॥ १७ ॥
वैजयंतीत्यभूद्रूपाजायन्ती स्वर्वधूरपि । तस्य पत्न्यपरा लक्ष्मीरिव लक्ष्मीवतीति च ॥ १८ ॥
सहस्रारात्परिच्युत्य सुदर्शनवरः सुरः । वैजयन्त्या महादेव्या उदरे समवातरत् ॥ १९ ॥
महास्वप्नचतुष्केण बलजन्माभिसूचिना । हृष्टा देवी वैजयन्ती दधौ गर्भमनुत्तरम् ॥ २० ॥
काले च सुषुवे पूर्णे पूर्णचंद्रमिवामलम् । एकोनत्रिंशद्धन्वोच्चमानंद इति नन्दनम् ॥ २१ ॥
जीवोऽथ प्रियमित्रस्य तुर्यकल्पात्परिच्युतः । लक्ष्मीवत्या महादेव्याः कुक्षौ समवतीर्णवान् ॥ २२ ॥
सप्तभिश्च महास्वप्नैः सूचितोपेन्द्रजन्मभिः[2] । हृष्टा लक्ष्मीवती गर्भं धारयामास देव्यथ ॥ २३ ॥
कालेऽसूत सुतं सा चैकोनत्रिंशद्धनून्नतम् । अभिधानेन पुरुषपुंडरीकं शितिद्युतिम्[3] ॥ २४ ॥
भ्रातरौ ववृधाते तौ पित्रोः सह मनोरथैः । तार्क्ष्यतालध्वजौ नीलपीतांबरधरौ सदा ॥ २५ ॥
कंपयन्ताविव महीं चेलतुर्लीलयापि तौ । बालावपि न चोद्वोढुमलं तौ बालधारकैः[4] ॥ २६ ॥
क्रमेण च प्रपेदाते यौवनं नेत्रपावनम् । तावशेषकलाम्भोधिपारगौ च बभूवतुः ॥ २७ ॥

१ नम्रीकृतानि नामितानि राज्ञां महान्ति शिरांसि येन सः । २ उपेन्द्रो वासुदेवः । ३ नीलकान्तिम् । ४ बालरक्षकाः ।

उपेन्द्रसेनो राजेन्द्रपुरेशोऽथ स्वकन्यकाम् । ददौ पद्मावतीं नाम पुंडरीकाय विष्णवे ॥ २८ ॥
श्रुत्वा रूपश्रिया दासीकृता[1]नंगांगनां च ताम् । प्रतिविष्णुर्बलिर्नाम हर्तुं तत्र समाययौ ॥ २९ ॥
बलिं भुजबलाध्मातमवज्ञात[2]जगद्बलम् । आनंदपुंडरीकावप्यन्यषेणयतां ततः ॥ ३० ॥
शार्ङ्गलांगलमुख्यानि तयोः शस्त्राणि नाकिभिः । अर्पयांचक्रिरे शस्त्रागारायुक्तै[3]रिव क्षणात् ॥ ३१ ॥
बलैर्बलै[4]र्बलीयोभिरभज्यत तयोर्बलम् । चक्रिरे सिंहनादांश्च स्वस्वामिजयशंसिनः ॥ ३२ ॥
आनंदः पुंडरीकश्च रथस्थौ रणकर्मणे । ढुढौकाते प्रमुदितौ वीराणां हि रणे मुदे ॥ ३३ ॥
पांचजन्यं पुंडरीकस्तारमापूरयत्ततः । यादश्चक्र[5]मिवांभोधे रणाभ्रष्टं द्विषद्बलम् ॥ ३४ ॥
शार्ङ्गं चास्फालयच्छार्ङ्गी शंखस्येवानुवादकम् । हतशेषद्विषोऽनश्यंस्तन्निनादेन भूयसा ॥ ३५ ॥
उपतस्थे बलिर्योद्धुं स्वयमुद्बणविक्रमः । निरंतरैः शरैर्वर्षन् धारासारैरिवांबुदः ॥ ३६ ॥
चिच्छेद तदिषून् विष्णुर्विष्णोः सोऽपि तथाच्छिदत् । एवं भूयः शरच्छेद[6]क्रुद्धश्चक्रं बलिर्दधौ ॥ ३७ ॥
अरे न हि भवस्येष इति जल्पन् बलिर्बली[7] । भ्रमयित्वामुचच्चक्रं पुंडरीकाय विष्णवे ॥ ३८ ॥
चपेटालग्नतत्तुंबप्रहारान्मूर्छितः क्षणम् । लब्धसंज्ञः क्षणाद्विष्णुस्तच्चक्रं स्वयमाददे ॥ ३९॥
अरे न हि भवस्येष इति जल्पञ्जनार्दनः । भ्रमयित्वामुचच्चक्रं चिच्छेद च बलेः शिरः ॥ ४० ॥
ततश्चानंदसहितो मध्नन्नहितभूभुजः । विष्णुश्चकार दिग्यात्रामर्धचक्री बभूव च ॥ ४१ ॥

---

१ दासीकृताऽनंगस्य कामस्यांगना रतिर्यया ताम् । २ तिरस्कृतं जगतो बलं येन तम् । ३ शस्त्रशालाधिकारिभिः। ४ बलवद्भिर्बलैः सैन्यैः । ५ जलचरसमूहः । ६ स्वशराणां छेदेन क्रुद्धः । ७ बलवान् ।

## ॥ चतुर्थः सर्गः ॥

### सुभूमचक्रवर्त्तीचारित्रम् ।

अरतीर्थकृतस्तीर्थे सुभूमस्याथ चक्रिणः । अष्टमस्य क्रमायातं चरितं कीर्तयिष्यते ॥ १ ॥
इहैव भरतक्षेत्रे विशालनगरेऽभवत् । भूपालो नाम भूपाल[1]ः पालयन् क्षत्रियव्रतम् ॥ २ ॥
सोऽन्यदैकत्र संग्रामे बहुभिः परिपन्थिभि[2]ः । एकीभूय पराजिग्ये वृन्दं हि बलवत्तरम् ॥ ३ ॥
स वैरिभिः पराभूतोऽपमानमलिनाननः । संभूतमुनिपादान्ते परिव्रज्यामुपाददे ॥ ४ ॥
प्रभुत्वभोगविषयं निदानं तपसोऽथ सः । कृत्वावसानं चासाद्य महाशुक्रे सुरोऽभवत् ॥ ५ ॥
इतश्चर्षभनाथस्य कुरुरित्यभवत् सुतः । यस्य नाम्ना कुरुदेशो हस्तिनाम्ना च तत्सुतः ॥ ६ ॥
यन्नाम्ना हास्तिनपुरं तीर्थकृच्चक्रिजन्मभूः । तद्वंश्योऽनंतवीर्योऽभूत्तत्र राजा महाभुजः ॥ ७ ॥
इतश्च भरतक्षेत्रे वसंतपुरपत्तने । उच्छिन्नवंश एकोऽभूदग्निको नाम दारकः ॥ ८ ॥
सोऽन्यदा चलितस्तस्मात् स्थानाद्देशान्तरं प्रति । सार्थाद्धीन[3]ः परिभ्राम्यन्नगमत्तापसाश्रमम् ॥ ९ ॥
तमग्निं तनयत्वेनाग्रहीत् कुलपतिर्जनः । जमदग्निरिति ख्यातिं स लोकेषु ततोऽगमत् ॥ १० ॥
तप्यमानस्तपस्तीव्रं प्रत्यक्ष इव पावक[4]ः । तेजसा दुःसहेनासौ पप्रथे पृथिवीतले ॥ ११ ॥
तदा च श्राद्धः प्राग्जन्मनाम्ना[5] वैश्वानरः सुरः । धन्वंतरिश्च तापसभक्तो व्यवदतामि[6]ति ॥ १२ ॥

१ पृथ्वीपालः । २ शत्रुभिः । ३ सार्थरहितः । ४ अग्निः । ५ पूर्व जन्मनोऽभिधानेन । ६ विवादं कृतवन्तौ ।

एक आर्हतां धर्मः प्रमाणमितरः पुनः । तापसानां विवादेऽस्मिन् व्यधातामिति निर्णयम् ॥ १३ ॥
आर्हतेषु जघन्यो यः प्रकृष्टस्तापसेषु यः । परीक्षणीयावावाभ्यां को गुणैरतिरिच्यते ॥ १४ ॥
तदानीं मिथिलापुर्यां नवधर्मपरिष्कृतः । श्रीमान् पद्मरथो नाम प्रस्थितः पृथिवीतले ॥ १५ ॥
दीक्षां स वासुपूज्यांते ग्रहीतुं भावतो यतिः । गच्छंश्चंपापुरीं ताभ्यां देवाभ्यां ददृशे पथि ॥ १६ ॥
परीक्षाकांक्षया ताभ्यां पानान्ने ढौकिते नृपः । तृषितः क्षुधितोऽप्यौज्झद्धीराः सत्त्वाच्चलंति न ॥ १७ ॥
क्रकचैरिव चक्राते क्रूरैः कर्करकंटकैः । पीडां देवौ नृदेवस्य मृदुनोः पादपद्मयोः ॥ १८ ॥
पादाभ्यां प्रक्षरद्रक्तधाराभ्यां तादृशेऽध्वनि । तूलिकातलवच्चारु संचचार तथापि सः ॥ १९ ॥
निर्ममे गीतनृत्तादि ताभ्यां क्षोभाय भूपतेः । तन्मोघमभवत्तत्र दिव्यास्त्रमिव गोत्रजे ॥ २० ॥
तौ सिद्धपुत्ररूपेण पुरोभूयेदमूचतुः । तवाद्यापि महाभाग महदायुर्युवासि च ॥ २१ ॥
स्वच्छंदं भुंक्ष्व तद्भोगान् का धीर्यद्यौवने तपः । निशीथकृत्यं कः प्रातः कुर्यादुद्योगवानपि ॥ २२ ॥
यौवने तदतिक्रांते देहदौर्बल्यकारणम् । गृह्णीयास्त्वं तपस्तात द्वितीयमिव वार्धकम् ॥ २३ ॥
राजोचे यदि बह्वायुर्बहुपुण्यं भविष्यति । जलमानेन नलिनीनालं हि परिवर्धते ॥ २४ ॥
लोलेन्द्रिये यौवने हि यत्तपस्तत्तपो ननु । दारुणास्त्रे रणे यो हि शूरः शूरः स उच्यते ॥ २५ ॥
तस्मिन्नचलिते सत्त्वात् साधु साध्विति वादिनौ । तौ गतौ तापसोत्कृष्टं जमदग्निं परीक्षितुम् ॥ २६ ॥

---

१ नूतनधर्मेण संस्कृतः । २ क्रियाविशेषणमेतत् । ३ निष्फलम् । ४ बुद्धिः । ५ वारिणः प्रमाणेन यावज्जलं तावन्नलिन्या नालं वर्धत इत्यर्थः ।

न्यग्रोधमिव[1] विस्तारिजटासंस्पृष्टभूतलम् । वल्मीकाकीर्णपादांतं[2] दान्तं तौ तमपश्यताम् ॥ २७ ॥
तस्य श्मश्रुलताजाले नीडं निर्माय मायया । तदैव देवौ चटकमिथुनीभूय तस्थतुः ॥ २८ ॥
चटकश्चटकामूचे यास्यामि हिमवद्गिरौ । अन्यासक्तो[3] नेष्यसि त्वमिति तं नाप्यमंस्त सा ॥ २९ ॥
गोघातपातकेनाहं गृह्ये नायामि चेत्प्रिये । इत्युक्तशपथं[4] भूयश्चटकं चटकाब्रवीत् ॥ ३० ॥
ऋषेरस्यैनसा गृह्ये शपेथा इति चेत् प्रिय । विसृजामि तदैव त्वां पंथानः संतु ते शिवाः ॥ ३१ ॥
इत्याकर्ण्य वचः क्रुद्धो जमदग्निमुनिस्ततः । उभाभ्यामपि हस्ताभ्यामुभौ जग्राह पक्षिणौ ॥ ३२ ॥
आचचक्षे ततः सोऽपि कुर्वाणे दुष्करं तपः । उष्णरश्माविव ध्वांतमाः पापं मयि कीदृशम् ॥ ३३ ॥
अथार्षे चटकोवाच मा कुपस्ते मुधा तपः । अपुत्रस्य गतिर्नास्तीत्यश्रौषीस्त्वं न किं श्रुतिम् ॥ ३४ ॥
तथेति मन्यमानस्तु मुनिरेवमचिंतयत् । ममाकलत्रपुत्रस्य प्रवाहे सूत्रितं तपः ॥ ३५ ॥
तं दृष्ट्वा क्षुभितं ध्यायन् भ्रमितस्तापसैरिति[5] । जज्ञे धन्वन्तरिः श्राद्धः प्रत्येति प्रत्ययान्न कः ॥ ३६ ॥
बभूवतुरदृश्यौ च तावपि त्रिदशौ तदा । जमदग्निश्च संप्राप पुरं नेमिककोष्टकम् ॥ ३७ ॥
जितशत्रुं महीपालं तत्र भूयिष्ठकन्यकम् । स प्रेप्सुः[6] कन्यकामेकां गौरीं[7] हर इवागमत् ॥ ३८ ॥
कृत्वाभ्युत्थानमुर्वीशः प्रांजलिस्तमभाषत । किमर्थमागता यूयं ब्रूत किं करवाण्यहम् ॥ ३९ ॥

---

१ वटमिव । २ वल्मीकेन व्याप्तं पादप्रांतं यस्य तम् । ३ अन्यस्त्रियामासक्तः । ४ उक्तः शपथो येन तम् । ५ तापसैरहं भ्रमित इति ध्यायन् धन्वंतरिः श्रावको जात इत्यन्वयः । ६ प्रकर्षेणाप्तुमिच्छुः । ७ पार्वतीम् "दक्ष" मिति पाठांतरे दक्षनृपं प्रति ।

सादाद्ब्राह्मं चरुं स्वस्रे जातौ च तनयौ तयोः । तत्र रामो रेणुकायाः कृतवीर्यश्च तत्स्वसुः ॥ ५५ ॥
विद्याधरोऽन्यदा तत्र कोऽप्यागादतिसारकी[1] । विद्या तस्यातिसारार्त्या विस्मृताकाशगामिनी ॥ ५६ ॥
रामेण प्रतिचरितो[2] भेषजाद्यैः स्वबंधुवत् । रामाय सेवमानाय विद्यां पारशवीं[3] ददौ ॥ ५७ ॥
मध्येशरवणं गत्वा तां च विद्यामसाधयत् । रामः परशुरामोऽभूत्ततः प्रभृति विश्रुतः ॥ ५८ ॥
अन्येद्युः पतिमापृच्छ्य रेणुकोत्कंठिता स्वसुः । जगाम हास्तिनपुरे प्रेम्णो दूरे न किंचन ॥ ५९ ॥
श्यालीति लालयन् लोललोचनां तत्र रेणुकाम् । अनंतवीर्यो रमयत् कामः कामं निरंकुशः ॥ ६० ॥
ऋषिपत्न्या तया राजाहल्ययेव पुरंदरः । अन्वभूच्च यथाकामं संभोगसुखसंपदम् ॥ ६१ ॥
अनंतवीर्यात्तनयो रेणुकायामजायत । ममतायामिवोतथ्यः सधर्मिण्यां बृहस्पतेः ॥ ६२ ॥
तेनापि सह पुत्रेण रेणुकामानयन्मुनिः । स्त्रीणां लुब्धो जनः प्रायो दोषं न खलु वीक्षते ॥ ६३ ॥
तां पुत्रसहितां वल्लीमकालफलितामिव । संजातकोपः परशुरामः परशुनाच्छिदत् ॥ ६४ ॥
तद्भगिन्या स वृत्तांतोऽनंतवीर्यस्य शंसितः । कोपमुद्दीपयामास कृशानुमिव[4] मारुतः ॥ ६५ ॥
ततश्चावार्यदोर्वीर्योऽनंतवीर्यो महीपतिः । जमदग्न्याश्रमं गत्वाभांक्षीन्मत्त इव द्विपः ॥ ६६ ॥
तापसानां कृतत्रासः समादाय गवादि सः । मंदं मंदं परिक्रामन् केसरीव न्यवर्तत ॥ ६७ ॥
त्रस्यत्तपस्वितुमुलं श्रुत्वा ज्ञात्वा च तां कथाम् । क्रुद्धः परशुरामोऽथाधावत् साक्षादिवान्तकः ॥ ६८ ॥
सुभटग्रामसंग्रामकौतुकी जमदग्निजः । पर्शुना खंडशश्चक्रे दारुवद्दारुणेन तम् ॥ ६९ ॥

१ अतिसारो व्याधिविशेषस्तद्वान् । २ उपचरितः । ३ परशुसंबंधिनीम् । ४ अग्निम् ।

राज्ये निवेशयांचक्रे तस्य प्रकृतिपूरुषैः । कृतवीर्यो महावीर्यः स एव तु वयोलघुः ॥ ७० ॥
तस्याभवच्च महिषी तारा तारविलोचना । बुभुजाते च तौ भोगानविघ्नममराविव ॥ ७१ ॥
तस्याभवच्च महिषी तारा तारविलोचना । बुभुजाते च तौ भोगानविघ्नममराविव ॥ ७१ ॥
भूपालराजजीवोऽपि स्वमायुः परिपूर्य सः । महाशुक्रात् परिच्युत्य ताराकुक्षाववातरत् ॥ ७२ ॥
कृतवीर्योऽन्यदा मातुर्मुखाच्छ्रुत्वा पितुः कथाम् । आदिष्टाद्दिविवागत्य जमदग्निममारयत् ॥ ७३ ॥
रामः पितृवधक्रुद्धो द्रागगत्वा हस्तिनापुरे । अमारयत्कृतवीर्यं किं यमस्य दवीयसि ॥ ७४ ॥
जामदग्न्यस्ततस्तस्य राज्ये न्यविशत स्वयम् । राज्यं हि विक्रमाधीनं न प्रमाणं क्रमाक्रमौ ॥ ७५ ॥
रामाक्रांतपुराद्राज्ञी कृतवीर्यस्य गुर्विणी । व्याघ्राघ्रातवनादेणीवागमत्तापसाश्रमम् ॥ ७६ ॥
कृपाधनैर्भूगृहांतः सा निधाय निधानवत् । तपस्विभिर्गोप्यते स्म क्रूरात् परशुरामतः ॥ ७७ ॥
चतुर्दशमहास्वप्नसूचितोऽस्याः सुतोऽजनि । गृह्णन् भूमिं सुखेनाभूत् सुभूमो नामतस्ततः ॥ ७८ ॥
क्षत्रियो यत्र यत्रासीत्तत्र तत्राप्यदीप्यत । पर्शुः परशुरामस्य कोपाग्निरिव मूर्तिमान् ॥ ७९ ॥
रामोऽगादन्यदा तत्राश्रमे पर्शुश्च सोऽज्वलत् । क्षत्रं चासूचयद्धूम इव धूमध्वजं तदा ॥ ८० ॥
किमत्र क्षत्रियोऽस्तीति पृष्टास्तेन तपस्विनः । इत्यूचुस्तापसीभूताः क्षत्रिया वयमास्महे ॥ ८१ ॥
रामोऽप्यमर्षान्निःक्षत्रां सप्तकृत्वो वसुंधराम् । निर्ममे निस्तृणां शैलतटीमिव दवानलः ॥ ८२ ॥
क्षुण्णक्षत्रियदंष्ट्राभी रामः स्थालमपूरयत् । यमस्य पूर्णकामस्य पूर्णपात्रश्रियं दधत् ॥ ८३ ॥
रामः पप्रच्छ नैमित्तानन्येद्युर्मे कुतो वधः । सदा वैरायमाणा हि शंकंते परतो मृतिम् ॥ ८४ ॥

१ अतिदूरे । २ गर्भिणी । ३ मृगीव । ४ भुवि गृहं भूगृहं गुहा इति यावत् तस्यांतः । ५ अग्निम् । ६ सप्त वारान् ।

यो दंष्ट्राः पायसीभूताः सिंहासन इह स्थितः । भोक्ष्यतेऽमूस्ततस्त्यस्ते वधो भावीति तेऽब्रुवन् ॥ ८५ ॥
रामोऽथ कारयामास सत्रागारमवारितम् । धुरि सिंहासनं तत्रास्थापयत् स्थालमग्रतः ॥ ८६ ॥
अथाश्रमे स्वर्णवर्णोऽष्टाविंशतिधनून्नतिः । गतोऽङ्कणद्रुम इव सुभूमो वृद्धिमद्भुताम् ॥ ८७ ॥
विद्याधरो मेघनादोऽन्येद्युर्नैमित्तिकानिति । परिपप्रच्छ पद्मश्रीः कन्या मे कस्य दीयताम् ॥ ८८ ॥
तस्या वरं वरीयांसं सुभूमं तेऽप्युपादिशन् । दत्वा कन्यां ततस्तस्मै तस्यैवाभूत् स सेवकः ॥ ८९ ॥
कूपभेक इवानन्यगोपः पप्रच्छ मातरम् । सुभूमः किमियानेव लोकोऽयमधिकोऽपि किम् ॥ ९० ॥
माताप्यचीकथदथो लोकोऽनंतो हि वत्सक । मक्षिकापदमात्रं हि लोकमध्येऽयमाश्रमः ॥ ९१ ॥
अस्मिँल्लोकेऽस्ति विख्यातं नगरं हस्तिनापुरम् । पिता ते कृतवीर्योऽभूत्तत्र राजा महाभुजः ॥ ९२ ॥
हत्वा ते पितरं रामो राज्यं स्वयमशिश्रियत् । क्षितिं निःक्षत्रियां चक्रे तिष्ठामस्तद्भयादिह ॥ ९३ ॥
तत्कालं हास्तिनपुरे सुभूमो भौमैवज्ज्वलन् । जगाम वैरिणो क्रुद्धः क्षात्रं तेजो हि दुर्धरम् ॥ ९४ ॥
तत्र सत्रे ययौ सिंह इव सिंहासनेऽविशत् । दंष्ट्रास्ताः पायसीभूताः सुभुजो बुभुजे च सः ॥ ९५ ॥
उत्तिष्ठमाना युद्धाय ब्राह्मणास्तत्र रक्षकाः । जघ्निरे मेघनादेन व्याघ्रेण हरिणा इव ॥ ९६ ॥
प्रस्फुरदंष्ट्रिकाकेशो दशनैरधरं दशन् । ततो रामः क्रुधा कालपाशाकृष्ट इवाययौ ॥ ९७ ॥
रामेण मुमुचे रोषात् सुभूमाय परश्वधः । विध्यातस्तत्क्षणं तस्मिन् स्फुलिंग इव वारिणि ॥ ९८ ॥
शस्त्राभावात् सुभूमोऽपि दंष्ट्रास्थालमुदक्षिपत् । चक्रीबभूव तत्सद्यः किं न स्यात् पुण्यसंपदः ॥ ९९ ॥

---

१ ततो भवस्ततस्त्यः । २ गां पृथ्वीं पातीति गोपः । ३ मंगलवत् । ४ परशुः ।

चक्रवर्त्यष्टमः सोऽथ तेन चक्रेण भास्वता । शिरः परशुरामस्य पंकजच्छेदमच्छिदत् ॥ १०० ॥
क्षितिं निःक्षत्रियां रामः सप्तकृत्वो यथा व्यधात् । एकविंशतिकृत्वस्तां तथा निर्ब्राह्मणामसौ ॥ १०१ ॥
क्षुण्णक्षितिपहस्त्यश्वपदाति[1]व्यूहलोहितैः । वाहयन् वाहिनी[2]र्नव्याः स प्राक् प्राचीमसाधयत् ॥ १०२ ॥
स भिन्नानेकसुभटमुंरुमंक्षितभूतलः । आक्रामद्दक्षिणां दक्षि[3]णाशापतिरिवापरः ॥ १०३ ॥
भटास्थिभिर्दंतुरयन् शुक्तिशंखैरिवाभितः । रोधो[4] नीरनिधेः सोऽथ प्रतीचीमजयद्दिशम् ॥ १०४ ॥
हेलोद्घाटितवैताढ्यकंदरं स्थाममंदरः । म्लेच्छान् विजेतुं भरतोत्तरखंडं विवेश सः ॥ १०५ ॥
भ्रमदच्छोणितरसच्छटाच्छुरितभूतलः । म्लेच्छांस्तत्राथ सोऽभांक्षीदिक्षूनिव महाकरी ॥ १०६ ॥
मेघनादाय वैताढ्यगिरिश्रेण्योर्द्वयोरपि । विद्याधरेन्द्रपदवीं सुभूमश्चक्रभृद्ददौ ॥ १०७ ॥
पष्टिवर्षसहस्रायुश्चतुर्दिशमिति भ्रमन् । निहत्य सुभटानुर्वीं स पट्खंडामसाधयत् ॥ १०८ ॥

उज्ज्ञासयन्नसुमतामिति नित्यरौद्रध्यानानलेन सततं ज्वलदन्तरात्मा ।
आसाद्य कालपरिणामवशेन मृत्युं तां सप्तमीं नरकभूमिमगात् सुभूमः ॥ १०९ ॥
कुमारभावेऽब्दसहस्रपंचकं तन्मंडलित्वेऽथ शतानि पंच ।
जयेऽर्धलक्षं पुनरब्दपंचशत्यूनमस्याजनि चक्रभृत्त्वे ॥ ११० ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिपष्टिशलाकापुरुपचरिते महाकाव्ये पष्ठे पर्वणि
सुभूमचक्रवर्तिवर्णनो नाम चतुर्थः सर्गः ।

---

१ व्यूहः समूहः । २ नदीः । ३ दक्षिणदिक्पतिर्यमः । ४ तीरम् ।

# पंचमः सर्गः ।

## दत्तनंदनप्रह्लादचरित्रम् ।

अरतीर्थेऽथासन् विष्णुबलप्रत्यर्धचक्रिणः । दत्तनंदनप्रह्लादास्तेषां चरितमुच्यते ॥ १ ॥
अस्यैव जंबूद्वीपस्य प्राग्विदेहविभूषणम् । पूः सुसीमास्ति तत्राभूत् पृथ्वीनाथो वसुंधरः ॥ २ ॥
स चिरं पालयित्वा क्ष्मां सुधर्ममुनिसन्निधौ । व्रतमादाय मृत्वा च ब्रह्मलोकमुपाययौ ॥ ३ ॥
इतश्च जंबूद्वीपस्य भरतार्धेऽत्र दक्षिणे । नाम्ना मंदरधीरोऽभूत् पुरे शीलपुरे नृपः ॥ ४ ॥
गुणरत्नार्णवस्तस्य महावीर्यो महाभुजः । सूनुर्ललितमित्रोऽभून्मित्रो मित्रांबुजन्मनाम् ॥ ५ ॥
ज्ञापयित्वा दुष्ट इति तं प्रत्याख्याय भूपतेः । भ्रातरं युवराजत्वे खलो मंत्री न्यवेशयत् ॥ ६ ॥
ततो ललितमित्रोऽपि विरक्तः सन् पराभवात् । घोषसेनमुनेः पार्श्वे परिव्रज्यामुपाददौ ॥ ७ ॥
तप्यमानः स विदधे निदानमिति दुर्मनाः । वधाय तपसानेन तस्य स्यां खलमंत्रिणः ॥ ८ ॥
स निदानमनालोच्य कालधर्ममुपागतः । सौधर्मे देवलोकेऽभूत्त्रिदशः परमर्द्धिकः ॥ ९ ॥
खलाख्यः सचिवः सोऽपि चिरं भ्रान्त्वा भवाटवीम् । अस्यैव जंबूद्वीपस्य गिरौ वैताढ्यनामनि ॥ १० ॥
उत्तरश्रेणितिलके पुरे सिंहपुराभिधे । विद्याधरेन्द्रः प्रह्लादः प्रतिविष्णुरजायत ॥ ११ ॥
इतश्च जंबूद्वीपेऽस्मिन् भरतार्धे च दक्षिणे । पुरी वाराणसीत्यस्ति श्रिता सख्येव गंगया ॥ १२ ॥

१ सूर्यः । २ मित्राण्येव कमलानि तेषाम् । ३ दुष्टं मनो यस्य सः ।

प्रह्लादोऽपि धनुर्ह्रादै[1]र्ह्रादयन्नभितो दिशः । ढुढौके दृढदोर्दंडो दं[2]डपाणिरिवोत्कटः ॥ २८ ॥
उभौ मुमुचतुर्बाणान् हरिप्रतिहरी रुषा । मिथश्चिच्छिदतुश्चोभावन्योऽन्यजयकांक्षिणौ ॥ २९ ॥
गदामुद्गरदंडादीन्यायुधान्यपराण्यपि । परस्परं चिच्छिदतुश्छे[3]कावुभावपि ॥ ३० ॥
उल्काकुलं युगांतार्कमिव ज्वालाशताकुलम् । प्रह्लादो भ्रमयित्वा खेऽमुचच्चक्रं हरिं प्रति ॥ ३१ ॥
मोघीभूतं समीपस्थं हरिश्चक्रं तदेव हि । उपादाय प्रह्लादाय मुक्त्वा चिच्छेद तच्छिरः ॥ ३२ ॥
तथैव कृत्वा दिग्यात्रां भरतार्धमसाधयत् । अथोदध्रे कोटिशिलामर्धचक्री च सोऽभवत् ॥ ३३ ॥
कौमारे द्वे वर्षशते मंडलित्वे दिशां जये । प्रत्येकमब्दपंचाशदभूद्दत्तस्य शार्ङ्गिणः ॥ ३४ ॥
षट्पंचाशतमब्दानां सहस्राण्यतिवाह्य सः । ययौ कर्मवशाद्दत्तः पंचमीं नरकावनिम् ॥ ३५ ॥
दत्तस्य शार्ङ्गिणो जातेऽवसाने कालमत्यगात् । कथंचित् पंचषष्ट्यब्दसहस्रायुर्हलायुधः ॥ ३६ ॥

भ्रा[4]तृव्ययेन भवभावनया च भूरिवैराग्यवान् भुवनशोभित आत्तदीक्षः ।
तीव्रं व्रतं निरतिचारमपालयच्चागान्नंदनस्तदनु सिद्धिपदप्रतिष्ठाम् ॥ ३७ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये षष्ठे पर्वणि नंदनदत्तप्रह्लादचरितवर्णनो नाम पंचमः सर्गः ।

---

१ धनुः शब्दैः । २ यमः । ३ छेदे छेकौ चतुरौ । ४ भ्रातृमरणेन ।

## ॥ षष्ठः सर्गः ॥

### श्रीमल्लिनाथचरित्रम् ।

जयंति मल्लिनाथस्य मल्लीमाल्यामला गिरः । आपीयमानाः सोत्कंठं भव्यजंतुमधुव्रतैः ॥ १ ॥

श्रोतृश्रोत्रेषु पीयूषश्रोतःसन्निभमद्भुतम् । उदीरयामश्चरितं श्रीमल्लिस्वामिनोऽधुना ॥ २ ॥

द्वीपेऽत्रैव जंबूद्वीपे विदेहेष्वपरेषु च । विजये सलिलावत्यां वीतशोकाभिधास्ति पूः ॥ ३ ॥

बलेनोच्चैर्बल इव बलस्तत्र नृपोऽभवत् । द्विषद्बलवनोन्माथकुंजरो निर्जराकृतिः ॥ ४ ॥

राज्ञोऽस्य धारिणीपत्न्यां केसरिस्वप्नसूचितः । जज्ञे महाबलो नाम सूनुरन्यूनविक्रमः ॥ ५ ॥

उद्यौवनः कमलश्रीप्रभृती राजकन्यकाः । शतानि पंचैकदिने पर्यणैषीन्महाबलः ॥ ६ ॥

तस्यासन् बालसुहृदोऽचलो धरणपूरणौ । वसुर्वैश्रवणश्चाभिचन्द्र इत्यभिधानतः ॥ ७ ॥

अपरेद्युर्बलो राजा तस्याः पुर्या बहिर्भुवि । ऐशान्यामिन्द्रकुब्जाख्य उद्याने समुपेयुषाम् ॥ ८ ॥

मुनीनामंतिके धर्मं श्रुत्वा वैराग्यवासितः । राज्ये महाबलं न्यस्य प्रव्रज्य च शिवं ययौ ॥ ९ ॥

॥ युग्मम् ॥

कमलश्रीमहादेव्यां सिंहस्वप्नेन सूचितः । सूनुर्महाबलस्याभूद्बलभद्रोऽभिधानतः ॥ १० ॥

---

१ मल्लीकुसुमानां मालावन्निर्मलाः । २ भव्यप्राणिन एव मधुकरास्तैः । ३ शत्रूणां बलमेव वनं तस्य मथने गजसदृशः ।

क्रमादुद्यौवनं तं च यौवराज्ये महाबलः । निजे निवेशयामास मूर्त्यंतरमिवात्मनः ॥ ११ ॥
षड्भिर्बालसुहृद्भिस्तैः समं राजा महाबलः । अश्रौषीदार्हतं धर्मं सौहार्दादेकभावतः ॥ १२ ॥
वयस्यान् सोऽन्यदेत्यूचे भो भो भीतोऽस्म्यहं भवात् । ततश्च प्रव्रजिष्यामि पन्थाः कोऽतः परं तु वः॥१३
तेऽप्यूचुः संभूय भुक्तं यथा सांसारिकं सुखम् । भोक्ष्यामहे शिवसुखं संभूयातः परं तथा ॥ १४ ॥
ततो न्यवेशयद्राज्ये बलभद्रं महाबलः । स्वे स्वे राज्ये सुतं स्वं स्वं ततश्च सुहृदोऽपि ते ॥ १५ ॥
वरधर्ममुनीन्द्रस्य पादमूले महाबलः । तैः सुहृद्भिः समं षड्भिः प्रवव्राज महाबलः ॥ १६ ॥
तपो यदेकः कर्ता नस्तत्कार्यमपरैरपि । सप्तानामप्यभूत्तेषां प्रतिज्ञेयं महात्मनाम् ॥ १७ ॥
एवं ते कृतसंकेताश्चतुर्थादितपः समम् । चतुर्थपुरुषार्थाय तुदयोत्कंठाः प्रचक्रिरे ॥ १८ ॥
अद्य मे दुष्यति शिरो दुष्यत्युदरमद्य च । अद्य नास्ति क्षुदित्यादि व्यपदिश्य महाबलः ॥ १९ ॥
नाभुंक्त पारणाहेऽपि स्वस्याधिकफलेच्छया । मायया वञ्चयित्वा तानधिकं विदधे तपः ॥ २० ॥
॥ युग्मम् ॥
मायामिश्रेण तपसाबध्नात् स्त्रीवेदकर्म सः । अर्हद्भक्त्यादिभिः स्थानैस्तीर्थकृन्नाम कर्म च ॥ २१ ॥
पूर्वलक्षचतुरशीत्यायुष्काः सप्त ते व्रतम् । पात्वा चतुरशीत्यब्दसहस्रीमायुषः क्षये ॥ २२ ॥
द्विधा संलेखनां कृत्वा गृहीत्वानशनव्रतम् । विपद्य वैजयन्त्याख्ये विमाने जज्ञिरे सुराः ॥ २३ ॥
इतश्च जंबूद्वीपेऽस्मिन् भरतार्धेऽत्र दक्षिणे । नगरी मिथिलेत्यस्ति धर्माशिथिलनागरा ॥ २४ ॥

१ धर्मेऽशिथिलास्तत्परा नागराः पौरा यस्यां सा ।

एकोनविंशमर्हतमाश्चर्यं कुंभलांछनाम् । नीलत्विषं सर्वशुभलक्षणां सुषुवे च सा ॥ ४० ॥
॥ युग्मम् ॥

उपेत्य दिक्कुमार्योऽस्याः सूतिकर्माणि चक्रिरे । मेरुमूर्ध्नि च नीत्वा तामिंद्राश्च स्नपनं व्यधात् ॥ ४१ ॥
स्नपनानंतरं शक्रस्तां विलिप्यार्च्य च स्वयम् । उत्तार्यारात्रिकं चेति भक्तिनिर्भरमस्तवीत् ॥ ४२ ॥
ज्ञानत्रयनिधानाय प्रधानाय जगत्त्रये । एकोनविंशतितमायार्हते ते नमो नमः ॥ ४३ ॥
दिष्ट्या त्वद्दर्शनेनानुगृहीतोऽस्मि चिरादहम् । सामान्यपुण्यैर्न ह्यर्हन् देवः साक्षान्निरीक्ष्यते ॥ ४४ ॥
देवानामद्य देवत्वं चरितार्थं चिरादभूत् । तव देवाधिदेवस्य जन्मोत्सवनिरीक्षणात् ॥ ४५ ॥
एकतोऽच्युतनाथस्य प्राणिमात्रस्य चान्यतः । समानुग्रहबुद्धे त्वं पाहि नः पततो भवे ॥ ४६ ॥
अस्मिन्मेरुगिरौ धात्र्याः सुवर्णमुकुटायते । इन्द्रनील इव न्यस्ता त्वमतीव विराजसे ॥ ४७ ॥
स्मरणेनापि मोक्षायानीहमानस्य जायसे । दृष्ट्वा स्तुत्वा याच्यसे किं ततोऽप्यत्यधिकं फलम् ॥ ४८ ॥
धर्माण्येकत्र सर्वाणि तव चैकत्र दर्शनम् । फलाप्तिसाधकत्वेन द्वितीयमतिरिच्यते ॥ ४९ ॥
नेन्द्रत्वे नाहमिन्द्रत्वे मन्ये मोक्षेऽपि नो तथा । यथा सुखं स्याद्भुवतः पुरस्त्वत्पादपद्मयोः ॥ ५० ॥
स्तुत्वैवं शक्र एकोनविंशमर्हतमुच्चकैः । नीत्वा च मिथिलापुर्याममुचन्मातृसन्निधौ ॥ ५१ ॥
गर्भस्थायां तत्र मातुर्यन्माल्यस्वापदोहदः । जज्ञे तदकरोत्तस्या नाम मल्लीति भूपतिः ॥ ५२ ॥
धात्रीभिरिन्द्रायुक्ताभिः पंचभिः प्रतिवासरम् । पुष्पमिव लाल्यमाना वृद्धिमाप क्रमेण सा ॥ ५३ ॥

१ अनिच्छोः । २ तव दर्शनम् ।

इतश्चाचलजीवोऽपि वैजयंतात्परिच्युतः । अभूद्भरतसाकेते प्रतिबुद्ध्यभिधो नृपः ॥ ५४ ॥
तस्य पद्मावती नाम साक्षात्पद्मेव रूपतः । बभूव प्रेयसी सर्वान्तःपुरस्त्रीशिरोमणिः ॥ ५५ ॥
इतश्च नगरे तस्मिन्नैशान्यां नागवेश्मनि । अतिष्ठन्नागप्रतिमा [1]उपयाचितपूरका ॥ ५६ ॥
देवी पद्मावती तासां यात्रायै सान्यदा नृपम् । आपप्रच्छे प्रतिबुद्धिं सोऽपि तामन्वमन्यत ॥ ५७ ॥
तया[2] पुष्पादि संपाद्य प्रतिबुद्धिरपि स्वयम् । जगाम यात्रादिवसेऽधिनागप्रतिमागृहम् ॥ ५८ ॥
पुष्पमंडपिकां पुष्पमुद्गरं[3] स्वां प्रियामपि । प्रेक्ष्येत्यूचे प्रतिबुद्धिः स्वबुद्धिं सचिवोत्तमम् ॥ ५९ ॥
त्वमस्मत्प्रेषणे राज्ञामगा वेश्मस्वनेकशः । स्त्रीरत्नमीदृक् कुसुममुद्गरश्च किमीक्षितः ॥ ६० ॥
स्वबुद्धिरभ्यधादेवं त्वदादेशान्मयेयुषा[4] । अंतिके कुम्भभूपस्य दृष्टा मल्लीति तत्सुता ॥ ६१ ॥
तस्याः स्त्रीरत्नमुख्याया आयुर्ग्रंथौ[5] विधीयते । स पुष्पमुद्गरः कोऽपि यादृक् स्वर्गेऽप्यसंभवी ॥ ६२ ॥
स्त्रीरत्नं चक्रिणो यच्च स्मरपत्नी च या रतिः । शच्याद्याः स्वःस्त्रियो याश्च तदग्रे तास्तृणोपमाः ॥ ६३ ॥
अप्येकवारं ददृशे येन सा कुम्भराजसूः । सुधारसास्वादमिव तद्रूपं विस्मरेन्न सः ॥ ६४ ॥
मल्लेः प्रतिकृतिर्नारी न मर्त्येषु सुरेषु च । तस्या हि रूपमद्वैतं वाचामपि न गोचरः ॥ ६५ ॥
प्रतिबुद्धिरपि सद्यः पूर्वजन्मानुरागतः । दूतं प्रैषीत्तां वरीतुं कुम्भराजांतिके निजम् ॥ ६६ ॥
इतो धरणजीवोऽपि वैजयन्तात् परिच्युतः । चंपापुर्यामभूच्चन्द्रच्छायो नाम महीपतिः ॥ ६७ ॥
तस्यां पुर्यां च वास्तव्यः श्रावकोऽर्हन्नयाभिधः । अंभोधियात्रामकरोत् पोतारूढो वणिज्यया ॥ ६८ ॥

---

१ इच्छितपूरका । २ तया पद्मावत्या सह । ३ पुष्पगुच्छम् । ४ गतेन । ५ आयुःसूचिकायां ग्रंथिरूपरेखायां ।

अर्हन्नयसमो नास्ति श्रावकः कश्चिदप्यहो । इति प्रशंसां विदधे शक्रो मध्येसभं तदा ॥ ६९ ॥
ततो मात्सर्यवानेको देवः कोऽप्येत्य सागरे । औत्पातिकमरुन्मेघाडम्बरं विदधे क्षणात् ॥ ७० ॥
पोतभंगभयात् सद्यो क्षुभ्यत्सांयात्रिका भृशम् । ऐच्छन्नभीष्टदेवेभ्य उपयाचितकानि च ॥ ७१ ॥
इतो विघ्नान्मृतिश्चेन्मे तदानशनमस्त्विति । प्रत्याख्याय समाधिस्थस्तस्थावर्हन्नयः पुनः ॥ ७२ ॥
रक्षोरूपं विकृत्योचे स देवो नभसि स्थितः । अर्हन्नयार्हतं धर्मं जहीहि कुरु मद्वचः ॥ ७३ ॥
नो चेदमुं स्फोटयित्वा पोतं घटकपालवत् । त्वां यादसां भोजनसात् करिष्ये सपरिच्छदम् ॥ ७४ ॥
तथाप्यचलिते धर्मात्तस्मिन् देवः स विस्मितः । चकार क्षमणां शक्रप्रशंसां तां जगाद च ॥ ७५ ॥
तस्मै च कुंडलद्वंद्वे दिव्ये दत्वा मनोरमे । घोरं च मेघवातादि संहृत्य स तिरोदधे ॥ ७६ ॥
क्रमेणार्हन्नयोऽप्यब्धेस्तीरोर्व्यामुत्ततार सः । अशेषं भांडमादाय ययौ च मिथिलापुरीम् ॥ ७७ ॥
एकं च कुंभराजस्योपायने[1] कुंडलद्वयम् । अर्हन्नयो यथार्हज्ञ[2]श्चकारोदारमानसः ॥ ७८ ॥
तदैव कुंभराजोऽपि दुहित्रे मल्लये ददौ । अर्हन्नयं नयज्ञस्तं सत्कृत्य विससर्ज च ॥ ७९ ॥
विक्रीतक्रीतभांडो[3]ऽथ सोऽगाच्चंपामकंपधीः । ददौ च चंद्रछायाय द्वितीयं कुंडलद्वयम् ॥ ८० ॥
राजा पप्रच्छ भोः श्रेष्ठिन् कुतोऽदः कुंडलद्वयम् । सोऽप्याख्यत् कुंडलप्राप्तिकथामवितथां तथा ॥ ८१ ॥
तादृक्षापरताडंकद्वयदानप्रसंगतः । स इत्यवर्णयन्मल्ल्या रूपोत्कर्षं विशेषतः ॥ ८२ ॥
तस्याश्चेदुद्यतं वक्त्रं तदस्तं यातु चन्द्रमाः । यदि द्युतिस्तदंगस्य कृतं मरकतेन तत् ॥ ८३ ॥

१ प्राभृते । २ यथार्हं यथायोग्यं जानातीति तथा । ३ पूर्वं विक्रीतानि पश्चात् क्रीतानि च भांडानि येन सः ।

तस्या लावण्यपूरश्चेत्तदलं जाह्नवीजलैः । तस्याश्च यदि रूपश्रीस्तद्दूरे सुरयोषितः ॥ ८४ ॥
वृथैव नेत्राणि नृणां न यैः सा देव दृश्यते । किं हंसैः पद्मिनीं स्मेरां ये न पश्यंति जातुचित् ॥ ८५ ॥
चंद्रच्छायनरेन्द्रोऽपि प्राग्जन्मस्नेहयोगतः । मल्लिं वरीतुं कुंभाय प्राहिणोद्दूतमुत्तमम् ॥ ८६ ॥
इतश्च पूरणात्मापि वैजयंतात् परिच्युतः । बभूव पुर्यां श्रावस्त्यां रुक्मी नाम महीपतिः ॥ ८७ ॥
तस्यासीद्धारणीपत्न्यां सुबाहुर्नाम कन्यका । रूपातिशयसंपन्ना पन्नगेन्द्रवधूरिव ॥ ८८ ॥
नृपतेः सातिवाल्लभ्यात्परिवारेण सादरम् । विशेषमज्जनविधिं चतुर्मास्यामकार्यत ॥ ८९ ॥
अन्तःपुरेणापरेद्युः स्नपिता सा विशेषतः । आमुक्तदिव्यालंकारा प्रणंतुं पितरं ययौ ॥ ९० ॥
तां पितोत्संगमारोप्य सौविदल्लमभाषत । कन्याया मज्जनविधिः किमीदृक् क्वचिदीक्षितः ॥ ९१ ॥
सोऽप्याख्यद्भवदादेशाद्गतेन मिथिलां मया । आयुर्ग्रंथौ कुंभपुत्र्या मल्लेरधिकमीक्षितः ॥ ९२ ॥
अदृष्टप्रतिरूपं च तस्या रूपमपि प्रभो । कथ्यमानमसंभाव्यं प्रत्येतव्यं तु मद्गिरा ॥ ९३ ॥
अदृष्टपूर्वं स्त्रीरत्नं मम तद्दृष्टपूर्विणः । अन्यस्त्रीवर्णने जिह्वा मौनव्रतमशिश्रियत् ॥ ९४ ॥
तस्या ह्यग्रे विभान्त्यन्यास्तन्निर्माल्योपमाः स्त्रियः । पुरः कल्पलताया हि सहकारलताः कियत् ॥९५॥
श्रुत्वा जातानुरागेण सद्यो राज्ञापि रुक्मिणा । दूतः प्रैष्यत कुंभाय मल्लिमार्गणहेतवे ॥ ९६ ॥
इतश्च वसुजीवोऽपि वैजयन्तात् परिच्युतः । जज्ञे वाराणसीपुर्यां शंखो नामावनीपतिः ॥ ९७ ॥

---

१ गंगाजलैः । २ प्रफुल्लाम् । ३ सर्पेन्द्रवधूः । ४ अतिवल्लभत्वात् । ५ आमुक्ता धृता दिव्यालंकारा यया सा । ६ अन्तःपुरचरं नपुंसकपुरुषम् । ७ अदृष्टं प्रतिरूपं प्रतिकृतिर्यस्य तत् । ८ विश्वसनीयम् ।

मल्लेस्तत्कुंडलद्वंद्वं दिव्यं विजघटेऽन्यदा । राज्ञादिष्टाः स्वर्णकारास्तस्य संघट्टनाय च ॥ ९८ ॥

वयं दिव्यमिदं देव न संघट्टयितुं क्षमाः । इत्युक्तवन्तस्ते पुर्या राज्ञा निर्वासिताः क्रुधा ॥ ९९ ॥

ते च वाराणसीमेयुः शंखाय च महीभुजे । तदशेषं समाचख्युरात्मनिर्वासकारणम् ॥ १०० ॥

कुंडलप्रक्रमायातं मल्ले रूपं तदद्भुतम् । राज्ञोऽग्रे वर्णयामासुर्दृष्टा[3]दूनतरं तु ते ॥ १०१ ॥

तस्या मुखस्य शशभृदोष्ठयोर्बिंबिकाफलम् । कंठ[4]देशस्य कंबुश्च दोष्णोर्बिसलतापि च ॥ १०२ ॥

[5]मध्यस्य पविमध्यं च तथोर्वोः करिणः करः । नाभेश्च सरिदावर्तो जघनस्य च दर्पणः ॥ १०३ ॥

जंघयोश्च मृगीजंघा पाणिपादस्य पंकजम् । उपमेयतया जज्ञे [6]यदन्यत्रोपमानभाक् ॥ १०४ ॥

॥ त्रिभिर्विशेषकम् ॥

पूर्वस्नेहानुबन्धेन तद्रूपाकर्णनेन च । कुंभादर्थयितुं मल्लीं शंखो दूतमथादिशत् ॥ १०५ ॥

जीवो वैश्रवणस्यापि वैजयन्तात् परिच्युतः । अदीनशत्रुर्नाम्नाऽभून्नृपतिर्हस्तिनापुरे ॥ १०६ ॥

इतश्च मल्लेरनुजो मल्लो नाम कुतूहलात् । अकारयच्चित्रकैश्चित्रितां चित्रशालिकाम् ॥ १०७ ॥

चित्रीयमाणश्चित्रेण तेष्वेकश्चित्रकृद्वरः । एकांगदर्शनात्तादृक्सर्वांगालेख्यलब्धिमान् ॥ १०८ ॥

अन्तर्जवनिकं मल्लेः पादांगुष्ठं निरीक्ष्य सः । सर्वांगोपांगसहितं यथावद्रूपमालिखत् ॥ १०९ ॥

तत्र च क्रीडितुं मल्लो गतः प्रेक्ष्य च चित्रगाम् । [7]मल्लीं साक्षान्मन्यमानो लज्जयापासरद्द्रुतम् ॥ ११० ॥

---

१ बभञ्जे । २ निष्कासिताः । ३ अतिशयेनादूनं सुंदरम् । ४ कंठभागस्य । ५ मध्यदेशः कटिभागः । ६ अन्यस्त्रीषु पूर्वोक्ताश्चन्द्रादय उपमानतां प्राप्नुवन्ति अस्यां तु उपमेयतामित्यर्थः । ७ मल्लीशब्दो दीर्घान्तोऽपि प्रयुक्तः संज्ञात्वात् ।

धात्र्या किमेतदित्युक्ते कुमारोऽप्यब्रवीदिति । स्वसा मल्ली पुरोऽस्त्येषा ततोऽत्र क्रीड्यते कथम् ॥११११॥
सम्यग्निरूप्य धात्री साप्याचख्यौ परिज्ञाप्यताम् । न साक्षान्महत्यसौ किं तु चित्रस्था मापसर्प तत् ११२॥
क्रुद्धो मल्लकुमारोऽपि तस्य चित्रस्य लेखकम् । निकर्त्य दक्षिणकरं संदंशं निरवासयत् ॥ ११३ ॥
सोऽन्येत्य हास्तिनपुरेऽदीनशत्रोर्महीपतेः । तं वृत्तांतं समाचख्यौ मल्लीं चैवमवर्णयत् ॥ ११४ ॥
अशेषजगदाकाशशशिलेखा वरांगना । मल्लिं विना क्वचित् कापि नास्ति नाजून भाविनी ॥ ११५ ॥
यस्तां कन्यां समालोक्यालोकयेदपरामपि । महानीलमणिं दृष्ट्वा काचखंडं स पश्यति ॥ ११६ ॥
रूपेण लावणिम्ना च गत्या चान्यैश्च चेष्टितैः । सैवैका योषितां धुर्या सरितामिव जाह्नवी ॥ ११७ ॥
इति तद्वर्णनं कृत्वा स चित्रकरपुंगवः । आकृष्य चित्रफलकं चित्रस्थां तामदर्शयत् ॥ ११८ ॥
दृष्ट्वा तां विस्मितः पूर्वस्नेहादुत्कंठितश्च सः । प्रैषीत्तद्याचनायोपकुंजराजं स्वपूरुषम् ॥ ११९ ॥
इतोऽभिचन्द्रजीवोऽपि वैजयन्तात्परिच्युतः । कांपील्यनगरे नाम्ना जितशत्रुर्नृपोऽभवत् ॥ १२० ॥
धारिणीप्रमुखं राज्ञीसहस्रं तस्य चाभवत् । पुण्याकृष्टं देवलोकाद्वृन्दमप्सरसामिव ॥ १२१ ॥
इतश्च मिथिलापुर्यां चोक्षा नाम विचक्षणा । एका परिव्राजिकाख्यद्राजेश्वरगृहेष्विति ॥ १२२ ॥
दानमूलः सदा धर्मस्तथा तीर्थाभिषेकजः । स्वर्गापवर्गयोर्हेतुरिति नस्तत्त्वतो वचः ॥ १२३ ॥
धर्मे प्रवर्तयन्त्यस्मिन् पौराञ्जानपदानपि । विहरन्त्यन्यदाभ्यागात् सदने मल्ल्यधिष्ठिते ॥ १२४ ॥

१ छित्त्वा । २ संदंशः स्यात्कंकमुख इत्यभिधानचिंतामणिः लोके "चीपीयो" इति ख्यातः । ३ लावण्येन । ४ निष्कास्य । ५ राज्ञामीश्वराणां धनिकानां च गृहेषु ।

त्रिदंडपाणिः काषायवसना कुंडिकाजलैः । सदर्भैर्भुवमभ्युक्ष्य स्ववृष्यां निषसाद सा ॥ १२५ ॥
मल्लेरप्यन्यजनवत् सा धर्मं तं तथा जगौ । ज्ञानत्रितयभृन्मल्लिरप्येवमवदत्ततः ॥ १२६ ॥
दानमात्रं न धर्माय तद्धि धर्माय चेद्भवेत् । तद्ध्योतुकुर्कुटादीनां पोषणान्यपि तत्कृते ॥ १२७ ॥
तीर्थाभिषेकैः प्राणातिपातमूलैः कथं शुचिः । असृजा क्षाल्यमानं किमसृग्दिग्धं विशुध्यति ॥ १२८ ॥
धर्मो विवेकमूलस्तु निर्विवेकस्य नास्ति सः । क्लेशाय केवलं तस्य तपांस्यपि न संशयः ॥ १२९ ॥
मल्ल्यैवमुक्ता सा चोक्षा विलक्षाभूदधोमुखी । केनेश्वरवचोयुक्तियुक्तं बाधितुमीश्यते ॥ १३० ॥
कियच्चिरमिदं विश्वमाः पाखंडिनि वंचितम् । त्वया कुशासनेनेति दास्यादिभिरभर्त्सि सा ॥ १३१ ॥
चोक्षेत्यचिंतयद्राज्यसंपदुन्मत्तयानया । एतत्परिच्छदेनापि स्वामिच्छंदानुवर्तिना ॥ १३२ ॥
यदस्मि तर्जिता स्वैरं तद्वैरानृण्यहेतवे । क्षेप्स्याम्येनां सपत्नीषु बह्वीषु निजबुद्धितः ॥ १३३ ॥
एवं विचिंत्य निर्गत्य सामर्षाध्मातमानसा । जगाम कांपील्यपुरे जितशत्रुनृपांतिके ॥ १३४ ॥
प्रतिपत्त्या महत्या सा दृष्टा तेन महीभुजा । कृताशीर्वादकल्याणा स्वस्यां वृष्यामुपाविशत् ॥ १३५ ॥
सा राज्ञान्तःपुरेणापि ववन्दे भक्तिपूर्वकम् । धर्मं तत्रापि चाशंसद्दानतीर्थाभिषेकजम् ॥ १३६ ॥
भूपतिस्तामुवाचैवं भगवत्यखिलां महीम् । एतामपरतंत्रत्वादभ्राम्यस्तेन पृच्छ्यसे ॥ १३७ ॥
वरमन्तःपुरंस्त्रैणं चोक्षे यादृगिदं मम । अन्यत्राप्यस्ति कुत्रापि किं तादृग्दृष्टपूर्विणी ॥ १३८ ॥

---

१ स्वदर्भासने । २ ओतुर्बिडालः । ३ धर्माय । ४ असृजा शोणितेन दिग्धं लिप्तम् । ५ समर्थीभूयते । ६ करणे तृतीया । ७ छंदः इच्छा । ८ अमर्षः क्रोधः । ९ गौरवेण । १० स्त्रीणां समूहः स्त्रैणम् ।

ऊचे तत्राद्यदूतेन यत्साकेतपुरेश्वरः । अनेकसामंतशिरोमार्जितांघ्रिसरोरुहः ॥ १५२ ॥
महाभुजो महोत्साहो रूपेण मकरध्वजः । निशाकरः सौम्यतया प्रतापेन दिवाकरः ॥ १५३ ॥
बृहस्पतिर्धिषणया प्रतिबुद्धिर्महीपतिः । कन्यां ते याचते मल्लीं परिणेतुमनिंदिताम् ॥ १५४ ॥
कन्या ह्यवश्यं दातव्या पित्रान्यस्यापि कस्यचित् । तदेनं तत्प्रदानेन स्वजनं कर्तुमर्हसि ॥ १५५ ॥
ऊचे द्वितीयदूतेन यच्चंपानगरीपतिः । युवा [1]युगायतभुजः पीनस्कंधः सुलोचनः ॥ १५६ ॥
कुलीनश्चतुरः [2]सत्यसंगरः [3]संगरोर्जितः । [4]अधीती सर्वशास्त्रेषु शस्त्रेषु च कृतश्रमः ॥ १५७ ॥
चंद्रवच्छायया [5]चंद्रच्छायो नाम महीपतिः । मल्लीं मार्गयति त्वत्तस्तां तस्मै दातुमर्हसि ॥ १५८ ॥
तृतीयेनापि जगदे यच्छ्रावस्तीपुरीश्वरः । चिन्तामणिः प्रणयिनां क्षत्रियाणां शिरोमणिः ॥ १५९ ॥
शरण्यः शरणेच्छूनां वरेण्यो वीर्यशालिनाम् । क्रीडागारं जयश्रीणामुद्यानं [6]गुणशाखिनाम् ॥ १६० ॥
रुक्मी नाम महीपालस्तव कन्यामभीप्सति । विधेह्युचितयोर्योगमुचितज्ञोऽसि पार्थिव ॥ १६१ ॥
तुर्येणाप्यन्यधाय्येवं यत्काशीनगरीश्वरः । अद्भुतेनेश्वरत्वेन [7]जितपुण्यजनेश्वरः ॥ १६२ ॥
वाग्मी सौन्दर्यकंदर्पो दर्पच्छित् परिपन्थिनाम् । सदाचारपथे पान्थः शासने पाकशासनः ॥ १६३ ॥
[8]शंखच्छेदोज्ज्वलयशाः शंखो नाम महीपतिः । त्वत्तः प्रार्थयते कन्यां प्रतिपद्यस्व तन्नृप ॥ १६४ ॥

---

१ युगवदायतौ भुजौ यस्य सः । २ सत्यप्रतिज्ञः । ३ युद्धे ऊर्जितः । ४ अधीतमनेनेति । ५ कान्त्या । ६ गुणा एव वृक्षास्तेषाम् ।
७ जितः पुण्यजनेश्वरः कुबेरो येन सः । ८ शंखखंडवदुज्ज्वलं यशो यस्य सः ।

इत्यूचे पंचमेनापि यद्धास्तिनपुराधिपः । हस्तिमल्लो महास्थाम्ना लघुहस्तो महाभुजः ॥ १६५ ॥
अनेकरणनिर्व्यूढो व्यूढोरस्कः सुधीर्युवा । प्ररोहणः कीर्तिवल्लेर्गुणरत्नैकरोहणः ॥ १६६ ॥
दीनानाथसमुद्धारोऽदीनशत्रुर्महीपतिः । कन्यां मार्गति मल्लीं ते विदेहाधीश देहि ताम् ॥ १६७ ॥
षष्ठेनापीत्यभिदधे यत्कांपील्यपुराधिपः । अकंपनीयो रिपुभिः कुञ्जरैरिव पर्वतः ॥ १६८ ॥
शोभितोऽनल्पसेनाभिर्नदीभिरिव सागरः । सेनानीभिः सुनासीर इवाप्रतिघशक्तिभिः ॥ १६९ ॥
जितशत्रुर्जिताशेषशत्रुर्मद्वचसा नृपः । तव कन्यामर्थयते दीयतामविलंबितम् ॥ १७० ॥
कुंभराजो जगादैवं के तु ते बहुमानिनः । अप्रार्थितप्रार्थका रे मूढाः पार्थिवपांशनाः ॥ १७१ ॥
जगत्त्रयशिरोरत्नं कन्यारत्नमिदं हि नः । अपि शक्रादिदेवानां परिणेतुं न योग्यता ॥ १७२ ॥
मनोरथो भवन्नाथैर्वृथा चक्रे दुराशयैः । दूता वराकास्तद्यात निर्यात नगरान्मम ॥ १७३ ॥
एवं ते निकृता राज्ञा गत्वा स्वस्वामिनां द्रुतम् । तद्वाचिकमवोचन्त क्रोधानलसमीरणम् ॥ १७४ ॥
ततः षडपि राजानस्ते समानपराभवाः । दूतान् परस्परं प्रेष्य निश्चिक्युः कुंभविग्रहम् ॥ १७५ ॥
चेलुः षडपि ते वर्षधराद्रय इवौजसा । स्थगयंतो महीं सैन्यैः प्रापुश्च मिथिलापुरीम् ॥ १७६ ॥
प्रवेशनिर्गमद्वारनिवारणविचक्षणाः । तेऽरुन्धन् वेष्टयित्वा तां चंदनद्रुमिवाहयः ॥ १७७ ॥
कुंभोऽपि तेन रोधेन खिन्नः कतिपयैर्दिनैः । चिन्तापन्नो यावदस्थात्तावन्मल्लिः समाययौ ॥ १७८ ॥
उद्विग्न इव किं तात तिष्ठसीति तयोदितः । उद्वेगकारणं तस्या आचख्यौ कुंभभूपतिः ॥ १७९ ॥

१ लघुः शीघ्रकारी हस्तो यस्य सः । २ अंकुरः । ३ इन्द्रः । ४ अप्रार्थ्यस्य प्रार्थयितारः । ५ नृपाधमाः । ६ निर्गच्छत । ७ तिरस्कृताः ।

मल्लिरप्यालपत्तात प्रत्येकं गुढपूरुषैः । तुभ्यं दास्यामि मल्लीमित्युक्त्वा षडपि बोधय ॥ १८० ॥
तस्या मम प्रतिमायाः पुरोपवरकेषु ते । क्रमेण सायमानेयाः प्रछन्नाः श्वेतवाससा ॥ १८१ ॥
तथैव विदधे राजा तेऽप्याजग्मुस्तथैव हि । कपाटजालकैर्मल्लीप्रतिमां ददृशुश्च ताम् ॥ १८२ ॥
अहो पुण्यैरियं प्रापि सुरूपा चारुलोचना । इति मल्लीधिया दध्युस्तेऽनुरागेण पार्थिवाः ॥ १८३ ॥
प्रतिमापृष्ठद्वारेण प्राविशत्तत्र मल्ल्यपि । प्रतिमान्तरिता तालुपिधानाब्जमपानयत् ॥ १८४ ॥
प्रक्षिप्तकुथिकाहारगंधः सद्यश्च निर्ययौ । शकृद्गंध इवासह्यः प्रसह्य घ्राणबाधकः ॥ १८५ ॥
कपाटजालैस्तदपवरकेष्वपि सोऽविशत् । षण्णामपि नरेन्द्राणां दारयन्निव नासिकाः ॥ १८६ ॥
पिधाय नासिकां तेऽपि वाससा गंधतस्ततः । पराङ्मुखा अजायन्त वैरिभ्य इव कातराः ॥ १८७ ॥
न्नोः किं पराङ्मुखा यूयमिति मल्ल्याज्ञापिताः । अमुं न शक्नुमः सोढुं दुर्गन्धमिति तेऽभ्यधुः॥१८८॥
मल्लिस्तान् प्रत्युवाचैवं सौवर्णी प्रतिमा ह्यसौ । अत्राप्यन्वहमाहारक्षेपाद्गंधोऽयमीदृशः ॥ १८९ ॥
किं ब्रूमस्तस्य यज्जन्म पित्रोः शुक्रासृगुद्भवम् । पश्चाच्च कललीभूतं मांसपेशीत्वभाक् ततः ॥ १९० ॥
ततो मातृकृताहारनिर्यासरसपोषितम् । जरायुनरकमग्नं वपुर्विण्मूत्रवासितम् ॥ १९१ ॥ युग्मम् ॥
एवंविधसमुत्पत्तेर्विष्ठाकोष्ठस्य वर्ष्मणः । रसासृग्मांसमेदोऽस्थिमज्जाशुक्रांचितात्मनः ॥ १९२ ॥

---

१ शकृद्विष्टा तद्वद्गंधो यस्य सः । २ हठात् । ३ वीर्यशोणिताभ्यामुद्भूतम् । ४ कललं गर्भवेष्टनचर्म तद्वद्भूतम् । ५ मांसपेशी गर्भस्थप्राण्यवयवविशेषः । ६ निर्यासरसः सत्त्वरसः । ७ जरायुर्गर्भाशयः । ८ देहस्य ।

नारीकुचवदुष्णत्वात् पथिकैः शीतपीडितैः । आचम्यमानकूपांबु सेव्यमानवटद्रुमम् ॥ २०७ ॥
हेमन्तलक्ष्मीहसितैरिव कुन्दैर्विकस्वरैः । शोभमानं तदुद्यानं प्रविवेश जगद्गुरुः ॥ २०८ ॥

॥ चतुर्भिः कलापकम् ॥

बहिःपरिच्छदार्हाणां नृणां दशशतैः समम् । स्त्रीणामप्यन्तरपरीवारार्हाणां त्रिभिः शतैः ॥ २०९ ॥
मार्गस्य शुक्लैकादश्यां पूर्वाह्णे भेऽश्वयुज्यथ । यथाविधि प्रभुर्मल्लिः प्रवव्राज कृताष्टमः ॥ २१० ॥
मनःपर्ययमुत्पेदे मल्लिर्ज्ञानं तदैव हि । तस्मिन्नेव दिनेऽशोकमूले केवलमप्यभूत् ॥ २११ ॥
शक्रादिभिश्च समवसरणं विदधेऽमरैः । धनुःशतत्रयोत्तुंगचैत्यपादपशोभितम् ॥ २१२ ॥
तत्र प्रविश्य प्राग्द्वारा मल्लिस्तं चैत्यपादपम् । प्रदक्षिणीकृत्य नमस्तीर्थायेत्यभिधाय च ॥ २१३ ॥
प्राक्सिंहासनमध्यास्त प्राङ्मुखोऽथान्यदिक्ष्वपि । सद्यस्तत्प्रतिरूपाणि विचक्रुर्व्यंतरामराः ॥ २१४ ॥
अवतस्थे यथास्थानं श्रीमान् संघश्चतुर्विधः । कुंभस्ते षट् च राजानोऽनुशक्रं समुपाविशन् ॥ २१५ ॥
देवराजकुंभराजौ नमस्कृत्य जगद्गुरुम् । श्रद्धाधौतान्तरात्मानाविति तुष्टुवतुर्मुदा ॥ २१६ ॥
दिष्ट्या प्रणमतां भाले त्वत्पादनखरश्मयः । भवन्ति भवभीतानां रक्षातिलकसन्निभाः ॥ २१७ ॥
आजन्म ब्रह्मचारित्वाद्दीक्षा ते जन्मतोऽपि हि । व्रतपर्यायदेशीयं मन्ये जन्मापि तत्तव ॥ २१८ ॥
किं देवसद्मना तेन न यत्र तव दर्शनम् । इदं तु भूतलं श्रेयस्त्वदालोकपवित्रितम् ॥ २१९ ॥
नृदेवतिर्यग्जन्तूनां भीतानां भववैरितः । दुर्गं त्वदीयं समवसरणं शरणं प्रभो ॥ २२० ॥
कुकर्माण्यन्यकर्माणि त्वत्पादप्रणतिं विना । यैः कर्माण्येव सूयंते संसारस्थितिकारणम् ॥ २२१ ॥

दुर्ध्यानान्यन्यध्यानानि भवद्ध्यानं विना खलु । यैरात्मा बध्यते बाढं निजैर्लूतेव तंतुभिः ॥ २२२ ॥
कथाश्च दुःकथा एव भवद्गुणकथां विना । यकाभिस्तित्तिरिरिव वाग्भिर्विपदमश्नुते ॥ २२३ ॥
त्वत्पादपद्मसेवायाः प्रभावेण जगद्गुरो । भवच्छेदोऽस्तु यद्वास्तु त्वयि भक्तिर्भवे भवे ॥ २२४ ॥
एवं स्तुत्वा विरतयोरमरेन्द्रनरेन्द्रयोः । श्रोतुं चोत्कंठिते संघे श्रीमल्लिर्देशनां व्यधात् ॥ २२५ ॥
स्वतोऽप्यपारः संसारो वर्धते च विशेषतः । रागादिना पूर्णमासीदिनेनेव सरित्पतिः ॥ २२६ ॥
अमन्दानन्दजनके साम्यवारिणि मज्जताम् । जायते सहसा पुंसां रागद्वेषमलक्षयः ॥ २२७ ॥
प्रतिहंति क्षणार्धेन साम्यमालंब्य कर्म तत् । यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥ २२८ ॥
कर्मजीवं च संश्लिष्टं परिज्ञानात्मनिश्चयः । विभिन्नीकुरुते साधुः सामायिकशलाकया ॥ २२९ ॥
रागादिध्वांतविध्वंसे कृते सामायिकांशुना । स्वस्मिन् स्वरूपं पश्यंति योगिनः परमात्मनः ॥ २३० ॥
स्निह्यंति जंतवो नित्यवैरिणोऽपि परस्परम् । अपि स्वार्थकृते साम्यभाजः साधोः प्रभावतः ॥ २३१ ॥
चेतनाचेतनैर्भावैरिष्टानिष्टतया स्थितैः । न मुह्यंति मनो यस्य तस्य साम्यं प्रचक्ष्यते ॥ २३२ ॥
गोशीर्षचंदनालेपे वासिच्छेदे च बाह्वोः । अभिन्ना चित्तवृत्तिश्चेत्तदा साम्यमनुत्तमम् ॥ २३३ ॥
अभिष्टोतरि च प्रीते रोषांधे चातिशप्तरि । यस्याविशेषणं चेतः स साम्यमवगाहते ॥ २३४ ॥
हूयते न जप्यते न दीयते वा न किंचन । अहो अमूल्यक्रीतीयं साम्यमात्रेण निर्वृतिः ॥ २३५ ॥

---

१ ऊर्णनाभ इव । २ परिज्ञानेनात्मनो निश्चयो यस्य स आत्मज्ञानीत्यर्थः । ३ खड्गेन छेदे सति । ४ हस्तवाची बाहाशब्दोऽप्यस्ति । ५ स्तुतिं कुर्वति । ६ निंदां कुर्वति । ७ विना मूल्येन क्रीता ।

प्रयत्नकृष्टैः क्लिष्टैश्च रागाद्यैः किमुपासितैः । अयत्नलभ्यं हृद्यं च धार्यं साम्यं सुखावहम् ॥ २३६ ॥
परोक्षार्थप्रतिक्षेपात् स्वर्गमोक्षावपह्नुताम् । साम्यशर्म स्वसंवेद्यं नास्तिकोऽपि न निह्नुते ॥ २३७ ॥
कविप्रलापरूढेऽस्मिन्नमृते किं विमुह्यते । स्वसंवेद्यरसं हंत पेयं साम्यरसायनम् ॥ २३८ ॥
खाद्यलेह्यचूष्यपेयरसेभ्यो विमुखा अपि । पिबंति यतयः स्वैरं साम्यामृतरसं मुहुः ॥ २३९ ॥
कंठपीठे लुठन् भोगिभोगो मंदारदाम च । यस्याप्रीत्यै न वा नो वा प्रीत्यै स समतापतिः ॥ २४० ॥
न गूढं किंचनावार्यमुष्टिः काचिन्न वापरा । बालानां सुधियां चैकं साम्यं भवरुजौषधम् ॥ २४१ ॥
अतिक्रूरतरं कर्म शांतानामपि योगिनाम् । यद्घ्नंति साम्यशस्त्रेण रागादीनां कुलानि ते ॥ २४२ ॥
अयं प्रभावः परमः समत्वस्य प्रतीयताम् । यत्पापिनः क्षणार्धेन पदमिच्छति शाश्वतम् ॥ २४३ ॥
यस्मिन् सति सफलतामसत्यफलतां व्रजेत् । रत्नत्रयं स्वस्ति तस्मै समत्वाय महौजसे ॥ २४४ ॥
संसर्गेऽप्युपसर्गाणामपि मृत्यावुपस्थिते । न तत्कालोचितं किंचित् साम्यादौपयिकं वरम् ॥ २४५ ॥
एकं मोक्षतरोर्बीजमिहात्यद्भुतशर्मदम् । तस्मात्साम्यं विधातव्यं रागद्वेषजयेषिणा ॥ २४६ ॥
तया देशनया भूपाः षट् तेऽन्येपि प्रवव्रजुः । संजज्ञिरे श्रावकास्तु कुंभप्रभृतयस्तदा ॥ २४७ ॥
भिषगाद्या गणभृतोऽष्टाविंशतिरथाभवन् । भगवद्देशनांते च गणभृद्देशनां व्यधात् ॥ २४८ ॥
द्वितीयस्मिन् दिने मल्लिप्रभोस्तत्रैव कानने । विश्वसेननृपाज्जज्ञे परमान्नेन पारणम् ॥ २४९ ॥

---

१ प्रत्यक्षम् । २ सर्पदेहः । ३ संबंधे पष्ठीयम् । ४ प्रधानम् ।

कौमारे व्रतपर्याये चायुर्मल्लिजिनेशितुः । वर्षाणां पंचपंचाशत्सहस्राण्यभवन् विभोः ॥ २६४ ॥
अरनाथस्य निर्वाणाच्छ्रीमल्लिजिननिर्वृतिः । कोटीसहस्रे वर्षाणां समतिक्रांतवत्यभूत् ॥ २६५ ॥

तत्कालमुपेत्य सर्वतोप्यमरेन्द्रैरमरैश्च कोटिशः ।
निर्वाणमहोत्सवः प्रभोः श्रीमल्लेर्विदधे यथाविधि ॥ २६६ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये षष्ठे पर्वणि

श्रीमल्लिनाथचरितवर्णनो नाम

षष्ठः सर्गः ॥



## ॥ सप्तमः सर्गः ॥

### श्रीमुनिसुव्रतनाथचरित्रम् ।

मुनिसुव्रतनाथस्य देशनायां रदत्विषः[1] । जयंति ज्ञानदुग्धाब्धेर्वेलाः पावितभूतलाः[2] ॥ १ ॥
विदुषां प्रति[3]भोल्लासे सारस्वतमिवामलम् । मुनिसुव्रतदेवस्य चरितं कीर्तयिष्यते ॥ २ ॥
अथात्रैव जंबूद्वीपे विदेहेष्वपरेषु तु । विजये भरताख्येऽस्ति चंपेति विपुला पुरी ॥ ३ ॥
तस्यामासीन्महाबाहुर्लोकोत्तरपराक्रमः । सुरश्रेष्ठ इव सुरश्रेष्ठो नाम महीपतिः ॥ ४ ॥
स चतुर्धाप्यभूद्वीरो दीनत्राता रणोत्कटः । प्रार्थनाकल्पविटपी[4] जिनधर्मधुरंधरः ॥ ५ ॥
खुरलीसमयेष्वेव[5] सोऽस्त्रविद्यामदर्शयत् । न पुना रणरंगेषु साधयन्नाज्ञया नृपान् ॥ ६ ॥
विनयादीन् गुणांस्तस्य वर्णयंतो दिवानिशम् । वाचंयमत्वं मुनयो जहुर्वाचंयमा अपि ॥ ७ ॥
सोऽन्यदा नंदनं नाम मुनिं हृदयनंदनम् । उद्याने समवसृतं ववन्दे भक्तितः सुधीः ॥ ८ ॥
तद्देशनावचः श्रुत्वा मोहपंकजलप्लवम् । स समासादयामास भववैराग्यभावनाम् ॥ ९ ॥
मुनेस्तस्यैव पादान्ते प्रव्रज्यां प्रत्यपादि सः । अपालयद्यथावच्च सात्विकानां शिरोमणिः ॥ १० ॥

---

१ दंतकांतयः । २ पवित्रितं भूतलं याभिस्ताः । ३ बुद्धेर्विकासकरणे । ४ प्रार्थनासिद्धौ कल्पवृक्षसदृशः । ५ अस्त्रविद्याभ्याससमये ।

अर्हद्भक्त्यादिभिः स्थानैस्तीर्थकृन्नाम कर्म सः । अर्जयित्वा विपद्याभूत्प्राणते त्रिदशोत्तमः ॥ ११ ॥
इतश्च्युत्वा ह्यसावर्हन् हरिवंशेऽभवत् किल । तस्य वंशस्य तेनेयमुत्पत्तिः पूर्वमुच्यते ॥ १२ ॥
तथाहि जंबूद्वीपस्यामुष्य क्षेत्रेऽत्र भारते । कौशांबी नाम पुर्यस्ति वत्समंडलमंडनम्[1] ॥ १३ ॥
तस्यां यशोभिः श्रीखंडद्रवैरिव सुगंधिभिः । मंडिताशामुखो[2] जज्ञे सुमुखो नाम भूपतिः ॥ १४ ॥
नृपैरलंघ्या तस्याज्ञा जांगुलीव भुजंगमैः । ऐश्वर्यमद्वितीयं च वज्रपाणेरिवाभवत् ॥ १५ ॥
सामकृत् सामयोग्येषु पितेव मृदुलाशयः । दानकृद्दानसाध्येषु परेतेष्विव[3] मांत्रिकः ॥ १६ ॥
अयस्कांत इवायःसु मायाविषु विभेदकृत् । स दंडभृच्च दंड्येषु दंडपाणिरिवापरः[4] ॥ १७ ॥
अपरेद्युर्वसन्ततौ प्राप्ते मदनबान्धवे । चचाल गंतुमुद्याने रंतुकामः स भूपतिः ॥ १८ ॥
स गच्छन् कुंजरारूढो वनमालामभिख्यया । भार्यां वीरकुविंदस्यारविंदाक्षीमुदैक्षत ॥ १९ ॥
पीनोन्नतकुचद्वंद्वां मृणालमृदुदोर्लताम् । वज्राल्पमध्यां पुलिनविपुलश्रोणिमंडलाम्[5] ॥ २० ॥
सरिदावर्तगंभीरनाभिं करिकरोरुकाम्[6] । नव्यकोकनदाताम्रपाणिपादां नतभ्रुवम् ॥ २१ ॥
श्रोण्या[7] विस्रंसि बिभ्राणां वासो वामेन पाणिना । कुचस्थलादुत्तरीयं निपतद्दक्षिणेन तु ॥ २२ ॥
तां पश्यन्नवनीभर्ता कामार्तिविधुरः क्षणात् । मन्दीकृतद्विपगतिर्मनस्येवमचिंतयत् ॥ २३ ॥

---

१ वत्सदेशस्य भूषणम् । २ भूषितं दिशां मुखं येन सः । ३ शवेषु । ४ यमः । ५ नदीतीरवद्विस्तीर्णं कटीतटं यस्याः सा । ६ हस्तिनः शुंडादंडवदुरू यस्याः सा । ७ कटीतटात्पतद्वस्त्रं वामेन पाणिना कुचस्थलाच्च पतद्वस्त्रं दक्षिणेन हस्तेन धारयंतीम् ।

उवाच सचिवोऽप्येवं सा हि ज्ञाता मया प्रभो । भार्या वीरकुविन्दस्य वनमालेति नामतः ॥ ३९ ॥
एष संपादयिष्यामि शीघ्रमेव तव प्रभो । परं सहपरीवारो यातु स्वामी स्वमालयम् ॥ ४० ॥
इत्युक्तः शिबिकारूढो विमना रोगवानिव । चिन्तयन् वनमालां तां स्वं स्थानमगमन्नृपः ॥ ४१ ॥
आत्रेयिकां नाम परिव्राजिकां सुमतिस्ततः । प्राहिणोद्वनमालायै विचित्रोपायपंक्तिताम् ॥ ४२ ॥
जगाम वनमालाया वेश्मात्रेय्यपि तत्क्षणम् । तया च वंदिता साशीःपूर्वमेवमवोचत ॥ ४३ ॥
वत्से कुतोऽद्य विछाया पद्मिनीव हिमागमे । दिवा शशिकलाकारौ कुतो गंडौ च पांडुरौ ॥ ४४ ॥
शून्यप्रक्षिप्तदृष्टिश्च ध्यायंती किं नु तिष्ठसि । आख्यातपूर्विणी सर्वं दुःखमाख्यासि किं न हि ॥ ४५ ॥
निःश्वस्य वनमालापि ललापैवं कृताञ्जलिः । दुष्प्रापार्थकतामात्मीयां कथां कथयामि काम् ॥ ४६ ॥
क्व रासभी वाजिराज उच्चैरुच्चैःश्रवाः क्व च । क्व च शृगालयुवतिः क्व केशरिकिशोरकः ॥ ४७ ॥
क्व वा वराकी चटका पक्षिणामधिपः क्व च । क्वाहं कुविन्दी तादृक् क्व दुर्लभः प्राणवल्लभः ॥ ४८ ॥
अप्येतेषां भवेद्योगः कथंचन विधेर्वशात् । हीनजातेर्मम तु तत्संगः स्वप्नेऽप्यसंभवी ॥ ४९ ॥
आत्रेयिकाप्येवमूचेऽर्थं ते संपादयाम्यहम् । असाधनीयं पुण्यानां मंत्रतंत्रविदां च किम् ॥ ५० ॥
प्रत्यूचे वनमालैवं मयाद्य पथि वीक्षितः । नृपतिः कुञ्जरारूढः प्रत्यक्ष इव मन्मथः ॥ ५१ ॥
अपि चन्दननिःस्यंदसोदरात्तस्य दर्शनात् । देहे मदीये मोद्भूतः प्रभूतो मान्मथो ज्वरः ॥ ५२ ॥
ज्वरहृत्तक्षकचूडामणिवत्तस्य संगमः । दुर्लभो हि वराक्या मे किं कर्त्री भगवत्यतः ॥ ५३ ॥
आत्रेय्यप्यन्यधादेवं देवं दैत्यं विधुं रविम् । विद्याधरं वा कर्षामि मंत्रैरत्र तु का कथा ॥ ५४ ॥

कौतुकालोकनोत्केन राजलोकेन तत्क्षणम् । निर्माल्यमाल्यसंवीतः सोऽवेष्ट्यत पिशाचकी ॥ ६९ ॥
उत्तालतालिकानादमिश्रकोलाहलध्वनिम् । तस्यानुगामिपौराणां शुश्राव सुमुखो नृपः ॥ ७० ॥
किमेतदिति जिज्ञासुः सहैव वनमालया । निजवेश्मांगणेऽभ्यागात् सुमुखः पृथिवीपतिः ॥ ७१ ॥
तं तथा विकृताकारं कश्मलं शून्यमानसम् । आक्रुश्यमानं लोकेन तप्यमानं च रेणुभिः ॥ ७२ ॥
वनमाले वनमाले क्वासीत्यादि प्रलापिनम् । निरीक्ष्य वनमाला च नृपतिश्चेति दध्यतुः ॥ ७३ ॥
कर्मैतन्निर्घृणमहो अस्माभिः सौनिकैरिव । दुःशीलैर्विदधे हंत विश्वस्तो ह्येष वंचितः ॥ ७४ ॥
मन्ये नातः परं पापं किंचिदन्यत् प्रकृष्यते । प्रकृष्टपापिनां मध्ये धौरेय्या वयमेव हि ॥ ७५ ॥
विश्वासघातकेभ्योऽपि निकृष्टा वयं मास्महे । इत्थं जीवन्मृतमिमं यद्वराकमकृष्महि ॥ ७६ ॥
धिग्धिग्विषयलांपट्यमविवेकपटीयसाम् । नरकेऽपि हि न स्थानं पाप्मनानेन नः खलु ॥ ७७ ॥
धन्यास्ते हि महात्मानः सर्वदा ये जितेन्द्रियाः । जहुर्वैषयिकं सौख्यं विपाके दुःखकारणम् ॥ ७८ ॥
जिनधर्ममहोरात्रं ये शृण्वन्त्याचरन्ति च । वंद्यास्ते स्वविवेकेन ये च विश्वोपकारिणः ॥ ७९ ॥
इति स्वं निन्दतोर्धर्मप्रसक्तांश्चाभिनन्दतोः । तयोः पपात स्वाद्विद्युत् प्राणानपजहार च ॥ ८० ॥
मिथः स्नेहपरीणामाच्छुभध्यानाच्च तौ मृतौ । उत्पेदाते हरिवर्षे वर्षे मिथुनरूपिणौ ॥ ८१ ॥
हरिश्च हरिणी चेति पितृभ्यां कल्पिताभिधौ । प्राग्जन्मवद्दंपती ताववियुक्तौ दिवानिशम् ॥ ८२ ॥

---

१ उत्क उत्कंठितः । २ संवीतः सहितः । ३ मलिनम् । ४ चांडालैरिव । ५ अधिकं भवति । ६ अग्रेसराः । ७ अधमाः । ८ तत्यजुः । ९ परिणामे ।

सुखेन तस्थतुस्तत्र विलसंतौ सुराविव ॥ ८३ ॥
कल्पद्रुमैर्दशविधैः संपादितसमीहितौ । सुखेन तस्थतुस्तत्र विलसंतौ सुराविव ॥ ८४ ॥
विद्युत्पातेन हतयोर्वनमालानरेन्द्रयोः । चक्रे बालतपो वीरकुविन्दोऽपि सुदुस्तपम् ॥ ८५ ॥
मृत्वा च कल्पे सौधर्मे सोऽभूत् किल्बिषिकः सुरः । प्राग्जन्मावधिनापश्यत् स्वं तथा हरिणीहरी ॥ ८६ ॥
रोषारुणेक्षणः सद्यो भृकुटीभंगभीषणः । संजिहीर्षुर्यम इव हरिवर्षं जगाम सः ॥ ८७ ॥
एवं च स सुरो दध्याविहावध्याविमौ खलु । मृतौ च यास्यतः स्वर्गेऽवश्यं क्षेत्रप्रभावतः ॥ ८८ ॥
निर्बंधेन दुर्गतीनामकालेऽपि मृतिप्रदे । नयाम्यन्यत्र तत्स्थाने पूर्वजन्मद्विषाविमौ ॥ ८९ ॥
इति निश्चित्य स सुरस्तौ कल्पतरुभिः सह । अनैषीदत्र भरते चंपापुर्यामुभावपि ॥ ९० ॥
तत्र पुर्यां तदानीं च नृप इक्ष्वाकुवंशजः । चन्द्रकीर्तिर्नामधेयेनापुत्रः पंचतां ययौ ॥ ९१ ॥
ततः प्रकृतयस्तस्य राज्यार्हमपरं नरम् । प्रावर्ततोऽभितोऽन्वेष्टुमात्मानमिव योगिनः ॥ ९२ ॥
सोऽथ देवो देवऋद्ध्या सर्वान् विस्मापयञ्जनान् । तेजःपुंज इवाकाशस्थित एवमवोचत ॥ ९३ ॥
भो भोः सचिवसामन्तप्रमुखा राजचिन्तकाः । असूनुर्वो मृतो राजा यूयं राजेच्छवस्ततः ॥ ९४ ॥
युष्मत्पुण्यैरिवाद्यैव प्रेरितोऽहमिहानयम् । हरिवर्षाद्धरिं नाम राज्यार्हं युग्मरूपिणम् ॥ ९५ ॥
अस्येयं हरिणी नाम सहजा[1] सहचारिणी[2] । आहारार्थमनयोश्चानीताः कल्पद्रुमा अमी ॥ ९६ ॥
श्रीवत्समत्स्यकलशकुलिशांकुशलांछितः । तदयं वो भवत्वद्य राजा राजीवलोचनः[3] ॥ ९७ ॥
कल्पद्रुमफलाविद्धं पिशितं[4] पशुपक्षिणाम् । मद्यं च देयमाहारेऽनयोर्मिथुनरूपिणोः ।

१ सहोत्पन्ना । २ पत्नी । ३ राजीवं कमलम् । ४ मांसम् ।

एवमस्त्विति ते प्रोच्य गीर्वाणं तं प्रणम्य च । मिथुनं रथमारोप्य तं निन्यू राजवेश्मनि ॥ ९८ ॥
ब्रह्ममागधगंधर्वमंगलोज्जीतिपूर्वकम् । हरिं राज्येऽभिषिषिचुस्ते सामन्तादयस्तदा ॥ ९९ ॥
स्वशक्त्या च तयोर्देवो ह्रस्वमायुः स्थितेर्व्यधात् । धनुःशतं च तुंगत्वे कृतार्थोऽथ तिरोदधे ॥ १०० ॥
शीतलस्वामिनस्तीर्थे हरी राजा बभूव सः । ततः प्रभृति तन्नाम्ना हरिवंशोऽभवद्भुवि ॥ १०१ ॥
असाधयद्धरी राजा वसुधामब्धिमेखलाम् । राज्ञां कन्याः श्रिय इवोपयेमेऽनेकशश्च सः ॥ १०२ ॥
हरेर्हरिण्यामजनि गते काले कियत्यपि । पृथुलोरःस्थलः पृथ्वीपतिरित्याख्यया सुतः ॥ १०३ ॥
हरिः समं हरिण्या च विपेदेऽर्जितपातकः । पृथ्वीपतिस्तयोः सूनुः पृथ्वीपतिरथाभवत् ॥ १०४ ॥
पालयित्वा चिरं राज्यं राज्ये सूनुं महागिरिम् । सोऽभिषिच्य तपस्तप्त्वा त्रिदिवं प्रत्यपद्यत ॥ १०५ ॥
महागिरिर्नरेन्द्रोऽपि क्रमाद्धिमगिरिं सुतम् । राज्ये न्यस्य तपस्तप्त्वा जगाम पदमव्ययम् ॥ १०६ ॥
ततो हिमगिरिर्ज्येष्ठं सुतं वसुगिरिं निजे । राज्येऽभिषिच्य प्राव्राजीदव्राजीच्चापुनर्भवम् ॥ १०७ ॥
सुतं गिरिं नाम वसुगिरिरप्यात्मनः पदे । निधायात्तपरिव्रज्यः[1] क्षीणकर्मा ययौ शिवम् ॥ १०८ ॥
सुतं मित्रगिरिं राज्ये निधाय गिरिरप्यथ । परिव्रज्यामुपादत्त स्वर्गलोकं जगाम च ॥ १०९ ॥
एवं क्रमेणासंख्याता हरिवंशेऽभवन्नृपाः । तपसा केऽपि निर्वाणं ययुः स्वर्गं च केचन ॥ ११० ॥
इतश्चात्रैव भरतक्षेत्रे मगधमंडनम् । नाम्ना पुरं राजगृहमस्ति स्वस्तिकवद्भुवः ॥ १११ ॥
तत्र यूनां रतभ्रष्टा[2] हारमुक्ताकणोत्कराः । वर्धनीभिरपोह्यन्ते[3] प्रातः प्रतिनिकेतनम् ॥ ११२ ॥

---

१ आत्ता गृहीता परिव्रज्या येन सः । २ रतेन सुरतेन भ्रष्टाः पतिताः । ३ संमार्जनकारिणीभिः ।

गृहे गृहे तत्र चाभ्वा दयादानं गृहे गृहे । गृहे गृहे चित्रशाला रंगशाला गृहे गृहे ॥ ११३ ॥
मरालानामिव सरः पुष्पमाल्यमिवालिनाम् । महामुनीनामपि तत्सेवनीयमभूत् सदा ॥ ११४ ॥
बभूव हरिवंशस्य मुक्तामणिरिवामलः । तत्रोग्रतेजसा मित्रः सुमित्रो नाम भूपतिः ॥ ११५ ॥
विनेता दुर्विनीतानां परिणेता जयश्रियाम् । उन्नेता निजवंशस्य स नेता सर्वभूभुजाम् ॥ ११६ ॥
नवमो दिग्गज इव कुलाचल इवाष्टमः । द्वितीय इव शेषाहिर्महीभारं बभार सः ॥ ११७ ॥
औदार्यधैर्यगांभीर्यादयो ये ये गुणाः किल । ते ते तस्मिन्नदृश्यन्त ज्ञेयानीव जिनागमे ॥ ११८ ॥
पद्मावतीत्यभिधया पद्मादेवी हरेरिव । सधर्मचारिणी तस्याभवद्भूतलपावनी ॥ ११९ ॥
तयाशेषस्य जगतो नयनानंदहेतुना । अलंचक्रे नरेन्द्रश्रीर्द्यौरिवोडुपलेखया ॥ १२० ॥
गुणैः शीलादिभिस्तैस्तैः स्वकीयैः सा सुगंधिभिः । राज्ञोऽध्यवासयच्चित्तं गंधचूर्णैरिवांशुकम् ॥ १२१ ॥
तस्या गुणगणं तारागणं दिव इवोच्चकैः । न संख्यातुमलंभूष्णुरभूदपि पतिर्गिराम् ॥ १२२ ॥
भोगांस्तया सहाभुंक्त सुमित्रः पृथिवीपतिः । पृथिव्येवानुरागेण जंगमीभावमाप्तया ॥ १२३ ॥
इतश्च प्राणते कल्पे सुरश्रेष्ठसुरोऽपि सः । सुखसागरनिर्मग्नो निजमायुरपूरयत् ॥ १२४ ॥
च्युत्वा श्रावणराकायां श्रवणस्थे निशाकरे । पद्मावतीमहादेव्याः कुक्षाववततार सः ॥ १२५ ॥
चतुर्दश महास्वप्नांस्तीर्थकृज्जन्मसूचकान् । सुखसुप्ता निशाशेषे तदा देवी ददर्श सा ॥ १२६ ॥

---

१ हंसानामिव । २ सूर्यः । ३ ज्ञेयवस्तूनि । ४ चन्द्ररेखया । ५ जगमत्वं आप्तया ।

ज्येष्ठस्य कृष्णाष्टम्यां भे श्रवणे कूर्मलांछनम् । तमालश्यामलच्छायं समयेऽसूत सा सुतम् ॥ १२७ ॥
विहिते दिक्कुमारीभिः सूतिकर्मणि भक्तितः । अर्हन् स विंशतितमो निन्ये मेरौ बिडौजसा ॥ १२८ ॥
शक्रोत्संगनिषण्णस्य त्रिषष्ट्येन्द्रैर्जगद्गुरोः । जन्माभिषेको विदधे पावनैस्तीर्थवारिभिः ॥ १२९ ॥
ईशानांकनिषण्णस्य शक्रोऽपि जगदीशितुः । स्नात्रपूजादिकं कृत्वा स्तोतुमित्युपचक्रमे ॥ १३० ॥
अद्यावसर्पिणीकालसरोवरसरोरुह[1] । दिष्ट्या प्राप्तोऽसि भगवन्नस्माभिर्भ्रमरैश्चिरात् ॥ १३१ ॥
अजायत तव स्तोत्राद्ध्यानात् पूजादिकादपि । वाङ्मनोवपुषां श्रेयः फलमद्यैव देव मे ॥ १३२ ॥
यथा यथा नाथ भक्तिर्गुरुर्भवति मे त्वयि । लघूभवंति कर्माणि प्राक्तनानि तथा तथा ॥ १३३ ॥
स्वामिन्नविरतानां नः स्याज्जन्मैतन्निरर्थकम् । यदि त्वद्दर्शनं न स्यादिदं पुण्यनिबंधनम् ॥ १३४ ॥
तवांगस्पर्शनस्तोत्रनिर्माल्याघ्राणदर्शनैः । गुणगीताकर्णनैश्च कृतार्थानीन्द्रियाणि नः ॥ १३५ ॥
मेरुमौलिरयं भाति नीलरत्नत्विषा त्वया । प्रावृषेण्यांबुदेनेव[2] नयनानन्ददायिना ॥ १३६ ॥
स्थितो भरतवर्षेऽपि सर्वगः[3] प्रतिभासि नः । यत्र तत्र स्थितानां यद्भवस्यार्तिच्छिदे स्मृतः ॥ १३७ ॥
अस्तु च्यवनकालेऽपि त्वत्पादस्मरणं मम । यथा प्राग्जन्मसंस्कारात्तदेव स्याद्भवान्तरे ॥ १३८ ॥
एवं तं विंशमर्हन्तं स्तुत्वादाय च वज्रभृत् । नीत्वा पद्मावतीदेवीपार्श्वेऽमुञ्चद्यथास्थिति ॥ १३९ ॥

---

१ अवसर्पिणीकाल एव सरोवरस्तस्मिन् कमलसमान । २ प्रावृषि वर्षाकाले भवः प्रावृषेण्यः स चासौ मेघश्च तेन । ३ सर्वत्र स्थितः ।

चक्रे जन्मोत्सवं सूनोः सुमित्रोऽपि नृपः प्रगे । कारामोक्षैरर्थदानाद्यैश्च लोकंपृणीभवन् ॥ १४० ॥
अस्मिन् गर्भस्थिते माता मुनिवत्सुव्रताभवत् । मुनिसुव्रत इत्याख्यां तेनास्य विदधे पिता ॥ १४१ ॥
अज्ञाननाटितं बाह्यक्रीडया नाटयञ्जने । ज्ञानत्रयपवित्रात्मा क्रमेण ववृधे प्रभुः ॥ १४२ ॥
संप्राप्तयौवनः स्वामी विंशधन्वसमुन्नतिः । प्रभावतीप्रभृतिका राजपुत्रीरुपायत ॥ १४३ ॥
मुनिसुव्रतनाथस्य सुव्रतो नाम नन्दनः । जज्ञे प्रभावतीदेव्यां प्राच्यामिव निशाकरः॥ १४४ ॥
अर्धाष्टमेषु वर्षाणां सहस्रेषु गतेष्वथ । पित्राध्यारोपितं राज्यभारं प्रभुरुपाददे ॥ १४५ ॥
क्ष्मां पालयन् पंचदशाब्दसहस्रीमलंघयत् । प्रक्षीणं भोगकर्मेति प्रभुर्ज्ञानाद्विवेद च ॥ १४६ ॥
तीर्थं प्रवर्तय स्वामिन्निति लौकान्तिकामरैः । विज्ञप्तो वार्षिकं दानं ददौ च परमेश्वरः ॥१४७ ॥
छत्रव्रतैकद्रविणं न्यायांभोजमधुव्रतम् । राज्ये न्यवेशयत् पुत्रं सुव्रतं मुनिसुव्रतः ॥ १४८ ॥
कृतनिष्क्रमणो देवैः सुव्रतेन च भूभुजा । सहस्रवाह्यां शिबिकां सोऽध्यष्ठादपराजिताम् ॥ १४९ ॥
माकन्दैर्नव्यमुकुलप्रोद्भेदाद्दन्तुरैरिव । उच्चलत्पल्लवतया जिह्वालैरिव शोभितम् ॥ १५० ॥
इतस्ततो मरुत्कीर्णजीर्णपर्णतया मुहुः । मर्मरैराह्वयदिवागामिनीं मधुसंपदम् ॥ १५१ ॥
दुर्वारां सिन्दुवाराणामीक्षितुं कुसुमश्रियम् । असहैरिव विमदीभूय कुन्दैर्निषेवितम् ॥ १५२ ॥

---

१ लोकं जगत्प्रीणाति प्रीणयतीति लोकंपृणस्तत्च्विः । २ नवीनमुकुलोद्गमात्सदन्तैरिव माकन्दैराम्रवृक्षैः शोभितम् । ३ उच्च्वलपल्लवतया स जिह्वैरिवाम्रैः शोभितम् । ४ सिन्दुवारो वृक्षविशेषः लोके 'नगोड' इति प्रसिद्धः । मदरहितैर्भूत्वा ।

उद्यद्दमनकामोदप्रमोदि[1] शिशिरर्द्धिकम्[2] । ययौ नीलगुहां नामोद्यानं त्रिजगदीश्वरः ॥ १५३ ॥

चतुर्भिः कलापकम् ॥

फाल्गुनश्वेतद्वादश्यां श्रवणे पश्चिमेऽहनि । समं नृपसहस्रेण षष्ठेन प्राव्रजत् प्रभुः ॥ १५४ ॥

द्वितीयेऽह्नि राजगृहे ब्रह्मदत्तनृपौकसि । अपारयत् पायसेन भगवान्मुनिसुव्रतः ॥ १५५ ॥

अमरैर्वसुधारादिपंचकं तत्र निर्ममे । रत्नपीठं स्वामिपादस्थाने ब्रह्मनृपेण तु ॥ १५६ ॥

निःसंगो निर्ममः सर्वान् सहमानः परीषहान् । ततो मासानेकादश छद्मस्थो व्यहरत्प्रभुः ॥ १५७ ॥

विहरन्नाययौ नीलगुहोद्यानं पुनः प्रभुः । तस्थौ च चंपकतरोरधस्तात्प्रतिमाधरः ॥ १५८ ॥

फाल्गुनकृष्णद्वादश्यां श्रवणस्थे निशाकरे । घातिकर्मक्षयात्तत्रोत्पेदे केवलमीशितुः ॥ १५९ ॥

शक्रादिभिश्च समवसरणं विदधेऽमरैः । चत्वारिंशेष्वासशतद्वयोच्चाशोकपादपम्[3] ॥ १६० ॥

तत्र प्रविश्य चैत्यद्रोः स्वामी कृत्वा प्रदक्षिणाम् । नमस्तीर्थायेत्युक्त्वा प्राक्सिंहासन उपाविशत् १६१

व्यन्तरास्तत्प्रतिछंदानन्यदिक्ष्वपि चक्रिरे । तस्थिवांश्च यथास्थानं श्रीमान् संघश्चतुर्विधः ॥ १६२ ॥

स्वामिनं समवसृतं तदा ज्ञात्वा च सुव्रतः । एत्य नत्वा स्वामिपादाननुशक्रमुपाविशत् ॥ १६३ ॥

भूयोऽपि स्वामिनं नत्वा ललाटघटिताञ्जली । भक्तिगर्भां स्तुतिमिमां चक्राते शक्रसुव्रतौ ॥ १६४ ॥

त्वत्पाददर्शनस्यैव प्रभावोऽयं जगत्पते । यत्त्वद्गुणान् वर्णयितुं मादृशोऽपि प्रगल्भते ॥ १६५ ॥

---

१ विकसद्दमनकपुष्पाणां गंधेनानन्ददायि । २ शिशिरस्य समृद्धिर्यस्मिंस्तत् । ३ इष्वासो धनुः ।

विनीमिह ॥ १६६ ॥

देशनासमये पुण्यां तव गां परमेश्वर । वंदामहे श्रुतस्कंध[1]वत्सप्रसविनीमिह ॥ १६७॥
त्वद्गुणग्रहणात् सद्यो भवंति गुणिनो जनाः । स्निग्धद्रव्यस्य योगाद्धि स्निग्धीभवति भाजनम् ॥ १६८ ॥
ये हि त्यक्तान्यकर्माणः शृण्वन्ति तव देशनाम् । त्यक्तप्राक्तनकर्माणस्ते भवंति क्षणादपि ॥ १६९ ॥
त्वन्नामरक्षामंत्रेण संवर्मितमिदं जगत् । अंहः[2]पिशाचैर्नैवातः परं देव ग्रसिष्यते ॥ १७० ॥
कस्यापि न भयं नाथ त्वयि विश्वाभयप्रदे । स्वस्थानयायिनो मे तु त्वद्वियोगभवं भयम् ॥ १७१ ॥
अपि शाश्वतवैरान्धा बहिरंगा न केवलम् । शाम्यंति तेऽन्तिके स्वामिन्नन्तरंगा[3] अपि द्विषः ॥ १७२ ॥
ऐहिकामुष्मिका[4]भीष्टदानकामगवी प्रभो । त्वन्नामस्मृतिरेवास्तु यत्र तत्र स्थितस्य मे ॥ १७३ ॥
शक्रसुव्रतयोरेवं स्तुत्वा विरतयोः सतोः । स्वामी विश्वावबोधाय विदधे धर्मदेशनाम् ॥ १७४ ॥
क्षारोदा[5]दिव संसारादसारात् सारमुत्तमम् । उपाददीत[6] सद्रत्नमिव धर्मं महामतिः ॥ १७५ ॥
संयमः सूनृतं शौचं ब्रह्माकिंचनता[7] तपः । क्षांतिर्मार्दवमृजुता मुक्तिश्च दशधा स तु ॥ १७६ ॥
निरीहो[8] निजदेहेऽपि स्वस्मिन्नपि हि निर्ममः । समाशयो[9] नमस्कुर्वत्यपकुर्वति चानिशम् ॥ १७७ ॥
नितान्तमीश्वरः सोढुमुपसर्गपरीषहान् । मैत्र्यादिभिर्भावनाभिर्नित्यं भावितमानसः ॥ १७८ ॥
क्षमावान् विनयी दान्तः श्रद्धालुर्गुरुशासने । जात्यादिगुणसंपन्नो यतिधर्माय कल्पते ॥ १७९ ॥

---

१ श्रुतस्कंध एव वत्सस्तज्जनयित्रीं गाम् वाणीं च । २ पापान्येव पिशाचास्तैः । ३ क्रोधादयोऽन्तरंगाः शत्रवः । ४ इहलोकपरलोकयोरिच्छितदाने कामधेनुसमाना । ५ क्षारसमुद्रात् । ६ गृह्णीयात् । ७ परिग्रहराहित्यम् । ८ इच्छारहितः । ९ समचित्तः ।

सम्यक्त्वमूलानि पंचाणुव्रतानि गुणास्त्रयः । शिक्षापदानि चत्वारि धर्मोऽयं गृहमेधिनाम् ॥ १७९ ॥
न्यायसंपन्नविभवः शिष्टाचारप्रशंसकः । कुलशीलसमैः सार्धं कृतोद्वाहोऽन्यगोत्रजैः ॥ १८० ॥
पापभीरुः प्रसिद्धं च देशाचारं समाचरन् । अवर्णवादी न क्वापि राजादिषु विशेषतः ॥ १८१ ॥
अनतिव्यक्तगुप्ते च स्थाने सुप्रातिवेश्मिके । अनेकनिर्गमद्वारविवर्जितनिकेतनः ॥ १८२ ॥
कृतसंगः सदाचारैर्मातापित्रोश्च पूजकः । त्यजन्नुपप्लुतं स्थानमप्रवृत्तश्च गर्हिते ॥ १८३ ॥
व्ययमायोचितं कुर्वन् वेषं वित्तानुसारतः । अष्टभिर्धीगुणैर्युक्तः शृण्वानो धर्ममन्वहम् ॥ १८४ ॥
अजीर्णे भोजनत्यागी काले भोक्ता च सात्म्यतः । अन्योऽन्याप्रतिबन्धेन त्रिवर्गमपि साधयन् ॥१८५॥
यथावदतिथौ साधौ दीने च प्रतिपत्तिकृत् । सदानभिनिविष्टश्च पक्षपाती गुणेषु च ॥ १८६ ॥
अदेशाकालयोश्चर्यां त्यजञ्जानन् बलाबलम् । वृत्तस्थज्ञानवृद्धानां पूजकः पोष्यपोषकः ॥ १८७ ॥
दीर्घदर्शी विशेषज्ञः कृतज्ञो लोकवल्लभः । सलज्जः सदयः सौम्यः परोपकृतिकर्मठः ॥ १८८ ॥
अन्तरंगारिषड्वर्गपरिहारपरायणः । वशीकृतेन्द्रियग्रामो गृहिधर्माय कल्पते ॥ १८९ ॥
संसारेऽस्मिन्मनुष्येण चैतन्यफलमिच्छता । सेव्यः श्रावकधर्मोऽपि यतिधर्मात्क्रमेण तु ॥ १९० ॥
श्रुत्वामुं देशनां भर्तुर्बहवः प्राव्रजञ्जनाः । श्रावकप्रभूवन्नेके च न मोघा देशनार्हताम् ॥ १९१ ॥
इन्द्रादयो गणधराः स्वामिनोऽष्टादशाभवन् । देशनाविरते नाथे चकारेन्द्रोऽपि देशनाम् ॥ १९२ ॥

---

१ सामायिकदेशावकाशिकपौषधातिथिसंविभागरूपाणि । २ व्रतानि गृहमेधिनाम् इति पाठांतरम् । ३ प्रतिपत्तिर्दानं गौरवं वा ।
४ अनाग्रही । ५ श्राद्धधर्मवन्तोऽभवन् । ६ विफला ।

देशनाविरते तत्राप्यभिवंद्य जिनेश्वरम् । स्वं स्वं स्थानं ययुः सर्वे वज्रभृत्सुव्रतादयः ॥ १९३ ॥
तत्तीर्थजन्मा वरुणयक्षस्त्र्यक्ष[1]श्चतुर्मुखः । श्वेतो जटी वृषरथश्चतुर्भिर्दक्षिणैर्भुजैः ॥ १९४ ॥
मातुलिंगगदाबाणशक्तिभृद्भिस्तथापरैः । नकुलाक्षधनुःपर्शुधारिभिः परिशोभितः ॥ १९५ ॥
तथोत्पन्ना नरदत्ता गौरी[2] भद्रासनस्थिता । भांती दक्षिणबाहुभ्यां वरदेनाक्षसूत्रिणा ॥ १९६ ॥
समातुलिंगशूलाभ्यां वामदोर्भ्यां च शोभिता । सुव्रतस्वामिनोऽभूतामुभे शासनदेवते ॥ १९७ ॥
ताभ्यामधिष्ठिताभ्यर्णः पृथिवीं विहरन् प्रभुः । अन्यदा समवासार्षीद्भृगुकच्छे महापुरे ॥ १९८ ॥
तत्र राजा जितशत्रुर्जात्यमारुह्य वाजिनम् । प्रभुं वन्दितुमभ्यागादथ शुश्राव देशनाम् ॥ १९९ ॥
रोमाञ्चितांगो निस्पंद[3] उत्कर्णः स्वामिदेशनाम् । अश्रौषीत्तुरगः सोऽपि जितशत्रुमहीपतेः ॥ २०० ॥
पप्रच्छ समये चैवं गणभृत्परमेश्वरम् । स्वामिन् प्रपेदे समवसरणे धर्ममत्र कः ॥ २०१ ॥
स्वाम्यप्यूचे धर्ममत्र न कोऽपि प्रत्यपद्यत । जितशत्रुनरेन्द्रस्य विनैकं जात्यवाजिनम् ॥ २०२ ॥
सविस्मयो जितशत्रुरप्यपृच्छज्जगद्गुरुम् । कोऽयमश्वो विश्वनाथ यो धर्मं प्रत्यपद्यत ॥ २०३ ॥
आचख्यौ भगवानेवं पद्मिनीषंडपत्तने । पुरासीच्छ्रावकश्रेष्ठी जिनधर्मोऽभिधानतः ॥ २०४ ॥
मित्रं सागरदत्तोऽस्य समस्तनगराग्रणीः । भद्रकत्वात् समं तेन ययौ चैत्येषु सोऽन्वहम् ॥ २०५ ॥
साधुभ्यः सोऽन्यदाश्रौषीद्योऽर्हद्बिंबानि कारयेत् । संसारमथनं सोऽन्यभवे धर्ममवाप्नुयात् ॥ २०६ ॥
श्रुत्वा सागरदत्तस्तत् सौवर्णं बिंबमार्हतम् । कारयित्वा महर्द्ध्या साधुभिः प्रत्यतिष्ठपत् ॥ २०७ ॥

---

१ त्रिनेत्रः । २ गौरांगी । ३ निश्चलः ।

नगरस्य बहिस्तस्य तेनासीत् कारितं पुरा । शिवायतनमुत्तुंगं सोऽगात्तत्रोत्तरायणे ॥ २०८ ॥
तत्र प्राक्संचितस्त्यानसर्पिस्कुंभाः शिवार्चकैः । क्षुमारे भिरे सर्पिः केवलाय कृतत्वरैः ॥ २०९ ॥
अधस्तेषां घटानां च पिंडीभूयोपदेहिकाः । लग्ना बभूवुर्भूयस्यो निपेतुस्ताश्च वर्त्मनि ॥ २१० ॥
संचरद्भिः पूजकैश्च चूर्यमाणाः समीक्ष्य ताः । सागरः कृपया वस्त्रेणापनेतुं प्रचक्रमे ॥ २११ ॥
किं श्वेतभिक्षुभिररे शिक्षितोऽसीति जल्पता । ततस्ताः पूजकेनैकेनांघ्रिघातेन चूर्णिताः ॥ २१२ ॥
श्रेष्ठी सागरदत्तोऽपि विलक्षीभूय तत्क्षणम् । तदा तदाचार्यमुखं तच्छिक्षार्थमुदैक्षत ॥ २१३ ॥
उपेक्षमाणे तत्पापं तस्मिन्नपि हि सागरः । एवं विचिन्तयामास धिगहो निर्घृणा अमी ॥ २१४ ॥
गुरुबुद्ध्या कथममी पूज्यंते दारुणाशयाः । आत्मानं यजमानं च दुर्गतौ पातयंति ये ॥ २१५ ॥
विचिन्त्येत्युपरोधाच्च कृत्वा तत्कर्म सागरः । अनासादितसम्यक्त्वो दानशीलस्वभावतः ॥ २१६ ॥
महारंभार्जितधनत्राणनिष्ठो विपद्य सः । जात्यस्तवाश्वोऽयमभूत्तद्बोधायाहमागमम् ॥ २१७ ॥
प्राग्जन्मकारितजिनप्रतिमायाः प्रभावतः । धर्मोपदेशं नः श्रुत्वा संबुद्धोऽयं क्षणादपि ॥ २१८ ॥
एवं भगवताख्याते स्तूयमानो जनैर्मुहुः । स्वैरचारी कृतः सोऽश्वः क्षमयित्वा क्षमाभुजा ॥ २१९ ॥
ततः प्रभृति तल्लोके प्रख्यातमतिपावनम् । तीर्थमश्वावबोधाख्यं भृगुकच्छमभूत्पुरम् ॥ २२० ॥
देशनां पारयित्वा तु भुवनोपचिकीः प्रभुः । विहरन् समवासार्षीदन्यदा हस्तिनापुरे ॥ २२१ ॥

---

१ स्त्यानं शीनम् घनीभूतमित्यर्थः । २ सर्पिःकवलाय घृतभक्षणायेत्यर्थः । ३ उपदेहिकाः कीटविशेषाः उधेही इति लोके प्रसिद्धः ४ निर्दयाः । ५ आग्रहात् पूजकाचार्यस्येति शेषः । ६ पूजादिकं कार्यम् । ७ महारंभेण लब्धस्य धनस्य रक्षणे निष्ठा यस्य सः ८ जगदुपकारं कर्तुमिच्छुः ।

तस्मिंश्च नगरे नाम्ना जितशत्रुरभून्नृपः । श्रेष्ठी वणिक्सहस्रेशः[1] कार्तिकः श्रावकोऽपि च ॥ २२२ ॥
तस्मिन् कषायवसनः पुरे भागवतव्रतः । मासं मासं चोपवासी पौरैर्भृशमपूज्यत ॥ २२३ ॥
पारणे पारणे पौरैः सोऽतिभक्त्या न्यमंत्र्यत । न सम्यक्त्वैकवसुना[2] श्रेष्ठिना कार्तिकेन तु ॥ २२४ ॥
भूतवच्छ्रेष्ठिनस्तस्य छिद्रान्वेषणतत्परः । सोऽन्यदा पारणे राज्ञा न्यमंत्रि जितशत्रुणा ॥ २२५ ॥
स परिव्राजकोऽप्यूचे यदि मे परिवेषणम् । करोति कार्तिको राजन् भुंजे तव गृहे तदा ॥ २२६ ॥
ओमेत्युक्त्वा नरेन्द्रोऽपि गत्वा तद्वेश्म कार्तिकम्[3] । ययाचे भगवतोऽस्य परिवेष्यं त्वयानघ ॥ २२७ ॥
स्वामिन्न युज्यतेऽस्माकमिदं पाखंडधारिषु । तवाज्ञया कार्यमेतदपीति प्रत्यपादि[4] सः ॥ २२८ ॥
पुरापि चेत्प्राव्रजिष्यं नाकरिष्यमिदं तदा । एवं विचिन्तयन् खेदाच्छ्रेष्ठी राजकुलं ययौ ॥ २२९ ॥
परिवेषयतस्तस्य परिव्राट् कार्तिकस्य सः । निकारं[5] दर्शयामास तर्जनीदर्शनैर्मुहुः ॥ २३० ॥
परिवेष्यानिच्छयापि श्रेष्ठी निर्वेदभावितः । समं वणिक्सहस्रेण स्वाम्यंते प्राव्रजत्तदा ॥ २३१ ॥
द्वादशांगधरः कृत्वा द्वादशाब्दीं परं व्रतम् । मृत्वा सौधर्मकल्पेन्द्रः कार्तिकः समजायत ॥ २३२ ॥
परिव्राडपि मृत्वा स आभियोग्येन कर्मणा । तस्यैव वाहनमभूदैरावण इति द्विपः ॥ २३३ ॥
तं शक्रं प्रेक्ष्य सामर्षः स प्रारेभे पलायितुम् । प्रसह्य धृत्वा शक्रस्तमारुरोह प्रभुर्हि सः ॥ २३४ ॥
द्वे शीर्षे स चकाराथ द्विमूर्तिर्वासवोऽप्यभूत् । एवं स यावच्छीर्षोऽभूत्तावद्रूपान् वासवोऽपि हि ॥ २३५ ॥

---

१ सहस्रवणिजां स्वामी । २ सम्यक्त्वमेवैकं धनं यस्य तेन । ३ कार्तिकस्येदं कार्तिकमिदमर्थेऽण् । ४ अंगीचकार । ५ तिरस्कारम् ।

भूयः पलायमानः स वज्रेणाहत्य वज्रिणा । प्राग्जन्ममत्सरी मंक्षु व्यधीयत वशंवदः ॥ २३६ ॥
आकेवलाद्विहरतः सुव्रतस्वामिनोऽपि हि । एकादशमासन्यूनार्धाष्टमाब्दसहस्रयगात् ॥ २३७ ॥
प्रभोस्त्रिंशत्सहस्राणि श्रमणानां महात्मनाम् । सहस्राणि तु पंचाशदार्यिकाणां तपोजुषाम् ॥ २३८ ॥
चतुर्दशपूर्वभृतां सहस्रार्धं महाधियाम् । अवधिज्ञानयुक्तानामष्टादश शतानि तु ॥ २३९ ॥
शतानि पंचदश तु मनःपर्ययशालिनाम् । केवलज्ञानयुक्तानामष्टादश शतानि तु ॥ २४० ॥
जातवैक्रियलब्धीनां सहस्रद्वितयं पुनः । उत्पन्नवादलब्धीनां सहस्रं द्वे शते तथा ॥ २४१ ॥
श्रावकाणां लक्षमेकं द्वासप्ततिसहस्रयपि । श्राविकाणां त्रिलक्षी च सार्धा विहरतोऽभवत् ॥ २४२ ॥
निर्वाणकाले संमेतं ययौ श्रीमुनिसुव्रतः । समं मुनिसहस्रेणानशनं प्रत्यपादि च ॥ २४३ ॥
मासस्यांते ज्येष्ठकृष्णनवम्यां श्रवणे च भे । समं तैर्मुनिभिः स्वामी ययौ पदमनश्वरम् ॥ २४४ ॥
सार्धाः सप्ताब्दसहस्राः कौमारव्रतयोः पृथक् । राज्ये पंचदश त्रिंशदित्यायुः सुव्रतप्रभोः[3] ॥ २४५ ॥
श्रीमल्लिस्वामिनिर्वाणान्मुनिसुव्रतनिर्वृतिः । चतुःपंचाशति समालक्षेष्वतिगतेष्वभूत् ॥ २४६ ॥

मुनिसुव्रतस्य मुनिभिः सहैव तैः पदमव्ययं गतवतः सुरेश्वराः ।
समुपेत्य मोक्षमहिमानमुच्चकैर्विधिवद्व्यधुः सविबुधाः ससंभ्रमाः ॥ २४७ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये षष्ठे पर्वणि मुनिसुव्रतस्वामिचरितवर्णनो नाम सप्तमः सर्गः ॥

---

१ प्राग्जन्मद्वेषी। २शीघ्रम् ।३कौमारे सार्धसप्त सहस्राणि वर्षाणि, तावन्ति व्रते पंचदश सहस्राणि च राज्ये एवं त्रिंशतसहस्राणि जातानि ।

क्रमेण ववृधाते तावुभावपि सहोदरौ । निमित्तीकृत्य चाचार्यं सर्वा जगृहतुः कलाः ॥ १२ ॥
स जिगीषुरिति ज्ञात्वा पद्मोत्तरमहीभुजा । यौवराज्ये महापद्मकुमारो निदधे सुधीः ॥ १३ ॥
इतश्चोज्जयिनीपुर्यां श्रीवर्मा नाम भूपतिः । बभूव तदमात्यस्तु नमुचिर्नाम विश्रुतः ॥ १४ ॥
विहरन्नन्यदा तस्यां नगर्यां समवासरत् । आचार्यः सुव्रतो नाम मुनिसुव्रतदीक्षितः ॥ १५ ॥
तद्वन्दनाय सर्वर्द्ध्या गच्छतो नगराञ्जनान् । प्रासादशिखरारूढोऽपश्यच्छ्रीवर्मभूपतिः ॥ १६ ॥
अमी अकालयात्रायां सर्वर्द्ध्या कुत्र नागराः । गच्छंतीति स पप्रच्छ स्वच्छधीर्नमुचिं नृपः ॥ १७ ॥
सोऽप्याख्यद्बहिरुद्याने श्रमणाः केचिदागताः । तद्वन्दनाय तद्भक्त्या एते गच्छंति सत्वराः ॥ १८ ॥
यामो वयमपीत्युक्ते राज्ञा नमुचिरब्रवीत् । यदि वो धर्मशुश्रूषा धर्मं वक्ष्येऽहमेव तत् ॥ १९ ॥
तत्रावश्यं गमिष्यामीत्युक्ते भूयोऽपि भूभुजा । मंत्र्यूचे स्वामिना तर्हि स्थेयं मध्यस्थवृत्तिना ॥ २० ॥
सर्वान्निरुत्तरीकृत्य वादे जेष्यामि तानहम् । पाखंडिनां हि पांडित्यं प्राकृतेष्वेव जृंभते ॥ २१ ॥
इत्युक्ते नृपतिर्मंत्री राजलोकोऽखिलोऽपि च । प्रययुः सुव्रताचार्यसन्निधौ विविधाशयाः ॥ २२ ॥
पप्रच्छुस्तत्र ते धर्मं मुनिभ्यः स्वैरवादिनः । मौनेन मुनयोऽप्यस्थुस्तेषामुच्चावचोक्तिभिः ॥ २३ ॥
ततश्च नमुचिः क्रुद्धो निंदन् शासनमार्हतम् । सूरिं प्रतिजगादैवं किमहो वेत्सि गौ[३]रवम् ॥ २४ ॥
इत्यूचुः सुव्रताचार्या अनार्यमपि मंत्रिणम् । जिह्वा कंडूयते ते चेत् किमपि ब्रूमहे तदा ॥ २५ ॥

---

१ जेतुमिच्छुर्जयनशील इति यावत् । २ पामरजनेषु साधारणजनेषु वा । ३ अधिकम् ।

इतश्च प्रांतवास्तव्यो नाम्ना सिंहबलो नृपः । दुर्गस्थ इत्यतिबली नक्रःस्थ इव राक्षसः ॥ ४० ॥
अवस्कंदमवस्कंदं महापद्मस्य मंडलम् । प्राविशत् स्वं पुनर्दुर्गं न धर्तुं कोऽपि तं क्षमः ॥ ४१ ॥
रुषितोऽथ महापद्मोऽवोचन्नमुचिमंत्रिणम् । कच्चित्कंचिदिहोपायं वेत्सि सिंहबलग्रहे ॥ ४२ ॥
सोऽप्यूचे देव वेद्मीति वचो वच्मि कथं ह्यहम् । गेहेनर्दीत्यपवादः सुलभो गर्जतां गृहे ॥ ४३ ॥
कृत्वोपायं फलेनैव स्वामिनो दर्शयाम्यहम् । उपायं वचसा वक्तुं कातरा अपि पंडिताः ॥ ४४ ॥
इत्युक्त्वा हृष्टचित्तेन महापद्मेन तत्क्षणम् । स आदिष्टो ययौ तस्य दुर्गं वायुरिवास्खलत् ॥ ४५ ॥
तीक्ष्णोपायः स तद्दुर्गं भंक्त्वा सिंहबलं च तम् । मृगं सिंह इवादाय महापद्ममुपाययौ ॥ ४६ ॥
वरं वृणीष्वेति महापद्मेनाभिहितो मुदा । ऊचे नमुचिमन्त्र्येवमादास्ये समये वरम् ॥ ४७ ॥
एवं च प्रतिपन्नार्थो यौवराज्यमपालयत् । महापद्मो नमुचिना कृतसाचिव्यमुच्चकैः ॥ ४८ ॥
ज्वालयाथ महापद्ममात्रार्हत्प्रतिमारथः । कैर्णीरथ इवाकारि भवसागरतारणे ॥ ४९ ॥
मिथ्यादृष्ट्या च सपत्नीमात्रा लक्ष्म्यभिधानया । अकार्यत ब्रह्मरथस्तत्प्रतीपविधित्सया ॥ ५० ॥
अयं ब्रह्मरथः पूर्वं परिभ्रमतु पत्तने । पश्चादर्हद्रथ इति लक्ष्म्यायाच्यत भूपतिः ॥ ५१ ॥
ऊचे ज्वालापि राजानं न प्राग्जैनरथो यदि । यात्रां करिष्यति पुरे तदाह्यनशनं मम ॥ ५२ ॥
ततश्च संशयापन्नो रथयोरुभयोरपि । यात्रां राजारुणत् का हि मध्यस्थस्यापरा गतिः ॥ ५३ ॥
ततश्च मातृदुःखेन महापद्मोऽतिपीडितः । निशि सुप्तेषु लोकेषु निर्ययौ हस्तिनापुरात् ॥ ५४ ॥

---

१ गृहे गर्जनशीलः । २ प्रवहणं । ३ प्रतीपं प्रतिकूलम् ।

प्रतीकारैः प्रतीकाराक्षमैर्मुक्तो विदूरतः । ताः पौरनारीर्निकषा झगित्येव स आययौ ॥ ७० ॥

॥ युग्मम् ॥

पलायितुं न शेकुस्तास्तस्थुस्तत्रैव साध्वसात् । नक्राक्रांतमरालीवत्तारतारं च चुक्रुशुः ॥ ७१ ॥

क्रोशन्तीः प्रेक्ष्य ताः सानुक्रोशं पद्मोऽभिधाव्य तम् । इत्थं ततर्ज रे वैयाल पश्यावाग्मदङ्कमद ॥ ७२ ॥

कुमाराभिमुखं रोषाद्ववले व्यालकुंजरः । कंपयन् काश्यपीं पादन्यासैः शुषिरिणीमिव ॥ ७३ ॥

अस्मद्रक्षाकृते कोऽपि महात्मात्मानमक्षिपत् । यमास्यस्येव करिणः पुर इत्यवदन् स्त्रियः ॥ ७४ ॥

क्षणेनाभ्येयुषोऽभ्यर्णं तस्य व्यालस्य सन्मुखम् । ऊर्ध्वं वासोऽक्षिपत्पद्मश्छद्मोऽपि क्वापि शोभते ॥७५॥

कुमारबुद्ध्या तद्वासो मुहुर्विव्याध सिन्धुरः । आध्यायः क्रोध एकोऽपि किं पुनर्मदमूर्छितः ॥ ७६ ॥

तदा च तुमुलेनोच्चैरमिलन्नागरो जनः । समं सामन्तसेनेशैर्महासेनश्च भूपतिः ॥ ७७ ॥

महासेनोऽवदत् पद्मं दोष्मन्नपसर द्रुतम् । अकालमृत्युनानेन करिणा रोषितेन किम् ॥ ७८ ॥

पद्मोऽपि निजगादैवं युक्तमुक्तं त्वया नृप । परं क्रीडाकरं तन्मे यदारब्धस्य मोक्षणम् ॥ ७९ ॥

वशीकृतमिमं व्यालमव्यालमिव जन्मतः । बाध्यमानं मया पश्य मा भूः सौजन्यकातरः ॥ ८० ॥

एवमुक्त्वा कुमारेण मुष्टिवज्रेण ताडितः । प्रच्छादनपटीवेधन्यग्मुखः स महाकरी ॥ ८१ ॥

ग्रहणाय कुमारस्योत्तस्थौ यावदिभः स तु । स तावद्विद्युदुत्क्षिप्तकरणेनारुरोह तम् ॥ ८२ ॥

---

१ भयात् । २ सदयं यथा स्यात्तथा । ३ हे दुष्टगज । ४ पृथ्वी । ५ छिद्रसहितामिव । ६ यममुखस्य । ७ आगच्छतः । ८ मत्तमिमं गजं जन्मतः शांतमिव । ९ आच्छादनवस्त्रस्य वेधे नम्रमुखः । १० विद्युद्वत्प्लुतगत्या ।

आसनैश्च नवनवैः स मंडूकासनादिभिः । अग्रतः पार्श्वतश्चापि विचरंस्तमखेदयत् ॥ ८३ ॥
कुंभदेशे चपेटाभिः कंठे चांगुष्ठपीडनैः । पादन्यासेन पृष्ठे च स पद्मेनाकुलीकृतः ॥ ८४ ॥
सविस्मयैर्वीक्ष्यमाणः पौरैः साध्विति वादिभिः । नृपेण बंधुबुद्ध्या च वर्ण्यमानपराक्रमः ॥ ८५ ॥
भ्रमयामास तन्नागमारोहकपुरन्दरः[1] । कुमारः कारयन् क्रीडां स्वैरं कलभलीलया ॥ ८६ ॥
आरोहकायापरस्मै तं समर्प्य च सिन्धुरम् । कक्षां[2] गृहीत्वावारोहदपरायां[3] पदं दधत् ॥ ८७ ॥
तं च विक्रमरूपाभ्यां प्रधानकुलभूरिति । राजा वितर्कयामास निन्ये च निजवेश्मनि ॥ ८८ ॥
निजं कन्याशतं तेन भूपतिः पर्यणाययत् । गृहागतो वरस्तादृक् पुण्यैरेव ह्यवाप्यते ॥ ८९ ॥
ताभिर्भोगान् कुमारस्य भुञ्जानस्याप्यहर्निशम् । स्मरणं मदनावल्या नित्यशल्यमिवाभवत् ॥ ९० ॥
सोऽन्यदा निशि पर्यंके सुप्तो हंस इवांबुजे । विद्याधर्या वेगवत्यापजह्रे वायुवेगया ॥ ९१ ॥
निद्राछेदे च किं क्षुद्रे हरसे मामिति ब्रुवन् । मुष्टिमुत्पाटयामास कुमारो वज्रगोलवत् ॥ ९२ ॥
साप्यूचे मा कुपः स्थामशालिन्[4] अवहितः शृणु । अस्ति सूरोदयं नाम पुरं वैताढ्यपर्वते ॥ ९३ ॥
तत्रास्तीन्द्रधनुर्नाम विद्याधरनरेश्वरः । श्रीकांता नाम तद्भार्या जयचन्द्रा तयोः सुता ॥ ९४ ॥
अनुरूपवराप्राप्त्या जयचन्द्रा च साभवत् । पुरुषद्वेषिणी जीवन्मृता हीनवराः स्त्रियः ॥ ९५ ॥
पटेष्वालेख्य रूपाणि भरतक्षेत्रभूभुजाम् । दर्शितानि मया तस्यै न किंचिदरुचत्परम् ॥ ९६ ॥

---

१ आरोहकेषु हस्तिपकेषु पुरंदर इन्द्रः श्रेष्ठ इति यावत् । २ हस्तिबंधनरज्जुम् । ३ अवातरत् । ४ स्थाम्ना तेजसा शोभमान ।

पटे त्वद्रूपमन्येद्युर्लिखित्वा दर्शितं मया । झाक् तस्या हृदि कामेन कामं च निदधे पदम् ॥ ९७ ॥
पुरुषद्वेषिणी सा प्राग्जीवितद्वेषिणी ततः । बभूव मन्यमाना त्वां दुर्लभं प्राणवल्लभम् ॥ ९८ ॥
पतिर्भवति वा मेऽसौ पद्मः पद्मोत्तरात्मजः । मरणं शरणं वा मे प्रतिज्ञामिति साकरोत् ॥ ९९ ॥
तस्यास्त्वय्यनुरागं तं पित्रोरहमचीकथम् । अनुरूपवरेच्छातस्तत्क्षणान्मोदमानयोः ॥ १०० ॥
अहं वेगवती नाम महाविद्याधरी प्रभो । ताभ्यामस्मि समादिष्टा त्वदानयनहेतवे ॥ १०१ ॥
तवानुरागिणीं चैतामाश्वासयितुमब्रवम् । सुभ्रु स्वस्था भवाद्यैव तत्र यास्यामि नन्वहम् ॥ १०२ ॥
आनेष्यामि महापद्मं तव हृत्पद्मभास्करम् । नो वा वह्निं प्रवेक्ष्यामि क्षामीकुरु मनोरुजम् ॥ १०३ ॥
एवं तामहमाश्वास्य तदाश्वाससुधाकरम् । इहोपेत्य नयामि त्वामुपकार्यसि मा कुपः ॥ १०४ ॥
साथ तं तदनुज्ञाता सूरोदयपुरेऽनयत् । आभियोग्यद्युसद्यानप्रायानल्पेन रंहसा ॥ १०५ ॥
प्रभाते सूरवत्सूरोदयनाथेन पूजितः । जयचंद्रामुपायंस्त स चंद्र इव रोहिणीम् ॥ १०६ ॥
जयचंद्रामातुलजौ गंगाधरमहीधरौ । महाविद्याधरौ विद्यामददोर्मददुर्धरौ ॥ १०७ ॥
तद्विवाहं समाकर्ण्य सद्यश्चुकुपतुस्तराम् । एकत्र्यभिलापो हि महद्वैरस्य कारणम् ॥ १०८ ॥
तौ च सर्वाभिसारेण शूरौ सूरोदये पुरे । समेयतुर्योधयितुं जयचन्द्रापतिं युतौ ॥ १०९ ॥
विद्याधरपरीवारो दुर्वारभुजविक्रमः । नगराभिरगात् पद्मोऽप्यत्युद्धरणकौतुकी ॥ ११० ॥
स कांश्चित्त्रासयन् कांश्चिद्भिन्दन् कांश्चिच्च मारयन् । लीलयायोधयद्वैरिसैन्यान् हरिरिव द्विपान् ॥१११॥

१ अत्यंतम् । २ मनःपीडां गल्पांकुरु । ३ सूर्यवत् ।

विद्याधरपती तौ च गंगाधरमहीधरौ । स्वसैन्यभंगमालोक्य जीवंग्राहं प्रणेशतुः ॥ ११२ ॥

ततश्चोत्पन्नचक्रादिरत्नः पद्मोत्तरात्मजः । षट्खंडभरतक्षेत्रविजयं विदधे बली ॥ ११३ ॥

स्त्रीरत्नेन विना तस्य चक्रिऋद्धिरपूर्यत । इन्दोः सितचतुर्दश्यां पूर्णतेव कलां विना ॥ ११४ ॥

पूर्वदृष्टां स्मरंस्तां च स्त्रीरत्नं मदनावलीम् । तदाश्रमपदं पद्मः क्रीडयेव ययौ पुनः ॥ ११५ ॥

आतिथ्यं तापसाश्चक्रुस्तस्मै तत्र भ्रमन् गतः । जनमेजयराजस्तु ददौ तां मदनावलीम् ॥ ११६ ॥

पूर्णचक्रधरर्द्धिः स प्रययौ हस्तिनापुरम् । ननाम पितरौ प्राग्वन्मुदितौ मुदितोऽधिकम् ॥ ११७ ॥

स्वसूनोश्चरितं तच्चाकर्ण्य कर्णरसायनम् । सोल्लासौ पितरौ तत्राभूतां सिक्ताविव द्रुमौ ॥ ११८ ॥

तदा च सुव्रतो नाम मुनिसुव्रतदीक्षितः । आचार्यो विहरंस्तत्र समेत्य समवासरत् ॥ ११९ ॥

तं गत्वा सपरीवारो राजा पद्मोत्तरोऽनमत् । तद्देशनां च शुश्राव भववैराग्यमातरम् ॥ १२० ॥

संस्थाप्य तनयं राज्ये दीक्षायै यावदेम्यहम्[3] । स्वामिंस्तावदिह स्थेयमित्याचार्यं नृपोऽवदत् ॥ १२१ ॥

न प्रमादो विधातव्य इत्युक्तः सूरिणा तु सः । तत्पादानभिवंद्य स्वं प्राविशन्नगरं नृपः ॥ १२२ ॥

आहूयामात्यसामन्तप्रभृतीः प्रकृतीर्निजाः । सुतं विष्णुकुमारं चेत्यूचे पद्मोत्तरो नृपः ॥ १२३ ॥

दुःखाब्धिरेष संसारस्तत्पोषाय[4] च देहिनः । प्रवृत्ती रोगितस्येवापथ्येच्छा रोगवृद्धये ॥ १२४ ॥

भवे मे पततः पुण्यैरिहागात् सुव्रतप्रभुः । उपकूपं गतस्येवांधस्य बाहुप्रदो नरः ॥ १२५ ॥

अद्य विष्णुकुमारस्तद्राज्ये संस्थाप्यतामयम् । व्रतं सुव्रतपादान्ते ग्रहीष्यामि ध्रुवं त्वहम् ॥ १२६ ॥

---

१ जीवं गृहीत्वा । २ हृष्टः पद्मविशेषणम् । ३ एमि आगच्छामि । ४ दुःखपोषणाय ।

विष्णुरप्यभ्यधत्तैवं कृतं राज्येन तात मे । त्वामनु प्रव्रजिष्यामि व्रजिष्यामि [1]त्वदध्वना ॥ १२७ ॥
राजाथ पद्ममाहूय सो[2]परोधमभाषत । वत्सोपादत्स्व राज्यं नः प्रव्रजामो यथा वयम् ॥ १२८ ॥
अभ्यधात् प्रांजलिः पद्मस्तात [3]तातसमे मम । आर्ये विष्णुकुमारे सत्येतन्न खलु युज्यते ॥ १२९ ॥
राज्येऽभिषिच्यतां विष्णुरलंभूष्णुर्जगत्यपि । भवामि युवराजोऽस्य पदातिवदहं पुनः ॥ १३० ॥
ऊचे राज्ञाभ्यर्थितोऽपि नैष राज्यं [4]जिघृक्षति । जिघृक्षति परिव्रज्यां किं तु सार्धं मयैव हि ॥ १३१ ॥
आत्तमौनस्ततः पद्मः पद्मोत्तरमहीभुजा । राज्येऽभ्यषेचि चक्रित्वाभिषेकेण सहैव हि ॥ १३२ ॥
कृतनिष्क्रमणस्तेन सुव्रतांघ्रितले व्रतम् । पद्मोत्तरनृपो विष्णुकुमारेण सहाददे ॥ १३३ ॥
स्वपुरेऽभ्रमयत् पद्मोऽप्यार्हतं मातृकं रथम् । पूज्यमानं जनैः सर्वैः स्वशासनमिवावनौ ॥ १३४ ॥
रथभ्रमणकालं तु तेऽपि सुव्रतसूरयः । तस्थुस्तत्रैव नगरे समं पद्मोत्तरादिभिः ॥ १३५ ॥
चक्रे जिनप्रवचनस्योन्नतिः पद्मचक्रिणा । स्वकीयस्येव वंशस्य चरित्राद्भुतशालिना ॥ १३६ ॥
ग्रामाकरपुरद्रोणमुखादिषु स उच्चकैः । कोटिशोऽकारयच्चैत्यान्यद्रीनिव नवोत्थितान् ॥ १३७ ॥
विहृत्य गुरुभिः सार्धं पालयित्वोत्तमं व्रतम् । उत्पन्नकेवलः सिद्धिं पद्मोत्तरमुनिस्त्वगात् ॥ १३८ ॥
मुनिर्विष्णुकुमारोऽपि तप्यमानोऽद्भुतं तपः । तपोमहिम्ना समभूत् संजातानेकलब्धिकः ॥ १३९ ॥
उत्तुंगो मेरुवद्व्योमचारी [5]विहंगराजवत् । गीर्वाणवत्कामरूपो रूपवान् [6]मीनकेतुवत् ॥ १४० ॥

---

१ तव मार्गेण । २ आग्रहसहितम् । ३ पितृसदृशे । ४ ग्रहीतुमिच्छति । ५ गरुडवत् । ६ देववत् ।

इत्यादि विविधावस्थो भवितुं प्रबभूव[1] सः । बभूव न तु साधूनां लब्धियोगोऽपदे[2] न हि ॥ १४१ ॥
तेऽन्यदा सुव्रताचार्याः साधुभिः परिवारिताः । प्रावृषोऽतिक्रमायैत्य न्यवसन् हस्तिनापुरे ॥ १४२ ॥
आचार्यागमनं ज्ञात्वा प्राग्वैरप्रतियातनाम्[3] । चिकीर्षुर्नमुचिर्मंत्री महापद्मं व्यजिज्ञपत् ॥ १४३ ॥
वरः प्राक्प्रतिपन्नो मे नरेन्द्रवर दीयताम् । न्यासवत्प्रतिपन्नस्य नास्ति नाशो महात्मसु ॥ १४४ ॥
याचस्वेति स राज्ञोक्तेऽब्रवीद्यक्ष्याम्यहं क्रतुम्[4] । तदन्तावधि मे राज्यं देहि वाचं निजां स्मरन् ॥ १४५ ॥
सत्यप्रतिज्ञो निदधे राज्ये नमुचिमंत्रिणम् । अन्तरन्तःपुरं राजा प्रविवेश स्वयं पुनः ॥ १४६ ॥
पुरान्निर्गत्य नमुचिः कपटात् क्रतुवाटके[5] । अभवद्दीक्षितः पापो दुष्टध्यायी बकोटवत्[6] ॥ १४७ ॥
तस्याभिषेककल्याणं कर्तुं प्रकृतयोऽखिलाः । श्वेतभिक्षून् विना सर्वे लिंगिनश्च समाययुः ॥ १४८ ॥
एयुर्मां लिंगिनः सर्वे न त्वमी श्वेतभिक्षवः । मात्सर्यादिति तच्छिद्रमग्रे चक्रे स दुर्मतिः ॥ १४९ ॥
गत्वा च सुव्रताचार्यानिति साक्षेपमब्रवीत् । यो यदा स्यान्नृपस्तं हि श्रयंते लिंगिनस्तदा ॥ १५० ॥
राजरक्ष्याणि हि तपोवनानीति तपोधनैः । राजाभिगम्यः क्रियते तपःषष्ठांशभाक् तथा ॥ १५१ ॥
मन्निन्दकाः पुनर्यूयं स्तब्धाः पाखंडिपांसनाः । निर्मर्यादाविधातारो लोकराजविरुद्धयोः ॥ १५२ ॥
तद्युष्माभिर्न मे राज्ये स्थातव्यं गच्छतान्यतः । योऽत्र वः स्थास्यति स मे वध्यः खलु खलाशयः ॥ १५३ ॥
बभाषे सूरिरप्येवं न नः कल्प इति त्वयि । अभिषिक्ते न संप्राप्ता निन्दामश्च न किंचन ॥ १५४ ॥
प्रत्यूचे स पुनः क्रुद्धः कृतमाचार्य विस्तरैः । सप्ताहादिह तिष्ठंतो निग्राह्या दस्युवन्मया ॥ १५५ ॥

---

१ समर्थोऽभूव, परं न कृतवानुपयोगमित्यर्थः । २ अस्थाने । ३ प्रतियातना प्रतिक्रिया । ४ यज्ञम् । ५ यज्ञमंडपे । ६ बकवत् ।

इत्युक्त्वा स ययौ स्वौकः सूरिरप्यब्रवीन्मुनीन् । किं कर्तव्यमिह ब्रूत यथाशक्ति यथामति ॥ १५६ ॥
तत्रैकः साधुरित्यूचे षष्टिवर्षशतीं तपः । तप्तवान् विष्णुकुमारो मन्दरे सोऽस्ति संप्रति ॥ १५७ ॥
सोऽग्रजः पद्मराजस्य तेन तद्वचनादसौ । शान्तिं यास्यति नमुचिः स्वामी सोऽप्यस्य पद्मवत् ॥ १५८ ॥
यो विद्यालब्धिमान् साधुस्तमानेतुं प्रयातु सः । उपयोगोऽपि लब्धीनां संघकार्ये न दुष्यति ॥ १५९ ॥
अथैकः साधुरित्यूचे गंतुं तत्र विहायसा । शक्नोमि न समागंतुं ब्रूत यत्कृत्यमत्र मे ॥ १६० ॥
त्वां समानेष्यते विष्णुरेवेति गुरुणोदिते । उत्पत्य तार्क्ष्यवद्व्योम्ना क्षणात् पद्माग्रजं ययौ ॥ १६१ ॥
दृष्ट्वा विष्णुकुमारस्तं चिंतयामासिवानिति । संघकार्यं महद्वेगाद्यदत्यस्यागमो मुनेः ॥ १६२ ॥
प्रावृट्काले हि साधूनां विहारो नान्यथा भवेत् । लब्धीनामुपयोगं च न ते कुर्युर्यथा तथा ॥ १६३ ॥
एवं विचिन्तयंतं तं स मुनिर्मुनिपुंगवम् । अभिवंद्य समाचख्यौ तन्निजागमकारणम् ॥ १६४ ॥
क्षणाद्विष्णुकुमारस्तं गृहीत्वार्षिं विहायसा । आययौ हास्तिनपुरे ववन्दे चात्मनो गुरून् ॥ १६५ ॥
ततः साधुपरीवारो विष्णुर्नमुचिमभ्यगात् । सर्वैर्नमुचिवर्जं च ववन्दे पार्थिवादिभिः ॥ १६६ ॥
विष्णुर्धर्मकथापूर्वंससांत्वमिदमभ्यधात् । यावत्प्रावृडिहैवामी तिष्ठंतु मुनयः पुरे ॥ १६७ ॥
एकत्र स्वयमप्येते चिरकालं वसंति न । वर्षासु जंतुबाहुल्याद्विहारस्तु न कल्पते ॥ १६८ ॥
गरीयसि पुरेऽमुष्मिन् भिक्षुभिर्भैक्षवृत्तिभिः । अस्मादृशैर्वसद्भिस्ते हानिः का नाम बुद्धिमन् ॥ १६९ ॥
भरतादित्यसोमाद्यैर्वंदिताः साधवो नृपैः । तथा न चेत् करोषि त्वं स्थातुं देहि तथापि भोः ॥ १७० ॥
इत्युक्तो विष्णुना मंत्री प्रत्यूचे कोपदारुणम् । अलमाचार्य वचनैर्वस्तुं नेह ददामि वः ॥ १७१ ॥

पुनरप्यन्यधाद्विष्णुः प्रव्रविष्णुरपि क्षमी । वसन्तूद्यानमेवामी नगरस्य बहिः स्थिताः ॥ १७२ ॥
जातामर्षो महर्षिं तं व्यब्रवीत् सचिवब्रुवः । न सहे गन्धमपि वः संवासप्रार्थनैरलम् ॥ १७३ ॥
पुरस्यांतर्बहिर्वापि निवासः श्वेतवाससाम् । दस्यूनामिव मर्यादाहीनानां न भविष्यति ॥ १७४ ॥
यदि वः प्राणितं प्रेयस्तदापसरत द्रुतम् । अन्यथा वो हनिष्यामि तार्क्ष्यो विषधरानिव ॥ १७५ ॥
इत्युक्त्योद्दीपितो विष्णुराहुत्येव हुताशनः । ऊचे तथाप्यहो देहि स्थातुं नस्त्रिपदीमिह ॥ १७६ ॥
ततो नमुचिरित्यूचे दत्ता वस्त्रिपदी मया । यस्त्रिपद्या बहिर्वः स्यान्निहनिष्यामि तं खलु ॥ १७७ ॥
एवमस्त्विति देहीति चोक्त्वा प्रववृधे मुनिः । किरीटी कुंडली स्रग्वी धनुर्वज्रकृपाणभृत् ॥ १७८ ॥
खेचरान् स्फारफूत्कारैर्भ्रंशयञ्जीर्णपर्णवत् । पद्मिनीपत्रवत्पाददर्दरैः[१] कंपयन् महीम् ॥ १७९ ॥
उल्लालयञ्जलनिधीन् कल्पांतपवमानवत् । प्रतीपगा[२] आपगाश्च कुर्वाणः सेतुबन्धवत् ॥ १८० ॥
ज्योतिश्चक्राणि पर्यस्यन् कर्करप्रकरानिव । दारयन् पर्वतवरानपि वल्मीकपुञ्जवत् ॥ १८१ ॥
स महौजा महातेजाः सुरासुरभयंकरः । वर्धमानः क्रमान्नानारूपो मेरुसमोऽभवत् ॥ १८२ ॥

॥ चतुर्भिः कलापकम् ॥

त्रिजगत्क्षोभमालोक्य प्रसादनकृतेऽस्य तु । सहस्राक्षः समादिक्षद्गायन्तीः सुरयोषितः ॥ १८३ ॥
कर्णमूले जगुस्तस्य गांधारग्रामबन्धुरम् । सर्वज्ञोपज्ञशास्त्रानुरूपमेतन्निरंतरम् ॥ १८४ ॥
कोपादिहापि दह्यंते स्वार्थे मुह्यंति चासकृत् । विपद्य चानंतदुःखं प्रयांति नरकं नराः ॥ १८५ ॥

---

१ पादकुट्टनैः । २ प्रतीपं प्रतिलोमं गच्छंति ताः ।

इति कोपं शमयितुं किन्नरादिस्त्रियोऽपि हि । जगुश्च ननृतुश्चाग्रे तस्य विष्णुमहामुनेः ॥ १८६ ॥
धरण्यां नमुचिं क्षिप्त्वा मध्येपूर्वापरांबुधि । ददौ पादं जगद्वंद्यपादः पद्मानुजो मुनिः ॥ १८७ ॥
पद्मोऽपि ज्ञातवृत्तांतः समुपेत्य ससंभ्रमः । चकितः स्वप्रमादेन मंत्रिदोषेण तेन च ॥ १८८ ॥
स्वमग्रजं महर्षिं तं नमस्कृत्यातिभक्तितः । कृतांजलिर्नेत्रजलक्षालितांघ्रिरदोऽवदत् ॥ १८९ ॥
तातः पद्मोत्तरोऽद्यापि चेतसा मम तिष्ठति । स्वामिन् विजयिनि सति लोकोत्तरगुणे त्वयि ॥ १९० ॥
श्रीसंघाशातनां मंत्रिपांसनेनामुना त्वहम् । क्रियमाणां न जानामि ज्ञापितोऽस्मि न केनचित् ॥ १९१ ॥
अपराधी तथाप्यस्मि भृत्यः पापो ह्यसौ मम । स्वामिनो भृत्यदोषेण गृह्यंत इति नीतिवाक् ॥ १९२ ॥
तथाहमपि ते भृत्यस्त्वं स्वामी परमो मम । गृह्यसे मम दोषेण तत्कोपमुपसंहर ॥ १९३ ॥
पापस्यास्यापराधेन त्रैलोक्यं प्राणसंशये । महात्मन्निदमारूढं त्रायस्व करुणानिधे ॥ १९४ ॥
एवमन्येऽपि विविधं सुरासुरनरेश्वराः । तमृषिं सांत्वयामासुः श्रीसंघश्च चतुर्विधः ॥ १९५ ॥
अंतिशब्दपथां वृद्धिं प्राप्तो यावन्न सोऽशृणोत् । पादस्पर्शं व्यधुस्तस्य तावत्सर्वेऽपि भक्तितः ॥ १९६ ॥
पादस्पर्शेन सोधस्तादपश्यद्भ्रातरं पुरः । चतुर्विधं तथा संघं सुरासुरनृपानपि ॥ १९७ ॥
इत्थं च दध्यौ स मुनिः श्रीसंघोऽयं कृपापरः । अयं च दीनो मे भ्राता भीताश्चैते सुरादयः ॥ १९८ ॥
कोपोपसंहारकृते युगपत् सान्त्वयन्ति माम् । मान्यः संघोऽनुकंप्याश्च पद्मप्रभृतयो मम ॥ १९९ ॥
विमृश्यैवं वपुर्वृद्धिं संहृत्य स महामुनिः । तस्थौ प्रकृत्यवस्थायां गतवेल इवार्णवः ॥ २०० ॥

१ शब्दमार्गमतिक्रांतां शब्दातीतामित्यर्थः ।

इति श्रीत्रिषष्टिशलाकापुरुषचरित्रे ३–४–५–६ पर्वाणि
श्रीसंभवनाथजिनमारभ्य मुनिसुव्रतस्वामिपर्यंतानां
चरित्राणि ॥